त्वाल्पत्वाभ्यां सुसदृश-मन्दसदृशव्यवहारः, तदुच्यते, "सामान्यान्येव भूयांसि गुणावयव-कर्मणाम् । भिन्न-प्रधानसामान्यव्यक्तं सादृश्यमिष्यते" ॥ इति, न, साजात्येऽप्यरविन्दद्वयवत् सजातीयावयवादिशून्ये गुणादौ

---

ननु उक्तधर्म्माणां सादृश्यत्वे सुसदृश-मन्दसदृशव्यवहारो न स्यादतस्तमप्युपपादयति, 'सामान्यस्येति, उक्तधर्म्माणां सादृश्यरूपत्वे भट्ट-कारिकामपि प्रमाणयति, 'तदुच्यत इति, तदर्थश्च 'गुणावयव-कर्म्मणां', 'भूयांसि सामान्यान्येव' अनेके साधारणधर्म्मा एव, 'भिन्नप्रधानसामान्यव्यक्त' प्रतियोगिवृत्त्यसाधारणधर्म्मभिन्नासाधारण-धर्म्ममिलितं प्रतियोग्यवृत्त्यसाधारणधर्म्मविशिष्टमिति यावत्, तथाच तद्वृत्त्यसाधारणधर्म्मवत्त्वमेव तद्वैजात्यमिति भावः । उद्देश्य-विधेय-भावेनान्वयस्थले उद्देश्यगतलिङ्ग-सङ्ख्यायोरविवक्षितत्वात् 'इष्यते' इत्येकवचनं । दूषयति, 'नेति, 'साजात्येऽपि' वैजात्यविरहेऽपि इत्यर्थः, 'अरविन्दद्वयवत्' सदृशं पङ्कजद्वयमित्यादाविवेत्यर्थः, तथाच वैजात्यनिवेशे तत्र सादृश्यप्रत्ययो न स्यादिति भावः । ननूक्तस्थले असाधारणधर्म्मो न पद्मत्व तस्य व्यक्त्यन्तरसाधारणत्वात् किन्त्विदन्त्व-मेव इति तत्र वैजात्यमस्त्येव इत्यतो दोषान्तरमाह, 'सजातीयेति, अवयवादीत्यादिपदाद्गुण-कर्म्मपरिग्रहः, अवयवादिगतसाधारण-धर्म्मशून्ये इत्यर्थः, 'गुणादावित्यादिपदात् कर्म्मपरिग्रहः । ननु गुणे कर्म्मणि च सदृशाश्रयत्वादेव तत्प्रत्यय इत्यत आह, 'जातौ

जातौ च सदृशप्रत्ययात्[१] विसदृशयोः करभ-रासभयोस्तत्सत्त्वाच्च । नापि धर्म्यन्तरे धर्म्यन्तरवृत्तिधर्मबाहुल्यम्, असाधारणधर्मशून्यत्वे सति तद्गतभूयोधर्मवत्त्वं वा, स्वनिष्ठात्यन्ताभावप्रतियोगिधर्मसमानाधिकरण-

---

चेति, गुण-कर्म्मगतजातौ चेत्यर्थः । 'सदृशेति धर्म्मपरो निर्द्देशः, तथाच सदृशत्वप्रत्ययादित्यर्थः, क्वचित्तथैव पाठः । ननु जातौ तत्प्रत्ययस्य सदृशाश्रयकत्वमेव विषयइति यद्युच्यते तदाप्याह, 'विसदृशयोरिति, विसदृशावयवादियुतयोरित्यर्थ', 'करभः' करिशिशुः, "करभः करिशावक इत्यमरकोषात् । तयोरवयवादीनामत्यन्तवैलक्षण्येऽपि रासभोऽयं करभ इव खादति इत्यादौ यत्किञ्चित्क्रियासाम्येऽपि सादृश्यव्यवहारात् भवन्मते तदनुपपत्तेः गुणादित्रयाणां साम्याभावादिति भावः । तस्यैवापरकल्पानपि दूषयति, 'नापीति, 'धर्म्यन्तरइति स्वभिन्ननिष्ठं स्ववृत्तिधर्म्मबाहुल्यमित्यर्थः, स्वभिन्ननिष्ठत्वञ्च स्वाश्रयाश्रयत्वसम्बन्धेन, स्वस्मिन् स्वसादृश्यवारणाय धर्म्मे स्वभिन्नवृत्तित्वनिवेशः । 'असाधारणेति तद्वृत्त्यसाधारणधर्म्मशून्यत्वे सति तद्गतभूयोधर्म्मवत्त्वमित्यर्थः, स्वस्मिन् स्वसादृश्यवारणाय सत्यन्तं । 'स्वनिष्ठेति, स्वस्मिन् स्वसादृश्यवारणाय धर्म्मे प्रतियोग्यन्तं । परस्परव्यधिकरणधर्म्माणां कुचाप्यसत्त्वात् समानाधिकरणत्वं धर्म्मविशेषणं, तादृशयत्किञ्चिद्धर्म्मवत्त्वेऽपि सादृश्याव्यवहारात् भूयस्त्वनिवेशः । कल्प-

---

(१) सदृशत्वप्रत्ययादिति ख० ।

भूयोधर्मवत्त्वं वा, त्रिचतुःपञ्चादिभेदेन भूयस्त्वस्याननुगमात्[१]। न च कपिञ्जलवत्त्रित्वपर्य्यवसन्नं, विसदृशयोरपि हस्ति-मशकयोः सादृश्यप्रसङ्गात्। तदुक्तम्। "एवं जाति-गुण-द्रव्य-क्रियाशक्तिषु धर्मतः। एकैकद्वित्रिसाधर्म्यप्रभेदादेकत्र त्रिता" इति॥ अथ व्यावर्त्तकधर्म्मापेक्षया तद्गतधर्मबाहुल्यं सादृश्यं,

---

त्रयमेकदेव दूषयति, 'त्रिचतुरित्यादि, 'अननुगमादिति। शङ्कते, 'न चेति, 'कपिञ्जलवदिति, "कपिञ्जलानालभेत" इति श्रुतौ बहुवचनस्य चतुष्ट-पञ्चत्वादिशक्तत्वे "मा हिंस्यात् सर्व्वाभूतानि" इति श्रुतौ विरोधभञ्जनाय भूतपदस्य कपिञ्जलातिरिक्तपरतया तत्रानेकभेदनिवेशे गौरवापत्तिरिति बहुवचनस्य त्रित्वे शक्तिरवश्योपेया तथाचापि भूयस्त्वं त्रित्वमेवेति भावः। 'प्रसङ्गादिति, शुण्डादिमत्त्वस्य मशकेऽपि सत्त्वादिति भावः। द्वित्रिधर्म्मसाम्येऽपि न सादृश्यमित्यत्र प्रमाणमाह, 'तदुक्तमिति, 'एवमित्यादि, 'एवं' भूयस्त्वस्य सादृश्यघटकत्वे, तथाच जात्यादिरूपस्वगतधर्म्मानपेक्ष्य एकैकद्वित्रिसाधर्म्यवैलक्षण्यात् यत्र तयोरेकस्मिन् वैलक्षण्यं तत्र न सादृश्यमिति भावः। शङ्कते, 'अथेति, 'व्यावर्त्तकेति असाधारणेत्यर्थः, 'तद्गतधर्म्मेति तद्गतसाधारणधर्म्मेत्यर्थः। ननु बाहुल्यस्याननुगमाल्लक्षणघटकत्वासम्भवः

---

(१) भूयस्त्वस्याननुगतत्वादिति ख०।

बाहुल्यञ्च त्रिचतुरादिष्वनुगतं, हस्ति-मशकयोस्तु बहु व्यावर्त्तकं साधारणन्त्वल्पमेत एव किञ्चिद्भेदाधिष्ठानं सादृश्यमुच्यते इति चेत्, न, व्यावर्त्तकसमसङ्ख्येनाल्पेनागणितेनापि धर्म्मेण सादृश्यव्यवहारात् ।

किञ्च सामान्यान्याश्रयभेदेनाभिन्नानि भवन्ति, सादृश्यन्तु भिन्नम्, सामान्यं निष्प्रतियोगिकं तदनि-

---

इत्यत आह, 'बाहुल्यञ्चेति, 'अनुगतमिति, तथाच बहुत्वमिति व्यवहारविषयत्वमेव बाहुल्यमिति भावः । पूर्व्वलक्षणप्रसक्तातिप्रसङ्गं वारयति, 'हस्ति-मशकयोस्त्विति, 'व्यावर्त्तकमिति, हस्तित्व-मशकत्वादिरूपमिति शेषः, 'साधारणमिति, शुण्डवत्त्वादिरूपमिति शेषः । उपसंहरति, 'एत इति स्ववृत्त्यसाधारणधर्म्मापेक्षया बहुत्वसाधारणधर्म्मा एवेत्यर्थः, 'किञ्चिद्भेदाधिष्ठानं' प्रतियोगिभेदसहकृतं । तथाच तद्भिन्नत्वे सति स्ववृत्त्यसाधारणधर्म्मबहुत्वतद्गतभूयोधर्म्मवत्त्वं तन्निरूपितस्वनिष्ठसादृश्यमिति पर्य्यवसितं । दूषयति, 'नेति, 'समसङ्ख्येनेत्यस्य 'धर्म्मेणेत्यत्रान्वयः, एवमग्रेऽपि । ननु गणनभ्रान्तिवशात्तत्र व्यवहार इत्यत-आह, 'अगणितेनापीति, 'व्यवहारादिति, तथाच अगणनस्थले बाहुल्याज्ञानात् तन्मते तद्व्यवहारो न स्यादिति भावः । ननु व्यवहारविषयत्वरूपबाहुल्यं न गणनसापेक्षं संख्याया एव तत्सापेक्षत्वादिति यदि ब्रूयात्तदाप्याह, 'किञ्चेति, 'भिन्नमिति, 'प्रत्याश्रयमित्यादिः, तथाच सामान्यवि-

रूप्यञ्च । सादृश्यन्तु सप्रतियोगिकं तद्धीव्यङ्ग्यञ्च । अथ भेदे सति तद्गतभूयःसामान्यवत्त्वं सादृश्यं भेदश्च प्रत्याश्रयमन्यः सप्रतियोगिकश्चेति चेत्, तर्हि सादृश्यस्य भेदघटितत्वेन सावधित्वे तस्मात् सदृश इति स्यात् न तु तेन तस्य वा सदृश इति स्यात् । न च सादृश्यस्यापि सप्रतियोगिकत्वेन तस्मात् सदृश इति स्यात्, सावधौ हि तथा प्रतीति-प्रयोगौ न तु प्रतियोगिनि, अभावेऽपि घटादिति[1] प्रतीतिप्रसङ्गात् । अपि

---

रुद्धधर्म्मवत्त्वात् तद्भेदसिद्धा सामान्यरूपता तस्य न सम्भवतीति भावः । एवमग्रेऽपि, 'तदनिरूप्यञ्चेति यद्गतसामान्यं तदनिरूप्यञ्चेत्यर्थः, विरुद्धधर्म्मान्तरमपि दर्शयति, 'तद्धीव्यङ्ग्यञ्चेति, 'चकारात्तन्निरूप्यत्वसंग्रहः । शङ्कते, 'अथेति, इष्टापत्तिमाशङ्क्य निषेधति, 'न चेत्यादि, 'तथा' पञ्चम्यर्थविषयकेत्यर्थः, 'प्रयोगः' व्यवहारः, 'न त्विति न तु प्रतियोगिविषयकमात्रे पञ्चम्यर्थविषयकत्वमित्यर्थः । प्रतियोगित्वस्य पञ्चम्यर्थत्वे दोषान्तरमाह, 'अभावेऽपीति अत्यन्ताभावेऽपीत्यर्थः । अत्यन्ताभावविषयकप्रतीतेरपि पञ्चम्यर्थप्रतियोगित्वविषयकत्वापत्तेरिति यावत् । 'घटादितीति भूतले घटादभाव इति प्रतीतिप्रसङ्गादित्यर्थः । विशेषणांशमादाय दोषमुद्भाव्य विशे-

---

(१) घटान्नेतीति ख० ।

च तद्धर्मवत्त्वं यदि सादृश्यं तदा तत्-तद्भिन्नतयोः सङ्करः स्यात्[१] तद्धर्मवत्ता हि तत्ता तदन्या च तद्वत्ता, यदि च तत्रैव तद्वत्ता तदा तदेव तद्वदिति स्यात्। तथाच तद्धर्मवत्ताप्रत्यभिज्ञानवत् सोऽयमिति स्यात्, न तु तद्वदयमिति। एवं तद्वत्तैव हि तत्तेति गवयेऽपि गोबुद्धि-व्यपदेशौ स्यातां गोगतसामान्ययोगित्वेन गोवत्तत्ता-

---

श्यांशमादायापि तमुद्भावयति, 'अपि चेति, 'तत्तद्भिन्नतयोः' तत्ता-तद्भिन्नतयोरित्यर्थः, द्वन्द्वात्पर इति न्यायात्, 'सङ्करः स्यात्' एकत्रोभयसत्त्वं स्यात्, अत्र हेतुमाह, 'तद्धर्मेति तद्गतधर्मेत्यर्थः। सादृश्यस्यान्यरूपत्वे दोषमाह, 'तदन्येति भेदविशिष्टतद्गतधर्मवत्ताभिन्ना, 'तद्वत्ता' तत्सादृश्यं, 'तत्रैव' तत्रापि, 'तद्वत्ता' तत्सादृश्यं, तस्य भेदाघटितत्वादिति भावः। ननु तत्र तद्वत्तासत्त्वे का क्षतिरित्यत-आह, 'तदेति, 'तदेव' तदपि, 'इति स्यात्' इति व्यवहारः स्यात्। ननु तत्र तत्सत्त्वेऽपि व्यवहारनियामकोभेदोवक्तव्य इत्यत आह, 'तथा चेति तथोक्तौ चेत्यर्थः, क्वचिदेवं पाठः स एव सम्यक्। 'इति स्यात्' वस्तुगत्या सादृश्यवति इति प्रतीतिः स्यात्, आपत्ति मुक्त्वा अनुपपत्तिमाह, 'न त्विति, 'तद्वदयमितीति, वस्तुगत्या सादृश्यवतीत्यादिः, 'इतीति इत्येवेत्यर्थः। तद्वत्तायास्तत्तारूपत्वे दोषमाह, 'एवमिति, कुत इत्याकाङ्क्षायामाह, 'गोगतेत्यादि, 'गोवत्तत्ताश्रयत्वात्' गोत्ववत्तायास्तत्तायास्त्वाश्रयत्वादित्यर्थः। पूर्व्वा-

---

(१) सङ्करप्रसङ्गादिति ख० ।

अयत्वात् न विशेषः प्रत्यक्षत्वात् । न समवायः वृत्ति-मत्त्वात्, इत्यधिकं[१] सादृश्यं ।

यत्तु सादृश्यं भावोऽभावो वा, भावोऽपि सगुणं निर्गुणं वा, निर्गुणमप्याश्रितमनाश्रितं वा, आश्रि-तमपि सामान्यवन्निःसामान्यं वा, सामान्यवत्त्वे स्पन्दो-ऽस्पन्दो वा, निर्गुणं निःसामान्यमाश्रितमेकाश्रितमने-

---

त्वगुण-कर्म्मवृत्तित्वरूपहेतोरेव विशेषभेदसिद्धेः सामान्यभेदसाध-कहेतोरेव समवायभेदसिद्धेः सम्भवेन तदानीं न विशेषः न सम-वायइत्याद्यनुक्ता हेत्वन्तरेणापि तत्र विशेषादिभेदसिद्धिसम्भव-इत्यावेदनायैव इदानीं तमाह, 'न विशेष इति, 'प्रत्यक्षत्वात्' लौकिकप्रत्यक्षविषयत्वात्, 'वृत्तिमत्त्वात्' समवेतत्वात्, अत्र समवाय-पदं अभावोपलक्षकं, क्वचिन्न समवायादिरिति पाठः। 'अधिकं' सप्तपदार्थातिरिक्तं ।

परमतं निरसितुमुपन्यस्यति, 'यत्त्विति, 'भावः' भावरूपं, एवमग्रेऽपि, भावादिशब्दस्याजहल्लिङ्गत्वान्न नपुंसकत्वं । परविकल्पे आश्रितमित्यनन्तरं स्पन्दभिन्नं भावरूपमिति पूरणीयं, अन्यथा स्पन्दोऽस्पन्दो वा भावोऽभावो वेति विकल्पद्वयस्यानुत्तरत्वेन न्यूनता-पत्तेः। यद्यपि एकाश्रितमित्युत्तरेण परविकल्पस्यापि निवृत्तिः सम्भवति तथापि एकाश्रितमपि नित्यमनित्यं वा नित्यमपि प्रत्यक्ष-

---

(१) इत्यतिरिक्तमिति ख० ।

काश्रितं वा, इति यथायथं सप्तपदार्थान्तर्गतमिति । तन्न। व्यवहारानुपपत्त्या तद्वहिर्भावात् अन्यथैतादृशविकल्पेन सामान्य-विशेष-समवायानामपि द्रव्यादित्रयसाधर्म्यात्तत्तदन्तर्भावः[१] स्यादिति । उच्यते ।

---

मप्रत्यक्षं वा इत्यादिवहुविधविकल्पधाराया अनिवृत्तिः । 'यथायथ' यत्र यत्र यादृश यादृश सादृश्यं क्वचित् गुणरूपं क्वचित् क्रियारूपं द्रव्यरूपं सामान्यरूपमित्यर्थः, 'सप्तपदार्थान्तर्गतमिति, क्लृप्तपदार्थानां साधर्म्यनिश्चये विकल्पासम्भवादिति भाव. । दूषयति, 'तन्नेति, 'व्यवहारानुपपत्त्या' तेन तस्य वा सादृश इति व्यवहारानुपपत्त्या इत्यर्थः, इदमुपलक्षणं तस्मात् सदृश इति व्यवहारापत्त्या इत्यपि बोध्यं । 'अन्यथा' प्रामाणिकव्यवहारमुल्लङ्घ्य विकल्पभयमात्रेण तस्य क्लृप्तपदार्थान्तर्गतत्वस्वीकारे, 'एतादृशविकल्पेन' सामान्यं भावोऽभावो वा इत्यादिविकल्पेन, 'सामान्य-विशेष-समवायानामपीति, अभावो भावोवेत्यादिविकल्पासम्भवादभावोनोक्तः, 'द्रव्यादित्रयसाधर्म्यात्' समवेतत्व-द्रव्यसमवेतत्वादिरूपतत्साधर्म्यात्, समवायस्यापि स्वरूपसम्बन्धरूपत्वेन समवेतत्वात्, 'तत्तदन्तर्भावः' द्रव्य-गुण-कर्मान्तर्भावः ।

एतावता मीमांसकमते निर्व्यूढे जरन्नैयायिकः स्वयमुत्तरयति, 'उच्यते इति, 'असाधारण्येति असाधारणभिन्ना ये तद्गतभूयो-

---

(१) तदन्तर्गतत्वमिति ख० ।

असाधारणान्यतद्गतभूयोधर्म्मवत्त्वं तत्सादृश्यं । यज्-

धर्म्मास्तद्वत्त्वं, 'तत्सादृश्यं' तन्निरूपितसादृश्यं इत्यर्थः । अस्ति च गवये गोत्वादिरूपासाधारणधर्म्मभिन्ना ये गोनिष्ठशुक्लादिगुण-चलनादि-रूपक्रिया-खुर-शृङ्गादिद्रव्यात्मकधर्म्मास्तद्वत्त्वात् गोनिरूपितसादृश्यं। स्वस्मिन् स्वसादृश्यवारणाय तद्वृत्त्यसाधारणधर्म्माभाववत्त्वे सतीति वक्तव्यं, असाधारणधर्म्मस्यापि भूयोऽन्तर्गतत्वेनासम्भव इति धर्म्मेऽसा-धारणान्यत्वनिवेशः, असाधारणान्यत्वञ्च स्वावच्छिन्नभिन्नावृत्ति यत् स्वं तदन्यत्वे सति स्वाश्रयवृत्तित्वं वृत्तिमत्त्वं वा, विशेष्यदलाद-वृत्तिव्युदासः, सत्यन्तव्यावृत्तिः स्फुटैव । वस्तुतस्तु अवृत्तेरसाधार-णान्यत्वेऽपि न क्षतिस्तद्गतत्वाभावेन यावदन्तर्गतत्वाभावेनासम्भवाभा-वात् इति विशेष्यदलं नोपादेयमेव । न चास्य स्वत्वघटितत्वेना-ननुगततया सादृश्यस्य दुर्ज्ञेयत्वमिति वाच्य । स्वविशिष्टविशिष्टत्व-सम्बन्धेन किञ्चिद्धर्म्मविशिष्टान्यत्वे सति वृत्तिमत्त्वस्यैव तथात्वात् प्रथमवैशिष्टं स्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, द्वितीयवैशिष्ट्यञ्च वृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकभेदवत्त्वसम्बन्धेन, अवृत्तौ असाधारणान्यत्वव्यवहारवारणाय वृत्तिमत्त्वनिवेशः, प्रकृते तदनि-वेशेऽपि न क्षतिरिति साम्प्रदायिकाः । तन्न । प्रमेयत्वादेरेव तथात्वेनातिप्रसङ्गापत्तेः ।

नव्यास्तु असाधारणोऽन्यो येभ्य इति व्युत्पत्त्या साधारणत्वलाभः, तत्पदं तद्धर्म्मावच्छिन्नपरं, एवमग्रेऽपि, तद्धर्म्मावच्छिन्नगतसाधारण-भूयोधर्म्मवत्त्वं तद्धर्म्मावच्छिन्ननिरूपितसादृश्यं, तद्धर्म्मावच्छिन्नसाधा-

जात्यादिसाधारणं भेदाघटिततया च निरवधि तद्गत-बहुधर्मवत्त्वं तन्निरूप्यमितीतरनिरूप्यत्वमेव तस्य सप्रतियोगिकत्वं, तत्रापि सादृश्ये तदेव सप्रतियोगिकत्वं, न तु भेददीर्घादिवत्सावधित्वं तस्मात् सदृश इति प्रत्ययापत्तेः। बहुत्वञ्च त्रिचतुरादिसाधारणमिति नानु-

---

रणत्वञ्च तद्धर्मावच्छिन्नवृत्तित्वे सति तद्धर्मावच्छिन्नभिन्नवृत्तित्वं। न च स्वस्मिन् स्वसादृश्यापत्तिः, तद्धर्मावच्छिन्नभिन्ननिरूपितसादृश्यतावच्छेदकसम्बन्धेन भूयोधर्मवत्त्वस्य विवक्षितत्वात्। न च साधारणत्वनिवेशो व्यर्थः, भूयःपदस्य यावदर्थकत्वेनासम्भवापत्तेः। न चैवं 'भेदाघटितत्वाच्चेत्युत्तरग्रन्थासङ्गतिः,[१] प्रकारतया भेदाघटितत्वादिति तदर्थत्वात्, तदभिधानस्य तस्मात् सदृश इति व्यवहारवारणमात्रप्रयोजनकत्वादिति प्राञ्चः।

अपरे तु असाधारणः सादृश्यस्यासाधारणो धर्मो गवयादिः तदन्यश्चासौ स चेति कर्म्मधारयोत्तरतत्पुरुषः, स्वभिन्नतद्गतभूयोधर्म्मवत्त्वं स्वनिष्ठं तन्निरूपितसादृश्यमित्यर्थः, 'भेदाघटितत्वाच्चेत्यस्य तु प्रतियोगिभेदाघटितत्वादित्यर्थः, भूयस्त्वन्तु न यावत्त्वं किन्तु बहुत्वमेव, अतएव 'बहुत्वमित्युत्तरग्रन्थसङ्गतिरिति व्याचक्षते।

'निरवधि' अवधित्वानिरूपकं। ननु तस्य निरवधित्वे सप्रतियोगिकत्वमपि न स्यात् इत्यत आह, 'तद्गतेत्यादि, 'इतरेति

---

(१) 'भेदाघटिततया च' इत्यत्र 'भेदाघटितत्वाच्च' इति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य टीकाकृतैतदुक्तमिति।

शमः। न चातिप्रसङ्गः, हस्ति-मशकयोरपि प्राणित्व-सुखित्व-दुःखित्वादिना[1] सादृश्यात्। अतएव वैसादृश्येऽपि आह्लादजनकत्वादिना[2] चन्द्र इव मुखं पुष्पादिना[3] महिषीव गौरिति बह्वल्पतद्गतधर्मवत्त्वेन

सादृश्याश्रयेतरेत्यर्थः। एतेन गवादेरेव तन्निरूपकत्वं न तु गवयादेरित्यावेदितं, 'तव' मीमांसकस्य। ननु भूयस्त्वं बहुत्वमेव तच्च नानुगतं इति तस्य लक्षणघटकत्वासम्भवइत्यत आह, 'बहुत्वमिति, 'साधारणमिति, यत्किञ्चिद्बुद्धिविषयत्वरूपत्वात्तस्येति भावः। शङ्कते, 'न चेति, 'अतिप्रसङ्गः' हस्ति-मशकयोरपि सदृशत्वप्रसङ्गः, कुतः इत्याकाङ्क्षायामाह, 'हस्तीत्यादि, 'सादृश्यात्' सादृश्यस्य प्रामाणिकत्वात्। 'अतएव' तद्गतचिचतुरादिधर्म्मवत्त्वेऽपि सादृश्यस्य-प्रामाणिकत्वादेवेत्यर्थः, 'वैसादृश्येऽपि' तद्गतचिचतुराद्यतिरिक्तधर्म्माभावेऽपि, 'आह्लादजनकत्वादीत्यादिपदात् चाकचक्य-मण्डलाकारत्वपरिग्रहः, पुष्पादीत्यादिना बहुक्षीरत्व-पावनत्वपरिग्रहः, 'गौरितीति, व्यवहार इति शेषः। ननु भवन्मते सुसदृशत्व-मन्दसदृशत्व-व्यवहारः कथं स्यादित्यत आह, 'बह्वल्पेति, अल्पत्वं पञ्चत्वन्यूनवृत्तिद्वित्वव्यापकसङ्ख्यावत्त्वं, सङ्ख्या च गुणरूपा विषयतारूपा वा इत्यन्यदेतत्, अत एकधर्म्मवत्त्वे पञ्च-षडादिधर्म्मवत्त्वे च न मन्दसादृश्यव्य-

(१) प्राणित्व-शरीरित्व-सुखित्वादिनेति ख० ।

(२) आह्लादकत्वादिनेति ख० ।

(३) बहुक्षीरत्वादिनेति ख० ।

सुसदृशत्व-मन्दसदृशत्वम्। अतएव गवये गोसादृश्यं पृष्टः तद्धर्मवत्त्वमेव विवेचयति, वराहं गावोऽनुधावन्तीत्यत्र गोसादृश्यं वराहेऽप्युक्तम्। तद्धर्मवत्त्वेनोपमानोपमेयव्यवहारः काव्यादौ, साध्य-साधनवत्तामात्रेण दृष्टान्ते पक्षसादृश्यवाचकवति प्रयोगः परीक्षकाणाम्।

---

वहारः। सुसदृशत्वलक्षणे पशुत्वव्यापकसङ्ख्यावत्त्वं निवेश्यमिति विशेषलक्षणद्वयमिति भावः। 'अतएव' त्रि-चतुरादिधर्म्मवति सादृश्यसत्त्वादेव, अस्य वक्ष्यमाणप्रथमान्तत्रयेणान्वयः। 'अतएव' सादृश्यस्य तद्गतधर्म्मस्वरूपत्वादेव, इति केचित्। तन्मन्दं। 'वराहमित्यादिग्रन्थासङ्गतेः तस्य अल्पधर्म्मे सादृश्यत्वप्रतिपादकग्रन्थत्वेन सन्दर्भविरोधापत्तेः। 'गोसादृश्यं पृष्टः' गोसदृशः क इति जिज्ञासाविषयः पुरुषः, 'तद्धर्म्मवत्त्वं' गोगतधर्म्मवत्त्वं, 'विवेचयति' गणयति, 'वराहेऽप्युक्तमिति वननिष्ठत्व-चतुष्पदत्व-धावमानत्वसत्त्वात् इति भावः। 'तद्धर्म्मवत्त्वेन' तद्गतद्विचिधर्म्मवत्त्वेन, 'काव्यादाविति "अकस्मात् द्वेष्टि यो भक्तमाजन्मपरिसेवितं। न व्यञ्जनं कामयते त्याज्यो नृप-इवातुरः" इत्यादौ धर्म्मद्वयेन, "प्रतापी बहुभिर्यागैर्युक्तो राजा भवानहं। इति मन्ये महाराज युग इन्द्र इव क्षितौ" इत्यादौ धर्म्मत्रयेण तद्व्यवहारः, 'साध्येत्यादि, 'मात्रपदेन धर्म्मान्तरव्यवच्छेदः, 'सादृश्यवाचकवति' उदाहरणात्मकवाक्ये, 'प्रयोगः', महानसस्येत्यादिः, 'परीक्षकाणां' पण्डितानां।

न चैते गौणाः, मुख्ये बाधकाभावात् । तस्मात् केनचिद्धर्म्मेण कस्यचित् क्वचित् सादृश्यवत्त्वमननुगतमस्ति । किञ्च यादृशबहुतद्धर्मवत्त्वज्ञानं सादृश्यव्यञ्जकं तदेव तद्व्यवहारनियामकमस्तु किमधिकेन । अन्यथा चित्रतुरादित्वे तु व्यञ्जकमपि बहुधर्म्मवत्त्व-

---

केचित्तु प्रतिवादिनि पुरुषे सदृष्टान्तोदाहरणवति सति स्वीयप्रतिज्ञादेः प्रयोगः । अन्यथा न्यूनत्वेनैव वादिनिग्रहात् प्रतिज्ञादिप्रयोगे तेषां वृत्तिरेव नोत्पद्यत इत्याहुः, ।

'न चैत इति, 'एते' व्यवहाराः । सर्व्वज्ञस्य सर्व्वसदृशत्वापत्तिरूपदोषं पूर्व्वपक्ष्य तं स्वयं वारयति, 'तस्मादिति, 'अननुगतमिति, न तु प्रत्याश्रयमेकमित्यर्थः । ननु तद्गतभूयोधर्म्मवत्त्वरूपमपि सादृश्यं तद्गतयादृशधर्म्मवत्त्वज्ञानोत्तरमेव गृह्यते तदेव सदृशव्यवहारनिमित्त सादृश्यमस्तु आवश्यकत्वादित्याशङ्कते, 'किञ्चेति, 'सादृश्यव्यञ्जकं' सादृश्यज्ञानजनकं, 'तदेव' तादृशधर्म्मवत्त्वमेव, 'तद्व्यवहारनियामकमिति तत्सादृश्यव्यवहारविषयतावच्छेदक सादृश्यरूपमिति यावत्, 'किं अधिकेन' किं तादृशधर्म्मातिरिक्तधर्म्माणां सादृश्यघटकत्वेन, अनावश्यकत्वादित्यर्थः । 'अन्यथा' तादृशधर्म्मस्य सादृश्यरूपत्वाभावे, तस्येति शेषः, 'चित्रतुरादित्वे' चित्रतुरादिधर्म्मस्वरूपत्वे, 'बहुधर्म्मवत्त्वमिति व्यङ्ग्यानामनेकत्वे एकस्मिन् व्यञ्जकत्वं न सम्भवति व्यभिचारादिति तेषां प्रत्येकधर्म्मं प्रति एकैकस्य व्यञ्जकत्वमावश्यकमित्यभिप्रायः । ननु

मननुगतं स्यात्। व्यञ्जकमननुगतमपि वह्नौ प्रत्यक्षा-
दिवदिति चेत्। न। तत्राभिव्यक्तीनां वैजात्यात् धूमा-
लोकादौ वह्निव्याप्यत्वमेवानुगतम्। अत्रापि तद्व्याप्य-
त्वमस्तीति चेत्, तर्हि यादृशं तद्व्याप्यत्वं तदेव तद्व्यव-
हारनिमित्तं। न च तद्गतबहुधर्मवत्त्वं(१) न व्यञ्जक-

तथा सत्यपि का क्षतिरित्यत आह, 'अननुगतं स्यादिति, तथाच गौरवमिति भावः। ननु अनायत्या गौरवमपि स्वीकार्य्यं यथा धूमादीनामननुगमेऽपि तत्प्रत्यक्षादिकं वह्निव्यञ्जकं इत्याशङ्कते, 'व्यञ्जकमिति, अस्त्विति शेषः, अत्रैव दृष्टान्तमाह, 'वह्नाविति, तत्राननुगम एव नास्ति इति दृष्टान्तासिद्धिरित्याशङ्कते, 'तत्रेति, 'अभिव्यक्तीनां' व्यञ्जकानां धूमादीनां, अभि सर्व्वतोभावेन व्यक्ति-र्ज्ञानं यस्मादिति व्युत्पत्तेः, 'वैजात्यात्' वैलक्षण्यात्, 'अनुगतमिति, तथाच तदेव धूमादीनामनुगमकं इति कुतो गौरवमिति भावः। इदञ्च तद्दन्यावृत्तित्वरूपव्याप्यत्वाभिप्रायेण व्यापकसामानाधिकरण्य-रूपाया व्याप्तेर्हेतुतावच्छेदकभेदेन भिन्नत्वात्। 'अत्रापि' सादृश्येऽपि, 'तद्व्याप्यत्वं' सादृश्यव्याप्यत्वं, 'अस्ति' व्यञ्जकानुगमकमस्ति इत्यर्थः। मीमांसकः शङ्कते, 'तर्हीति, 'तदेव' सादृश्यव्याप्यत्वमेव, 'व्यवहार-निमित्तं' स्वाश्रयाश्रयत्वसम्बन्धेन व्यञ्जकविधया सादृश्यव्यवहारप्रयो-जकं तदेव तद्व्यञ्जकमस्त्विति यावत्, 'तदेवेत्येवकारव्यवच्छेद्यं स्वय-माह, 'तद्गतेति, 'न व्यञ्जकं' न सादृश्यज्ञानजनकं, इति 'न चेति

(१) न तु तद्गतबहुधर्म्मवत्त्वज्ञानमिति ख०।

मेवानुभवविरोधात् तद्गतभूयोधर्मस्य बहल्पत्वज्ञानं विना सुसदृश-मन्दसदृशत्वज्ञानाभावाच्च । अथ तद्गत-बहुधर्मवत्त्वं न सप्रतियोगिकं सादृश्यन्तु न तथेति[१] व्यवहर्त्तव्यसाधकमिति चेत्, न, सादृश्यवत्तस्यापि स-प्रतियोगिकत्वात् ।

---

योजना । केचित्तु 'न चेति न त्वित्यर्थः, 'न व्यञ्जकमिति नकारो-भिन्नक्रमे, दूषयति, 'नेति, अर्थस्तु पूर्ववदित्याहुः । 'अनुभवविरो-धादिति, तथाच गवि तादृशबहुधर्मज्ञानोत्तरमेव गवये सादृश्य-ज्ञानं न त्वन्यदा इत्यनुभवादिति भावः । तादृशानुभवे विप्रतिपन्नं प्रत्याह, 'तद्गतेति, तथाच तद्गतधर्माणां बहल्पत्वज्ञानस्यावश्यकतया सादृश्यबोधकतया सादृश्यज्ञानात्पूर्वं तद्गतधर्मज्ञानमावश्यकमिति भावः । शङ्कते, 'अथेति, 'न तथा' न सप्रतियोगिकत्वाभाववत्सप्रति-योगिकमिति यावत्, 'इति' इत्येव, 'व्यवहर्त्तव्यसाधकं' अतिरिक्त-सादृश्यसाधकमित्यर्थः, दूषयति, 'नेति, 'सादृश्यवत्' भवन्मतसिद्धा-तिरिक्तसादृश्यवत्, 'तस्यापि' तद्गतबहुधर्मवत्त्वस्यापि, 'सप्रतियोगि-कत्वात्' तत्त्वेनानुभूयमानत्वात्, अनुभवापलापे तवापि तत्र तत्सि-द्धिर्न स्यादिति भावः ।

'यत्त्विति, 'तत्ता-तद्वत्तयोः' तत्ता-तत्सादृश्ययोः, 'सङ्करः स्यात्' एकत्र समावेशः स्यात्, तत्तायास्तद्गतधर्मवत्तारूपत्वादिति भावः ।

---

(१) सादृश्यन्तु तथेतीति ख० ।

**यत्तु तत्ता-तद्वत्तयोः सङ्करः स्यादिति, तन्न, तत्रैव तद्धर्मवत्ता तदभेदो वा तत्ता सा च सोऽयमिति प्रत्यक्षज्ञाने भासते, भेदे भासमाने तदन्यस्मिन् तद्धर्मवत्ता तद्वत्ता यतो भवति तद्वदयं न तु स इति तयोर्भेदात्। नन्वेवं व्यक्त्यन्तरे गोत्वग्रहे तद्गोवदियमिति स्यान्न**

---

दूषयति, 'तन्नेति, 'तत्रैवेति, 'एवकारोभिन्नक्रमे, 'तद्धर्मवत्तेति तद्गतधर्मवत्तैवेत्यर्थः, 'तत्तेतिपरेणान्वयः। ननु गोतत्ता गवयवृत्तिरिति व्यवहारः स्यादाधेयताया अनतिरिक्तत्वात् इत्यत आह, 'तदभेदो वेति, 'भासमान इति सतीति शेषः, अन्वयश्चास्य 'भवतीत्यनेन, 'भवति' व्यवह्रियमाणा भवतीत्यर्थः। 'इतीति 'यतो भवतीति पूर्व्वेणान्वयः। 'तयोरिति, अत इत्यादि।

केचित्तु 'इतिशब्दस्य काकाक्षिगोलकन्यायेन उभयत्रैवान्वय-इति अत इति न पूरणीयमित्याहुः। तन्न। एकस्य इतिशब्दस्य उभयार्थकत्वे सन्दर्भविरोधापत्तेः।

'तयोः' तत्ता-तद्वत्तयोः, 'भेदात्' अवश्याभ्युपेयभेदात्। नन्वेतन्मते सादृश्यस्य भेदाघटितत्वादिदमसङ्गतं इति चेत्, न, तस्य तद्भेदाघटितत्वेऽपि आश्रयभेदघटितत्वात्। न च तथापि तदन्यस्मिन्नित्यसङ्गतं, तस्य फलकथनरूपत्वात्। शङ्कते, 'नन्वेवमिति, 'एवं' उक्तरूपेण तयोर्भेदे, 'व्यक्त्यन्तर इत्यनेन तद्व्यक्तिभेदसत्त्वमावेदितं, तच्च गोत्वाग्रहे इष्टापत्तिसम्भवात् 'गोत्वग्रहे इति गोत्वनिश्चये इत्यर्थः, 'तद्गोवत्' तद्गोव्यक्त्यन्तरवत्, 'इयं' पुरोवर्त्तिव्यक्तिः, 'स्यादिति,

त्वियमपि गौरिति चेत्, न, गोत्वमात्रस्य तदन्यव्यक्ति-वृत्तित्वसमुच्चयात् एकत्र नानासम्बन्धानवगमात्। तन्नोवृत्तिबहुधर्मज्ञाने भवत्येव तन्नोवदियमिति।

---

तत्र तद्गोभेदस्य तद्गतबहुधर्मवत्त्वस्य च सत्त्वात् इति भावः। आपत्तिमुक्त्वाऽनुपपत्तिमप्याह, 'न त्वियमपीति, 'गौरिति गवा-भेदवतीत्यर्थः, 'स्यादिति पूर्व्वेणान्वयः, तत्ता-तदन्तयोर्विरुद्धत्वा-दिति भावः। शङ्कां निरस्यति, 'नेति, 'समुच्चयात्' ज्ञानात्, 'एकत्र' व्यक्त्यन्तररूपैकधर्म्मिणि, 'नानेति गोगतनानाधर्म्माणां, 'सम्बन्धानवगमात्' आश्रयत्वरूपसम्बन्धानवगमात्, तथाच तद्गत-भूयोधर्म्मवत्त्वज्ञानाभावात् न तत्र तदन्ताप्रतीतिरिति भावः। नन्वेवं इयं तद्गोवदितिप्रतीतिः कदाचिदपि न स्यात् इत्यत आह, 'तद्गोवृत्तीत्यादि, तथाचेष्टापत्तिरिति भावः। इदमुपलक्षणं व्यक्त्य-न्तरे तद्व्यक्तेः सादृश्यसत्त्वेऽपि गोसामान्यतत्तायां बाधकाभावात् उक्तानुपपत्तेरप्यभावः। ननु सादृश्यस्य नानाधर्म्मरूपत्वे गोसदृश इति ज्ञानं समूहालम्बनं स्यात् न तु विशिष्टज्ञानं इत्याशङ्क्य समाधत्ते, 'तथाप्ययमपीति, 'गोसदृश इति, विशिष्टवैशिष्ट्यधीरिति शेषः। 'एकत्रेति, 'उभयपदं नानापरं, 'समुच्चय इति धर्म्मपरोनिर्द्देशः, तथाच एकस्मिन् ज्ञाने नानाविशेष्यतानां सम्बन्धनिरूपकत्वं समु-च्चयत्वमित्यर्थः। 'भूयोधर्म्मवत्त्वं' तादृशधर्म्मत्वावच्छिन्नाधिकरणत्वं, 'विवेकात्' निष्कर्षात्, तथाच तादृशाधिकरणताया ऐक्येन तन्नि-

**तथाप्ययमपि शृङ्गादिमानिति समुच्चयधीः स्यात् न तु गोसदृश इति चेत्, न, एकत्रोभयसम्बन्धः समुच्चयोऽन्यगतभूयोधर्मवत्त्वमन्यत्र सादृश्यमिति विवेकात् ।**

---

रूपितविशेष्यताया अप्यैक्यान्नानाविशेष्यतानिरूपकत्वाभावेन न तस्य समूहालम्बनत्वमित्यभिप्रायः इति साम्प्रदायिका व्याचक्षते ।

ऋजवस्तु ननु सादृश्यस्यानेकधर्मरूपत्वे तज्ज्ञानं समुच्चयावगाहि स्यादित्याशङ्कते, 'तथाप्ययमपीति, 'समुच्चयधीः' समुच्चयावगाहिधीः, 'न तु गोसदृश इति नैकसम्बन्धावगाहि गोसदृश इति ज्ञानमित्यर्थः । 'एकत्र' एकस्मिन् धर्म्मिणि, 'उभयसम्बन्धः' अनेकसम्बन्धः, अन्यत्पूर्व्ववत् इत्याहुः, तच्चिन्त्य ।

वस्तुतस्तु, ननु अत्यन्ताभाव-प्रतियोगिनोरिव भेद-प्रतियोगिगतधर्म्मयोरेकत्रावगाहि ज्ञानं आहार्य्यभिन्नं चेत् समुच्चयः इति सादृश्यस्य तद्भेदघटितत्वेन गोसदृश इति ज्ञानं समुच्चयरूप स्यादिति तटस्थ-आशङ्कते, 'तथाप्ययमिति, 'न गोसदृश इति, समुच्चयानात्मक-इत्यादिः । भेदावगाहिसमुच्चयोऽप्रसिद्ध इति न देश्यं, तस्याव्याप्यवृत्तितामते संयोगिभिन्नो वृक्षः सयोगवानित्यादेरिव प्रसिद्धत्वात् । समाधत्ते, 'एकत्रेति एकधर्म्मिणि भावाभावसम्बन्ध इत्यर्थः, तदवगाहित्वेन ज्ञानमपि तत्त्वेन व्यपदिश्यते इति भावः । 'अन्यगतेति गवयान्यगतेत्यर्थः, 'अन्यत्र' गवये, 'विवेकात्' विवेचितत्वात्, तथाच भेदो गवि पतितः तादृशधर्म्मवत्त्वन्तु गवये इत्येकधर्म्मिण्युभयानवगाहित्वेन कुतः समुच्चयत्वप्रसक्तिरिति भावं वयं युक्तं व्याचक्ष्महे ।

**नवीनास्तु । विलक्षणसुखद्वये इतरसकलव्यावृत्तं सादृश्यमनुभूयते न तु तदुभयमात्रवृत्तिजातिरस्ति[१] तदुभयाभावे[२] जातेरनाश्रयत्वेनानित्यत्वप्रसङ्गात् । नापि जन्यं धर्मान्तरमस्तीत्यधिकं सादृश्यमुपेयं, तत्रापि**

---

नव्यमीमांसकमतमुत्थाप्य दूषयति, 'नवीनास्त्विति, 'इतरसकलव्यावृत्तं' तादृशसुखसामान्यावृत्तीत्यर्थः, 'अनुभूयते' एतत्सुखसदृशं तत्सुखमित्यनुभूयते, लोकैरिति शेषः । तथाच तदुभयमात्रवृत्तिधर्माभावात् भवन्मते तत्र सादृश्यानुभवोऽनुपपन्न इति भावः । 'तदुभयाभावे' तदुभयनाशे, 'अनाश्रयत्वेन' स्वसमवायिरहितत्वेन, 'अनित्यत्वप्रसङ्गादिति, तथाच पुनस्तादृशसुखद्वये उत्पन्ने तादृशजातिरवश्योपेया अनेकसमवेतत्वाभावेन जातित्वमेव तस्या न स्यादित्याश्रयनाशादेव तन्नाशस्तदुत्पत्तौ तदुत्पत्तिरिति सुतरामनित्यत्वं इति भावः । न च प्रत्यये घटत्वादेरिव तादृशजातेरपि तदानीं कालसम्बन्धमात्रं पश्चात्तदुत्पत्तौ ताभ्यां सह तत्सम्बन्धोऽपि उत्पद्यते सम्बन्धस्यानित्यत्वे सम्बन्धिनोऽनित्यत्वमिति तु रिक्तं वचः मनःसम्बन्धादेस्तथात्वेऽपि मनःप्रभृतेरथात्वात् इति वाच्यं । मानाभावेन तत्कल्पनासम्भवादित्येव तत्त्वं । 'अधिकं' सप्तपदार्थातिरिक्तं, नव्यमतोपरि शङ्कते, 'तत्रापीति, 'समानधर्मवत्त्वं'

---

(१) तद्द्वयमात्रवृत्तिजातिरस्तीति ख० ।

(२) तद्द्वयाभाव इति ख० ।

समानधर्मवत्त्वं व्यञ्जकं विना कथं तत्र सादृश्याभिव्यक्तिरिति चेत्, न, प्रतीतिबलात् द्रव्ये तथा गुणादौ तु व्यभिचारात्। अतएव न व्यञ्जकेनान्यथासिद्धिस्तदभावेऽपि सादृश्यानुभवादिति[१]। तत्तुच्छं विलक्षणं सुखद्वयं न सुखमात्रहेतुजन्यं सुखान्तरस्यापि तादृशत्वापत्तेः, किन्तु विलक्षणादृष्टजन्यं तच्चादृष्टं विहिततद्धेतुक्रियाविशेषानुष्ठानादन्येषामप्यस्तीति ते-

---

तद्गतधर्म्मवत्त्वं, 'अभिव्यक्तिः' प्रतीतिः, 'द्रव्य इति सावधारणं, 'तथा' व्यञ्जकसापेक्षं, 'व्यभिचारात्' गुणादिधर्म्मिकसादृश्यज्ञाने व्यञ्जकज्ञानव्यतिरेकव्यभिचारात् । 'अतएवेति, तथाच व्यञ्जकस्य सर्व्वत्रापेक्षितत्वे व्यञ्जकेनैव सदृशत्वव्यवहारोपपत्तौ किमतिरिक्तसादृश्यकल्पनया इत्यत्रानुयोगोऽपि नास्तीति भावः। 'तदभावेऽपि' व्यञ्जकाभावेऽपि, 'सादृश्यानुभवात्' गुणादावित्यादिः, 'इतीति, आहुरिति शेषः। दूषयति, 'तत्तुच्छमिति, 'सुखमात्रहेतुजन्यं' सुखसामान्यकारणजन्यं, 'सुखान्तरस्य' अविलक्षणसुखस्य, 'तादृशत्वापत्तेः' विलक्षणत्वापत्तेः, धर्म्मादिरूपकारणसाम्यादितिभावः । 'विलक्षणादृष्टेति विजातीयादृष्टेत्यर्थः, सुखजनकादृष्टस्य धर्म्मतया निषिद्धक्रियायास्तत्रानुपयोगात् 'विहितेति, 'तद्धेतुः' विजातीयादृष्टहेतुः, 'अन्येषां' पुरुषाणां, 'अस्तीति 'इतिशब्दः हेत्वर्थकः ।

---

(१) इत्याहुरिति ख० ।

षामपि तादृशानि सुखानि भवन्तीति तेषु कारण-विशेषप्रयोज्या विलक्षणजातिरस्ति तस्मात् जीवानामानन्त्यात्[१] अनादिनिधनत्वादुत्पन्नानागतवि-

---

नन्वेतावता का क्षतिरित्यभिप्रायेणाशङ्कते, 'तेषामपीति तादृश-पुरुषाणामपीत्यर्थः, 'कारणविशेषप्रयोज्या' विहितक्रियाविशेष-प्रयोज्या, तत्रेति शेषः, 'अस्तीति, तथाच तादृशक्रियाविशेष-जन्यत्वादिकमादाय तत्र सादृश्यव्यवहार इति भावः । ननु तादृशसुखद्वयं न कस्यापि कदाचिदुत्पन्नं न वोत्पत्स्यमानं न वादृष्टविशेषजन्यं येन तादृशसुखसादृश्यानुपपत्त्या तदतिरिक्तं स्यात् इत्यत आह, 'तस्मादिति अदृष्टविशेषाजन्यजन्यसुखस्याप्रामाणिकत्वादित्यर्थः, 'आनन्त्यात्' असंख्यत्वात्, 'अनादिनिधनत्वात्' उत्पाद-विनाशरहितत्वात्, 'उत्पन्नानागतविजातीयं उत्पन्नेभ्योऽनागतेभ्यश्च विलक्षणं सुखं नास्तीत्यर्थः। तथाचानन्तसंसारे कदाचित् कस्यचित् तादृशं सुखमुत्पन्नं अवश्यमुत्पत्स्यते वा इति भावः। न च तादृशसुखं नास्तीति सिद्धसिद्धिपराहतं, उत्पन्नानागतादृष्टविशेष-जन्यसुखातिरिक्ते सुखत्वाभावोक्तौ तात्पर्य्यात् । ननु तादृशसुख-स्याप्रसिद्धावपि दुःखादिकं तादृशं सम्भवति इति विलक्षणे दुःखा-दिक्षये सादृश्यानुभवादधिकं तद्वाच्यं इत्यत आह, 'एवमिति उक्तरूपेण तादृशसुखस्याप्रसिद्धावपि, 'दुःखादीत्यादि, तादृ-

---

(१) आत्मनामानन्त्यादिति ख० ।

जातीयं न सुखमस्ति, एवं दुःखादिकार्य्यान्तरेऽपि[१], न ह्यनुत्पन्नजातीयमनुत्पत्स्यमानजातीयं वा कार्य्यमस्ति। यच्च व्यक्तिनाशे जातेरनित्यत्वमापादितं, तदपि न, नाशकाभावात्, अतएव द्वयोरपि तदवस्थानम्। अपि चैकत्र प्रतियोगिभेदेन सादृश्यं भिन्नं न त्वेकं

---

शेत्यादिः, 'कार्य्यान्तरेऽपीति, अप्रसिद्धिरिति शेषः । 'एवं' अप्रसिद्धिः, 'कार्य्यान्तरेऽपीत्यनन्तरं किमपि न पूरणीयमित्यप्याहुः । कुत इत्याकाङ्क्षायामाह, 'न हीति, ननु तादृशसुखे वैजात्यस्वीकारे आश्रयनाशे जातेरनित्यत्वं स्यादित्याशङ्कां निराकरोति, 'यच्चेति, 'आपादितमिति भवतेत्यादिः। 'नाशकाभावादिति, अन्यथा घटत्वादेरपि प्रलये नाशापत्तेः गुणनाशं प्रत्येवाश्रयनाशस्य हेतुत्वादिति भावः। उपसंहरति, 'अतएवेति, 'द्वयोरपि' तादृशविजातीयसुखयोरपि, 'तदवस्थानं' तद्गतावस्थानवत्त्वं सादृश्यमिति यावत्। 'द्वयोरपि' अदृष्टवैजात्य-सुखवैजात्ययोरपीत्यर्थः, 'तत्' तदानीं आश्रयनाशदशायां, 'अवस्थानं' अवस्थितिरिति वार्थः। शङ्कते, 'अपि चेति, 'व्यवहारादिति, एकस्मिन् गवये गोसादृश्यं महिषसादृश्यं भिन्नं भिन्नं तयोरेकत्वे गोसादृश्यं शोभनं महिषसादृश्यं मन्दमिति व्यवहारानुपपत्तेरेकत्र शोभनत्वमन्दत्वयोरसम्भवादिति

---

(१) दुःखान्तरकार्य्येष्वपीति ख० ।

सुसदृश-मन्दसदृशव्यवहारात्, तथाच योग्यत्वादेकग्रहे सर्वग्रहप्रसङ्गः। प्रतियोगिगतभूयोधर्मज्ञानस्य व्यञ्जकस्य क्रमात् क्रमे तदेव व्यवहारनिमित्तमित्युक्तम्। किञ्चैवं वैसादृश्यमपि स्यात्। न च सादृश्याभावः,

---

भावः। 'योग्यत्वात्' आश्रयसन्निकर्षस्यावश्यकत्वेन सर्व्वेषां सादृश्यानां सन्निकृष्टत्वात्, 'एकग्रहे' एकसादृश्यग्रहदशायां। ननु व्यञ्जकग्रहक्रमादेव तद्ग्रहक्रम इत्याशङ्क्य दूषयति, 'प्रतियोगीति तादृशधर्म्माणां ग्रहोयस्मात् इति व्युत्पत्त्या तादृशधर्म्मग्राहकव्यञ्जकज्ञानस्य इत्यर्थः, 'क्रमे' सादृश्यग्रहक्रमे, 'तदेव' तादृशं व्यञ्जकमेव, 'व्यवहारनिमित्तं' सदृशव्यवहर्त्तव्यतावच्छेदकं, 'इत्युक्तमिति इत्यत्र समाधानं उक्तं, मयेतिशेषः।

केचित्तु पूर्व्वं सादृश्यव्याप्यानां प्रतियोगिगतधर्म्माणां व्यञ्जकत्वमाशङ्कितं तदभिप्रायेणेदं यथाश्रुतमेव सम्यगित्याहुः।

समाधानञ्च अनुभवविरोधरूपं सुसदृशत्वादिव्यवहारानुपपत्तिरूपञ्च। शङ्कान्तरमुत्थाप्य निरस्यति, 'किञ्चैवमिति, 'एवं' साधर्म्यस्य सादृश्यरूपत्वे, 'वैसादृश्यमपीति, सादृश्यवतीत्यादिः, 'स्यादिति, भवन्मते सादृश्यस्य साधर्म्यरूपत्वे सुतरां वैधर्म्यस्य वैसादृश्यरूपत्वमिति गूढ़ाभिप्रायः। अस्मन्मते वैसादृश्यस्य सादृश्याभावरूपतया नेयमापत्तिः सम्भवतीत्याह, 'न चेति, सादृश्यवतीति शेषः, 'सादृश्याभावः' सादृश्यसामान्याभावः, कुत इत्या-

**तद्वैपरीत्यस्यापि सम्भवात् । सादृश्याभावत्वेनैव प्रतीतिर्विशब्दस्य निषेधार्थकत्वात्[१] इति चेत्, तर्हि गौरिव महिषीत्यत्र पावनत्व-क्षीरवत्त्वादिना विवक्षितसादृश्यानाश्रये गवये वैसादृश्यं न स्यात्, न हि**

---

काङ्क्षायामाह, 'तद्वैपरीत्यस्यापीति, 'तद्वैपरीत्यस्यापि' सादृश्याभाववैपरीत्यस्यापि सादृश्यस्यापीति यावत्, 'सम्भवात्' तत्र सत्त्वादित्यर्थः । ननु विसदृश-इति प्रतीतेर्वैधर्म्यत्वेन तद्विषयत्वमनुभवसिद्धं विसदृशपदस्य विधर्म्मपरत्वादित्यतस्तस्य तथात्वमनुभावयति, 'सादृश्याभावत्वेनैवेति सादृश्यसामान्याभावत्वेनैवेत्यर्थः, 'एवकारेण वैधर्म्यत्वव्यवच्छेदः । तत्र युक्तिमाह, 'विशब्दस्येति, 'निषेधार्थकत्वात्' अत्यन्ताभावार्थकत्वात्, तथाच तस्य तादृशार्थकत्वं योगलभ्यमेव भवन्मते तु अन्यार्थकत्वं पारिभाषिकमिति गूढाभिप्रायः । उत्तरयति, 'तर्हीति, 'इत्यत्रेति, 'विवक्षितेति परेणान्वयः, 'पावनत्वं' पवित्रत्वं, 'क्षीरवत्त्वादीत्यादिना शृङ्गादिमत्त्वपरिग्रहः । अभेदे तृतीया, 'विवक्षितेति व्यवहृतेत्यर्थः, 'अनाश्रय इति, एतेन सादृश्यप्रतियोगिकाभाववत्त्वं गवये ज्ञापितं तेन च योगलभ्यसादृश्यप्रतियोगिकाभाववत्त्वं तत्रास्तीति मन्मते नानुपपत्तिरिति व्यञ्जितं । 'न स्यादित्यत्र हेतुमाह, 'न हीति,

---

(१) निषेधार्थपरत्वादिति ख० ।

तच्च गोसादृश्यं तदभावश्च, तस्मात् साधर्म्य-वैधर्म्ये साादृश्य-वैसादृश्ये।

यत्तु तद्वृत्त्यनेकधर्मवत्त्वं सादृश्यं तेनाभेदेऽपि "गगनं गगनाकारं सागरः सागरोपमः। राम-रावण-योर्युद्धं राम-रावणयोरिव"। इत्यादौ सादृश्यं। न चैवं

---

'हि' यस्मात्, 'तच्च' गवये, 'तदभावः' गोसादृश्यसामान्याभावः, तथाच सामान्याभावप्रतियोगिनोर्विरुद्धयोरेकत्रासत्त्वेन भवन्मते गवये गोवैसादृश्यव्यवहारो न स्यात् मन्मते तु सादृश्यप्रतियोगिकाभावस्य वैसादृश्यरूपत्वेन तत्र तद्व्यवहारो नानुपपन्न इति भावः। उपसंहरति, 'तस्मादिति, 'साधर्म्यं' तद्गतधर्मवत्त्वं, 'वैधर्म्यं' तदवृत्तिधर्मवत्त्वं, तथाच वैसादृश्यस्य यौगिकत्वाभावेऽपि न क्षतिरिति भावः।

एकदेशिमतमुत्थाप्य दूषयति, 'यत्त्विति, 'सादृश्यमिति, तथाच तद्वृत्तिभूयोधर्मवत्त्वमात्रं तत्सादृश्यं न तु भेदगर्भं इत्यर्थः, तस्य भेदाघटितत्वे युक्तिमप्याह, 'तेनेति, 'तेन' सादृश्यस्य भेदाघटितत्वेन, 'अभेदेऽपि' प्रतियोग्यनुयोगिनोर्भेदाभावेऽपि, 'इत्यादावित्यादिपदात् "ममैतच्छिशुसादृश्यमस्मिन्नान्यत्र कुत्रचित्"। इति यशोदोक्तिपरिग्रहः। ननु सादृश्यस्य भेदघटितत्वेन गौरवान्न तत्र गवयपदशक्यतावच्छेदकत्वं भेदाघटितत्वे गौरवाभावात् कथं तत्र न गवयादिपदशक्यतावच्छेदकत्वं। न च तथापि गोवृत्तित्वादिविशेषणवैशिष्ट्यघटितत्वेन गौरवं तदवस्थमेव इति वाच्यं। तस्योपलक्षणत्वादन्यथा गोवृत्तित्वविशिष्टधर्माणां गवयेऽभावात्तत्र तत्सादृश्यानुप-

गोरपि गोसदृशत्वे गवयपदाभिधेयत्वापत्तिः। तत्र सादृश्यपदस्य[१] विशेषे तात्पर्य्यात्। अन्यथा महिषेऽतिप्रसङ्ग इति। तन्न। तस्य तेन वा सदृश इति-

पत्तेः गोनिष्ठभेदप्रतियोगित्वविशिष्टतादृशधर्म्मवत्त्वस्य तथात्वे विशेष्य-विशेषणगुरुतरधर्म्मद्वये तदवच्छेदकत्वकल्पने महागौरवात् इत्याश-ङ्कते, 'न चैवमिति, 'एवं' तस्य भेदाघटितत्वे, 'गवयपदाभिधेयत्वं गवयपदशक्यतावच्छेदकवत्त्वं। समाधत्ते, 'तत्रेति, 'सादृश्यपदस्य' सादृश्यवाचकसदृशपदस्य इत्यर्थः, सादृश्यस्य वाक्यत्वेन पदत्वाभावात्, 'विशेषे' प्रत्याश्रयविभिन्ने खुर-शृङ्ग-रूपादिरूपविशेषधर्म्मे, 'तात्प-र्य्यात्' सङ्केतात्, तथाच तादृशधर्म्माणां शक्यत्वन्यूनवृत्तित्वेन तद-वच्छेदकत्वासम्भवात् अनन्तशक्तिकल्पने महागौरवं इति भावः। ननु सादृश्यानां तथारूपत्वेऽपि सादृश्यत्वरूपानुगतरूपेण शक्यता-वच्छेदकत्वकल्पने बाधकाभावः, न वा शक्तेरनन्तत्वं इत्यत आह, 'अन्यथेति अनुगतसादृश्यत्वरूपेण गोसादृश्यस्य गवयपदशक्यता-वच्छेदकत्वे, 'महिषेऽतिप्रसङ्गः' महिषेऽपि गवयपदशक्यत्वप्रसङ्गः, गोनिरूपितसादृश्यत्वावच्छिन्नस्य तत्रापि सत्त्वादिति भावः। 'इति-प्रयोगादिति प्रयोगस्य प्रामाणिकत्वात्, तथाच तस्य सदृश इत्यत्र षष्ठ्यर्थो निरूपितत्वं तस्य च सादृश्येऽन्वयः, तेन सदृश इत्यादौ तृतीयार्थः साहित्यं, समानधर्म्मवत्त्वं तत्र सदृशशब्दार्थः, तादृश-व्यवहारद्वयस्य भवन्मते भेदस्थले सम्भवेऽपि अभेदस्थलेऽसम्भवादिति

(१) सदृशपदस्येति ख०।

प्रयोगात्[१] । न चाभेदे सम्बन्धः सहार्थो वा सम्भवति । गगनं गगनाकारमित्यादौ तु गगनाद्येवैतादृशधर्मवन्नान्यदित्यत्र तात्पर्य्यम् ।

यदा स्थानान्तरीयगगन-सागरयोरुपमानत्वं[२] तयोर्युद्धविशेषे तयोरेव युद्धान्तरमुपमानमिति ।

---

भावः । ननु कथं अभेदस्थले तादृशप्रयोगासम्भव इत्यत आह, 'न चेति, 'अभेदे' प्रतियोग्यनुयोगिनोरभेदस्थले, 'सम्बन्धः' निरूपकत्वरूपसम्बन्धः, स्ववृत्तिधर्म्मवत्त्वस्य स्वनिरूपितत्वाभावात् स्वाभिन्ने स्वसाहित्याभावात्तस्य विभक्त्यर्थत्वे उद्देश्यतावच्छेदक-विधेयतावच्छेदकयोरैक्याच्छाब्दबोधासम्भवाच्चेति भावः । ननु गगनाकारमित्यादेः का गतिरित्यत आह, 'गगनमित्यादि, 'नान्यदिति, तथाच गगनमिति सावधारणमिति भावः । 'इत्यत्र तात्पर्य्यमिति, अवधारणार्थकपदे तात्पर्य्यमिति भावः । ननु गगनं गगनं इत्यादिवत् गगनं गगनवृत्तिधर्म्मवदित्यादेरपि निराकाङ्क्षत्वात् तादृशवाक्यार्थस्यापार्थकत्वापत्तिरित्यत आह, 'यद्वेति, 'उपमानत्वमिति, तथाच सामान्यशब्दस्य विशेषपरतया गगनपदद्वयस्य सागरपदद्वयस्य च विशेषपरतया नानुपपत्तिरिति भावः । ननूक्तयशोदोक्तेः का गतिरिति चेत्, बलरामतात्पर्य्येणापि तदुपपत्तेः तच्छेदम्पदस्य बलरामपरत्वे बाधकाभावात् ।

---

(१) इति प्रतीतिप्रयोगादिति ख० ।

(२) सर्गान्तरीयगगन-सागरयोरुपमानत्वमिति ख० ।

नन्वयं देवदत्तस्तदन्यो वा भवतु तत्सदृशस्तावदय-मिति भेदाभेदसंशयेऽपि सादृश्यनिश्चयात् अतिरिक्तं सादृश्यमस्त्विति[१] चेत्, न, देवदत्तधर्म्ममात्राभिप्रायेण[२] एकदेशे सादृश्यपदप्रयोगात् कथमन्यथा स एवायं न तु तत्सदृश इति, तत्सदृशोऽयं न तु स इति प्रतीति-प्रयोगौ। न चात्र सदृशपदं भेदमात्रपरमिति

सादृश्यस्यातिरिक्तताव्यवस्थापकं मीमांसकयुक्त्यन्तरं निरस्यति, 'नन्वित्यादिना, 'तत्सदृशः' देवदत्तसदृशः, इतीत्यस्य 'निश्चयादि-त्यनेनान्वयः, मात्रपदेन भेदव्यवच्छेदः। तथाच तत्र सदृशपदस्य देवदत्तगतधर्म्मवत्त्वमात्रे लक्षणेति भावः। 'एकदेशे' सदृशपदशक्यै-कदेशे, 'सादृश्यपदप्रयोगात्' सादृश्यवाचकसदृशपदप्रयोगादित्यर्थः। तथाच लक्षणामूलकस्तादृशव्यवहार इति भावः। तत्रैव युक्तिमाह, 'कथमन्यथेति, 'अन्यथा' सादृश्यस्य भेदाघटितत्वे, तस्मिन् तत्सदृश-भेदप्रतीति-प्रयोगावुक्त्वा तत्सदृशे तद्भेदप्रतीति-प्रयोगावाह, 'तत्स-दृशोऽयमिति, उक्तप्रतीति-प्रयोगयोः सादृश्यविशिष्टे तद्भेदावगाहि-तयाप्युपपत्तिरित्यत आह, 'तत्सदृशोऽयमिति तत्सादृश्यावच्छिन्नो-ऽयमित्यर्थः, तथाच तत्सादृश्यसामानाधिकरण्येन तादृशप्रतीत्यादे-रुपपत्तावपि तत्सादृश्यावच्छेदेन तद्भेदावगाहिप्रतीत्यादेर्भवन्मतेऽनु-पपत्तिः अभेदेऽपि सादृश्यस्वीकारात् इति भावः। इति तु वस्तु-

(१) सादृश्यमितीति ख० ।

(२) देवदत्ताभिप्रायेणेति ख० ।

युक्तं, मुख्ये सम्भवति लक्षणाया अयोगात् तस्मान्न पदार्थान्तरं सादृश्यमिति। स्यादेतत्, मा भूत् पदार्थान्तरं, तथापि प्रत्यक्षाच्छब्दाद्वा गवये गोसादृश्यज्ञानात् गवयसदृशो गौरितिज्ञानमुपमितिः। न चैतत्प्रत्यक्षं, असन्निहितविशेष्यकत्वात्[१]। नानुमानं लिङ्गा-

गतिः। शङ्कते, 'न चेति, 'युक्तमिति परेणान्वयः, अयुक्तत्वे हेतुमाह, 'मुख्य इति शक्ये इत्यर्थः, अर्थ इति शेषः। उपसंहरति, 'तस्मादिति। सादृश्यस्यातिरिक्ततां व्यवस्थापयितुमशक्तोऽपि मीमांसकः सलज्जः शङ्कते, 'स्यादेतदिति, 'एतत्' सादृश्यस्य क्लृप्तपदार्थान्तर्गतत्वं, इदञ्च "तुष्यतु दुर्जनः" इति न्यायेन उक्तं। 'एतत्' सादृश्यं, 'पदार्थान्तरं', 'मा भूदिति न स्यादित्यर्थः। 'प्रत्यक्षादिति इन्द्रियादित्यर्थः, जन्यत्वं पञ्चम्यर्थः, 'ज्ञानादित्यन्वयी, एवमग्रेऽपि। अतीन्द्रियेऽसन्निकृष्टे च गोसादृश्यज्ञानात् गवि तत्सादृश्यज्ञानस्यापि उपमितित्वादाह, 'शब्दाद्वेति, 'ज्ञानादिति 'ज्ञानमित्यन्वयि, तादृशज्ञानजन्यज्ञानमित्यर्थः, लक्षणन्तु तत्सादृश्यप्रकारकज्ञानजन्य-तद्विशेष्यक-तत्सदृशसादृश्यप्रकारकज्ञानत्वं तद्विशेष्यकोपमितित्वमिति, सामान्यलक्षणन्तु सादृश्यप्रमाकरणकज्ञानत्वं इति तदभिप्रायः। तज्ज्ञानस्य प्रत्यक्षादिभिन्नत्व एव उपमितित्वं सेत्स्यति इति प्रत्यक्षादिभिन्नत्वं तत्र सम्पादयति, 'न चैतदिति, 'असन्निहितविशेष्यकत्वात्' गवादेर्दूरवर्त्तित्वादसन्निकृष्टत्वादिति यावत्, तैरलौकिक-

(१) विशेष्यासन्निकर्षादिति ख०।

भावात् । न च गवयगतं सादृश्यं लिङ्गम्, अपक्षधर्मत्वात् । अथ सदृशद्वयान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गवयगतसादृश्यप्रतियोगित्वात् गौर्गवयसदृश इत्यनुमितिरिति चेत्, न, व्याप्तिग्रहं विनैव प्रथममपि प्रत्यक्षाच्छब्दाद्वा गोसदृशं गवयं ज्ञात्वा गवि गवयसादृश्यज्ञानोदयात् । किञ्च गवि गवयसादृश्यं न साध्यं प्रथमतस्तद्-

---

सन्निकर्षानभ्युपगमादिति भावः । 'लिङ्गाभावादिति अव्यभिचारिपक्षधर्मलिङ्गाभावादित्यर्थः । शङ्कते, 'न चेति, 'सादृश्यमिति गोसादृश्यमित्यर्थः, 'अपक्षधर्मत्वात्' गवाद्वृत्तित्वात्, इदमुपलक्षणं गवयसादृश्यस्य गोत्वस्य वा तथात्वे साध्याविशेषात् सिद्धसाधनादित्यपि बोध्यं । तद्गतसादृश्यप्रतियोगित्वेन हेतुना तत्सादृश्यं साधनीयं तत्र पक्षे साध्यसन्देहेन पक्षान्तर्भावेन व्याप्तिनिश्चयो न सम्भवतीति दृष्टान्तस्थलं प्रदर्शयन् सामान्यव्याप्तिमुद्भाव्य शङ्कते, 'अथेति, 'सदृशद्वयान्तरेति गो-गवयभिन्नखराश्वादीत्यर्थः, 'दर्शने' तयोः सादृश्यज्ञानदशायामित्यर्थः, एतेन तत्रैव व्याप्तिनिश्चयः सम्भवतीत्यावेदितं, 'विनैव' विनापि । ननु व्याप्तिग्रहो यत्र न जातस्तत्र न जायत एव तज्ज्ञानमिति यद्युच्यते तदाप्याह, 'प्रथममपीति, 'प्रथममपि' व्याप्तिग्रहात् पूर्व्वमपि । क्षणविलम्बस्य शपथनिर्णेयत्वादाह, 'किञ्चेति, 'न साध्यमिति, वक्तुं शक्यत इति शेषः, 'प्रथमतः' व्याप्तिग्रहात् पूर्व्वं, व्याप्तिग्रहस्य साध्यज्ञानाधीनत्वादिति भावः । सामान्यव्याप्तौ प्रकृत-

**प्रतीतेः, गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षं विशेष्यस्यासन्निकर्षादिति नानुमितिगम्यं तल्लिङ्गस्यापि तद्गतत्वेनाप्रत्यक्षस्य लिङ्गान्तरगम्यत्वेनानवस्थानात् । न च गौरेतद्गवयसदृशः गवयगतभूयोऽवयवादिसामान्यवत्त्वात् गवयान्तरवदिति रामं । गवयान्तराज्ञानेऽपि गवि गवयसदृशत्वप्रत्ययात् । अतएव गवि गवयगत-**

---

साध्यज्ञानानपेक्षणाद्धेत्वसिद्धिमाह, 'गवयगतेति, 'विशेष्यस्यासन्निकर्षात्' पक्षस्य गोरसन्निकर्षादित्यर्थः । ननु तादृशहेतुरपि तत्रानुमेय-इत्यत आह, 'तल्लिङ्गस्यापीति गवयसादृश्यप्रतियोगित्वरूपलिङ्गस्यापीत्यर्थः, 'तद्गतत्वेन', 'अप्रत्यक्षस्य' प्रत्यक्षाविषयस्य, इदञ्च 'लिङ्गान्तरगम्यत्वेनेत्यत्र हेतुगर्भविशेषणं, 'अनवस्थानादिति तत्साधकलिङ्गमप्यनुमेयं पुनस्तत्साधकलिङ्गमप्यनुमेयमित्याद्यनवस्थानादित्यर्थः । उक्तानवस्थाया अनादित्वेऽप्याह, 'न चेति, 'एतदिति गवयान्तरस्य दृष्टान्तत्वसम्पत्त्यर्थं । न च विशेषव्याप्तिरप्रयोजिकेति देश्यं, दृष्टान्तसत्त्वे तस्या अपि प्रयोजकत्वात् अन्यथा तन्निर्वचने ग्रन्थकर्त्तुरुन्मत्ततापत्तेः, न हि प्रकृतानुपयुक्तं कुत्रचित्कश्चिन्निर्व्वक्ति । 'सामान्यवत्त्वात्' तत्-प्रतियोगित्वादित्यर्थः, अन्यथा साध्याविशेषापत्तेः । 'इति रामं' इति मनोज्ञमित्यर्थः । 'प्रत्ययादिति, तथाच तादृशज्ञानस्यागत्या उपमितित्वं स्वीकरणीयमिति भावः । यद्यपि गोरसन्निकृष्टत्वेन प्रकृत-हेतोः पक्षधर्मताज्ञानं न सम्भवतीत्युक्तदोषस्य जागरूकत्वाद्दोषान्तर-

गोसादृश्यं गोगतगवयसादृश्यं विनानुपपद्यमानं तत्क-ल्पयति, न हि गोसदृशो गवय एतद्विसदृशो गौरिति वाच्यमिति निरस्तम् । गवयनिरूपितगोसादृश्याप्र-सिद्धौ तेन विनानुपपत्तिज्ञानाभावात् । किञ्च तवार्था-पत्तिर्व्यतिरेक्यनुमानं । न च गवयगतसादृश्यप्रतियो-

---

दानमसङ्गतं, तथापि गवि सन्निकर्षदशायामपि तादृशज्ञानस्य नानु-मितित्वसम्भव इत्यावेदनायैव तथोक्तिरिति । अथमर्थापत्तेः प्रमा-णान्तरत्वस्वीकारात् । तच्च तन्नास्तीत्याह, 'अतएवेति वक्ष्यमाणदोषा-देवेत्यर्थः, अस्य निरस्तमिति परेणान्वयः, 'गवीति, 'तत्कल्पयतीति परेणान्वयः । गवयगतगोसादृश्यं तत्कल्पनकर्त्तृ तच्च विशेषणं अनु-पपद्यमानान्तं, 'तत्' गवयसादृश्यं । न चापाद्यापादकयोः वैय-धिकरण्यं, गवयगतगोसादृश्यपदेन गोनिष्ठस्य गवयनिष्ठसादृश्यप्रति-योगित्वस्य उक्तत्वात् । आपाद्यापादकयोर्व्यभिचाराभावं ग्राहयति, 'न हीति, 'एतद्विसदृशः' एतत्सादृश्याभाववान् इत्यर्थः । गोरसन्नि-कृष्टत्वेनापाद्यज्ञानासम्भवेन तदनुपपत्तिज्ञानमसम्भवीति दूषयति, 'गवयनिरूपितेति, 'गोसादृश्याप्रसिद्धाविति, गोरसन्निकृष्टत्वेनेत्यादिः, 'अप्रसिद्धौ' अनिश्चये, 'तेन विना' तादृशसादृश्येन विना, 'अनु-पपत्तिज्ञानाभावादिति अनुपपत्तिज्ञानासम्भवादित्यर्थः । अर्थापत्तेः प्रमाणान्तरत्वं नैयायिकैरनङ्गीकारात् किं दूषणान्तरदाने प्रयास-इत्यभिप्रायेणाह, 'किञ्चेति, 'तव' नैयायिकस्य, 'व्यतिरेक्यनुमानं' तत्स्वरूपेत्यर्थः। तस्यास्तथात्वे का क्षतिरित्यत आह, 'न चेति,

गित्वं गवि प्रत्यक्षादिना ज्ञातुं शक्यमित्युक्तम् । नन्वेवं करभे गोवैधर्म्यज्ञानात् गवि करभवैधर्म्यज्ञानमपि मानान्तरात् स्यादिति चेत्, न, गवि करभवैधर्म्यं यदि करभवृत्तिधर्म्माभाववत्त्वं तदा स्मृते गवि प्रागस्तितावदनुपलब्धेः गम्यमेव(१) । अथ करभावृत्तिधर्मवत्त्वं तदा

---

ज्ञातुं शक्यमिति परेणान्वयः । 'उक्तमिति गवयगतसादृश्यप्रतियोगित्वञ्च गवि न प्रत्यक्षमिति ग्रन्थे इत्यादिः । शङ्कते, 'नन्वेवमिति, 'एवं' गवये गोसादृश्यज्ञानानन्तरं गवि गवयसादृश्यज्ञानस्य मानान्तरादुत्पन्नत्वे, 'मानान्तरात्' प्रत्यक्षानुमान-शब्दातिरिक्तप्रमाणात् उपमानादिति यावत्, तथाच भवदुक्तलक्षणस्य तत्रागमनादव्याप्तिरिति भावः । अपरे तु 'मानान्तरात्' क्लृप्तप्रमाणातिरिक्तप्रमाणादित्यर्थः, उपमानलक्षणस्य तत्रागमनेन तस्य तदन्तर्गतत्वासम्भवादिति भावः । तथाच भवन्मते प्रमाणान्तरस्वीकारप्रसङ्ग इत्यभिप्रायः । करभवैधर्म्यं वितर्क्य समाधत्ते, 'नेति, 'प्रागस्तितावत्' पूर्ववर्त्तीत्यर्थः, 'अनुपलब्धेः' करभनिष्ठाभावप्रतियोगिधर्मवत्त्वं विना गवि करभवृत्तिधर्माभाववत्त्वमनुपपन्नमिति ज्ञानात्, जन्यत्वं पञ्चम्यर्थः, स च ज्ञानविषयार्थकगम्यपदार्थैकदेशे ज्ञानेऽन्वेति, तथाच तादृशानुपपत्तिज्ञानजन्यज्ञानविषय एवेत्यर्थः । एवञ्च तस्योपमानलक्षणालक्ष्यत्वेन कुतोऽव्याप्ति-

---

(१) अनुपलब्धिगम्यमेवेति ख० ।

गोधर्म्मा गवि गृहीता एव[१] इदानीं स्मृतगोधर्म्माणां करभेऽभावमात्रमधिकं गम्यं तच्च प्रत्यक्षादेव। अथ तत्प्रतियोगिकैतन्निष्ठसादृश्ये भासमाने समानसंवित्संवेद्यतया एतत्प्रतियोगिकतन्निष्ठसादृश्यं वैधर्म्यञ्च ज्ञातमेवेति चेत्। न। विशेषण-विशेष्यप्रतियोगिभेदेन समानसंवित्संवेद्यत्वासिद्धेः एतत्सदृश एतद्विधर्म्मा स-

---

रिति भावः। 'गृहीता एवेति करभे गवावृत्तिधर्मवत्ताग्रहकाले इत्यादिः, एतेन गोधर्मस्मृतिकारणानुभवः सम्पादितः। 'इदानीमिति, तदनुभवजन्यसंस्कारादिति शेषः, 'करभेऽभावमात्रं' करभनिरूपितवृत्तित्वाभावमात्रं पूर्वागृहीतं, 'गम्यं' ज्ञानविषयः, कर्त्तव्य-इति शेषः, 'तत्' करभवृत्तित्वाभावविषयकं ज्ञानं, 'प्रत्यक्षादेव' इन्द्रियादेव, सन्निकर्षसत्त्वादिति भावः। ननु गोगवयसादृश्ययोः तद्वैधर्म्ययोश्च तुल्यवित्तिवेद्यतया एकग्रहकालेऽपरग्रहसम्भवात् किमुपमितिस्वीकारेणेत्याशङ्क्य तयोस्तुल्यवित्तिवेद्यत्वं न सम्भवतीति समाधत्ते, 'अथेत्यादि, 'ज्ञातमेव' ज्ञानयोग्यमेव, 'विशेषण-विशेष्येति, 'विशेषणं' गवादिवृत्तित्वप्रतियोगिगवादि, 'विशेष्यं' गवय-करभादि, 'असिद्धेरिति, विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वेन गवयादिविशेष्यज्ञानाभावदशोत्पन्नगोसादृश्य-वैधर्म्यज्ञानस्य गवय-सादृश्य-वैधर्म्यविषयकत्वासम्भवादिति भावः। विशेष्ये सन्निकर्षस्यावश्यकत्वेन तज्ज्ञानस्यापि सम्भवात् क्षणविलम्बस्य शपथनिर्णेय-

---

(१) गवि गता एवेति ख०।

इत्येतद्विशेष्यकप्रत्ययानुदयाच्च, तद्विशेष्यकप्रत्यक्षे तत्सन्निकर्षस्य हेतुत्वात् । ननु प्रत्यक्षे विशेष्यसन्निकर्षो हेतुर्न तु यावद्विशेष्यसन्निकर्षो गौरवात् अन्यथातीतानागतवर्त्तमानव्याप्यविशेष्यकव्याप्तिप्रत्यक्षं न स्यादिति चेत् । न । अतीतानागतविशेष्ये सामान्यलक्षणायाः सत्त्वात् । अथ गवयसादृश्यं गवि गवयगतशृङ्गित्वादिसामान्यवत्त्वं(१), तच्च गवये गोसादृश्ये भासमाने गवि भातमेव, यद्वा गोगतशृङ्गित्वादेर्गवयगतत्वं गवये

---

लाद्दोषान्तरमाह, 'एतदित्यादि, 'अनुदयाच्चेति, कथमित्याकाङ्क्षायामाह, 'तद्विशेष्यकेति, प्रकृताभिप्रायेणेदं, वस्तुतो विषयतासम्बन्धेन प्रत्यक्षत्वावच्छिन्नं प्रति सन्निकर्षस्य हेतुत्वात् विशेष्यतायाः कार्य्यतावच्छेदकेऽप्रवेशाद्सङ्गत्यापत्तेः । 'हेतुत्वादिति, तथाच तत्र विशेष्ये सन्निकर्षविरहात् तादृशज्ञानस्य प्रत्यक्षत्वासम्भवेन सुतरामुपमितित्वमङ्गीकार्य्यमिति भावः । अतएव पूर्व्वं 'स इत्यनेन विशेष्यनिर्द्देशः कृतः । 'हेतुः' हेतुतयाऽपेक्षितः, 'अन्यथा' यावति विशेष्ये सन्निकर्षस्यापेक्षितत्वे, 'न स्यादिति सन्निकृष्टधूमादिविशेष्यकव्याप्तिप्रत्यक्षस्यातीतानागतधूमादिविशेष्यकत्वं न स्यादिति पर्य्यवसितार्थः, 'सामान्यलक्षणाया इति तवेत्यादिः, मन्मते त्वतीतानागतविशेष्यकत्वं तत्र नास्त्येवेति भावः । तटस्थः शङ्कते, 'अथेत्यादि, 'तच्च' तादृशसामान्यवत्त्वञ्च, 'भातमेवेति गोसादृश्यभानकालीनभानविषय एवे-

---

(१) गवयगतशृङ्गादिमत्त्वमिति ख० ।

गोसादृश्यं एवं तस्यैव गवयगतस्य गोगतत्वं गवि साहश्यं[१] तच्चेन्द्रियेणैव ज्ञातं सामान्यस्यैकत्वेनेन्द्रिय-सन्निकृष्टत्वात् अयं सइति विपरीतप्रत्यभिज्ञाया-मिवेति चेत्, सत्यं, गोविशेष्यकगवयगतशृङ्गित्वादि-ज्ञानं नेन्द्रियजन्यं गोरसन्निकर्षात् तस्मादेतत्सदृश-

---

त्यर्थः, सतिसप्तम्या समानकालीनत्वप्रतिपादनात्। गवयगततादृश-धर्म्मेभ्यो गोगततादृशधर्म्माणां भिन्नतया इदमसङ्गतमत आह, 'यद्देति, 'गोगतशृङ्गित्वादेः' गोवृत्तितावच्छेदकशृङ्गत्वावच्छिन्नादेः, 'गवयगतत्वं' गवये गतत्वं यस्येति व्युत्पत्त्या गवयवृत्तीत्यर्थः, षष्ठ्यर्थो-ऽभेदः, तथाच गोवृत्तितावच्छेदकशृङ्गत्वावच्छिन्नाभिन्नगवयवृत्तीति पर्य्यवसितार्थः, अन्यथा गोगतधर्म्माणां गवयादावसत्त्वात् सादृश्यम-प्रसिद्धं स्यादिति भावः। एवमग्रेऽपि, यथाश्रुतन्तु न सङ्गच्छते गवय-वृत्तित्वादेर्गोसादृश्यरूपत्वाभावात् एवं गोवृत्तित्वस्य गवयसादृश्य-रूपत्वाभावाच्च। 'तच्च' तादृशसादृश्यञ्च, 'ज्ञातं' ज्ञानयोग्यं, कुत-इत्याकाङ्क्षायामाह, 'सामान्येति शृङ्गत्वादिरूपजातेरित्यर्थः, अत्रैव दृष्टान्तमाह, 'अयमिति, तथाच सोऽयमिति प्रत्यभिज्ञायामिद-न्त्वावच्छिन्ने तत्तावत्तादात्म्यस्यैव तत्तावति इदन्त्वावच्छिन्नतादात्म्य-रूपतया यथा तादृशप्रत्यभिज्ञा तथा गोवृत्तितावच्छेदकशृङ्गत्वादे-रेव गवयवृत्तितावच्छेदकरूपतया तत्र सन्निकर्षस्यावश्यकत्वेन एकदा क्षणविलम्बेन वा उभयसादृश्ययोरुभयत्र ग्रहसम्भवः। 'गोरसन्नि-कर्षात्', मया अलौकिकसन्निकर्षानभ्युपगमादिति भावः। उप-

---

(१) गोसादृश्यमिति ख०।

एतद्विधर्म्मा एतस्माद्दीर्घः स इति ज्ञानं नानुमानात् विशेष्यासन्निकर्षे तद्गतबहुलिङ्गाज्ञानात्, एवञ्च सप्रतियोगिकपदार्थज्ञाने तत्प्रतियोगिकपदार्थज्ञानमुपमानं। तदाहुः प्रत्यक्षादिकं विनार्थादर्थान्तरज्ञानं

---

संहरति मीमांसकः, 'तस्मादिति, प्रथमान्तत्रयस्य 'स इत्यनेन सम्बन्धः, 'नानुमानात्' इत्यत्र हेतुमाह, 'विशेष्यासन्निकर्ष इति गवादौ सन्निकर्षाभावे, एतेन प्रत्यक्षेणापि तज्ज्ञानं समर्थयितुं न शक्यमित्यपि व्यञ्जितं। 'तद्गतेति गवादिगतेत्यर्थः, 'बह्विति सम्पातायातं, अथवा तद्गतं यद्बहूनां गवयधर्म्माणां सादृश्यात्मकानां लिङ्गमनुमापकं तदज्ञानादित्यर्थः। 'तत्पदं गवयादिपरं, तथाच गवयादिगता ये बहवो धर्म्माः तदनुमापकाज्ञानादित्यर्थः, इत्यपरे, तन्न, तत्पदस्य प्रक्रान्तवाचितानियमात्। वयन्तु तद्गतानि विशेष्यगतानि यानि सादृश्य-वैधर्म्य-दीर्घत्वादीनां बहूनि लिङ्गानि तेषामज्ञानात् ज्ञानासम्भवादित्यर्थः इति ब्रूमः। तथाचागत्या तज्ज्ञानमुपमित्यात्मकं मन्तव्यमिति भावः। ननु उक्तोपमानलक्षणं सादृश्यमात्रघटितत्वेन वैधर्म्य-दीर्घत्वादिज्ञानेऽव्याप्तमित्यत आह, 'एवञ्चेति असन्निकृष्टविशेष्यकवैधर्म्य-दीर्घत्वादिज्ञानस्यापि उपमितिलक्षणलक्ष्यत्वे सिद्धे च, 'ज्ञान इति तादृशज्ञानानन्तरमित्यर्थः, 'उपमानं' उपमितिः, तथाच तत्प्रतियोगिकपदार्थप्रकारकज्ञानविशेष्यतापन्नप्रतियोगिकपदार्थप्रकारकत्वे सति तत्प्रतियोगिकपदार्थप्रकारकज्ञानजन्यतद्विशेष्यकज्ञानत्वमुपमितिलक्षणमिति पर्य्यवसितं अतो नाव्याप्तिरिति भावः। अत्रैव प्राचीनसंवादं प्रमाणयति, 'तदाहुरित्यादि,

पूर्व्वेषामुपमानात्, विगर्हितमेतत्[१], तथाहि परस्पर-सदृशं हस्त्यादिकं प्रत्यक्षमतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गौर्गवय-सदृशः तत्सादृश्यप्रतियोगित्वात् यथा भ्रातुर्भगिनी । गवयगतसादृश्यप्रतियोगित्वञ्च गोर्गवयगतसादृश्य-वित्तिवेद्यमेव सादृश्ये गोः प्रतियोगित्वेनैव ज्ञानात्

'प्रत्यक्षादिकं' आदिनाऽनुमानपरिग्रहः, 'अर्थात्' सप्रतियोगिकपदार्थज्ञानात्, 'अर्थान्तरज्ञानं' सप्रतियोगिकपदार्थान्तरज्ञानं, 'पूर्व्वेषां' अतीतगवादीनां, 'उपमानात्' उपमितिजनकप्रमाणादित्यर्थः, विशेष्यत्वं षष्ठ्यर्थः । निर्व्यूढं मीमांसकमतं दूषयति, 'विगर्हितमिति निन्दितमित्यर्थः । क्वचिद्विवर्णितमिति पाठः अपव्याख्यातमिति तदर्थः, तथाहि निन्दितत्वं यथा तथा जानीहि इत्यर्थः, 'हस्त्यादिक-मित्यादिना खराश्वादिपरिग्रहः, 'प्रत्यक्षं' प्रत्यक्षविषय एव, एतेन वक्ष्यमाणानुमाने दृष्टान्तः स्थिरीकृतः । 'अतः' एतद्द्वयान्तर्भावेन, अन्वयस्यास्य व्याप्तिज्ञान इत्यत्र, 'तत्सादृश्येति गवयनिष्ठसादृश्येत्यर्थः, दृष्टान्तमाह, 'यथेति, 'भ्रातुरिति हस्त्यादीनामित्यादिः नातः सन्दर्भविरोधः। ननूक्तहेतुज्ञानं पूर्व्वमसम्भवीत्यत आह, 'गवयगतेति गवयनिष्ठेत्यर्थः, एवमग्रेऽपि, 'गोरिति गोनिष्ठमित्यर्थः, 'वित्ति-वेद्यमेवेति, तथाच गवये गोप्रतियोगिकसादृश्यग्रहकाले तुल्यवित्ति-वेद्यतया गवयनिष्ठसादृश्यप्रतियोगित्वं गवि गृह्यते इति भावः । नन्वधिकरणत्वाधेयत्वयोर्निरूपकत्व-निरूप्यत्वयोश्च तुल्यवित्तिवेद्यतया

(१) विनार्थादर्थापत्तौ पूर्व्वेषामुपमानतेति वार्त्तमेतदिति ख० ।

अन्यथा सादृश्ये गोरनन्वयापत्तेः । यत्तज्ञां सामान्यतोव्याप्तिग्रहं विना एतत्सदृशः स इति फलासिद्धेः यत्तज्ञां व्याप्तिग्रहेऽस्माकं व्यतिरेकी परेषामर्थापत्तिरित्यन्यदेतत्, सादृश्यस्योभयवृत्तिधर्मस्य किञ्चिद्विशेष्यसन्निकर्षात् प्रत्यक्षेण भानं यावद्विशेष्यसन्निकर्षस्याप्रयोजकत्वात् । अन्यथाऽयं स इति भ्रान्तविपरीतप्रत्यभिज्ञायां का गतिः । मनसैव चैतन्निष्ठसादृश्यप्रति-

---

प्रत्यक्षस्थले तद्ग्रहकाले एतद्ग्रहसम्भवेऽपि गवयो गोः सदृश इतिशब्दे तुल्यवित्तिवेद्यताया अभावात् तत्र का गतिरित्यत आह, 'सादृश्य इति, 'प्रतियोगित्वेनैव' प्रतियोगित्वरूपषष्ठ्यर्थद्वारैव, 'ज्ञानात्' शाब्दबोधात्, एतेन तस्य मानसोपनीतभानसामग्रीसत्त्वं व्यञ्जितं । समासस्थलेऽपि गोप्रतियोगितानिरूपके गोपदस्य लक्षणया तत्रापि तत्सत्त्वं बोध्यं, 'अन्यथा' प्रतियोगितायाः सम्बन्धत्वे, 'अनन्वयापत्तेः', नामार्थयोर्भेदान्वयस्याव्युत्पन्नत्वादिति भावः । सामान्यव्याप्तेरावश्यकत्वं दर्शयन् उक्तानुमानस्य व्यतिरेकित्वं प्रदर्श्य अर्थापत्तिस्वीकारापत्तिं निराकरोति, 'यत्तज्ञां सामान्यत इति, 'फलासिद्धेः', प्रकृतसाध्यस्य पूर्वं ज्ञानासम्भवादिति भावः । 'व्यतिरेकीति, तद्विना अनुपपद्यमानत्वं तदभावव्यापकीभूताभावप्रतियोगित्वमिति भावः । 'परेषां' मीमांसकानां, एतावता परमतं दूषयित्वा जरन्नैयायिकः स्वमते उपमितिस्वरूपं निरूपयितुं भूमिकामारचयन्नाह, 'कीदृग्गवय इति कीदृग्गवयपदवाच्य इत्यर्थः, उत्तरस्थगवयपदमपि

योगित्वग्रहः प्रत्यक्षविशेष्यकत्वं परामर्शे न प्रयोजकमित्युक्तम्। कीदृशगवय इति जिज्ञासायां यथा गौस्तथा गवय इति[1] श्रुतोत्तरस्य[2] तथाभूते पिण्डे दृष्टे तथायमित्यतिदेशवाक्यार्थानुसन्धाने[3] अयं गवयशब्दवाच्य इति मतिरुपमानफलम्। न चेयं वाक्यमात्रात्, अप्रत्यक्षीकृतपिण्डस्यापि प्रसङ्गात्। नापि

गवयपदवाच्यपरं, 'जिज्ञासायां' प्रतिपाद्यपुरुषीयतादृशजिज्ञासायां सत्यां, 'इतीति इत्याकारकवाक्यादित्यर्थः, 'श्रुतोत्तरस्य' श्रुतः शाब्दविषयीकृत उत्तरवाक्यार्थो येन इति व्युत्पत्त्या अवगतोत्तरवाक्यार्थस्य इत्यर्थः, 'इतीत्यस्य उत्तरान्वितत्वे तादृशप्रयोगानुपपत्तेः श्रुधातोः श्रवणार्थकत्वे उत्तरवाक्यार्थज्ञानाप्राप्त्या पश्चात् तत्स्मरणानुपपत्तेश्च। षष्ठ्यर्थः कर्तृत्वं, तस्य च वक्ष्यमाणक्रियात्रयेऽन्वयः, 'तथाभूते' गोसादृश्यवति, 'पिण्डे' शरीरे, सप्तम्यर्थो विषयत्वं, 'दृष्ट इति भावे क्तः तादृशपिण्डविषयकदर्शने सति अयं गोसदृश इति प्रत्यक्षे सतीति यावत्, 'तथायमिति' गोसादृश्यवान् गवय इतीत्यर्थः, 'अनुसन्धाने' स्मरणे सतीत्यर्थः, तादृशप्रत्यक्षस्यैवोद्बोधकत्वादिति भावः। 'अयं' गवयः, 'मतिः' ज्ञानं, 'उपमानफलं' उपमानप्रमाणफलमित्यर्थः। शङ्कते, 'न चेति, 'इयं' उक्ता मतिः, 'वाक्यमात्रात्' गवयो गवयशब्दवाच्यइति वाक्यमात्रजन्या, 'मात्रपदेन अतिदेशवाक्यार्थस्मरणव्यवच्छेदः, 'प्रसङ्गात्' तादृशमतिप्रसङ्गात्, एतेन

(१) यथा गौस्तद्वद्गवय इतीति ख० ।

(२) श्रुतोत्तरवाक्यस्येति ख० ।

(३) तथा गवय इत्यतिदेशवाक्यार्थानुसन्धाने इति ख० ।

प्रत्यक्षमात्रात्, अश्रुतवाक्यस्यापि प्रसङ्गात् । नापि तयोः समाहारात्, स हि प्रमाणसमाहारो वा फल-समाहारो वा, आद्ये प्रमाणत्वे सति समाहारः समा-हृतयोर्वा प्रामाण्यं,(१) नाद्यः फलानेकत्वे समाहारा-

---

तादृशमतेः शाब्दत्वव्यवच्छेदः । 'प्रत्यक्षमात्रात्' इन्द्रियमात्रात्, एतेन प्रत्यक्षत्वव्यवच्छेदः प्रदर्शित इत्युच्छृङ्खलाः, तन्न, आपत्तिद्वयासङ्गते-रिष्टत्वात् प्रकृतानुपयोगाच्च । वस्तुतस्तु अतिदेशवाक्यार्थज्ञान-पिण्ड-प्रत्यक्षयोर्द्वयोरेव तत्र प्रयोजकत्वं व्यवस्थापयन् एकमात्रव्यतिरेकेण फलव्यतिरेकं दर्शयति, 'न चेत्यादि, 'वाक्यमात्रात्' अतिदेश-वाक्यार्थज्ञानमात्रात्, 'मात्रपदेन पिण्डप्रत्यक्षव्यवच्छेदः, 'प्रसङ्गात्' तादृशमतिप्रसङ्गात्, एवमग्रेऽपि । 'प्रत्यक्षमात्रात्' पिण्डप्रत्यक्षमात्रात्, 'मात्रपदेनातिदेशवाक्यार्थज्ञानव्यवच्छेदः, 'अश्रुतवाक्यस्य' अनवगता-तिदेशवाक्यार्थस्य, 'प्रसङ्गादित्युक्तार्थकं । अतिदेशवाक्य-तदर्थस्मृते-रपि अपेक्षितत्वं व्यवस्थापयितुं तद्व्यतिरेकेण फलव्यतिरेकमाह, 'नापीति, 'तयोः' अतिदेशवाक्य-पिण्डप्रत्यक्षयोः, 'समाहारात्' साहित्यात् सहकारित्वात् एककार्य्यकारित्वादिति यावत्, पञ्चम्यर्थः प्रयोज्यत्वं, समाहारपदार्थं वितर्क्य दूषयति, 'स हीति, 'सः' समाहारः, 'हि' हेतौ, 'प्रमाणं' कारणं, 'फलं' कार्य्यं, प्रमाण-समाहारमपि वितर्कयति, 'आद्यइति, 'प्रमाणत्वे सतीति विभिन्न-धर्म्मावच्छिन्नकार्य्यतानिरूपितकारणत्वे सतीत्यर्थः, 'समाहृतयोः' एक-

---

(१) प्रमाणत्वमिति ख० ।

नुपपत्तेः तस्य परस्परसहकारिरूपत्वात्। नान्त्यः, वाक्य-प्रत्यक्षयोर्भिन्नकालत्वात्। वाक्य-तदर्थयोः स्मृति-द्वारोपनयेऽपि[१] समयपरिच्छेदासिद्धेः। फलसमाहारे

धर्म्मावच्छिन्नकार्य्यकारिणोः, 'प्रामाण्यं' फलजनकत्वं। 'नाद्य इति, 'फलानेकत्वे' कार्य्याणां नानाधर्म्मावच्छिन्नत्वे, 'समाहारानुपपत्तेः' एकधर्म्मावच्छिन्नकारित्वानुपपत्तेरित्यर्थः, कथमित्याकाङ्क्षायामाह, 'तस्येति समाहारस्येत्यर्थः, 'परस्परेति स्वजन्यतावच्छेदकधर्म्मा-वच्छिन्नजन्यतानिरूपितजनकत्वमपरस्य तज्जन्यतावच्छेदकधर्म्माव-च्छिन्नजन्यतानिरूपितजनकत्वं स्वस्य इत्यन्यतररूपत्वात् इत्यर्थः। गोसादृश्यावच्छिन्ने गवयपदवाच्यत्वज्ञानत्वं वाक्यस्य गवयत्वावच्छिन्न-गोसादृश्यालौकिकप्रत्यक्षत्वं पिण्डप्रत्यक्षस्य कार्य्यतावच्छेदकमिति तयोर्भेदादिति भावः। गवयत्वावच्छिन्ने गवयपदवाच्यत्वमेव तदु-भयोः कार्य्यतावच्छेदकमित्यन्यकल्पं दूषयति, 'नान्त्यइति, 'भिन्न-कालत्वादिति, तथाच कार्य्यप्राक्क्षणे तदुभयोरसमावेशात् कुत-एकधर्म्मावच्छिन्नकार्य्य-कारणत्वप्रसक्तिरिति भावः। ननु तयोरेक-कार्य्यजनकत्वासम्भवेऽपि स्वजन्यस्मृतिद्वारा एककार्य्यप्रयोजकत्वमस्त्येव तदेवैककार्य्यकारित्वमस्माकमिति तदपि दूषयति, 'वाक्य-तदर्थयो-रिति वाक्य-तदोरतिदेशवाक्य-पिण्डप्रत्यक्षयोर्यौ अर्थौ विषयौ तयोरित्यर्थः, 'स्मृतिद्वारा' स्मृतिरूपोपनयसन्निकर्षद्वारा, 'उपनये' उपनीतभानप्रयोजकत्वे, 'समयः' शक्तिः, तथाच गवयत्वे शक्तिज्ञा-

(१) 'स्मृतिद्वारोपनयेऽपीत्यनन्तरं 'गवयपिण्डसम्बन्धेनापि इन्द्रियादिना तद्गतसादृश्यानुपनये' इत्यतिरिक्तः पाठः क्वचित्लिखितपुस्तके वर्त्तत इति।

च तदन्तर्भावे शब्दानुमानयोरपि प्रत्यक्षत्वप्रसङ्गः । तत् किं तत्फलस्य प्रमाणवहिर्भाव एव अन्तर्भावे वा कियती सा मतिः,[१] तत्तदसाधारणेन्द्रियादिसाहि-

नासिद्धेरित्यर्थः, तादृशज्ञानस्य गवयत्वे शक्यतावच्छेदकत्वविषयकत्वासिद्धेरिति यावत्, गवयो गोसदृशः गोसदृशो गवयपदवाच्य-इत्याकारकतया तादृशज्ञानस्य गवयत्वावच्छिन्ने शक्त्यनवगाहित्वेन पारतन्त्र्येण गवयत्वे शक्तिभानासम्भवादिति भावः । ननु गवयो गवय-पदवाच्य इत्युपनीतप्रत्यक्षं प्रत्येवातिदेशवाक्य-पिण्डप्रत्यक्षयोः स्वजन्य-स्मृतिद्वारा हेतुत्वमिति कल्पं दूषयति, 'फलसमाहारे चेति, 'तदन्तर्भावे' तस्य उपमानफलस्यान्तर्भावे प्रत्यक्षफलान्तर्भावे, 'प्रत्य-क्षत्वप्रसङ्गः' प्रत्यक्षप्रमाणान्तर्गतत्वप्रसङ्गः, तत्फलयोरपि उपनीत-प्रत्यक्षत्वसम्भवात् इति भावः । शङ्कते, 'तत्किमिति, 'तत्फलस्य' अयं गवयशब्दवाच्य इति ज्ञानरूपनिरुक्तफलस्य, 'प्रमाणवहिर्भाव-एव' प्रत्यक्षप्रमाणजन्यत्वमेव, 'अन्तर्भावे' प्रत्यक्षप्रमाणजन्यान्तर्भावे, 'तत्फलस्येति पूर्व्वेणान्वयः, 'कियती' प्रत्यक्षविभाजककिंधर्म्मवती, 'सा मतिः' अयं गवयशब्दवाच्य इति मतिः, 'तत्तदसाधारणेति प्रत्यक्षविभाजकतत्तद्धर्म्मावच्छिन्नजनकेत्यर्थः, यथाच तस्याश्चाक्षुषत्वे चक्षुःसाहित्यं त्वाचत्वे त्वक्साहित्यं 'अस्ति' अपेक्षितमस्ति, 'इन्द्रि-यादीत्यादिना सन्निकर्षपरिग्रहः, तथाच तादृशज्ञानस्य प्रत्यक्षत्वमेव

(१) कियती सीमेति ख० ।

त्यम् अस्ति, तर्हि, सादृश्यज्ञानेऽपि विस्फारितस्य चक्षुषो व्यापारः, अस्मिन् सति तस्यानुपयोगात् उपलब्धगोसादृश्यविशिष्टगवयपिण्डस्य वाक्यार्थस्मृतिमतः कालान्तरेऽपि तदनुसन्धानबलात् समयपरिच्छे-

---

न तूपमितित्वं इति भावः । समाधत्ते, 'तर्हीति, 'सादृश्यज्ञानेऽपि' सादृश्यविशिष्टपिण्डप्रत्यक्षे सत्यपि, 'विस्फारितेति अनिमीलिते-त्यर्थः, एतेन सन्निकर्षसत्त्वमावेदितं, 'व्यापारः' चाक्षुषरूपः तस्य यत् फलं अतिदेशवाक्यार्थस्मृतिरूपं अवश्यमपेक्षितमस्तीत्यर्थः, तद्विना फलानुत्पत्तेरिति भावः । 'अस्मिन् सति' तादृशस्मृति-रूपफलेऽवश्यापेक्षणीये सतीत्यर्थः, 'तस्य' पिण्डप्रत्यक्षस्य, 'अनुपयो-गात्' तादृशमतौ अनावश्यकत्वात् । ननु पिण्डप्रत्यक्षासत्त्वे तादृश-मतेरनुत्पादादन्वय-व्यतिरेकाभ्यामेव तस्यापेक्षितत्वमित्यत आह, 'उपलब्धेत्यादि प्रत्यक्षीकृतगोसादृश्यविशिष्टगवयपिण्डस्य, 'वाक्यार्थ-स्मृतिमतः' अतिदेशवाक्यार्थस्मरणवतः, 'कालान्तरेऽपि' पिण्डप्रत्यक्ष-नाशानन्तरबहुकालानन्तरेऽपि, 'तदनुसन्धानेति तस्मात् पिण्डप्रत्य-क्षात् यदनुसन्धानं तद्विषयस्मरणं तद्बलादित्यर्थः, 'समयेति गवयो गवयपदवाच्य इति शक्तिज्ञानोत्पत्तेरित्यर्थः, तथाच प्रत्यक्षं विनापि तदुत्पत्त्या अन्वय-व्यतिरेकावेव न स्तः कुतस्तस्य प्रत्यक्षरू-पत्वसम्भावनेति भावः । उपसंहरति जरन्नैयायिकः, 'तस्मादिति, 'आगमः' अतिदेशवाक्यं, 'प्रत्यक्षं' इन्द्रियं, ताभ्यामतिरिक्तमेवे-

दोत्पत्तेः[१] । तस्मादागम-प्रत्यक्षाभ्यामन्यदेवेदमागम-स्मृतिसहितं सादृश्यज्ञानमुपमानप्रमाणमिति जर-न्नैयायिका जयन्तप्रभृतयः । तन्न । वैधर्म्याव्याप्तेः । यदोदीच्येन क्रमेण कं निर्गत्योक्तं[२] धिक्करभमति-

---

त्यर्थः, 'इदं' तादृशज्ञानरूपफलजनकं, 'आगमस्मृतिसहितं' अति-देशवाक्यार्थस्मृतिसहितं, 'सादृश्यज्ञानं' सादृश्यविशिष्टपिण्डज्ञानं, 'जयन्तेति जयन्तभट्टप्रभृतयः, वदन्तीति शेषः । एतन्मते एकावच्छे-देन सादृश्यप्रकारकपिण्डज्ञानातिदेशवाक्यार्थस्मरणोभयजन्यज्ञानमु-पमितिः तत्करणमुपमानं तच्च सादृश्यप्रकारकपिण्डज्ञानं वाक्यार्थ-स्मृतिश्च व्यापारः पिण्डज्ञानानुव्यवसाये स्मरणानुव्यवसाये चाति-व्याप्तिवारणाय एकमात्रजन्यत्वमपहायोभयजन्यत्वनिवेशः तयोः समू-हालम्बनवारणाय एकावच्छेदेनेति जन्यताविशेषणं इत्यादिकं स्वय-मूह्यं । दूषयति, 'तन्नेति, 'वैधर्म्याव्याप्तेः' वैधर्म्यप्रकारकपिण्ड-निश्चयरूपोपमानेऽव्याप्तेरित्यर्थः । तस्य लक्ष्यत्व एवाव्याप्तिः सम्भवती-त्यन्यथानुपपत्त्या तस्य लक्ष्यतां व्यवस्थापयति, 'यदेत्यादि, 'उदी-च्येन' उत्तरस्या दिश आगतेन, दक्षिणापथं गन्तुकामेन इति शेषः, 'क्रमेणेति 'निर्गत्येत्यनेनान्वयः, 'कं' उत्तरापथं गन्तुकामं पुरुषं प्रतीत्यर्थः, 'निर्गत्य' वनादित्यादिः, 'उक्तमिति, किमित्या

---

(१) समयपरिच्छेदोपपत्तेरिति ख० ।

(२) क्रमेलकं निन्दतोक्तमिति ख० ।

दीर्घग्रीवं प्रलम्बचपलौष्ठं कठोरश्नूकाशिनं[१] कुत्सितावयवसन्निवेशमपसदं पशूनामिति तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गत्वा[२] तादृशं वस्तूपलभ्य नूनमसौ करभ इति प्रत्येति, तत्र किं मानं न तावदुपमानं सादृश्याभावात्, न च प्रमानान्तरं सम्भवति ।

उच्यते । न तावदनुगतं शक्यतावच्छेदकमुपलक्षणं

---

काङ्क्षायामाह, 'धिक् करभमिति, 'अपसदं' पशूनां मध्ये अपकृष्टं, 'दाक्षिणात्यः' दक्षिणस्या दिशः आगतः, 'उपलभ्य' दृष्ट्वा, 'नूनं' निश्चितं, 'प्रत्येति' जानाति, 'तत्र' तादृशज्ञाने, अभेदः सप्तम्यर्थः, तथाच तदात्मकमितिजनकं किमित्यर्थः, 'सादृश्याभावात्' सादृश्यप्रकारकपिण्डज्ञानाभावात्, 'सम्भवतीति, व्याप्तिज्ञान-विशेषणज्ञानादेरभावेनानुमानादेरसम्भवादिति भावः । इति पूर्व्वपक्षरहस्यं ।

जरन्नैयायिकद्वारा मीमांसकमतं संदूष्य स्वमतमाह, 'उच्यत- इति, 'न तावदिति 'गवयादिपदशक्तिग्रह इति परेणान्वयः, 'अनुगतं' सकलगवयसाधारणं, 'शक्यतावच्छेदकं' 'विनेति परेणान्वयः, एवमग्रेऽपि । ननु शक्यतावच्छेदकासम्भवेऽपि उपलक्षणीभूतकिञ्चिद्धर्म्मरूपेण तत्र शक्तिग्रहो भविष्यतीत्यत आह, 'उपल-

---

(१) कठोरतीक्ष्णकण्टकाशिनमिति ख० ।

(२) उत्तरापथं गत इति ख० ।

वा विना[१] प्रत्यभिज्ञानतः शरीरैकत्ववादिनां शरीर-विशेषे चैत्रादिपदवदध्यक्षत्वेन शृङ्गग्राहिकतया गव-यादिपदशक्तिग्रहः, गवयान्तरेऽपि भावात्[२]। नाप्यन-ध्यक्षे गत्यन्तरोपस्थिते परिभाषात आकाशादिपदवत्,

---

चणं वेति, 'प्रत्यभिज्ञानतः' गोसदृशोऽयमिति सदृशाभेदज्ञानतः, अत्र दृष्टान्तमाह, 'शरीरविशेष इति यथा चैत्रादिपदस्य शरीर-विशेषे चैत्रोऽयमिति ज्ञानतः शक्तिग्रहस्तथा अत्र नेत्यर्थः, तत्र शरीरस्य बाल्य-किशोर-यौवनावस्थादिभेदेन नानात्वे चैत्रत्वस्य शरीरगतस्य जातित्वसम्भवेन तस्यैवानुगतस्य प्रवृत्तिनिमित्तत्वात् न दृष्टान्तत्वं सम्भवतीत्यत आह, 'शरीरैकत्ववादिनामिति शरीर-नानात्वानङ्गीकर्त्तृणां, मत इति शेषः, तस्यानध्यक्षत्वे शक्तिग्रहासम्भ-वात् 'अध्यक्षत्वेनेति, नन्वेकदा सकलगवयानामध्यक्षत्वासम्भवादाह, 'शृङ्गग्राहिकतयेति यदा यत्राध्यक्षत्वं तदा तत्र शक्तिग्रह इति रीत्येत्यर्थः, नन्वर्थे हेतुमाह, 'गवयान्तरेऽपीति यस्य गवयस्य कदा-चिदपि नाध्यक्ष्यत्वं तत्रापीत्यर्थः, 'भावात्' वस्तुगत्या गवयपदशक्तेः सत्त्वादित्यर्थः, तथाच निरवच्छिन्नाया अपि शक्तेः सर्व्वत्र गवये ग्रहासम्भव इति भावः। नन्वनध्यक्षेऽपि आकाशादिपदवत् तत्र शक्तिग्रहो भविष्यतीत्यत आह, 'नापीति, 'गत्यन्तरोपस्थिते' शब्दो-द्रव्याश्रितोगुणत्वाद्रूपवदित्याद्यनुमानप्रमाणोपस्थिते, 'परिभाषातः'

---

(१) प्रवृत्तिनिमित्तमुपलक्षणं वा विनेति ख० ।

(२) सम्भवादिति ख० ।

**अतएवाध्यक्षत्वाच्च उपलक्षणस्य च शक्तौ वहिर्भावाभावात् तद्वदेव। नापि योगनिर्व्वचनात्पाचकादिपदवत्, अन्यथा[१] पचिक्रियानुपहिते पचतीति न प्रयोगः**

---

शब्दाधिकरणमाकाशमिति पण्डितसङ्केतात्, हेतुमाह, 'अतएवेति उक्तहेतोरेवेत्यर्थः, एकमात्रवृत्तिसङ्केतस्यैव परिभाषारूपत्वादिति भावः। क्वचित् 'तत एव' इति पाठः, तत्राप्ययमर्थः, उपलक्षणस्य प्रत्यक्षत्वे शक्यतावच्छेदकत्वमपि सम्भवतीत्याह, 'अध्यक्षत्वाच्चेति, चस्त्वर्थे, 'वहिर्भावाभावात्' वहिर्भावासम्भवात्, अत्र दृष्टान्तमाह, 'तद्वदेवेति तत्पदवदेवेत्यर्थः, इदञ्च बुद्धिस्थत्वं तत्पदशक्यतावच्छेदकं नोपलक्षणमिति प्राचीनमताभिप्रायेण। ननु तत्र शक्त्यसम्भवात् योग एव कल्प्य इत्यत आह, 'नापीति, 'योगनिर्व्वचनात्' योगकल्पनात्, 'पाचकादिपदवदिति पाचकादिपदस्य यथा योगः कल्प्यते तथात्रापीत्यर्थः, पाचकादिपदे योगकल्पकमस्ति अत्र तु तन्नास्तीत्यावेदयितुं तत्र तत्कल्पकमाह, 'अन्यथेति पाचकपदस्य पाकक्रियाविशिष्टे शक्तिस्वीकारे, 'पचिक्रियानुपहित इति, तथाच पचिक्रियानुपहिते पाककर्त्तरि विक्लित्त्यनुकूलव्यापारस्य पाकस्य तण्डुलाग्निसंयोगादिरूपस्याभावादिति भावः। 'न प्रायोगः स्यात्' प्रयोगो न

---

(१) 'पाचकादिपदवदित्यनन्तरं 'अन्यथेत्यस्य पूर्व्वं 'सोपलक्षणे' इत्यधिकः पाठः खचिह्नितपुस्तके वर्त्तते परन्त्वयं पाठः पूर्व्वापरसङ्गतिराहित्यात् न समीचीनः।

स्यात् । अतस्तदनुगुणज्ञानादियोगिनि शक्तिः । अवच्छेदकतया तूपलक्षणेऽपीति योगात्[१] । नाप्युपस्थितनिमित्तसङ्कोचनात्, स्वर्गादिपदवत् तदभावात् । अतो गन्धाद्युपलक्षितेन पृथिवीत्वेन निमित्तेन पृथिव्यादिपदवत् सादृश्याद्युपलक्षिते गवयत्वादौ गवयादिपदानां

---

च्छादयोग्यत्वादिति भावः । 'तदनुगुणेति पाकक्रियानुगुणेत्यर्थः, 'ज्ञानादीति इष्टसाधनताज्ञानादीत्यर्थः, आदिना कृतिपरिग्रहः, 'योगिनि' विशिष्टे, शक्तिरवश्यं कल्प्येति शेषः । 'उपलक्षणे' कृतिविशेषणे पाकादौ, तथाच महागौरवं, 'योगात्' योगकल्पनात्, तथाच तादृशकल्पकमत्र नास्तीति भावः । ननु उपस्थितद्रव्यत्वादिसङ्कोचात् द्रव्यविशेषे गवयपदशक्तिरस्तु इत्यत आह, 'नापीति, नञर्थे हेतुमाह, 'स्वर्गादिपदवदिति यथा स्वर्गादिपदस्य सुखवाचितया सुखान्तरे तत्प्रयोगाभावात् सुखविशेष एव तच्छक्तिः कल्प्यते तथात्र नास्तीत्यर्थः, 'तदभावात्' उपस्थितनिमित्ताभावात्, द्रव्यत्वादेर्गवयपदनिमित्तत्वाभावादनुपस्थितत्वाच्च इति भावः । उपसंहरति, 'अत इति, 'गन्धाद्युपलक्षितेनेति, आदिना नीलरूपवत्त्वपरिग्रहः, तत्रापि सकलपृथिव्या व्यवहाराविषयतया विभिन्नसंस्थानवत्तया चाव्युत्पन्नेन का पृथिवीति जिज्ञासायां गन्धवती पृथिवीति श्रुत्वा इयं गन्धवतीत्युपलभमानेन पृथिवी पृथिवीपदवाच्येति ज्ञायते गन्धादेः शक्यतावच्छेदकत्वे गौरवात् पृथिवी-

---

(१) योगाभावादिति ख० ।

शक्तिरिति तु परमार्थतः। अन्यथा फलस्याभासत्वे मानत्वविरोधात्। न च पूर्वं गवयत्वमुपस्थितं, उपस्थापकाभावात्। न च गवयपदादेव तदुपस्थितिः, अन्योन्याश्रयात्। अथ वाक्यादेवानेन समयः परिच्छिन्नः केवलमग्रेऽप्यभिजानाति[१] योगेनेदृशो गवयपदवाच्यत्वेनावगतः[२] सोऽयमिति नोपमानस्य विषय-

त्वजातेस्तथात्वमिति भावः। 'अन्यथा' गवयत्वे शक्यतावच्छेदकत्वासत्त्वे, 'फलस्य' तत्र शक्यतावच्छेदकत्वावगाह्युपमितिरूपफलस्य, 'आभासत्वे' भ्रमत्वे, 'मानत्वविरोधात्' उपमानस्य प्रमितिकरणत्वविरोधात्, तथाच फलस्य प्रमितित्वरचार्थमेव तत्र शक्यतावच्छेदकत्वमवश्यमङ्गीकार्य्यमिति भावः। 'अन्योन्याश्रयादिति गवयपदशक्तिग्रहं विना न गवयपदात् शाब्दबोधः तं विना न गवयत्वग्रह इति गवयत्वग्रहे गवयपदशक्तिग्रहापेक्षा शक्तिग्रहे च गवयत्वग्रहापेक्षा इत्यन्योन्याश्रयादित्यर्थः। शङ्कते, 'अथेति, 'अनेन' गोसादृश्येन, 'परिच्छिन्नः' ज्ञानविषयः, 'केवलमिति 'नोपमानस्य विषय-इति परेण सम्बन्धः, 'अग्रे' अतिदेशवाक्यजन्यशाब्दबोधात् परं, 'अभिजानाति', 'योगेन' गोसमानाकारसम्बन्धेन, 'अवगतः' शाब्दविषयीकृतः, 'इति नोपमानस्य विषयः' इत्याकारकोपमानस्य न केवलं विषय इति नार्थः, दूषणग्रन्थासङ्गतेः। वस्तुतः ननु शब्दादेव

(१) केवलमग्रे प्रत्यभिजानातीति ख० ।

(२) यो गोसदृशो गवयपदवाच्यत्वेन मयावगत इति ख० ।

इति चेत्। न। न हि सादृश्यमेव निमित्तं, अप्रतीतानामव्यवहारप्रसङ्गात् गौरवाच्च। नापि गवयत्वं, तदनुपस्थितेः। अतएव नोभयं, स्वयं प्रतीतसमसङ्गान्तयेऽतिदेशवाक्यप्रयोगानुपपत्तेः। गवयत्वे ह्ययं

---

गवयपदशक्तिग्रहो भविष्यति किमुपमित्या इत्याशङ्कते, 'अथेति, 'अनेन' गवयपदवाच्यत्वेन, 'परिच्छिन्नः' ज्ञातः, परिच्छेदक्रियाविशेषणत्वात् केवलपदोत्तरं द्वितीया, 'अग्रेऽपि' पश्चादपि, 'अभिजानाति', 'योगेन' गोसादृश्येन, 'सोऽयमिति 'परिच्छिन्न इति पूर्व्वेणान्वयः, 'नोपमानस्येति अत इत्यादिः, नोपमितिविषय इत्यर्थः, तथाच किमुपमितिस्वीकारेणेति भावः। शक्यतावच्छेदकं विना शक्तिस्वीकारात् तेन विना वृत्तिज्ञानं कथं शब्दात् तादृशबोध-इत्यभिप्रायेण दूषयति, 'न हीति नैवेत्यर्थः, 'निमित्तं' शक्यतावच्छेदकं, 'अप्रतीतानां' गोसादृश्येनाप्रतीतानां गवयानां, 'अव्यवहारप्रसङ्गात्' गवय इति व्यवहाराभावप्रसङ्गात्, इष्टापत्तावप्याह, 'गौरवाच्चेति गवयत्वापेक्षयेत्यादिः। 'गवयत्वमिति 'निमित्तमिति पूर्व्वेणान्वयः, 'तदनुपस्थितेः' शाब्दबोधात् पूर्व्वं तदनुपस्थितेः। 'अतएव' गवयत्वानुपस्थितेरेव, 'नोभयं' न सादृश्य-गवयत्वोभयं। ननु गवयपदस्य निरवच्छिन्नैव शक्तिः स्वीकरणीया अतो नोक्तदोष इत्यत आह, 'स्वयमिति, 'प्रतीतसमसङ्गान्तये' स्वयं यद्रूपेण गवयो ज्ञातस्तद्रूपेण तज्ज्ञानाय, 'अनुपपत्तेरिति, भवन्मते गवयत्वेन तस्य शाब्दाविषयत्वादिति भावः। ननु गोसादृश्यमेव निमित्तं

व्युत्पन्नो न गोसादृश्ये निमित्तस्य गवयत्वस्य प्रतीतेः। ननु यद्यपि[१] तद्वाक्यं समयपरिच्छेदपूर्व्वं नाजीजनत् तथापि[२] तदेव वाक्यं स्मृतं स्तत्प्रवृत्तिनिमित्तं परिच्छेत्स्यति अध्ययनसमयगृहीत इव वेदराशिरङ्गोपाङ्ग-पर्य्यवसितः कालान्तरे। न च वाक्यार्थस्यैवास्य प्रागेव बोधितत्वात् पर्य्यवसितमिति वाच्यं। गोः सादृश्योप-

---

स्वयमपि तद्रूपेणैव पुरा ज्ञातः तद्रूपेणाज्ञातेऽव्यवहारस्य दृष्ट एव इत्यत आह, 'गवयत्वे ह्ययमिति, 'व्युत्पन्नः' गृहीतशक्तिः, 'न गोसादृश्य इति 'व्युत्पन्न इति पूर्व्वेणान्वयः, इति व्यवहारादिति शेषः, 'गवयत्वस्येति सावधारणं, तथाच निमित्तस्य गवयत्वस्यैव प्रतीतेरित्यर्थः। 'तद्वाक्यं' अतिदेशवाक्यं 'समयपरिच्छेदपूर्व्वं' गवयत्वावच्छिन्ने गवयपदशक्तिग्रहजनकं, 'नाजीजनत्' नोत्पादितवान्, तथाचेदं वाक्यं गवयत्वावच्छिन्ने शक्तिज्ञानजनकं भवत्वितीच्छया नोच्चारितवानित्यर्थः, 'परिच्छेत्स्यति' ज्ञापयिष्यति, अत्र दृष्टान्तमाह, 'अध्ययनेति, 'कालान्तर इति गृहीतवेदाध्ययनानन्तरं, तथाच यथा वेदराशित्वेन गृहीतोऽपि अङ्गोपाङ्गत्वेन ग्रहविषयः पश्चात्तथेहापि एकतात्पर्य्येण प्रयुक्तोऽपि शब्दः अपरार्थबोधप्रयोजक इति भावः। शङ्कते, 'न चेति, 'वाक्यार्थस्य' गोसदृशे गवयपदवाच्यत्वस्य, 'पर्य्यवसितमिति, शक्तिज्ञानमिति शेषः। सन्देहादिति, तथाच

---

(१) यदेति ख०। (२) तदेति ख०।

लक्षणत्व-निमित्तत्वयोः सन्देहात्, पश्चाद्गवयत्वेऽवगते तर्कलाघवसहकारात्[१] सादृश्यस्योपलक्षणत्वे निश्चिते गङ्गायां घोष इत्यत्रेवान्वयबोधो भविष्यतीति चेत्। न। उपलक्षणनिमित्तत्वसन्देहेऽपि यो गोसदृशः स गवयपदवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ मानान्तरोपनीतानपेक्षणात् रक्तारक्तसन्देहेऽपि पटो भवतीति वाक्यवत्, अन्यथा पर्य्यवसितेऽपि

---

पूर्व्वं शक्तिज्ञानसम्भवेऽपि गवयत्वे शक्यतावच्छेदकत्वनिश्चयासम्भवादुपमितेरपेक्षेति भावः। पुनः शङ्कते, 'पश्चादिति गोसदृशि गवयपदवाच्यत्वज्ञानानन्तरं, 'तर्कलाघवसहकारात्' लाघवरूपतर्कसहकारात्, 'इत्यत्रेवेति, यथा मुख्यार्थबाधादिसहकारात् गङ्गापदेन लक्षणया तीरबोधस्तथात्रापीति भावः। गोसदृशो गवयपदवाच्य इति ज्ञानस्य शक्यतावच्छेदकत्वावगाहित्व एव सादृश्ये तदसम्भवेन मानान्तरेण गवयत्वोपस्थितेरपेक्षा इत्युक्तज्ञानस्य सादृश्ये शक्यत्वसामानाधिकरण्यावगाहित्वेनोपपत्तौ मानान्तरोपनीतगवयत्वापेक्षा नास्तीति समाधत्ते, 'नेत्यादि, अत्र दृष्टान्तमाह, 'रक्तारक्तेत्यादि, 'वाक्यवदिति, यथा तादृशवाक्येन पटे रक्तत्वसन्देहदशायां रक्तसामानाधिकरण्येन पटे वर्त्तमानप्रागभावप्रतियोगित्वावगाहिशाब्दो जन्यते तथा इत्यर्थः, मानान्तरसहकारे दोषमाह, 'अन्यथेति,

---

(१) तर्कपुरस्कारादिति ख० ।

वाक्ये मानान्तरसहकारात् तदन्वयबुद्धौ[१] वाक्यभेदापत्तेः। गङ्गायां घोष इत्यत्र तु पदार्थ एवान्वयायोग्य इति युक्तं तत्र मानान्तरापेक्षणम्। यदि च प्रतीतसंसर्गबलायातोऽप्यर्थो वाक्यस्यैव तदा वाक्यभेदापत्तिः। अथ तात्पर्य्यानुपपत्त्या यष्टीः प्रवेशयेतिवत् तल्लक्षणास्तु गवयपदव्युत्पन्नं प्रति तद्बुद्धेरुत्पत्तये[२] वाक्यमाप्तेनोक्तं तच्च न प्रवृत्तिनिमित्तोपादानं विना।

---

'पर्य्यवसितेऽपि' सम्भवद्विशिष्टान्वयबोधकताकेऽपीत्यर्थः, 'तदन्वयबुद्धौ' तज्जन्यान्वयबुद्धिस्वीकारे, 'वाक्यभेदापत्तेरिति गवयो गोसदृशश्च गवयपदवाच्य इति समूहालम्बनबोधजनकत्वापत्तेरित्यर्थः, सादृश्यभानेऽपि बाधकाभावादिति भावः। ननु गङ्गायां घोष इत्यत्रापि अन्वयानुपपत्तिज्ञानादिसहकृतलक्षणाज्ञानरूपमानान्तरापेक्षणे वाक्यभेदापत्तिरित्यत आह, 'गङ्गायामित्यादि। ननु तदा कीदृशवाक्यस्य वाक्ये भेद इत्यत आह, 'यदीति, 'प्रतीतेति प्रतीतस्य संसर्गरूपं यद्बलं तदधीनः प्रतीतसंसर्गघटित इति यावत्। शङ्कते, 'अथेत्यादि, 'तल्लक्षणा' सदृशपदलक्षणा, 'गवयपदव्युत्पन्नं' गवयपदव्युत्पित्सुं तादृशपदशक्तिज्ञानेच्छुं प्रतीति यावत्, 'तद्बुद्धेरुत्पत्तये' गवयपदशक्तिबुद्धेरुत्पत्तये, क्वचित् 'तत्तद्बुद्धिव्युत्पत्तये' इति पाठः तत्र तस्य तद्बुद्धिसम्पादनाय इत्यर्थो बोध्यः, 'आप्तेन' भ्रमादिदोषशून्येन पुरुषेण, 'तच्च' तद्बुद्धिसम्पादनञ्च,

---

(१) तत्तदन्वयबुद्धाविति ख०। (२) तद्व्युत्पत्तये इति ख०।

न च गोसादृश्यं तथेतितात्पर्य्यतो गोसादृश्यपदेन गोसमानाधिकरणं गवयत्वमुपलक्षितं कल्प्यते न तु यथा धूमोऽस्तीत्यत्र वह्नौ तात्पर्य्यमनुमानेन निर्वहतीति न लक्षणा। न चात्र प्रमाणान्तरमस्तीति येन तन्निर्वाह्यं, उपमानस्यासिद्धेः, अन्यथान्योन्याश्रयात्। न च वाक्ये न लक्षणा तस्याः पदधर्मत्वादिति वाच्यं। एकपदे एव लक्षणा पदान्तरन्तु नियामकमित्यस्य वक्ष्यमाणत्वात्[१]। अथ गवयत्वेन लक्षणया

---

'तथा' प्रवृत्तिनिमित्तं, 'इतितात्पर्य्यतः' इत्याकारतात्पर्य्यज्ञानतः, 'कल्प्यत इत्यत्रान्वितमिदं। ननु सदृशपदलक्षणयैव सादृश्योपलक्षितगवयत्वोपस्थितिः प्रमाणान्तरेण तत्र तात्पर्य्यनिर्वाहेण लक्षणाया अयोगादित्यत आह, 'न त्विति, 'लक्षणेत्यत्रान्वयः, 'इत्यत्रेति वह्न्यर्थिनामितिजिज्ञासावाक्ये, 'लक्षणा' धूमपदस्य लक्षणा। 'अत्र' अतिदेशवाक्यस्थले, 'प्रमाणान्तरं' गवयत्वे शक्यतावच्छेदकत्वसाधकं एतद्वाक्यातिरिक्तं प्रमाणं। ननूपमानमेव तदस्तीत्यत आह, 'उपमानस्येति, 'असिद्धेः' तादृशशाब्दात् पूर्व्वमसिद्धेः, 'अन्यथा' तादृशबोधे उपमानस्यापेक्षितत्वे, 'अन्योन्याश्रयात्', परस्परापेक्षणादिति भावः। ननु वाक्ये लक्षणाविरहात्तादृशाशङ्कैव नावतरतीत्याह, 'न चेति, 'तस्याः' लक्षणायाः, 'एकपदे एव' वाक्यघटकैकपदे एव, 'वक्ष्यमाणत्वात्' स्वमणावित्यादिः। सदृश-

---

(१) वक्तव्यत्वादिति ख०।

तदुपस्थितावपि व्यक्तिवाच्यता न ज्ञायेत तच्छब्दा-दिति[१] विशिष्टवाच्यताग्राहकमानान्तरमवश्यं स्वीक-रणीयम्। न च यन्निष्ठो धर्म्मो यत्पदवाच्यः सोऽपि तद्वाच्य इति नियमः, जातिपदे व्यभिचारादिति चेत्, न, प्रवृत्तिनिमित्तवद्वाच्यत्वबोधतात्पर्य्यकत्वेन ज्ञाता-तिदेशवाक्ये गवयत्वविशिष्टव्यक्तेरेव लक्षणातः। अथ यदि गवयत्वे साक्षात् तात्पर्य्यं गोसदृशपदस्य गृहीतं तदा लक्षणा, न च साक्षात् तात्पर्य्यमवधृतम्, अन्यथा धूमोऽस्तीत्यत्रापि साम्यादिति चेत्। न। उपस्थाप-कान्तराभावे तात्पर्य्यस्यैव साक्षात् तात्पर्य्यरूपत्वात्, न चोपमानमेव तथा, अन्योन्याश्रयात्।

---

पदस्य सादृश्योपलक्षितगवयत्वमात्रे लक्षणा इति भ्रान्त्या शङ्कते, 'अथेत्यादि, 'लक्षणातः' लक्षणास्वीकारात्। शङ्कते, 'अथेति, 'साक्षादिति मानान्तरसहकृतमित्यर्थः, 'गोसदृशपदस्येति सप्तमी-तत्पुरुषसमासात् तद्घटकसदृशपदस्येत्यर्थः, 'तदा लक्षणेति, साक्षा-त्तात्पर्य्यज्ञानस्यैव लक्षणावीजत्वमित्यभिप्रायेणेदं। साक्षात्तात्पर्य्य-ज्ञानस्य तद्वीजत्वे दोषमाह, 'अन्यथेति, 'साम्यादिति, सा-क्षात्तात्पर्य्यादिमत्त्वस्याविशेषादिति भावः। 'तात्पर्य्यरूपत्वादिति, धूमोऽस्तीत्यत्रानुमानमेव वह्न्युपस्थापकमस्तीति भावः। समाधत्ते,

---

(१) शब्दादितीति ख०।

मैवं, यत्र प्रवृत्तिनिमित्तविषयबोधने न तात्पर्य्यं योगोसदृशः स गवयशब्दवाच्य इति स्वरूपाख्यानमात्रं तत्राप्युक्तसामग्रीतः समयपरिच्छित्तिर्भवत्येव। न च तत्र व्युत्पित्सुव्युत्पत्तये प्रवृत्तिनिमित्तविशेषे तात्पर्य्यं यदनुपपत्तिर्लक्षणावीजं स्यात्। अपि च, धिक् करभमतिदीर्घग्रीवमित्यादिवाक्यस्य करभनिन्दातात्पर्य्यकस्य प्रवृत्तिनिमित्तपरत्वाभावेऽपि तादृशपिण्डमनुभवतः स्मरतश्च वाक्यार्थमयं करभशब्दवाच्य इति भवति मतिः। न च तत्र प्रवृत्तिनिमित्तविशेषे तात्पर्य्यमस्ति लक्षणाया वीजं, निन्दापरत्वात्। किञ्च सर्व्वत्रान्वयानुपपत्तिरेव लक्षणावीजं यष्टीः प्रवेशयेत्यादावपि प्रकरणादिना पुरस्कारादिप्रयोजनकत्वं प्रवेशनस्यावगतं तादृशे च प्रवेशनादौ यष्ट्यादेरनन्वयात्

---

'मैवमिति, 'लक्षणावीजं स्यादिति, तथाच तत्रैव गवयत्वे शक्यतावच्छेदकत्वग्रहार्थमवश्यमुपमानापेक्षेति भावः। ननु तादृशतात्पर्य्यं विना तादृशवाक्यमेव न प्रयुज्यते इत्यत आह, 'अपि चेति। तात्पर्य्यानुपपत्तेर्लक्षणावीजत्वमेव खण्डयति, 'किञ्चेति, 'अनन्वयात्' अन्वयासम्भवात्, तथाचानुपपत्तिरेवेति भावः। ननु यत्र प्रकरणादिज्ञानं नास्ति तत्रापि लक्षणाया आवश्यकत्वेन तात्पर्य्यानुपपत्तेरेव

तात्पर्य्यानुपपत्तेरपि तात्पर्य्यमज्ञात्वा ज्ञातुमशक्यत्वेन तदर्थं प्रकरणादेरवश्योपजीव्यत्वात्(१) । अथ प्रकरणादेरननुगमः तात्पर्य्यव्याप्यत्वेन तदनुगमे तात्पर्य्यानुपपत्तिरेव तद्बीजमस्तु लाघवादिति चेत् । न । धूमादिवदननुगतस्यापि व्याप्यत्वाविरोधात् । तस्मात् गवयशब्दः कस्यचिद्वाचकः शिष्टैः प्रयुक्तत्वादिति सामान्यतो निश्चितेऽपि गवयत्वविशिष्टो धर्म्मी गवयपदवाच्य इति लाघवान्निर्णयम् । तच्च प्रमाणसहकारि,

तद्बीजत्वमावश्यकं इत्यत आह, 'तात्पर्य्यानुपपत्तेरपीति, 'तदर्थं' तात्पर्य्यज्ञानार्थं, 'अवश्योपजीव्यत्वात्' अवश्यं प्रयोजकत्वात् । शङ्कते, 'अथेति, 'लाघवादिति, तात्पर्य्याभाववदवृत्तित्वेन प्रकरणज्ञानस्यापेक्षितत्वे तात्पर्य्यज्ञानस्य नियतपूर्व्ववर्त्तितायाः क्लृप्तत्वेनानन्यथासिद्धत्वमात्रकल्पने लाघवात् प्रकरणज्ञानस्य हेतुत्वे उभयोरेव कल्प्यत्वेन गौरवादिति भावः । व्याप्यानुगमस्यानुमित्यनुपयोगितया तदननुगमे क्षतिविरह इति समाधत्ते, 'नेति, उपसंहरति, 'तस्मादिति, 'शिष्टैरिति, यद्यपि अपभ्रंशशब्दस्यापि शिष्टप्रयोज्यतया तत्र व्यभिचारः तथापि साधुपदत्वस्यैव हेतुत्वे तात्पर्य्यं, गवयशब्दवाच्य इति सामान्यतोनिश्चयस्य विशेषव्यवहारानुपयोगित्वादिति भावः । 'लाघवादिति गोसादृश्यापेक्षया गवयत्वे लाघवमिति लाघवज्ञानादित्यर्थः, 'तच्च' लाघवञ्च, 'प्रमाणसहकारीति

(१) तात्पर्य्यमज्ञात्वा ज्ञातुमशक्यत्वादिति ख० ।

न च तस्यां दशायां प्रमाणान्तरमस्ति, अतो यत्प्रमाणसहकारि तत्प्रमाणान्तरमास्थेयम्। अथास्त्वनुमानं तथाहि गवयशब्दो गवयत्वविशिष्टधर्म्मिवाचकः असति वृत्त्यन्तरे वृद्धैः[१] प्रयुज्यमानत्वात् गवि गोशब्दवदिति चेत्। न। गवयत्वविशिष्टो यो धर्म्मी तस्य वाचकत्वग्रहेऽपि गवयत्वस्य प्रवृत्तिनिमित्तत्वासिद्धेः। न च शक्तिमज्ञात्वा वृत्त्यन्तरं क्वापि अवधारयितुं शक्यते, सामानाधिकरण्यमात्रस्य निमित्तोपलक्षण-

---

बहुव्रीहिः, प्रमाणान्तरसहकारं विना लाघवज्ञानस्य ज्ञानानर्जकत्वादिति भावः। 'तस्यां दशायां' लाघवज्ञानकाले, 'प्रमाणान्तरं' अनुमानादिकं, 'यदिति, तस्येत्यादिः, तथाच तदानीं लाघवज्ञानस्य यत्सहकारि तत् प्रमाणान्तरं उपमानप्रमाणमित्यर्थः। शङ्कते, 'अथेति, 'असतीत्यादि शक्तिभ्रमाजन्य-लक्षणाग्रहाजन्य-गवयत्वविशिष्टविषयकशाब्दजनकत्वादित्यर्थः। ननु गवयत्वावच्छिन्नवाचकत्वमेव साध्यं तदादिपदे तज्ज्ञानस्य पूर्वं सम्भवादत आह, 'न चेति, 'शक्यत इति, लक्षणायाः शक्तिघटितघटितत्वादिति भावः। ननु गवयत्वविशिष्टवाचकत्वं तन्निष्ठशक्तिनिरूपकत्वं तथाच शक्त्यंशे गवयभानदशायां पारतन्त्र्येण गवयत्वस्यापि अवच्छेदकतानिरूपकत्वसम्बन्धेन भानात् तत्र निमित्ततासिद्धिः समानाधिकरणयोरेकत्रापरस्य पारतन्त्र्येण भाने बाधकाभावात् इत्यत आह, 'सामानाधि-

---

(१) अभियुक्तैरिति ख० ।

**तासाधारणत्वात्। अथ गोसादृश्यस्य प्रवृत्तिनिमित्ततायां गौरवावतारे नोपमानस्यावतारः[१]। तथाच तर्केण इतराप्रवृत्तिनिमित्तत्वे निश्चिते[२] गवयपदं गवयत्वप्रवृत्तिनिमित्तकं इतराप्रवृत्तिनिमित्तकत्वे सति**

---

करणमात्रस्येति, शक्तेरित्यादि, 'साधारणत्वात्' समानाधिकरणत्वात्, तथाच सामानाधिकरण्यस्य तन्नियामकत्वे सादृश्यस्यापि च तथात्वापत्तेरतिदेशवाक्यात्तथा प्रतीतेरिति भावः। इति साम्प्रदायिकाः।

वस्तुतस्तु ननु शक्तिसामानाधिकरण्यमेव निमित्ततासाधकं भविष्यतीत्याशङ्क्य व्यभिचारमाह, 'सामानाधिकरण्यमात्रस्येति, 'मात्रपदेन शङ्कितविषयताव्यवच्छेदः, 'साधारणत्वादित्युक्तार्थकं इति तु परमार्थः। शङ्कते, 'अथेति, 'गोसादृश्यस्य प्रवृत्तिनिमित्ततायां' तस्य गवयपदशक्यतावच्छेदकतायां, 'गौरवावतरे' गवयत्वापेक्षया गौरवज्ञाने, सप्तम्यर्थः प्रयोजकत्वं, 'नोपमानस्यावतारः' नोपमानज्ञानं, तथाच भवन्मतेऽपि गौरवज्ञानस्य सहकारित्वमावश्यकं तज्जनकतया उपमानस्यापि नोपयोगित्वमिति प्रमाणान्तरेण तज्ज्ञानसम्पत्तौ किमुपमानेन इति गूढ़ाभिप्रायः। ननूपमानं विना कथं तत्र निमित्तग्रह इत्याकाङ्क्षायामाह, 'तथा चेति, 'तर्केण' लाघवज्ञानरूपतर्केण, 'इतरेति गवयत्वभिन्ने शक्यतावच्छेदकत्वाभावे निश्चिते इत्यर्थः। 'इतरेति इतरत् प्रवृत्तिनिमित्तभिन्नं यस्येति

---

(१) गोसादृश्यनिमित्ततागौरवस्यानवतारेण नोपमानस्याप्यनवतार इति ख०।
(२) तस्य प्रवृत्तिनिमित्तकत्वेऽवगते इति ख०।

सप्रवृत्तिनिमित्तकत्वात् यन्नैवं तन्नैवमिति चेत् । न । तर्कस्यानिश्चायकत्वात् । न चायं तर्को व्याप्तिग्रह-मूलको येन विपर्य्ययानुमानादर्थसिद्धिः । अथ गवय-पदं सप्रवृत्तिनिमित्तकमिति सामान्यतोदृष्टमेव तर्क-सहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं परिच्छि-नत्ति न तु मानान्तरं कल्पयित्वा तर्कः सहकारी कल्प्यते इति चेत् । न । इदं सप्रवृत्तिनिमित्तकमन्यच्च न प्रवृत्तिनिमित्तमिति बुद्धावपि गवयत्वप्रवृत्तिनि-

---

व्युत्पत्तिः, 'सप्रवृत्तीत्यादि किञ्चित्प्रवृत्तिनिमित्तकत्वादित्यर्थः, विशेषव्याप्तौ अन्वयदृष्टान्तासम्भवेन व्यतिरेकेण तमाह, 'यन्नैवमिति, 'तर्कस्येति लाघवरूपतर्कस्य, 'अनिश्चायकत्वात्' सन्निकर्षप्रमाणादि-भिन्नत्वेन निश्चयाप्रयोजकत्वात् । नन्वेवं धूमोयदीत्यादितर्कस्यापि तथात्वं स्यादित्यत आह, 'न चायमिति, 'अयं' लाघवादिरूपः, 'व्याप्तीति, आपाद्यापादकयोरित्यादिः, 'अर्थसिद्धिरिति, तथाच तादृशतर्कस्यैवार्थसाधकत्वादिति भावः । शङ्कते, 'अथेति, 'सप्र-वृत्तिनिमित्तकं' किञ्चिद्धर्म्मावच्छिन्नशक्यताकं, 'इतीति इत्यनु-मितिजनकसाधुपदत्वज्ञानरूपसामान्यतोदृष्टमनुमानमेवेत्यर्थः, उक्ता-नुमानस्य कार्य्य-कारणलिङ्गकत्वाभावात् सामान्यतोदृष्टत्वं, 'तर्केति लाघवरूपेत्यादिः, 'परिच्छिनत्ति' सम्पादयति, 'मानान्तरं' उप-मानरूपप्रमाणं, 'सहकारीति तस्येत्यादिः, 'इदमिति गवयपद-मित्यर्थः, 'अन्यच्च' गवयत्वान्यच्चेत्यर्थः, 'इति बुद्धावपीति इत्या-

मित्तकं गवयपदमिति मानान्तरं विना अप्रतीतेः अनुमितेर्व्यापकतावच्छेदकमात्रप्रकारकत्वनियमात्[१]। अथ यथेच्छायां सामान्यतोदृष्टेन विशेषबाधकसहकृतेनाष्टद्रव्यानाश्रयत्वं[२] प्रतीयते अन्यथा विशेषबाध-

---

कारिका बुद्धिर्यतइति व्युत्पत्त्या तादृशमानसोपनीतभानप्रयोजिकायामनुमितावपीत्यर्थः, अनुमितेस्तद्वासकलासम्भवेन यथाश्रुतासङ्गतेरिति साम्प्रदायिकाः ।

वस्तुतस्तु 'इदं' गवयत्वमित्यर्थः, 'प्रवृत्तिनिमित्तमित्येव पाठः, सकारयुक्तपाठस्तु प्रामादिकः, तादृशपाठस्य प्रामाणिकत्वे 'निमित्तेति धर्म्मपरोनिर्द्देशः, 'इति बुद्धावपि' इतिज्ञानप्रयोज्यानुमितापीत्यर्थः, इति तु परमार्थः, 'गवयपदमितीति 'अप्रतीतेरित्यत्र प्रतीतावन्वितं, 'प्रकारकत्वेति तथाच किञ्चिदवच्छिन्नशक्यताकत्वेनानुमितावपि स्वरूपतो गवयत्वावच्छिन्नशक्तिनिश्चयार्थमवश्यं प्रमाणान्तरापेक्षा इति भावः । नन्वात्मसिद्धौ यथेच्छा द्रव्यसमवेता गुणत्वादिति सामान्यतोदृष्टानुमानेन प्रत्येकं पृथिव्याद्यसमवेतत्वनिश्चयसहकृतेनाष्टद्रव्यानाश्रितत्वं प्रतीत्य व्यतिरेक्यनुमानेनात्मसमवेतत्वसिद्धिस्तथाचापीत्याशङ्कते, 'अथ यथेच्छायामिति, 'विशेषबाधकेति पृथिव्याद्येकैकसमवेतत्वाभावनिश्चायकेत्यर्थः, 'अष्टद्रव्यानाश्रयत्वं' अष्टद्रव्यानाश्रितत्वमित्यर्थः, अष्टद्रव्याण्यनाश्रयो यस्या इति व्युत्पत्तेः, 'प्रतीयते' अनुमीयते, तथाच व्यापकतानवच्छेदकधर्म्मा-

---

(१) अनुमितेर्व्यापकतावच्छेदकत्वप्रकारताकत्वनियमादिति ख० ।

(२) विशेषबाधकसहकृतेनान्यद्रव्याश्रितत्वमिति ख० ।

कानां द्रव्यव्यतिरेकविषयकत्वेनाष्टद्रव्यानाश्रयत्वं[१] केन ग्राह्यम्। तथाचापि गौरवाख्यतर्कसहकृतसामान्यतोदृष्टादितराप्रवृत्तिनिमित्तकत्वे ज्ञाते[२] पश्चात् स व्यतिरेकी स्यात् कल्प्यप्रमाणान्तरापेक्षया क्लृप्त-

---

वच्छिन्नविधेयताकत्वमप्यनुमितौ स्वीकार्य्यमिति भावः। 'अन्यथा' अनुमितेस्तथात्वनियमे, 'विशेषबाधकानां' पृथिव्याद्येकैकसमवेतत्वाभावानुमापकानां पृथिव्यादिसमवेतत्वाभावव्यापकाभावप्रतियोगिमनोमात्रग्राह्यत्ववत्तापरामर्शानामन्वयपरामर्शानां इति यावत्, 'द्रव्यव्यतिरेकः' द्रव्यसमवेतत्वव्यतिरेकः, क्वचित्तथैव पाठः, 'विषयकत्वेनेति' हेतुव्यापकतयेत्यादिः, तथाच प्रत्येकसमवेतत्वाभावत्वमात्रस्य व्यापकतावच्छेदकतया अवगाहित्वेन इति पर्य्यवसितं। 'अत्रापि' गवयपदशक्तिग्रहस्थानेऽपि, 'सामान्यतोदृष्टात्' गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानात्, 'ज्ञाते' अनुमिते, 'सः' गौरवाख्यस्तर्कः, 'व्यतिरेकी स्यादिति इतरानवच्छिन्नशक्यताकं गवयपदं गवयत्वावच्छिन्नशक्यताकत्वं विना किञ्चिदवच्छिन्नशक्यताकं न स्यादिति व्यतिरेक्यनुमानप्रयोजकः स्यादित्यर्थः। ननु तादृशतर्कस्य उपमानसहकारित्वमेव कल्प्यते किमनुमानसहकारित्वेन इत्यत-

---

(१) विशेषणबाधकानां पृथिव्याद्येकैकमात्रव्यतिरेकविषयकत्वं जन्यद्रव्यानाश्रितत्वमिति ख० ।

(२) इतराप्रवृत्तिनिमित्तं ज्ञायत इति ख० ।

प्रमाणसहकारित्वस्य युक्तत्वादिति चेत् । न । इच्छाया-मेकैकबाधसहकृतापरबाधकैरेव[१] तावद्द्रव्यविशिष्ट-वैशिष्ट्यादष्टद्रव्यानाश्रयत्वपरिच्छेदात्[२] न तु सामा-न्यतोदृष्टेन विशेषणद्वयोः परिच्छित्त्यैव[३] विशिष्ट-वैशिष्ट्यबोधनिर्व्वाहात् तर्कानवतारदशायां तस्य परि-

---

आह, 'कल्प्यप्रमाणान्तरेति, 'युक्तत्वादिति तथाच प्रमाणान्तरकल्पने गौरवमिति भावः । दूषयति, 'नेति, 'अपरबाधकैरेवेति पृथिव्या-दिप्रत्येकसमवेतत्वाभावकूटैरेवेत्यर्थः, तावद्भिरष्टत्वसंख्यावत्पृथिव्या-दिभिर्व्विशिष्टं पृथिव्यादिनिरूपितं यत्समवेतत्वं तस्य वैशिष्ट्यं प्रति-योगित्वरूपं यत्र एवम्भूतोऽष्टद्रव्याश्रितत्वसामान्याभावस्तस्यानुमिते-रित्यर्थः, एवकारव्यवच्छेद्यं स्वयमाह, 'न त्विति, 'सामान्यतोदृष्टेन' इच्छा न पृथिवीसमवेता मनोमात्रग्राह्यत्वादित्याद्यनुमानेन, 'विशे-षणद्वयोः' पृथिव्याद्येकैकसमवेतत्वाभावकूटाष्टद्रव्यसमवेतत्वसामान्या-भावयोः, 'परिच्छित्त्यैव' ज्ञानेनैव, 'विशिष्टेति तावत्समवेतत्वसामा-न्याभावबोधनिर्व्वाहादित्यर्थः, तथाच व्यापकतानवच्छेदकरूपेणानु-मितिः कुत्रापि न स्वीकार्य्येति भावः । नन्वितरबाधस्थले तत्रा-त्रापि व्यापकतानवच्छेदकरूपेणानुमितिः भवितुमर्हतीत्यतो दोषा-न्तरमाह, 'तर्केत्यादि, गौरवाख्यतर्काज्ञानदशायामित्यर्थः, 'तस्य'

---

(१) एकैकबाधसहकृतापरापरबाधकैरेवेति ख० ।

(२) तावद्रूपविशिष्टवैशिष्ट्यादन्यद्रव्यानाश्रयत्वपरिच्छेदादिति ख० ।

(३) विशेषणतयोपस्थित्यैवेति ख० ।

च्छेदकत्वाच्च[१] । न च व्याप्तिपरमिदं वाक्यं यो गोसदृशः स गवयपदार्थ इति वाक्यादवगतव्याप्तेरनुमित्युदयादयं[२] गवयपदवाच्यो गोसदृशत्वात् अतिदेशकालावगतपिण्डवदिति वाच्यं । न हि गोसदृशं ज्ञात्वा अनेन पृष्टः स किंशब्दवाच्य इति, किन्तु सामान्यतो

---

व्यापकतानवच्छेदकावच्छिन्नस्य, 'परिच्छेदकत्वात्' अनुमापकत्वप्रसङ्गादित्यर्थः, अनुमितेर्व्यापकतावच्छेदकमात्रावच्छिन्नविधेयताकत्वस्यानियमादिति भावः । 'तस्य' अनुमानस्य, 'परिच्छेदकत्वादिति व्यापकतानवच्छेदकरूपेणेत्यादिः, तथाच तादृशनियमाभावे तर्कस्यासत्त्वस्थलेऽपि व्यापकतानवच्छेदकरूपेणानुमितिः स्यादिति भावः । इत्यपि कश्चित् । शङ्कते, 'न चेति 'वाच्यमिति परेणान्वयः, 'व्याप्तिपरं' व्याप्तितात्पर्य्यकं, 'इदं' अतिदेशात्मकं, तस्य तत्त्वं स्फुटयति, 'योगोसदृश इति,'अवगतव्याप्तेः' पुरुषस्य, 'अनुमित्युदयादिति, तथाच तत्र तात्पर्य्याभावे व्याप्तेरबोधेनानुमितिर्न स्यादिति भावः । ननु सामान्यव्याप्तौ गोसादृश्यत्वस्याननुगतत्वे महिषादौ व्यभिचारः अननुगतत्वे दृष्टान्तासिद्धिरतो विशेषव्याप्तिमाह, 'अयमिति, 'अयं' अतिदेशकालानवगतो गवयः, दृष्टान्तमाह, 'अतिदेशेति, दूषयति, 'न हीति, 'हि' यस्मात्, 'अनेन' गोसदृशज्ञात्रा पुरुषेण, 'पृष्ट इति, प्रश्नाकारमाह, 'स किमिति, 'सः' गोसदृशः, तदा किं पृष्ट इत्याकाङ्क्षा-

---

(१) तस्य तदपरिच्छेदकत्वाच्चेति ख० ।

(२) अवगतव्याप्तिरनुमित्युदयादयमिति ख० ।

गवयपदार्थमवगत्य[१] स कीदृगिति, तथाच यद्योग-प्राथम्याभ्यां तस्यैव व्याप्यत्वं[२] ततः किं तेन । अथ लक्ष-णपरमिदं[३] वाक्यं किंलक्ष्यकोऽसाविति[४] प्रश्नार्थः, एवञ्च वाच्य इति प्रयोक्तव्यपरमसौ[५] गवयइति व्यवह-

---

यामाह, 'किन्त्विति, 'गवयपदार्थमिति, तत्त्वेनेति शेषः, अज्ञातवस्तु-नोऽपि पदार्थत्वेन ज्ञानसम्भवात् यथा वारणादिपदार्थत्वेन वारणा-दिज्ञानमस्मदादीनां, 'अवगम्येति क्वचित् पाठः स च प्रामादिकः अगुणे धुटि पञ्चमलोपस्यानुशासनिकत्वात्, 'तथाच' गवयपदार्थत्व-ज्ञानस्य पूर्व्वमावश्यकत्वेन च, 'तस्यैव' गवयपदार्थत्वस्यैव, 'किं तेन' किं सादृश्येन, तथाचोक्तानुमाने दृष्टान्तासिद्धिरिति भावः । शङ्कते, 'अथेति, 'लक्षणपरं' गवय इति व्यवहारप्रयोजकधर्म्मतात्पर्य्यकं, 'इदं' अतिदेशवाक्यं । ननु गवयपदशक्यजिज्ञासायां तस्य लक्षणपरत्वे उत्तरत्वं न सम्भवति जिज्ञासिताभिधानस्यैव तथात्वादित्यतः प्रश्ना-र्थमप्यन्यथा करोति, 'किंलक्ष्यकोऽसाविति किंप्रयोज्यव्यवहारवि-षयोऽसावित्यर्थः, 'प्रश्नार्थः' प्रश्नवाक्यार्थः, तथाचोत्तरवाक्यं न विरु-द्धार्थकमिति भावः । ननूत्तरवाक्ये व्यवहारबोधकपदाभावात् कथं

---

(१) गवयपदार्थमवगम्येति ख० ।

(२) यद्योगप्राथमाभ्यां तस्यैवार्थत्वमिति ख० ।

(३) लक्षणापरमिदमिति ख० ।

(४) किंलक्षणकोऽसावितीति ख० ।

(५) एवञ्च प्रयोक्तव्यमयमसाविति ख० ।

**नैव्यो गोसदृशत्वात् यस्तु न तथा नासौ गोसदृशः यथा हस्तीति चेत् । न । न हि हस्त्यादीनां विलक्षणत्वे[१] प्रमाणमस्ति, सर्व्वप्रयोगस्य दुर्ज्ञेयत्वात्[२] कतिपय-**

---

तादृशार्थकत्वमित्यत आह, 'वाच्य इतीति उत्तरवाक्यस्थवाच्य इति-पदमित्यर्थः, उद्देश्य-विधेयभावबलात् प्रयोज्य-प्रयोजकभावलाभ इति भावः । अतएव 'गोसदृशत्वादिति पञ्चमीनिर्द्देशः । ननु तत्र तत्प्र-योजकत्वं व्यापकत्वमेव जनकत्वादेर्ब्बाधात् तच्च व्याप्तिनियतं सा च नास्ति व्यभिचारात् इत्याशङ्क्य व्यभिचाराभावं दर्शयति, 'यस्त्विति, 'न तथा' न गवय इति व्यवहारविषयः, तत्र दृष्टान्तमाह, 'यथेति, हस्तिनि द्वयोरेवाभावसत्त्वादिति भावः । दूषयति, 'न हीति, 'विल-क्षणत्वे' गवय इति व्यवहाराविषयत्वे, 'प्रमाणमस्तीति जिज्ञासितुः प्रकृष्टज्ञानमस्ति, प्रकर्षश्चाप्रामाण्यज्ञानानास्कन्दितत्वं, तथाच गो-सादृश्याभाववति व्यवहारविषयत्वसन्देहात् गोसादृश्ये तत्प्रयोजक-त्वसन्देहासत्त्वं तादृशवाक्यादपि न सम्भवतीति भावः । ननु सर्व्वेषां गवयपदप्रयोगे हस्तितात्पर्य्यकत्वाभावादेव तत्र तत्सिद्धिर्भविष्यती-त्यत आह, 'सर्व्वप्रयोगस्येति सर्व्वेषां तत्प्रयोगे तत्तात्पर्य्यकत्वा-भावस्य इत्यर्थः, 'दुर्ज्ञेयत्वादिति, विना सार्व्वज्ञ्यं सर्व्वज्ञानासम्भवा-दिति भावः ।

केचित्तु 'प्रमाणपदं यथाश्रुतार्थकं, तथाच प्रमाणाभावादेव तज्ज्ञानाभाव इति भावः । ननु सर्व्वप्रयोगेन एतत्साधनीयं इत्यत-

---

(१) विपक्षत्व इति ख० । (२) दुर्ज्ञानत्वादिति ख० ।

व्यवहारस्यानैकान्तिकत्वात्। न च[1] कीदृक् किंलिङ्गक-इति प्रश्नार्थः,[2] न ह्यनेन लिङ्गमज्ञात्वा गवयपदस्य वाचकत्वं कस्यचिच्च तद्व्याप्यत्वं नावगतं,[3] येन तदर्थं प्रश्नः। प्रवृत्तिनिमित्तविशेषलिङ्गे[4] प्रश्नः गवयपदं येन

---

आह, 'सर्व्वप्रयोगस्येति, 'दुर्ज्ञेयत्वादिति, तथाच हेतुज्ञानाभावात् कथं तत्र तत्सिद्धिरित्याशय इत्याहुः, तन्मन्दं, साध्याविशेषापत्तेः। ननु कतिपयजनानां प्रयोगे तत्तात्पर्य्यकत्वाभावनिश्चयादेव तत्र तत्सिद्धिरित्यत आह, 'कतिपयेत्यादि, साध्य-हेत्वोर्वैयधिकरण्यमिति तु नाशङ्कनीयं प्रयोगनिष्ठतात्पर्य्याभावस्य स्वप्रतियोगिविषयतासम्बन्धेनैव हेतुत्वात्, 'अनैकान्तिकत्वात्' व्यभिचारित्वात्। शङ्कते, 'न चेति, 'कीदृक्' इति, उदीच्येतिशब्दोऽत्राप्यन्वितः, 'किंलिङ्गक इति, तथाच किंलिङ्गकप्रश्नार्थो यादृशः कीदृगिति-प्रश्नार्थोऽपि तादृश इत्यर्थः, दूषयति, 'न हीति, 'अनेन' प्रश्नकर्त्ता पुरुषेण, 'लिङ्गं' गवयपदवाच्यत्वानुमापकं, 'वाचकत्वं' वाचकता-निरूपकत्वं वाच्यत्वमिति यावत्, गवये इति शेषः, 'अवगतमिति परेणान्वयः, 'तद्व्याप्यत्वं' गवयपदवाच्यत्वव्याप्यत्वं, 'तदर्थं' तद्व्याप्यत्व-ज्ञानार्थं, 'प्रश्नः', कृत इति शेषः, तथाचातिदेशवाक्यात् पूर्व्वं गवये गवयपदवाच्यत्वस्यैवाज्ञानात्तादृशप्रश्न एव न सम्भवतीति भावः।

---

(१) अथेति ख॰।

(२) किंलिङ्गमिति प्रश्नार्थ इति ख॰।

(३) कस्यचिद्वाच्यत्वमवगतमिति ख॰।

(४) अथ प्रवृत्तिनिमित्तविशेष इति ख॰।

**निमित्तेन वर्त्तते तस्य किं लिङ्गमित्यर्थः इति चेत्, न हि तदनुमानमेवेत्यनेन[१] निश्चितं यत इति स्यात्[२] । ज्ञानहेतुमात्रप्रश्ने तद्विशेषेणोत्तरमिति चेत् । न ।**

---

'तद्वाच्यत्वमवगतमिति क्वचित् पाठः, तत्र 'न हीत्यस्य 'प्रश्न इत्यत्र नान्वयः, किन्तु 'अवगतमित्यत्र, 'वाचकत्वमित्युक्तार्थकं, 'लिङ्गमज्ञात्वा' विशेषतो लिङ्गमज्ञात्वा, 'कस्यचिच्चेति किञ्चित्पदार्थस्य त्वित्यर्थः, 'तद्वाच्यत्वमित्यप्युक्तार्थकं, 'अवगतं' निश्चितं, तथाच सामान्यधर्म्मप्रकारकज्ञानं विना अवान्तरधर्म्मप्रकारकजिज्ञासानुदयात्तादृशप्रश्न एव न सम्भवतीति भावः । 'तदर्थं' लिङ्गत्वावान्तरधर्म्मप्रकारकज्ञानार्थं, 'प्रश्नः' कृत इति शेषः इत्यर्थः । शङ्कते, 'प्रवृत्तिनिमित्तेति गवयपदशक्यतावच्छेदकानुमापके प्रश्न इत्यर्थः, प्रश्नार्थं स्पष्टीकरोति, 'येनेत्यादि गवयपदं यद्धर्म्मावच्छिन्नशक्यताकं तस्यानुमापकं किमित्यर्थः । दूषयति, 'न हीति, 'निश्चितमिति परेणान्वयः, 'तत्' गवयपदशक्यतावच्छेदकं, 'अनुमानमेवेति अनुमेयमेवेत्यर्थः, "कृत्ययुटोऽन्यत्रापीति वचनात् कर्म्मणि युट्प्रत्ययः, तथाच तत् किञ्चिल्लिङ्गकानुमितिविषय इति पर्य्यवसितं, 'इतीति 'निश्चितेत्यत्रान्वयः,'अनेन' प्रश्नकर्त्रा पुरुषेण, 'यत इति स्यात्' येन इति प्रश्नः स्यात्, तथाच सामान्यज्ञानाभावान्न विशेषजिज्ञासेति भावः । शङ्कते, 'ज्ञानेति, तथाच गवयपदवाच्यत्वज्ञानजनकं किमिति प्रश्नार्थः पर्य्यवसितः, 'तद्विशेषेण'

---

(१) तदनुमेयमेवेत्यनेनेति ख० ।

(२) येन तथा स्यादिति ख० ।

अविशेषादिन्द्रियसन्निकर्षमप्युत्तरयेत्, वनं गतो द्रक्ष्यसीति। तस्मान्निमित्तभेदे एवायं प्रश्नः कीदृग्गवयः केन निमित्तेन गवयपदं प्रवर्त्तते, गवयत्वस्य साक्षादुपदर्शयितुमशक्यत्वात्, पृष्टः स तदुपलक्षकं सादृश्यमाचष्टे, पश्चाच्च दृष्टेऽपि पिण्डेऽतिदेशवाक्यार्थं[१] स्मरत-

---

गवयपदवाच्यत्वज्ञापकत्वावान्तरधर्मसादृश्यत्वप्रकारेण, 'उत्तरं' जिज्ञासाविषयबोधकवाक्यं। दूषयति, 'नेति, 'अविशेषात्' ज्ञानजनकत्वाविशेषात्, 'इन्द्रियसन्निकर्षमपीति, इन्द्रियसन्निकृष्टोगवयपदवाच्य इत्युत्तरतोऽपि तादृशजिज्ञासानिवृत्तेरिति भावः। इन्द्रियसन्निकर्षत्वेनोत्तरवाक्यस्य पर्य्यवसितार्थमाह, 'वनमित्यादि, इदमुपलक्षणं सादृश्यस्य तज्ज्ञानजनकत्वाभावेन तद्वाक्यस्योत्तरत्वं न सम्भवतीत्यपि बोध्यं। उपसंहरति, 'तस्मादिति, 'निमित्तभेदे एव' प्रवृत्तिनिमित्तविशेषण एव, 'प्रश्नोऽयं' कीदृशगवय इति प्रश्न इत्यर्थः, प्रश्नार्थं स्पष्टयति, 'केनेत्यादि किंधर्मावच्छिन्नशक्यताकं गवयपदं इति पर्य्यवसितार्थः। ननु किमर्थं सादृश्यमाचष्टे इत्याकाङ्क्षायामाह, 'गवयत्वस्येति, 'साक्षादित्यादि प्रत्यक्षतो ज्ञापयितुमशक्यत्वादित्यर्थः, तस्य तथात्वे गवयपदं गवयत्वावच्छिन्नशक्यताकमित्येवोत्तरयेदिति भावः। 'सः' उत्तरयिता, 'तदुपलक्षकं' गवयत्वोपलक्षकं, सादृश्यस्य प्रत्यक्षतोऽपि दर्शयितुं शक्यत्वं अवयवादिसाम्यादिति भावः। 'पश्चाच्चेति

---

(१) अतिदेशवाक्यमिति ख०।

स्तर्कसहकारात्[1] गवयत्वविशिष्टो धर्म्मी गवयशब्द-वाच्य इति प्रवृत्तिनिमित्तविशेषपरिच्छित्तिरुपमान-फलम्। अथ गौरवेणान्यानिमित्तकत्वे सति सनिमि-त्तकत्वादिति व्यतिरेकिणएव गवयत्वप्रवृत्तिनिमित्त-

---

अतिदेशवाक्यार्थानुभवोत्तरमित्यर्थः, 'दृष्टेऽपि' अयं गोसदृश इति साक्षात्कारविषयेऽपीत्यर्थः, 'पिण्डे' गवयशरीरे, 'स्मरत इति, तादृशप्रत्यक्षस्यैवोद्बोधकत्वादिति भावः। 'तर्कसहकारात्' गौरवाख्य-तर्कसहकारात्, 'प्रवृत्तिनिमित्तविशेषेति प्रवृत्तिनिमित्ते गवयपद-शक्यतावच्छेदके यो विशेषस्तत्परिच्छित्तिस्तज्ज्ञानं, 'उपमानफलं' अतिदेशवाक्यप्रयोजनं।

केचित्तु 'उपमानफलं' उपमितिरिति व्याचक्षते, तन्न साधु, उपमानमनभिधाय तत्फलत्वेनोपमित्यभिधानासम्भवात् अतिदेश-वाक्यप्रयोजनाभिधानप्रस्तावे तदभिधानस्यार्थान्तरत्वाच्च।

शङ्कते, 'अथेति, 'गौरवेण' गौरवाख्यतर्केण, निश्चितादिति शेषः, 'अन्यानिमित्तकत्वे सति' गवयत्वभिन्नधर्म्मावच्छिन्नशक्तिशून्यत्वे सति, 'सनिमित्तकत्वात्' किञ्चिदवच्छिन्नशक्यताकत्वात्, 'इति व्यतिरेकिणः' एतत्स्वरूपात् व्यतिरेकव्याप्तिविशिष्टाद्धेतोरित्यर्थः, तथाच गवयपदस्य गवयत्वप्रवृत्तिनिमित्तकत्वं विना अन्याप्रवृत्तिनिमित्तकत्वविशिष्ट-सप्रवृत्तिनिमित्तकत्वं न सम्भवति इति व्यतिरेकव्याप्तेरिति भावः।

---

(१) तर्कसहकारेणेति ख०।

कत्वधीरिति चेत् । न । व्याप्यमूलकतया गौरवस्य[१] तद्विपर्य्ययस्य वा अप्रमाणत्वात् तच्चाप्रमाणे सहकारितामात्रेण[२] अन्यनिमित्तत्वशङ्कायां[३] कथमुपमानमिति चेत् । न । गौरवसहकृतोपमानादेवान्यानिमि-

---

अन्वयसहचाराभावेनान्वयव्याप्तिग्रहासम्भवाद्व्यतिरेकित्वानुधावनं। दूषयति, 'नेति, 'व्याप्यमूलकतया' आपाद्यापादकयोर्व्याप्तिग्रहानपेक्षतया, 'गौरवस्य' गौरवाख्यतर्कस्य, 'तद्विपर्य्ययस्य' प्रवृत्तिनिमित्तत्वविपर्य्ययस्य, अन्यस्मिन्निति शेषः, 'अप्रमाणत्वात्' अनिश्चायकत्वात्, तथाच व्याप्तिमूलकतर्कस्यैव निश्चायकत्वात् गौरवाख्यतर्केणातथाभूतेन अन्यस्मिन् प्रवृत्तिनिमित्तत्वाभावप्रत्यायनासम्भवादुक्तस्य हेतुत्वासम्भव इति भावः। शङ्कते, 'तच्चेति, 'तच्च' गौरवाख्यतर्के, 'अप्रमाणे' अनिश्चायके, सतीति शेषः, 'सहकारितामात्रेणेति, तस्येत्यादिः, अन्वयश्चास्य उपमानमित्यत्र, 'अन्यनिमित्तत्वशङ्कायां' अन्यस्मिन् प्रवृत्तिनिमित्तत्वशङ्कायां, स्थितायामिति शेषः, 'कथमुपमानं' उपमित्यात्मको गवयत्वे शक्यतावच्छेदकत्वनिश्चयः कथमित्यर्थः, गौरवाख्यतर्कस्य किञ्चिदनिश्चायकत्वेन तच्छङ्काया अनिवृत्तेरिति भावः। दूषयति, 'नेति, 'परिच्छेदादिति निश्चयादित्यर्थः, तथाच गौरवस्यानिश्चायकत्वेऽपि तत्सहकृतोपमानप्रमाणादेव तन्निश्चया-

---

(१) गौरवग्रहस्येति ख० ।

(२) तर्कव्यपदेशाप्रमाणसहकारितामात्रेणेति ख० ।

(३) अन्यनिमित्तशङ्कायामिति ख० ।

त्तकत्वे सति सनिमित्तकत्वपरिच्छेदात्। अस्तु गौरव-सहकृतात् सनिमित्तकत्वमानादेव[१] गवयत्वनिमि-त्तकत्वसिद्धिः, न चैवं, व्यतिरेक्युच्छेदात्[२]। कार्य्यत्वे पर्य्यवसिते बाधकानन्तरं व्यतिरेक्युदयात्। यत्र च

दुक्तशङ्कानिवृत्तिरिति भावः। सहकारित्वं सामानाधिकरण्यमात्रं न तु तज्जन्यजनकत्वं बाधितत्वात्। शङ्कते, 'अस्त्विति 'सिद्धिरिति परेणान्वयः, 'सनिमित्तकत्वमानात्' किञ्चिदवच्छिन्नशक्यताकत्वरूपा-नुमापकहेतोः, दूषयति, 'न चैवमिति, नञर्थे हेतुमाह, 'व्यतिरेक्यु-च्छेदादिति तादृशहेतौ व्यतिरेकव्याप्त्यसम्भवात्, तस्य गवयत्वा-वच्छिन्नशक्यताकत्वव्यभिचारादिति भावः। नन्वेवं क्षितिः सकर्त्तृका कार्य्यत्वादित्यादावपि सर्गाद्यकालीनद्व्यणुकेऽन्यकर्त्तृकत्वाभावनिश्चयेन व्यतिरेकिणा कार्य्यत्वेन ईश्वरकर्त्तृकत्वं न सिद्ध्येत इत्याशङ्कायामाह, 'कार्य्यत्व इति, 'पर्य्यवसिते' विनाशिभावत्वादिना तत्र कार्य्यत्वेऽनु-मिते सतीत्यर्थः, 'बाधकानन्तरं' अन्याकर्त्तृकत्वनिश्चयानन्तरं, 'व्यति-रेक्युदयात्' व्यतिरेकव्याप्तिग्रहात्, तथाच प्रकृते हेतुघटकान्या-निमित्तकत्वासिद्ध्या हेतुरेव पूर्व्वमसिद्ध इति भावः। यदि च तत्र क्षितित्वेन पक्षता तदा सर्गाद्यकालीनद्व्यणुके तत्सिद्ध्यर्थं बाधकस्या-पेक्षितत्वेऽपि घटादौ बाधकं विनापि कथं तत्सिद्धिरित्यत आह,

(१) सनिमित्तकत्वग्राहकमानादेवेति ख० ।

(२) व्यतिरेक्युच्छेद इति ख० ।

प्रथमं व्यतिरेकाभावः[१] तच कार्य्यत्वादेव फलं[२] अन्यानिमित्तकत्वं सनिमित्तकत्वञ्चेति बुद्धावपि गवयत्वनिमित्तकं गवयपदमिति बुद्धेरसिद्धेरुक्तत्वात्। किञ्च अत्र व्यवहारेण प्रवृत्तिविशेषे[३] पदशक्तिग्रहो न तु तन्निमित्ते तेनाप्रतिबन्धात्, न गौरवातिव्याप्त्या-

---

'यत्र चेति इदानीन्तनत्वित्यादौ, 'प्रथमं' इतरबाधनिश्चयात् पूर्व्वं, 'व्यतिरेकाभावः' अन्यकर्त्तृकत्वव्यतिरेकाभावनिश्चयः,'कार्य्यत्वादेवेति, 'एवकारेण व्यतिरेकित्वव्युदासः, 'फलं' अनुमितिः, तत्रान्वयव्याप्तिविशिष्टकार्य्यत्वादेवानुमितिरिति भावः। तुष्यतु दुर्ज्जन इति न्यायेनाह, 'अन्यानिमित्तकत्वमिति, 'उक्तत्वादिति, इदं सप्रवृत्तिनिमित्तमिति बुद्धावपीत्यादिग्रन्थे इत्यादिः।

शक्तिग्रहो नोपमित्यात्मकः किन्तु शक्तिग्रहानन्तरं शक्यतावच्छेदकत्वग्रह एव तदात्मकः तदेवोपमानफलमित्येकदेशिमतं उपन्यस्य निरस्यति, 'अत्रेति, 'व्यवहारेण' गामानयेत्यादिप्रयोजकवृद्धवाक्यात् प्रयोज्यवृद्धस्य गवानयनादिना, 'प्रवृत्तिविशेषे' व्यक्तिविशेषे, 'पदशक्तिग्रहः' पदविशेषशक्तिग्रहः, 'तन्निमित्ते' तच्छक्तिव्यावर्त्तके, 'शक्तिग्रह इति पूर्व्वेणान्वयः, 'तेनाप्रतिबन्धात्' 'तेन' तन्निमित्तेन, तत्र शक्तिग्रहाप्रतिबन्धात्, व्यक्तौ शक्तिभानस्य निमित्ते शक्तिभाना-

---

(१) बाधकाभाव इति ख०।

(२) तच्च कार्य्यत्वादेव फलं नेति ख०।

(३) प्रवृत्तिविषये इति ख०।

दिनेतरनिरासे[१] गोत्वादेर्निमित्तत्वग्रहः, गौरवादे-रतर्कत्वात्[२] अप्रमाणत्वाच्च। तस्मात् व्यक्तौ शक्तिग्रह-एव लाघवादिसाहित्येन इतरानिमित्तकत्वे सति[३] गोत्वादिनिमित्तकत्वमवधारयति। सर्व्वञ्च तदेवोप-

नियतत्वादिति भावः। नैयायिकाभिमतं यत्तन्निराकरोति, 'नेति, व्यक्तिशक्तिग्रहकाल एव इति शेषः, 'इतरनिरासे' गोत्वेतरानिमि-त्तकत्वनिश्चये, तत्र हेतुः 'गौरवातिव्याप्त्यादिनेति गोरूपतच्छक्तित्वादौ गौरवाख्यतर्केण द्रव्यत्व-प्रमेयत्वादावतिप्रसङ्गेनाश्वत्वादावादिपदोपा-त्तासामानाधिकरण्येन तन्निरास इति भावः। 'गोत्वादेरित्यादिना गवयत्वादिपरिग्रहः, 'निमित्तत्वग्रहः' शक्यतावच्छेदकत्वग्रहः, नञर्थे हेतुमाह, 'गौरवादेरिति, 'अतर्कत्वात्' आपत्तित्वावच्छिन्नाप्रयो-जकत्वात्, आदिना अतिव्याप्त्यसामानाधिकरण्यपरिग्रहः। ननु तेषामतर्कत्वेऽपि इतरनिरासकत्वमस्त्येव इत्यत आह, 'अप्रमाणत्वा-च्चेति अनिश्चायकत्वाच्चेत्यर्थः, तथाच तेषां कुतस्तन्निश्चायकत्वमिति भावः। उपसंहरति, 'तस्मादिति, 'शक्तिग्रह एवेति व्यवहारादिना व्यक्तौ शक्तिग्रहे सत्येव इत्यर्थः, 'लाघवादिसाहित्येन' लाघवादीनां साहित्यं यत्रेति व्युत्पत्त्या लाघवादिसहितेनेत्यर्थः, 'आदिना गौरवातिप्रसङ्गासामानाधिकरण्यपरिग्रहः, 'अवधारयतीति, तथाच

(१) न च गौरवादिव्याप्त्यादिनेतरनिरासेनेति ख०।

(२) गौरवादेरतन्त्रत्वादिति ख०।

(३) लाघवादिसहकृततोऽन्यतरनिमित्तकत्वे सतीति ख०।

**मानफलमिति[१] कश्चित्, तन्न, शक्तिग्राहकमेव लाघवादिसहकृतं निमित्तमप्यवधारयति, यथा क्षित्यादौ कर्तुरेकताम्[२]। अथैवं भिन्नकर्तृकेषु लाघवात् कार्य्य-**

---

लाघवादिसहितेनोपमानरूपप्रमाणेन जनः अवधारयतीत्यर्थः। 'सर्वत्र' गवि गवयादौ, 'तदेव' तादृशावधारणमेव, 'उपमानफलं' उपमानप्रमाणफलमित्यर्थः, तथाचोपमानस्य न व्यक्तिशक्तिग्राहकत्वं "शक्तिग्रहं व्याकरणोपमानेत्यादिप्राचीनप्रवादस्य शक्यतावच्छेदकत्वरूपशक्तिग्राहकतयैवोपपत्तेरिति भावः। दूषयति, 'तन्नेति, 'शक्तिग्राहकमेव' व्यक्तिशक्तिग्राहकमेव, 'लाघवादीत्यादिना गौरवातिप्रसङ्गासामानाधिकरण्यपरिग्रहः, 'निमित्तमपि' गवयत्वादिकमपीत्यर्थः, आदिना व्यक्तिपरिग्रहः, 'अवधारयति' शक्यत्वेन निश्चाययति, तथाच प्रयोज्यवृद्धव्यवहारादिना शक्तिग्रहासम्भवेन तदर्थमुपमानमपेक्षितं तदेव निमित्तस्यापि शक्तिग्राहकं अन्यथा गवयादिसामान्ये शक्तिग्रहासम्भवतादवस्थ्यापत्तेरिति भावः। न च व्यवहारादिना शक्तिग्रहकाले कथं निमित्ते न तद्ग्रह इति वाच्यं। सकलव्यक्तेर्व्यवहाराविषयत्वेन गवयत्वादेरतिप्रसक्तत्वसन्देहेन गौरवादितर्काभावेन च तदानीं तत्र तत्सन्देहेन निश्चयाभावात्। ननु व्यक्तिशक्तिग्रहकाल एव तत्र शक्तिग्रह इति तु राज्ञामाज्ञावत् प्रतिभातीति शङ्कायां दृष्टान्तमाह, 'यथेत्यादि, 'क्षित्यादौ' क्षितित्वेन पक्षीभूते सर्गाद्यकालीनद्व्यणुकादौ, 'कर्त्तुरेकतां' तादृशक्षिति-

---

(१) तद्वयचेति देवोपमानमितीति ख०।
(२) क्षित्यादौ कर्तृग्राहकं कर्तुरेकतामिति ख०।

मेककर्तृतां बोधयेत् बोधयत्येव[१] पश्चाद्बाधकेन त्यज्यते इति चेत् । न[२] । बाधितविषयत्वेनाभासत्वात् अत्र-

कर्त्तुरीश्वरस्यैकतां, 'अवधारयतीतिपूर्व्वेणान्वयः, तथाच यथा क्षितिः सकर्तृका कार्य्यत्वात् कार्य्याद्वा इत्यत्र क्षितिकर्त्तुरेकत्वेन लाघवं इति लाघवादिरूपतर्कसहकृतं कर्त्तृत्वानुमापकप्रमाणमेव कर्तृत्वानुमितिदशायामेव कर्त्तुरेकतामप्यवधारयति तथात्रापीति भावः । अन्यथा तत्रापि कर्तृत्वानुमित्यनन्तरमेव एकताग्रह इति कथं न रोचयेयुर्नैकस्तौल्यादित्यभिप्रायः । शङ्कते, 'अथैवमिति, 'एवं' लाघवादिसहकृतानुमापकस्यैव कर्त्तुरेकताप्रत्यायकत्वे, 'भिन्नकर्त्तृकेषु' कुलालादिकर्तृकेषु घट-पटादिष्वपि, 'लाघवात्', 'कार्य्यं' लाघवादि सहकृतं कार्य्यरूपमनुमापकं, 'एककर्तृतां', 'बोधयेदिति, तथाच क्षितित्वेन क्षितिसामान्यस्यैव पक्षतया घट-पटादिष्वपि लाघवादिसहकृतकार्य्यरूपहेतुना ईश्वरकर्तृकत्वसिद्धिः स्यादिति भावः । तत्रेष्टापत्तिमाह, 'बोधयत्येवेति, सर्व्वकर्त्तुरीश्वरस्य घट-पटादिकर्तृत्वमस्त्येवेति भावः । पुनः शङ्कते, 'पश्चादिति घट-पटादावेककर्तृकत्वबोधानन्तरं, 'बाधकेन' बाधनिश्चयेन, 'त्यज्यते' अप्रामाण्यग्रहविषयतया ज्ञाप्यते, तथाच घट-पटादेरेककर्तृकत्वं नास्त्येवेति भावः । दूषयति, 'नेति, 'बाधितविषयत्वेनेति तादृशानुमितेरित्यादिः, 'आभासत्वात्' उक्तहेतोराभासतासम्पादकत्वप्रसङ्गात्, तथाच तेन

(१) कार्य्यत्वमेककर्तृकताञ्च कोऽपि बोधयत्येवेति ख० ।

(२) एतत् पूर्व्वं 'तर्हि सद्धेतोराभासानुमितिः साध्याव्यभिचाराद्यभावादिति चेत्' इत्यधिकः पाठः क्वचिल्लिखितपुस्तके वर्त्तते ।

घुनि लघुज्ञानस्य[१] अयथार्थत्वेन तज्जन्यानुमितेरा-
भासत्वाच्च । न चोपमितिरेव इतरव्युत्पत्तिः[२] अन्यथा
तदनिरुक्तेरिति वाच्यं । व्युत्पत्तेः शब्दसहकारित्वे

---

हेतुना सर्गाद्यकालीनद्व्यणुकादावपि तत्सिद्धिर्न स्यादिति भावः ।
ननु घटः कुलालकर्तृको घटत्वादित्यादावपि लाघवादेककर्तृकत्व-
सिद्धिः स्यादित्यत आह, 'अलघुनीति, 'लघ्विति धर्मपरो निर्द्देशः,
क्वचित्तथैव पाठः, लघुत्वज्ञानस्येत्यर्थः, 'अयथार्थत्वेन' भ्रमत्वेन, 'तज्ज-
न्यानुमितेः' भ्रमात्मकलाघवज्ञानजन्यानुमितेः, 'आभासत्वात्' भ्रम-
त्वात्, भ्रमजन्यानुमितेः प्रमात्वासम्भवादिति भावः। तथाच भ्रमस्य
वस्तुसाधकत्वात् कुलालादेर्नैकत्वसिद्धिरिति भावः । इदञ्च "तुष्यतु
दुर्ज्जन इति न्यायेनोक्तं । वस्तुतस्तु यथार्थलाघवज्ञानस्यैवानुमितिहेतु-
त्वोक्तावप्युक्तदोषवारणसम्भव इति । शङ्कते, 'न चेति 'वाच्यमिति
परेणान्वयः, 'इतरव्युत्पत्तिः' शक्तिज्ञानात्मकतया शब्दसहकारिणी,
स्यादिति शेषः, 'अन्यथा' तस्या अतथात्वे, 'तदनिरुक्तेरिति, तथा
चोपमितित्वेन शक्तिज्ञानस्य हेतुता स्यादिति पर्य्यवसितापत्तिरिति
भावः । दूषयति, 'व्युत्पत्तेरिति शक्तिज्ञानस्य, 'शब्दसहकारित्वे'
तत्त्वेन इत्यादिः, 'मानान्तरत्वे' प्रमाणान्तराधीनशक्तिज्ञानसत्त्वे,
'व्याघातात्' उपमितेरसत्त्वात्, तथाचोपमितित्वेन शक्तिज्ञानस्य
शाब्दहेतुत्वे व्यभिचारादिति भावः । ननु यच्चोपमित्यात्मकशक्ति-

---

(१) लघुत्वज्ञानस्येति ख० ।

(२) व्युत्पत्तिरिति ख० ।

मानान्तरत्वे[१] व्याघातात्। व्युत्पत्तिस्तु यां बुद्धिमासाद्य पदार्थविशेषबोधः[२] सा।

अन्ये तु यत्तदादिपदानामनुगतैकरूपाभावेनैकत्रैव शक्तिग्रहादन्यत्रापीति पदान्तरव्यवहारः पदान्तर-

---

ज्ञानसहकारेण गवयादिपदात् शाब्दबोधः तत्र तस्या व्युत्पत्तित्वमव्याहतमेव इत्यत आह, 'व्युत्पत्तिस्त्विति, 'यां' यद्धर्मावच्छिन्नां, 'आसाद्य' असाद्यैव, 'पदार्थविशेषबोधः', 'सेति' तत्रेति शेषः, 'सा' व्युत्पत्तिः, तथाच शब्दजन्यतावच्छेदकावच्छिन्नजनकस्यैव शब्दसहकारितया व्यक्तिविशेषे तस्या अपेक्षितत्वेऽपि न शब्दसहकारित्वं तेन रूपेण शाब्दत्वावच्छिन्नाहेतुत्वादिति भावः।

उपमाणप्रमाणं खण्डयतां मतमुपन्यस्य दूषयति, 'अन्ये त्विति, 'यत्तदादीत्यादिपदात् सर्वनामान्तरपरिग्रहः, 'पदानामिति 'शक्तिग्रहादितिपरेणान्वयः, 'अनुगतैकरूपाभावेन' सकलसाधारणैकधर्माभावेन, 'एकत्रैव' एकधर्मिण्येव, 'अन्यत्रापि' अन्यस्मिन्नपि धर्मिणि, 'इतीति एवमित्यर्थः, क्वचित्तथेति पाठः, तत्र पूर्वं यथेति पूरणीयमिति विशेषः, 'पदान्तरेति गवयादिपदाधीनव्यवहार इत्यर्थः, तथाच व्यवहारादेकस्मिन् गवये शक्तिग्रहेऽपि गवयान्तरे गवयपदव्यवहारो भवितुमर्हतीति भावः। ननु व्यक्त्यन्तरे पदान्तरशक्तिग्रहा-

---

(१) शब्दसहकारित्वेन मानान्तरत्वेनेति ख०।

(२) पदार्थबोध इति ख०।

**वैधर्म्यात्, न प्रमाणान्तरमुपमानमिति, तन्न[१], बुद्धिस्थत्वादिनोपलक्षणेन साधारणेन शक्तिग्रहात् बुद्धिविशेषादेव विशेषपर्य्यवसानं तथैव व्यवहारात्**

---

देव व्यवहार इति तटस्थाशङ्कायामाह, 'पदान्तरवैधर्म्यादिति तत्पदस्य अन्यादृशपदलाभावात् तत्पदाधीनव्यवहारस्यान्यपदशक्तिग्रहाधीनत्वस्यात्यन्तमसम्भावितत्वादिति भावः। उपसंहरति, 'न प्रमाणान्तरमिति प्रत्यक्षानुमान-शब्दभिन्नप्रमाणमित्यर्थः, न चैवं सिद्धान्तसिद्धिव्याघातः, प्रत्यक्षादित्रयत्वव्याप्यं प्रमाणत्वमित्यत्र तात्पर्य्यात्। दृष्टान्तवैषम्यमुद्भाव्य दूषयति, 'तन्नेत्यादि, 'बुद्धिस्थत्वादिनेति बुद्धिविषयत्वात्मकोपलक्षणेन इत्यर्थः, 'साधारणेन' घटत्व-पटत्वादिसकलधर्म्मसाधारणेनेत्यर्थः, 'बुद्धिविशेषादेवेति तद्धर्म्मावच्छिन्ने इत्यादिः, 'बुद्धिविशेषादेव' बुद्धिस्थत्वज्ञानादेव, 'पर्य्यवसानं' तद्धर्म्मावच्छिन्ने शक्तिज्ञानं, 'तथैव' तेन रूपेणैव, 'व्यवहारात्' तत्पदाधीनव्यवहारात्, 'अन्यथा' तद्रूपेण यत्तदादिपदानां शक्यकल्पने, 'मानान्तरेऽपि' उपमानस्वीकारेऽपि, 'दोषः' अन्यधर्म्मिणि तदादिपदाधीनव्यवहारासम्भवरूपो दोषः, अस्येवेति शेषः, तथाच यत्तदादिपदानां तादृप्येण शक्तिकल्पनं सर्वमत एव समानं गवयादिपदानान्तु न तथा इति दृष्टान्तवैषम्यमिति भावः। अनुगतरूपेण यस्य ज्ञानं तत्रैव शक्तिग्रह इति नियमात् कथमन्यत्र शक्तिग्रह इत्यत आह,

---

(१) अन्यत्रापि शब्दस्यव्यवहार इति पदान्तरवैधर्म्यादस्तु मानान्तरमुपमानमिति चेन्नेति ख०।

अन्यथा मानान्तरेऽपि दोषः। न ह्यनुगतरूपप्रतीता-वेव तत्र शक्तिग्रहः।

यत्तु माचादिपदानां जनकस्त्रीत्वादिना शक्तिग्रहे कथं मैत्रमात्रादिलाभः। न च समभिव्याहारविशेषा-दिति वाच्यं। पदार्थो हि पदार्थान्तरमन्वेति, जनक-स्त्रीत्वञ्च न तथेति[१] कथं मैत्रादिना जनकत्वान्वय-इति मानान्तरमिति, तन्न, जनकत्वस्य जन्यसापेक्ष-

---

'न हीत्यादि। वस्तुतस्तु उपमानस्य प्रमाणत्वे तदादिपदशक्तिग्रहे सकलव्यक्तिभानार्थं मानान्तरं स्वीक्रियतामित्यत आह, 'अन्यथे-त्यादि, 'दोषः' अनुगतधर्म्माभावे धर्म्मभेदेनानन्तशक्तिकल्पनरूपदोषः। ननु यद्व्यक्तौ अनुगतरूपप्रतीतिस्तत्रैव शक्तिग्रहनियमात् कथमन्यत्र शक्तिग्रह इत्यत आह, 'न हीति 'अनुगतरूपप्रतीतावेवेति अनु-गतरूपस्य प्रतीतिः यत्र इति व्युत्पत्त्या तादृशव्यक्तिलाभः, 'शक्तिग्रह-इति, मानाभावादिति भाव इति परमार्थः।

मानान्तरास्वीकारे दोषमाशङ्कते 'यत्त्विति, सिद्धान्तमाशङ्क्य निषेधति, 'न चेति 'वाच्यमिति परेणान्वयः, 'समभिव्याहारवि-शेषात्' मैत्रादिपदसमभिव्याहारात्, 'पदार्थान्तरमिति सावधारणं पदार्थान्तरमेवान्वेतीत्यर्थः, 'न तथा' न पदार्थः, किन्तु पदार्थता-वच्छेदकमिति शेषः, 'मानान्तरमिति स्वीकार्य्यमिति शेषः। व्युत्पत्तिवैचित्र्यात् सापेक्षपदार्थस्य पदार्थान्तरैकदेशे अन्वयस्वीकारः सकलतान्त्रिकसम्मत इति समाधत्ते, 'तन्नेति, 'योग्यत्वादीत्यादिना

(१) जनकस्त्रीत्वञ्च तथेतीति ख०।

**त्वेन[1] योग्यत्वादिना मैत्रेणान्वयात् । लक्षणन्तु उपमितिकरणत्वम् । उपमितित्वञ्च जातिः । न चासिद्धिः, कारणविशेषे कार्य्यवैजात्यमावश्यकमिति[2] कारणव्यङ्ग्यत्वात्[3] । यद्वा नियतधर्मसमानाधिकरणशब्द-**

आकाङ्क्षादिपरिग्रहः, तथाच किमर्थं केवलजनकभानार्थं प्रमाणान्तरस्वीकार इति भावः । एतावता जरन्नैयायिकमतं संदूष्य स्वयमुपमानादिलक्षणमभिधत्ते, 'लक्षणन्त्विति, 'उपमितिकरणत्वमिति उपमितित्वघटितधर्म्मावच्छिन्नकार्य्यतानिरूपितकरणत्वमित्यर्थः, अतः सादृश्यविशिष्टप्रत्यक्षस्य उपमितिकरणस्य केवलोपमितित्वावच्छिन्नं प्रत्यहेतुत्वेऽपि न क्षतिः, अतिदेशवाक्यार्थस्मृतिरूपव्यापारे अतिव्याप्तिवारणाय कारणत्वमपहाय करणत्वनिवेशः, करणत्वन्तु स्वरूपसम्बन्धविशेषः तज्जनकव्यापारजनकत्वं वा । उपमितिनिरूपणस्यापि प्रतिज्ञातत्वात् उपमानलक्षणस्य तद्घटितत्वाच्च उपमितिलक्षणमप्याह, 'उपमितित्वमिति । तज्जातेरखिङ्गत्वमाशङ्क्य निषेधति, 'न चेति, 'असिद्धिरिति तादृशजातेरित्यादिः, 'कारणविशेषे' कारणवैलक्षण्ये, 'आवश्यकमिति, न चेत् कार्य्य-कारणकल्पनमेव न सम्भवतीति भावः । 'कारणव्यङ्ग्यत्वात्' कारणविशेषप्रमाणकत्वात् । ननु का उपमितिरित्युपमितित्वावान्तरधर्म्मप्रकारकजिज्ञासायाः तेन रूपेण तदभि-

(१) जनकस्य जन्यापेक्षत्वेनेति ख० ।

(२) कार्य्यवैजात्यमप्रयुक्तमितीति ख० ।

(३) कारणविशेषव्यङ्ग्यत्वादिति ख० ।

**प्रवृत्तिनिमित्तज्ञानमुपमितिः[१] प्रकारतया शब्द-शक्तिविषयत्वं निमित्तत्वम्[२] । अगृहीतसमयकसंज्ञया**

धानेनानिवृत्तेः तदवान्तरत्वस्य तद्भेदगर्भत्वात् कथमन्यथा अनु-मितित्वलक्षणमप्यनुमितित्वमिति नोक्तं इत्यत आह, 'यद्वेति, 'निय-तेति नियता ये धर्माः साधर्म्य-वैधर्म्यरूपाः तेषां प्रत्येकसमानाधि-करणं यद्गवयत्व-करभत्वादिकं तस्मिन् किञ्चिच्छब्दप्रवृत्तिनिमित्त-त्वज्ञानमित्यर्थः, नियतत्वस्यानुगतस्याभावात् स्वनियतेति वक्तव्यं, स्वं तादृशज्ञानविशेष्यत्वेनाभिमतं गवयत्वादि, तच्च न स्वाभाववदवृत्तित्वं स्वाश्रयभिन्नावृत्तित्वं वा पदार्थो वस्तुशब्दवाच्य इत्युपमितौ धनी आढ्यपदवाच्य इत्युपमितौ चाव्याप्त्यापत्तेः पदार्थत्वस्य केवलान्वयि-त्वात् वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितानवच्छेदकत्वाच्च, पद-वाच्य इत्युपमितौ गवयत्वनिष्ठविषयतायास्तथात्वात् । किन्तु स्व-समानाधिकरणभेदप्रतियोगितानवच्छेदकत्वे सति स्वसामानाधि-करण्यं, उभयत्र स्वाधिकरणत्वं निमित्ततावच्छेदकताघटकसम्बन्धेन, अवच्छेदकत्वं वृत्तित्वञ्च सामानाधिकरण्यघटकसम्बन्धेन नातः सम्बन्धभेदनिबन्धनो दोषः । ननु किन्नाम शब्दप्रवृत्तिनिमित्तत्व-मित्याकाङ्क्षायामाह, 'प्रकारतयेति, अवच्छिन्नत्वं तृतीयार्थः, स च विषयत्वान्वयी, तथाच गवयो गवयपदजन्य-गवयत्वप्रकारकशाब्द-बोधविषयतावान् भवतु इति नित्यसङ्केतीयशाब्दप्रकारत्वावच्छिन्न-

(१) नियतधर्म्मसमानाधिकरणप्रवृत्तिनिमित्तज्ञानमुपमितिरिति ख० ।

(२) शब्दशक्तिग्रहविषयानिमित्तत्वमिति ख० ।

वाक्यार्थसामानाधिकरण्येन संज्ञानिमित्तप्रकारतापरिच्छेदो वा, किञ्चिद्वाक्यार्थसामानाधिकरण्येन संज्ञा-

---

विषयताया गवयत्वे सत्त्वात् गवयत्वं गवयशब्दप्रवृत्तिनिमित्तं एवमन्यत्रापि इति भावः। उपमित्यनन्तरोत्पन्नतदाकारकप्रत्यक्षे शाब्दे वा तदनुव्यवसाये चातिव्याप्तिरतो लक्षणान्तरमाह, 'अगृहीतेत्यादि।

केचित्तु उक्तलक्षणस्य स्वत्वगर्भत्वेनाननुगमाल्लक्षणान्तरमाह, 'अगृहीतेति इत्याहुः। तन्मन्दं। गवयत्वे प्रवृत्तिनिमित्तत्वपरिच्छेदिका का इत्यादिजिज्ञासाया अप्यननुगमात् जातिघटनयापि अनुगतत्वसम्भवाच्च।

'अगृहीतः' अनिश्चितः समयो यस्यास्तादृशी या संज्ञा गवयादिरूपा तस्या यो वाक्यार्थः शक्यत्वं वाक्येनार्थो येन इति व्युत्पत्तेः, तत्सामानाधिकरण्येन तद्विशेष्यतावच्छेदकत्वेन, अवच्छिन्नत्वं तृतीयार्थः, तथाच तदवच्छिन्ना या 'संज्ञानिमित्तप्रकारता' शब्दशक्यतावच्छेदकप्रकारता, तच्छालिज्ञानमित्यर्थः, समानाधिकरणविषयतयोरवच्छेद्यावच्छेदकभावस्यौत्सर्गिकत्वाद्गवयो गवयपदवाच्य इत्युपमित्या गृहीतशक्तिकगवयपदवाच्यत्वप्रकारकप्रत्यक्षादौ अतिव्याप्तिवारणायागृहीतसमयकत्वं संज्ञाविशेषणं। ननु व्यवहारादिना गवयादिपदशक्तिग्रहानन्तरमेव उपमानात् शक्तिग्रहो जायते अन्यथा कीदृग्गवयपदवाच्य इति जिज्ञासैव नोदेति, तदुक्तमभियुक्तैः, "सङ्केतस्य ग्रहः पूर्व्वं वृद्धस्य व्यवहारतः। पश्चादेवोपमानाद्यैः शक्तिधीपूर्व्वकैरसौ" इति, तथाचोपमितिमात्रेऽसम्भवः

निमित्तप्रकारतापरिच्छेदो वा[1]। गोविसदृशो न गवय इत्यत्रापि परम्परया तत्र तात्पर्य्यमस्त्येवेति सर्व्वमवदातम्।

इति श्रीमहामहोपाध्याय-गङ्गेशविरचिते तत्त्वचिन्तामणौ उपमानाख्य-तृतीयखण्डं समाप्तम्।

---

अतस्तत्परित्यज्य लक्षणान्तरमाह, 'किञ्चिद्वाक्यार्थेति, अर्थस्तूक्त एव। ननु जिज्ञासानन्तरं गोविसदृशो न गवय इत्यतिदेशवाक्यं प्रयुक्तं अर्थप्रत्येतुरयं न गोविसदृश इति प्रत्यक्षस्य उपमित्यकरणत्वेन तज्जन्यतादृशवाक्यार्थस्मृतेरप्यव्यापारत्वेन तदनन्तरजाततादृशज्ञानेऽतिव्याप्तिः सादृश्यप्रकारकज्ञानस्यैव उपमितिकरणत्वेन लक्ष्यत्वस्वीकारासम्भवादित्यत आह, 'गोविसदृश इति, 'परम्परया' गोसादृश्यभावाभावत्वरूपवत्तया, 'तत्र' सादृश्ये, 'तात्पर्य्यमिति अतिदेष्टुरित्यादिः, तथाचातिदेशे पिण्डप्रत्यक्षे च सादृश्यविषयतायाः सादृश्यत्व-तदभावाभावत्वान्यतररूपावच्छिन्नत्वेन निवेशात्तस्य लक्ष्यत्वमिष्टमेवेति भावः। 'अवदातं' निर्म्मलीभूतम्।

इति श्रीकृष्णकान्तविद्यावागीशभट्टाचार्य्यविरचिता उपमानाख्यतृतीयचिन्तामणिदीपनी समाप्ता॥

---

(१) संज्ञानिमित्तपरिच्छेदो वेति ख०।

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

## THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES.—NOS. 858, 866, 875, 883, 891.


# THE TATTVA-CHINTĀMAṆI

BY


GANGES'A UPĀDHYĀYA,


## PART IV, VOLUME I.

### S'AVDA KHAṆḌA

FROM S'AVDAPRĀMĀNYAVĀDA TO UCHCHHANNA-PRACHCHHANNAVĀDA

FROM THE COMMENTARIES OF

MATHURĀ NĀTHA TARKAVĀGI'S'A

EDITED BY


PANDIT KĀMĀKHYĀ NĀTHA TARKA-VĀGI'S'A.

*Professor, Sanskrit College, Calcutta*



CALCUTTA:

PRINTED AT THE BAPTIST MISSION PRESS

1897.

# तत्त्वचिन्तामणौ

शब्दाप्रामाण्यवादादि उच्छन्न-प्रच्छन्नवादान्तं ।

## श्रीमद्गङ्गेशोपाध्यायविरचितं ।

श्रीमथुरानाथ-तर्कवागीशविरचित-रहस्यनामकटीकासहितं ।

---

आसियाटीक-सोसाइटी-समाजानुमत्या

संस्कृतविद्यालयाध्यापक-

**श्रीकामाख्यानाथ-तर्कवागीशेन**

परिशोधितं ।

कलिकाताराजधान्यां

वाप्तिस्त मिशनयन्त्रे मुद्रितं ।

शकाब्दाः १८१८ । ई० १८९७ ।

# तत्त्वचिन्तामणौ शब्दखण्डे शब्दाप्रामाण्यवादादि-उच्छन्न-प्रच्छन्नवादान्तभागस्य सूचीपत्रं ।







ॐ नमः शिवाय ।

# तत्त्वचिन्तामणौ



## शब्दाख्यतुरीयखण्डम् ।

अथ शब्दो निरूप्यते । प्रयोगहेतुभूतार्थतत्त्वज्ञान-जन्यः शब्दः प्रमाणम् ।

---

## शब्दाख्यतुरीयखण्डरहस्यम् ।

न्यायाम्बुधिकृतसेतुं हेतुं श्रीराममखिलसम्पत्तेः ।
तातं त्रिभुवनगीतं तर्कालङ्कारमादरान्नत्वा ॥१॥
श्रीमता मथुरानाथ[1] तर्कवागीशधीमता ।
विषदीकृत्य दर्श्यन्ते तुरीयमणिफक्किकाः ॥२॥

आन्वीक्षिकीपण्डितमण्डलीषु
खण्डखण्डैरध्ययनं विनापि ।
मदुक्तमेतत् परिचिन्त्य धीरा-
निःशङ्कमध्यापनमातनुध्वम् ॥३॥

प्रत्यक्षादिप्रमाणत्रयं निरूपितमिदानीं चरमप्रमाणं शब्दः[2]

---

[1] श्रीलश्रीमथुरानाथेति ख० ।
[2] इदानीं शब्द इति ख० ।

निरूपणीयोऽतः शिष्यावधानाय प्रतिजानीते[१] 'अथेत्यादिना, 'अथ' उपमाननिरूपणानन्तरक्षणनिष्ठं, 'शब्दः' शाब्दप्रमाकरणं, यथाश्रुते अग्रे प्रमाणशब्दस्य लक्षणकरणे अर्थान्तरतापत्तेः। 'निरूप्यत इत्यत्र निरूपणं लक्षण-स्वरूप-प्रामाण्यादिभिर्ज्ञापनं, लक्षण-स्वरूप-प्रामाण्यादिप्रकारकज्ञानानुकूलो व्यापार इति यावत्, आख्यातस्य च विषयत्वमर्थः, तथाचोपमानविशेष्यक-लक्षण-स्वरूप-प्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारानन्तरक्षणनिष्ठाभिन्नो यो-लक्षण-स्वरूप-प्रामाण्यादिप्रकारकज्ञानानुकूलव्यापारस्तद्विषयः प्रमाणं शब्दः इत्यन्वयः। 'अथपदस्य लुप्तद्वितीयाविभक्तिकस्य निरूपण-क्रियाविशेषणतया स्तोकं पचतीत्यादाविवाभेदस्य संसर्गमर्य्यादाबल-लभ्यत्वात्, नाम्नः क्रियाविशेषणत्वस्थले अभेदान्वयबोधस्यैव साकाङ्क्ष-त्वात्, व्यापारस्य शब्दप्रयोग एव तद्विषयता च व्यापारानुबन्धिनी[२] तेन शब्दस्य निर्विषयकत्वेऽपि न क्षतिः।

---

(१) अव्यवहितोत्तरकालकर्त्तव्यत्वप्रकारक-शिष्यसमवेतबोधानुकूलव्यापारः प्रतिज्ञापदार्थः, स च अथेत्यादि निरूप्यत इत्यन्तं वाक्यं, निरूप्यत-इत्यत्र वर्त्तमानसामीप्यार्थकलट्प्रत्ययस्य वर्त्तमानकालाव्यवहितोत्तर-कालार्थकत्वेन अथेत्यादिवाक्यस्य निरुक्तप्रतिज्ञात्वं, अथेत्यादिना इत्यत्र अभेदे तृतीया तथाच अथेत्यादिवाक्याभिन्नप्रतिज्ञानुकूलकृतिमान् मणिकार इति शाब्दबोधः।

(२) व्यापारानुबन्धिनी व्यापारप्रयोज्या, तथाच शब्दप्रयोगस्य निर्व्विषयक-त्वेऽपि याचितमण्डनन्यायात् तज्जन्यज्ञानरूपव्यापारविषयत्वेन तद्वि-षयत्वनिर्वाह इति भावः।

केचित्तु। अथशब्दस्य ध्वंसाधिकरणक्षणवृत्तित्वरूपानन्तरक्षणवृत्तित्वाश्रये[१] धर्म्मिणि न शक्तिरपि तु अनन्तरक्षणवृत्तित्वे धर्म्म एव शक्तिः अनन्तरक्षणवृत्तित्वत्वरूपेणानन्तरक्षणवृत्तित्वस्य शक्यतावच्छेदकत्वमपेक्ष्यानन्तरक्षणवृत्तित्वत्वस्य केवलस्य शक्यतावच्छेदकत्वे लाघवात् तथाचाश्रयाश्रयिभावसम्बन्धेनैवान्वयबोधः अभेदसम्बन्धेनान्वयबोधे अथपदस्य धर्म्मिणि लक्षणापत्तेः, अतएव चाव्ययातिरिक्तनाम्नः क्रियाविशेषणत्वस्थल एव अभेदसंसर्गकान्वयबोधनियमोऽव्ययातिरिक्तस्थल एव धात्वर्थ-नामार्थयोर्भेदान्वयबुद्ध्यभावनियमश्च, अन्यथा अथादिपदस्य धर्म्मिणि लक्षणापत्तेः। वस्तुतस्तु 'अथादिपदस्यानन्तरक्षणवृत्तित्वेऽपि न शक्तिः अपि त्वनन्तरत्व एव शक्तिः, अनन्तरत्वञ्च ध्वंस एव, तथाच 'अथपदोत्तरं सप्तमीलोपात् लुप्तसप्तम्यर्थे समानकालीनत्वे 'अथपदार्थस्योपमाननिरूपणध्वंसस्यान्वयः[२] न तु धात्वर्थे, धात्वर्थे च सप्तम्यर्थस्यान्वय इति प्राहुः। तदसत्, 'अथादिपदस्य लाघवात् अनन्तरक्षणवृत्तित्वे अनन्तरत्वे वा शक्तावपि प्रकृते उपमाननिरूपणोपस्थापकपदाभावेनोपमाननिरूपणानन्तरक्षणवृत्तित्वस्य उपमाननिरूपणानन्तरत्वस्य वा विशेषतो लाभार्थं लक्षणाया आवश्यकत्वेनाभेदान्वयबोधपक्षस्यापि सम्यक्त्वादिति।

---

(१) 'अथशब्दस्य ध्वंसाधिकरणवृत्तित्वाश्रय इति ख०।

(२) अपि त्वनन्तरक्षण एव शक्तिः अनन्तरत्वञ्च अधिकरणतया ध्वंसविशिष्टत्वं तथाचाथपदोत्तरसप्तमीलोपात् लुप्तसप्तम्यर्थनिष्ठतायामेवाथपदार्थस्योपमाननिरूपणध्वंसविशिष्टक्षणस्यान्वय इति ख०।

अत्र च उपजीवकत्वमेव सङ्गतिरयं गवयपदवाच्य इत्युपमित्यात्मकशक्तिपदविषयकज्ञानस्य शाब्दधीकरणतया शब्दस्यातिदेशवाक्यार्थज्ञानात्मकोपमानोपजीवकत्वादिति भावः। ननु उपमित्यात्मकशब्दप्रमाणस्य अतिदेशवाक्यार्थज्ञानात्मकोपमानोपजीवकत्ववदतिदेशवाक्यार्थज्ञानात्मकोपमानस्यापि अतिदेशवाक्यज्ञानात्मकशब्दोपजीवकत्वेनोपजीव्योपजीवकभावाविशेषादुपमानमेवादौ कुतो निरूपितं शब्दस्तु पश्चान्निरूप्यते विनिगमकाभावात्। अथोपमाने शब्दोपजीवकत्वमेव नास्ति यत्र कीदृग्गवय इति प्रश्नानन्तरं चित्रलेखादिना तादृशपिण्डप्रदर्शनं तत्रातिदेशवाक्यं विनापि सादृश्यज्ञानात्मकोपमानोत्पत्तिः। न च चित्रलेखादिना गोसदृशोपस्थितावपि तत्र गवयपदवाच्यत्वानुपस्थितेः तदुपस्थित्यर्थमभिप्रायविषयः शब्दस्तत्रापि कल्पनीय इति वाच्यम्। चित्रलेखाद्युपस्थिते गोसदृशे प्रश्नवाक्यस्थगवयपदोपस्थापितस्य गवयपदवाच्यत्वस्य मनसैव बोधोपपत्तेः आभिप्रायिकशब्दकल्पनाया अनावश्यकत्वात्। न च प्रष्टुर्वाक्ये तज्जन्यशाब्दबोधे वा इच्छासत्त्वात् तद्विषयसम्पादनाय शब्दोऽवश्यं कल्पनीय इति वाच्यं। यदा प्रष्टुर्ज्ञानमात्रे इच्छा तदा शब्दकल्पनाभावादिति चेत्, तर्हि, शब्दस्यापि नोपमानोपजीवकत्वं स्यात् व्यवहारादिनापि शक्तिग्रहात्मकशब्दोदयात् क्वाचित्कोपजीवकत्वञ्च तुल्यमिति, मैवं, मानतावच्छेदकधर्म्मव्यापकोपजीव्यतानिरूपिता या स्वरूपोपजीवकता[१] तस्या एव प्रमाणान्तराभिधाने

---

(१) स्वरूपत उपजीवकतेति ख०।

प्रयोजकत्वात् । ज्ञानतावच्छेदकधर्म्मश्च इन्द्रियत्व-व्याप्तिज्ञानत्व-वर्ण-ज्ञानत्व-सादृश्यज्ञानत्वात्मकधर्म्मः, सा च[1] शब्द एव वर्त्तते न तूपमाने सादृश्यज्ञानमात्रस्यैव उपमित्यात्मकशक्तिपदविषयकज्ञानस्य शाब्दधीकरणतया शब्दस्य उपजीव्यत्वात् शब्दमात्रस्य च उपमानं प्रत्यनुपजीव्यत्वात्, उपजीव्यता च स्वरूपयोग्यता बोध्या तेन निखिलसादृश्यज्ञानस्य शक्तिपदविषयकोपमित्यनुपधायकत्वेऽपि न क्षतिः उपमितित्वेन सादृश्यज्ञानत्वेन कार्य्य-कारणभावात् सादृश्य-ज्ञानमात्रस्यैव शक्तिपदविषयकोपमितिस्वरूपयोग्यत्वात् । उपजीव-कता च प्रमाणविभाजकोपाधिनियतधर्म्मावच्छिन्ना बोध्या तेना-तिदेशवाक्यार्थज्ञानात्मकोपमानस्य वर्णज्ञानत्वावच्छिन्नोपजीव्यता-निरूपितशाब्दत्वावच्छिन्नकार्य्यताश्रयत्वेऽपि न क्षतिः शब्दत्वस्य उप-मितिकरणत्वानियतत्वात् साक्षात्कारत्व-चाक्षुषत्वादिकञ्च[2] अनु-मितिकरणत्वनियतं तज्ज्ञानत्वेन तल्लिङ्गकानुमितित्वेन ज्ञानत्वेन अनुमितित्वेन वा[3] कार्य्य-कारणभावात् तेन प्रत्यक्षोपजीवकत्व-

---

(१) सा च उपजीवकता चेत्यर्थः ।

(२) साक्षात्कारत्वं चाक्षुषत्वञ्चेति ख० ।

(३) ज्ञानत्वेन अनुमितित्वेन तज्ज्ञानत्वेन तल्लिङ्गकानुमितित्वेन वा इति ख० घ० चिह्नितपुस्तकपाठः ईदृशपाठे तु वाकारस्यानास्थासूचकत्वेन पूर्व्वकल्प एव निर्भरः, परामर्शविशेषस्य अनुमितिविशेषं प्रति कार-णत्वव्यवस्थापनेनैवातिप्रसङ्गभङ्गात् परामर्शस्य द्वारतारक्षार्थमेव ज्ञानत्वेन अनुमितित्वेन कार्य्य-कारणभावो न तु व्याप्तिज्ञानत्वेनानु-मितित्वेन न वा तज्ज्ञानत्वेन तल्लिङ्गकानुमितित्वेनेत्यवधेयम ।

सङ्गत्या न प्रत्यक्षानन्तरमनुमाननिरूपणानुपपत्तिः[१]। न च यत्र का ओषधी ज्वरं हन्तीति प्रश्ने दशमूलसदृशौषधी ज्वरं हन्ती-त्युत्तरे उपमित्या ज्वरहरणकार्य्य-कारणभावग्रहः तत्रोपमितेः शक्तिपदाविषयकत्वेन शाब्दधीकरणत्वाभावादुपमितित्वमपि प्रमाण-विभाजकशाब्दधीकरणत्वानियतमिति वाच्यम्। उपमितेः शक्ति-मात्रविषयकत्वनियमेन[२] तत्रानुमानादिनैव कार्य्य-कारणभाव-ग्रहादिति। एतेनोपमानफलस्योपमितेरतिदेशवाक्यज्ञानात्मकशब्द-फलस्यातिदेशवाक्यार्थज्ञानस्य उपजीवकतया फलतः शब्दोपजीव-कत्वस्योपमाने सत्त्वात् शब्दनिरूपणानन्तरमुपमाननिरूपणापत्ति-रित्यपि प्रत्युक्तं, निरुक्तस्वरूपोपजीवकताया एव प्रमाणान्तराभि-धाने प्रयोजकतया फलत उपजीवकत्वस्य तदप्रयोजकत्वात्, यद-नन्तरं यन्निरूपणं तन्निष्ठतदुपजीवकताया एव लाघवात् तत्र प्रयोजकतया फलनिष्ठफलनिरूपितोपजीवकतायाः कारणानन्तरं कारणाभिधाने प्रयोजकत्वासम्भवाच्च, फलनिष्ठफलोपजीवकतायाः कारणनिष्ठत्व-कारणनिरूपितत्वाभावात् तस्या अपि परम्परासम्ब-न्धेन कारणनिष्ठत्व-कारणनिरूपितत्वाभ्युपगमेऽतिप्रसङ्गात् गौरवाच्च। अतएवानुमानदीधितौ फलत इति विहाय स्वरूपतस्त्वित्युक्तमिति सम्प्रदायः।

नव्यास्तु उपजीव्योपजीवकभावयोस्तुल्यत्वेऽपि न क्षतिः आन-

---

(१) ज्ञानत्वेन अनुमितित्वेन कार्य्यकारणभावात् प्रत्यक्षत्वव्यापकोपजीव्यता-निरूपितोपजीवकत्वं अनुमानस्याक्षतमिति तात्पर्य्यम्।

(२) शक्तिविषयकत्वनियमेनेति ख०।

न्तर्य्यनियमे सङ्गतेरप्रयोजकत्वात् किन्तु स्वतन्त्रेच्छस्येति न्यायेन[१] इच्छैव क्रमनियामिका, सङ्गतिश्चानन्तराभिधानव्यापकतायामुपयुज्यते अन्यथा सादृश्यलिङ्गक-पदलिङ्गकानुमितेरपि लिङ्गज्ञानविधया ज्ञानसामान्यस्यानुमितिकरणतया वा अनुमानत्वेन तदुपजीव्यत्वस्य सादृश्यज्ञानत्व-पदज्ञानत्वावच्छेदेन सत्त्वात् उपमान-शब्दयोः पूर्व्वमनुमाननिरूपणेऽपि किं विनिगमकमिति प्राङ्गुरिति संक्षेपः।

लक्षण-स्वरूप-प्रामाण्यनिरूपणस्य प्रतिज्ञातत्वात् प्रथमतो लक्षणं निरूपयति, 'प्रयोगेति 'प्रयोगहेतुभूतं' प्रथमकारणीभूतं, 'यदर्थतत्त्वज्ञानं' यत् अर्थविषयकतत्त्वज्ञानं, तज्जन्यः 'प्रमाणं शब्दः' इत्यन्वयः, 'प्रमाण शब्दः' इति लक्ष्यनिर्द्देशः, अन्यथा 'शब्दपदस्य लक्षणान्तर्गतत्वे प्रमाणसामान्यस्य लक्ष्यतापत्तौ अर्थान्तराव्याप्त्योरापत्तेः[२]। प्रथमतो येन केनापि प्रमाणेन वक्तुर्वाक्यार्थज्ञानं ततो वाक्यार्थज्ञानज्ञानं ततः परस्य वाक्यार्थज्ञानं भवत्विति वाक्यार्थज्ञानेच्छा ततो वाक्यार्थज्ञानरूपेष्टसाधनताज्ञानात् वाक्ये इच्छा[३] ततो वाक्यरूपेष्टसाधनताज्ञानात् कृतिसाध्यताज्ञानसहकृतात् कण्ठाभिघातादौ चिकीर्षा ततः कण्ठाभिघातादिसाधिका कण्ठा-

---

(१) स्वतन्त्रेच्छस्य पर्य्यनुयोगानर्हत्वमिति न्यायेनेत्यर्थः।

(२) अर्थान्तरं अनाकाङ्क्षिताभिधानं, प्रमाणसामान्यस्य लक्ष्यत्वे अनाकाङ्क्षितस्य शब्दातिरिक्तप्रमाणस्याभिधानापत्तिरिति भावः। प्रमाणसामान्यस्य लक्ष्यत्वे प्रमाणसामान्यान्तर्गतप्रत्यक्षादौ प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यशब्दत्वाभावादव्याप्तिरिति तात्पर्य्यम्।

(३) कृतिसाध्यवाक्ये इच्छा इति ख०।

द्युपादानकप्रवृत्तिः ततः कण्ठादिचेष्टाविभागादिक्रमेण कण्ठाभिघाताद्युत्पत्तिः ततो वाक्योत्पत्तिरिति प्रणाड्या प्राचां नये परम्परया वक्तृवाक्यार्थबुबोधयिषापूर्व्वकवाक्यत्वावच्छिन्नं प्रति वक्तृवाक्यार्थज्ञानस्य हेतुतया च सर्व्वत्र लक्षणं सङ्गमनीयम्। वह्निना सिञ्चति इत्यप्रमाणशब्देऽतिव्याप्तिवारणाय 'तत्त्वेति यथार्थेत्यर्थः। ननु 'प्रयोगहेतुभूतेति ज्ञानविशेषणं व्यर्थं, न हि प्रयोगाहेतुभूतेनापि ज्ञानेन शब्दो जन्यते यदिदं व्यावर्त्तयेत्, शब्दाहेतुभूतं अथच शब्दं जनयतीति[१] वक्तो व्याघातात्। न चार्थतत्त्वज्ञानादिजन्यसंस्कारादिवारणाय तदिति वाच्यम्। तथापि प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यसंस्कारादावतिव्याप्तितादवस्थ्यात्। तद्वारणाय शब्दपदं लक्ष्यलक्षणयोरुभयत्रापि प्रवेशनीयमिति चेत्, कृतं तर्हि भूतान्तेन। किञ्च अर्थपदमपि व्यर्थं अर्थत्वस्य ज्ञानविषयत्वस्वरूपस्य केवलान्वयितया ज्ञानमात्रस्यैवार्थविषयकत्वेनाव्यावर्त्तकत्वात्। न च वाक्यार्थज्ञानद्वारा वक्तृपदार्थतत्त्वज्ञानजन्ये साक्षादीश्वरीयपदार्थतत्त्वज्ञानजन्ये च वह्निना सिञ्चतीत्यादिबाधितवाक्येऽतिव्याप्तिवारणायार्थपदं वाक्यार्थपरमिति वाच्यम्। तथापि कण्ठताल्वाद्यभिघातादौ तद्वाक्यस्वरूपेष्टसाधनतादिज्ञानात्मकवाक्यार्थतत्त्वज्ञानजन्यतया तादृशबाधितवाक्येऽतिव्याप्तितादवस्थ्यात् इष्टसाधनत्वादेरपि यत्किञ्चिद्वाक्यार्थत्वात्। अथार्थपदं स्वार्थपरं स्वपदं प्रकृतवाक्यपरमिति चेत्, तथापि वह्निकरणकसेकानुकूलकृतिमानित्यादिप्रकृत-

(१) शब्दाहेतुभूतेन अथच शब्दोजन्यत इतीति क०। शब्दाहेतुभूतं अथच शब्दोजन्यत इतीति ग०।

वाक्यार्थज्ञानस्यापि अंशतः प्रमात्वात् तज्जन्यतया अतिव्याप्तिता-दवस्थ्यात् स्वार्थत्वं स्वजन्यप्रतिपत्तिविषयत्वं तच्च पदार्थेऽप्यस्तीति वक्तुरीश्वरस्य वा पदार्थतत्त्वज्ञानमादायातिव्याप्तेर्दुर्व्वारत्वाच्च अतएव तत्त्वपदमपि व्यर्थं तदुपादानेऽप्यतिव्याप्तेर्दुर्व्वारत्वादिति। उच्यते। इदं हि न प्रमाणशब्दसामान्यलक्षणं शब्दमात्रस्यैव प्रमाणत्वेन साकाङ्क्षशब्दत्वस्य शब्दत्वस्य वा तल्लक्षणत्वात् वह्निना सिञ्चतीत्यस्यापि क्वचिदर्थे प्रमाणत्वेनार्थतत्त्वेत्यादेर्व्यर्थत्वापत्तेश्च किन्तु कस्मिन्नर्थे किं वाक्यं प्रमाणं तस्यैव लक्षणं, तथाच अर्थतत्त्वेत्यादेस्तद्विशेष्यक-तत्संसर्गक-तत्प्रकारकयथार्थज्ञानजन्यो यः स तद्विशेष्यक-तत्संसर्गक-तत्प्रकारकप्रमाणशब्द इत्यर्थः, एतल्लाभायैवार्थपदं, वह्निना सिञ्चतीत्याद्ययोग्यवाक्यस्य सेके वह्निकरणकत्वांशे प्रमाणत्ववारणाय यथार्थेति, तादृशज्ञानजन्यसंस्कारेच्छादावतिव्याप्तिवारणाय प्रयोगहेतुभूतेति जन्यविशेषणं, प्रयोगहेतुभूतत्वञ्च वर्णसामग्रीजन्यत्वं, 'प्रयोगस्य' वर्णस्य, 'यो हेतुः' या सामग्री, 'ततो भूतः' तत उत्पन्न इति व्युत्पत्तेः, तथाच वर्णसामग्रीजन्यत्वे सति निरुक्ततत्त्वज्ञानजन्यत्वं निरुक्तप्रमाणशब्दत्वमिति लक्षणं फलितं। संस्कारेच्छादिस्तु न वर्णसामग्रीजन्यः इतरसामग्र्या इतरस्याजनकत्वादिति नातिव्याप्तिः, ध्वनिवारणाय शब्दत्वमपहाय वर्णत्वेनोपादानं, वर्णत्वञ्च कत्वादिव्यापक-शब्दत्वव्याप्य-ध्वनिव्यावृत्तजातिविशेषः। न च वर्णप्रागभावजन्यत्वे सतीत्येव सम्यक् किं कारणकलापात्मकसामग्रीप्रवेशेनेति वाच्यम्। यत्र वर्णप्रागभावप्रत्यक्षे वाक्यार्थोऽप्युपनीतो भासते तत्र वर्णप्रागभावप्रत्यक्षेऽतिप्रसङ्गात् तस्य वाक्यार्थविशेषण-

-कतया निरुक्तज्ञानजन्यत्वस्यापि तत्र सम्भवात् । न च तथापि वर्णत्वे सतीत्येव सम्यक् तावतैव संस्कारादेरुपनीतवाक्यार्थविषयक-वर्णप्रागभावप्रत्यक्षस्य च वारणसम्भवादिति वाच्यम् । यथासन्नि-वेशे वैयर्थ्याभावात् । एतच्च ज्ञायमानशब्दस्य प्रमाणत्वपक्षे, शब्द-ज्ञानस्य प्रमाणत्वपक्षे तु तादृशजन्यविषयकज्ञानत्वं लक्षणमवसेयम् ।

ननु मौनिश्लोकेऽव्याप्तिः यदा कदाचित् येन केनचित् क्रम-व्युत्क्रमोच्चरितानामेव तत्तत्पदानां मौनिना अर्थक्रमेणानुसन्धीय-मानानां मौनिश्लोकत्वं तत्र च यस्मिन्नर्थे यदर्थांशे प्रमाणशब्दत्वं तदर्थविशेष्यक-तदर्थप्रकारकयथार्थज्ञानजन्यत्वं नास्ति तादृशज्ञान-वता मौनिना अनुच्चरितत्वात् उच्चारकस्य च तादृशज्ञानाभा-वादिति, एवं यत्र वक्त्रा यदर्थबुबोधयिषया वाक्यमुच्चरितं श्रोत्रा तात्पर्य्यभ्रमेण लक्षणादिना वा तदितरयोग्यार्थोऽवगतः तत्र श्रोतु-रवगतार्थे तद्वाक्यस्याप्रामाण्यापत्तिस्तद्विशेष्यक-तत्प्रकारकज्ञानजन्य-त्वाभावात्, एवं शुकाद्युच्चरिते पयसा सिञ्चतीत्यादिवाक्येऽव्याप्तिः शुकादेः प्रकृतवाक्यार्थानभिज्ञतया इदं वाक्यं सुखसाधनमिति सुखसाधनताज्ञानादेव तेन तद्वाक्यप्रयोगादिति चेत्, न, तेषा-मपीश्वरीयतादृशज्ञानजन्यतया लक्षणसमन्वयात् । न चैवञ्चेत् वह्निना सिञ्चतीत्याद्ययोग्यवाक्यस्यापि करणत्वे वह्न्यंशे प्रमाणत्वा-पत्तिः, एवमीश्वरीयतादृशज्ञानजन्यतया घटमानयेत्याद्युदासीन-वाक्यस्यापि करणत्वे वह्न्यंशे प्रमाणत्वापत्तिरिति वाच्यम् । वह्नि-नेति भागस्य(१) तदंशे प्रमाणत्वस्येष्टत्वात् सिञ्चतीतिभागस्य

(१) वह्निनेति भागे इति ख० ।

घटमानयेत्युदासीनवाक्यस्यापि च लक्षणया करणत्वविशेष्यक-वह्निप्रमाजननसमर्थत्वेन लक्ष्यत्वस्येष्टत्वात् तादृशप्रमास्वरूपयोग्यस्यैव लक्ष्यत्वात् अतएव क्वचिदासत्तिभ्रमेण अनासन्नादपि अन्वयबोध-इति स्वरूपयोग्यतया अनासन्नोऽपि लक्ष्य एव । न च निरा-काङ्क्षस्य घटः कर्म्मत्वमानयनं कृतिरित्यादेरपि कर्म्मत्वविशेष्यक-घटप्रकारकयथार्थज्ञानजन्यतया कर्म्मत्वे घटांशे प्रमाणत्वं स्यादिति वाच्यम् । घटपद-कर्म्मत्वादिपदस्य लक्षणया घटः कर्म्मत्वमिति समुदितवाक्ये घटवत्कर्म्मत्वरूपविशिष्टे शक्तिभ्रमाच्च घटवत्कर्म्मत्व-विषयकशाब्दधीजननसमर्थत्वेन घटः कर्म्मत्वमित्यादिनिराकाङ्क्ष-स्यापि तादृशप्रमास्वरूपयोग्यत्वेन लक्ष्यत्वात् । न चैवमेतल्लक्षणस्य व्यावर्त्याभाव इति वाच्यम् । वह्निना सिञ्चतीत्यादेः सेके वह्नि-करणकत्वांशे प्रमाणत्वमात्रस्य(१) व्यवच्छेद्यत्वात् । एतेन वक्तृवाक्या-र्थज्ञानं न वाक्यहेतुः वाक्यार्थज्ञानं विनापि शुक-बालकादिभिः(२) वाक्यप्रयोगात् । न च वाक्यार्थज्ञानत्वेन हेतुत्वात् तच्चापीश्वरीय-वाक्यार्थज्ञानमस्तीति वाच्यम् । तथापि विसंवादिशुकादिवाक्ये व्यभिचारात् । न च वक्तृवाक्यार्थवुबोधयिषापूर्व्वकवाक्यत्वावच्छिन्नं प्रति वक्तृवाक्यार्थज्ञानं हेतुरिति न व्यभिचार इति वाच्यम् । मानाभावात् । न च वाक्यं प्रति वाक्यार्थज्ञानस्य साक्षाद्धेतुत्वेऽपि उक्तप्रणाल्या वक्तृवाक्यार्थवुबोधयिषापूर्व्वकवाक्यत्वावच्छिन्नं प्रति स्वविषयकेच्छादिद्वारा वाक्यार्थज्ञानं हेतुरावश्यक इति वाच्यम् ।

---

(१) प्रमाणत्वस्येति ख० ।

(२) शुकादिभिरिति ख० ।

उक्तप्रणाल्या वाक्यार्थज्ञानस्य परम्परया तादृशवाक्योपयोगित्वेऽपि वाक्यार्थज्ञानस्य हेतुत्वे मानाभावात्, वाक्यार्थज्ञानं विनापि तद्विशेष्यक-तत्प्रकारकज्ञानत्वरूपेण आप्तवाक्यानुमानादिना वाक्यार्थज्ञानज्ञानात् वाक्यार्थज्ञाने इच्छासम्भवात् लौकिकप्रत्यक्षं प्रत्येव विषयस्य हेतुत्वात् यत्र च वाक्यार्थज्ञानस्य लौकिकसाक्षात्कारादेव तत्रेच्छा तत्रापि वाक्यार्थज्ञानस्य तद्धेतुत्वे मानाभावः कण्ठाभिघातादिना अन्यथासिद्धत्वात्, अतएव वाक्यार्थज्ञानज्ञानमपि न हेतुः कण्ठाभिघातादिना अन्यथासिद्धत्वात् अन्यथा जलाहरणादेरप्युक्तप्रणाल्या कपालसंयोगादिसाधकप्रवृत्तिद्वारा घटादिहेतुत्वापत्तेरिति नव्यमते लक्षणमिदमसम्भवि पयसा सिञ्चतीति वाक्ये निरुक्तार्थतत्त्वज्ञानजन्यत्वविरहादित्यपि निरस्तम्। ज्ञानत्वेन ईश्वरीयतादृशज्ञानजन्यतामादायैव सर्व्वत्र लक्षणसमन्वयात्। न चैवं तत्त्वपदवैयर्थ्यं अयोग्ये तादृशवाक्यार्थज्ञानस्य ईश्वरीयस्याभावात् वक्तृवाक्यार्थज्ञानस्य चाजनकत्वादिति वाच्यम्। वक्तृवाक्यार्थज्ञानस्य वाक्यार्थज्ञानत्वेनाजनकत्वेऽपि ज्ञानत्वेन कालत्वेन च जनकत्वात्। अस्तु वा जन्यत्वमत्र समानकालीनत्वमात्रं लाघवात् तेन कार्य्यत्वावच्छिन्नं प्रति ज्ञानत्वेन कालत्वेन च कार्य्य-कारणभावासत्त्वेऽपि न क्षतिः(१)।

---

(१) तथाच यद्विशेषयोः कार्य्य-कारणभावः तत्सामान्ययोरपीति नियमे मानाभावेन कार्य्यविशेषं प्रति कालविशेषस्य ज्ञानविशेषस्य च कारणत्वेऽपि कार्य्यत्वावच्छिन्नं प्रति कालसामान्यस्य ज्ञानसामान्यस्य च हेतुत्वे मानाभाव इति भावः।

केचित्तु वाक्यार्थज्ञानस्य वाक्याहेतुत्वेऽपि वक्तुरानुपूर्व्वीज्ञानं हेतुरेव तथाच तत्त्वपदानुपादाने बाधितवाक्यानुपूर्व्वी-बाधितवाक्यार्थोभयविषयकसमूहालम्बनजन्ये बाधितवाक्ये[१] अतिव्याप्तिः आनुपूर्व्वीज्ञानविधया तत्र वाक्यार्थज्ञानस्य हेतुत्वात् न ह्यर्थज्ञानत्वेन जनकत्वं विवक्षितं येन नोक्तदोषः स्यादित्याहुः। तदसत्, वाक्यार्थज्ञानवदानुपूर्व्वीज्ञानस्यापि वाक्यहेतुत्वे मानाभावात्[२] वाय्वाद्यभिघातजन्ये करणापाटवजन्ये च वाक्ये व्यभिचारात्। न चैवं घटमानयेत्याद्यानुपूर्व्वीमविदुषोऽपि मूर्खादेः तादृशानुपूर्व्वीकवाक्यप्रयोगापत्तिरिति वाच्यम्। आनुपूर्व्वीज्ञानं विना कण्ठाभिघातादौ तादृशवाक्यरूपेष्टसाधनताज्ञानस्यैवासम्भवात्। स्वोद्देश्यककृतिसाध्यवाक्यत्वावच्छिन्नं प्रत्यानुपूर्व्वीज्ञानस्य परम्परयोपयोगित्वेऽपि कारणत्वे मानाभावात् कण्ठाभिघातादिना अन्यथासिद्धत्वाच्च अन्यथा स्वर्गादिज्ञानस्यापि यागादिसाध्यकप्रवृत्तिद्वारा यागादिजन्यस्वर्गहेतुत्वापत्तेरिति।

केचित्तु, प्रयोगो हेतुभूतो यस्येति व्युत्पत्त्या प्रयोगाद्धेतोः भूतमुत्पन्नमिति व्युत्पत्त्या वा प्रयोगहेतुभूतपदं शाब्दत्वरूपजातिविशेषविशिष्टपरं, तादृशं यदर्थतत्त्वज्ञानं तदेव जन्यं यस्येति रीत्या शाब्दप्रमाकरणत्वं लक्षणं पर्य्यवसितं, अर्थपदञ्च स्वरूपकथनं। न चैवं लक्ष्यतावच्छेदक-लक्षणयोरभेद इति वाच्यम्। लक्ष्यप्रविष्टस्य विल-

---

(१) विसंवादिवाक्ये इति ख०।

(२) वाक्यार्थज्ञानवदानुपर्व्वीज्ञानमपि न वाक्यहेतुः मानाभावादिति ख०।

**ननु शब्दो न प्रमाणं तथाहि करणविशेषः प्रमाणं,**

---

क्षणप्रमाकरणत्वस्य[१] लक्षणेऽनिवेशात् तयोरभेदेऽपि क्षतिविरहाच्च[२]। प्रमात्वञ्च पूर्व्ववत् तत्तत्संसर्गक-तत्तत्पदार्थघटितं बोध्यमिति प्राहुरिति संक्षेपः ॥

लक्षणमुक्तमिदानीं प्रामाण्यं व्यवस्थापयितुं प्रथमतो बौद्धमतमाशङ्क्य निराकरोति, 'नन्वित्यादिना, 'न प्रमाणं' न प्रमितिकरणं, करणत्वञ्च फलायोगव्यवच्छिन्नकारणत्वं फलोपधायकत्वमिति यावत्, न तु व्यापारवत्त्वे सति कारणत्वं, प्रमायोगव्यवच्छेदाभावस्य वक्ष्यमाणहेतोरप्रयोजकत्वापत्तेः। नच स्वप्रत्यक्ष-[३]स्वलिङ्गकानुमित्युपधायकत्वात् बाध इति वाच्यम्। शब्दाविषयकानुमितिभिन्नप्रमित्युपधायकान्यत्वस्य[४] साध्यत्वात्। पक्षे च शब्दपदं शब्दज्ञानपरं, अन्यथा न्यायनयेऽपि शब्दज्ञानस्यैव प्रमाणत्वात् सिद्धसाधनापत्तेः ज्ञायमानशब्दस्य करणत्वपक्षे तु यथाश्रुतमेव साधु। न च तथापि अजनितशाब्दबोधके शब्दज्ञाने तादृशशब्दे वा अंशतः सिद्धसाधनं एवं शब्दो गुण इति शब्दे तज्ज्ञाने वा अंशतः सिद्धसाधनमिति वाच्यम्।

---

(१) लक्ष्यप्रविष्टविलक्षणप्रमात्वस्येति क०, ग०।

(२) तथाच वस्तुगत्या लक्ष्यतावच्छेदक-लक्षणयोरभेदेऽपि उपस्थितानुपस्थितभेदात् लक्ष्यतावच्छेदक-लक्षणभावसङ्गतिरिति भावः।

(३) अत्र प्रत्यक्षपदं लौकिकप्रत्यक्षपरम्।

(४) अत्र शब्दाविषयकेति प्रमितिविशेषणं तथाच शब्दविषयताशून्या अनुमितिभिन्ना या प्रमितिः तदुपधायकान्यत्वस्येत्यर्थः।

पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्[१]। न चैतदनुमान-खण्ड एव 'नाप्रत्यक्षं प्रमाणं' इति वाग्भङ्ग्याशङ्कितं तत् किमर्थं पुनराशङ्क्यते, इति वाच्यम्। तत्र हि अनुमानं यदि न प्रमाणं तदा तेन शक्तिग्रहे एव शब्दः प्रमाणं भविष्यतीति शब्दोऽपि न प्रमाणमित्याशयः इह तु अस्त्वनुमानप्रामाण्यं तथापि फलव्यभि-चारेण करणत्वाभावात् स न प्रमाणमित्याशयः। न च शब्दस्य प्रमोपधायकत्वानभ्युपगमे शब्दश्रवणानन्तरं विशिष्टानुभवः कथं स्यादिति वाच्यम्। एतन्मते शब्दश्रवणानन्तरं विशिष्टानुभवस्यैवा-सिद्धेः किन्तु पदार्थोपस्थितिस्तदसंसर्गाग्रहमात्रम्। यद्वा[२] शब्देन प्रत्येकं तत्तत्पदार्थोपस्थितौ मनसैव सर्व्वत्र साक्षात्कारात्मको विशि-ष्टानुभवः इत्यभिप्राय इति न काप्यनुपपत्तिः। अत्र च शब्दः तज्ज्ञानं वा शब्दाविषयकानुमितिभिन्नप्रमित्युपधायकं न वेति विप्रतिपत्तिः, पक्षतावच्छेदकसामानाधिकरण्येन विधेः पक्षतावच्छे-दकावच्छेदेन च निषेधस्य सिद्धेरुद्देश्यत्वात् नाजनितशाब्दबोधके शब्दे शब्दोगुण इति शब्दे च विधिकोटावंशतो बाधोनिषेध-कोटावंशतः सिद्धसाधनमिति।

केचित्तु, शब्दत्वं तज्ज्ञानत्वं वा तादृशप्रमित्युपधायकवृत्ति न वेति विप्रतिपत्तिर्नातोंऽशतो बाधाद्यवकाशः, शब्दत्वन्तु शब्दपद-

---

(१) तथाचावच्छेदावच्छेदेनानुमितौ सामानाधिकरण्यमात्रेण सिद्धेरप्रति-बन्धकत्वात् न सिद्धसाधनमिति भावः।

(२) ननु विशिष्टमतेरानुभविकत्वात् अनुभवापलाप इत्यस्वरसादाह यद्वेति।

करणञ्च तत् यस्मिन् सति क्रिया भवत्येव ।

न च शब्दे सति प्रमा भवत्येवेति नायं शब्दः प्रमाणं[१] । न च शब्दो न प्रमाणमिति[२] वाक्यस्य प्रामाण्याप्रमाण्ययोर्व्याघातः, अस्याप्रामाण्येऽपि एत-

---

प्रवृत्तिनिमित्तमुभयवादिसिद्धमेव केवलं जातिरूपत्वे अतद्व्यावृत्ति-रूपत्वे च विवाद इत्याहुः[३] ।

कुतो न प्रमाणं तत्र हेतुमाह, 'तथाहीति, 'करणविशेषः' प्रमायाः करणं, 'क्रिया भवत्येव' कार्य्यमुत्पद्यत एवेत्यर्थः, तथाच कार्य्योपधायकत्वं करणत्वमिति भावः, 'प्रमा भवत्येव' अवश्यं प्रमा भवति, आकाङ्क्षादिज्ञानविरहदशायां पदार्थस्मरणादिव्यापार-विरहदशायाञ्च शब्दात् प्रमानुत्पत्तेरिति भावः । तथाच प्रमोप-धायकत्वात्यन्ताभावो हेतुः, प्रमा च शब्दाविषयकत्वेन अनुमिति-भिन्नत्वेन च विशेषणीया तेन स्वलिङ्गकानुमितिं स्वप्रत्यक्षञ्चादाय न स्वरूपासिद्धिः । न च साध्याविशेषः, तादृशप्रमोपधायकान्यत्वस्य साध्यतया अन्योन्याभावात्यन्ताभावभेदेन भेदादिति हृदयम् । 'वाक्यस्य' भवदुक्तवाक्यस्य, 'प्रामाण्याप्रामाण्ययोः' प्रमोपधायकत्वे

---

(१) नायं प्रमाणमिति क० ।

(२) न च न शब्दः प्रमाणमितीति क० ।

(३) शब्दत्वस्य जातिरूपत्वे गुणगतजात्यनङ्गीकर्तृपरमते विवादः शब्दत्वस्य अतद्व्यावृत्तिरूपत्वे अखण्डोपाधिरूपत्वे शब्दत्वस्य जातित्वाङ्गीकर्तृ-स्वमते विवाद इति समुदिततात्पर्य्यम् ।

दुत्याप्यमानाविसंवादादिति[१] चेत्, न, आकाङ्क्षादिमतः

---

अप्रमोपधायकत्वे च, 'व्याघातः' शब्दस्य प्रमोपधायकान्यत्वव्याघातः, प्रमोपधायकत्वे आयातं शब्दस्य साक्षादेव प्रमोपधायकत्वं, अप्रमोपधायकत्वे हि अप्रमोपधायकत्वं भ्रमोपधायकत्वं, प्रमित्यनुपधायकत्वं वा, आद्ये आयातं शब्दमात्रस्यैव प्रमोपधायकत्वं, विषयबाधेनैव प्रकृतवाक्यजन्यज्ञानस्य भ्रमत्वात्[२]। अन्त्ये शब्दस्य प्रमोपधायकान्यत्वे मानाभावः भवदुक्तवाक्यस्यैव तत्र मानत्वादिति भावः[३]। 'अप्रामाण्येऽपि' प्रमित्यनुपधायकत्वेऽपि, 'एतदुत्थाप्यमानेति एतज्जन्यपदार्थोपस्थिति-तदसंसर्गाग्रहसहकृतमनस इत्यर्थः, 'अविसंवादात्' अविसंवादिज्ञानजनकत्वात् शब्दस्य प्रमोपधायकान्यत्वविषयकप्रमाजनकत्वादिति यावत्, तथाच मन एव शब्दस्य प्रमोपधायकान्यत्वे मानं, हेतुनिर्देशस्य अप्रामाण्यशङ्काव्युदासायेति भावः। क्वचित्तु 'एतदुत्थाप्यानुमानाविसंवादादिति पाठः तत्रैतज्जन्यसाध्य-साधनादिरूपपदार्थोपस्थिति-तदसंसर्गाग्रहजन्यानुमानस्य शाब्दप्रमोपधायकान्यत्वप्रमाजनकत्वादित्यर्थः, तथाचानुमानमेव शब्दस्य प्रमोपधायकान्यत्वे मानमिति भावः। न च चार्वाकेणानुमानस्यापि प्रामाण्यानभ्युप-

---

(१) एतदुत्थाप्यानुमानाविसंवादादितीति क०।

(२) 'प्रकृतवाक्यजन्यज्ञानस्य' शब्दो न प्रमाणमिति वाक्यजन्यज्ञानस्य, 'भ्रमत्वात्' बाधितविषयकत्वादित्यर्थः।

(३) तथाच यदि 'शब्दः न प्रमाणं' इति भवदुक्तवाक्यं प्रमित्युपधायकं तदा शब्दमात्रस्य प्रमित्यनुपधायकत्वं निष्प्रमाणकमिति भावः।

पदार्थस्मरणादिव्यापारवतः प्रमाणत्वेन तथाभूतात् प्रमोत्पत्तेरावश्यकत्वात् अतथाभूतत्वे च फलाजनक-

---

गमादिदमसङ्गतमिति वाच्यम्। एतत्पाठपक्षे सौगतमतस्य पूर्व्व-पक्षित्वादिति हृदयम्। स्वमते भागासिद्धिमाह, 'आकाङ्क्षादीति आकाङ्क्षाज्ञानादिविशिष्टस्येत्यर्थः, 'आदिना योग्यताज्ञानासत्तिज्ञान-वृत्तिज्ञान-विरोधिजिज्ञासादिप्रतिबन्धकाभावपरिग्रहः[1], 'पदार्थ-स्मरणादीति पदार्थस्मरणादिरूपव्यापारविशिष्टस्येत्यर्थः, 'आदिना अवान्तरवाक्यार्थबोधपरिग्रहः, आकाङ्क्षाज्ञानन्तु न पदज्ञानव्यापारः अनुमानादिना तज्ज्ञानेऽपि शाब्दोदयादिति तस्य पृथङ्निर्द्देशः, 'प्रमाणत्वेन' प्रमासामग्रीविशिष्टत्वेन, 'आवश्यकत्वादिति, तथाच सर्व्वत्र शब्दे नोभयवादिसिद्धो हेतुरिति भावः[2]।

नन्वाकाङ्क्षादिज्ञानविशिष्टशब्देऽप्याकाङ्क्षादिज्ञानरूपसामग्रीविर-हदशायां प्रमोपधायकत्वाभावस्याभ्युपगत इति न भागासिद्धिरित्य-रुचेराह, 'अतथाभूतत्व इति इतरसामग्र्यसमवधान इत्यर्थः, 'चकारः 'साम्यादित्यनन्तरं योज्यः, 'फलाजनकत्वस्य' प्रमाफलोपधायकत्वा-भावस्य, 'करणान्तरेति करणान्तरे चक्षुरादावपि सत्त्वादित्यर्थः, तथाच चक्षुरादौ व्यभिचार इति भावः। अन्योन्याभावस्य व्याप्य-

---

(१) आदिना योग्यताज्ञानासत्तिज्ञान-विरोधिजिज्ञासादिप्रतिबन्धका-भावपरिग्रह इति ख०।

(२) तथाच पदतावच्छेदकसामानाधिकरण्येन हेत्वभावात् भागासिद्धि-रिति भावः।

व्याप्तित्वनियमेन तत्र साध्याभावात् प्रमाफलोपधायकत्वात्यन्ताभावस्य साध्यत्वे सिद्धसाधनादिति भावः ।

अत्र केचित् शब्दस्य स्वमत्यनुमितिभिन्नप्रमाजनकत्वे मानाभावः । न चैवं वाक्यश्रवणानन्तरं वाक्यार्थबोधः कथं स्यादिति वाच्यम् । वाक्यघटकीभूतपदेभ्यस्तत्तत्पदार्थोपस्थितौ मनसैवोपनीतभानात्मकवाक्यार्थबोधसम्भवात् । न च तथापि वाक्यश्रवणानन्तरं शाब्दत्वजातिविशेषविशिष्टवाक्यार्थबोधः कथं स्यात्तादृशजात्यवच्छिन्नबोधस्यापि पदार्थोपस्थितिसहकृतमनोमात्रहेतुकत्वे मानसत्वविशिष्टसाक्षात्कारमात्रस्यैव शाब्दत्वापत्तिरिति वाच्यम् । शाब्दत्वरूपातिरिक्तजातौ मानाभावात् शाब्दत्वजातिस्वीकारेऽप्युपगमे तदवच्छिन्नोत्पत्तिनियामकतया[1] शक्त्या पदजन्यपदार्थोपस्थित्यादेर्हेतुतायाः अवश्यकल्पनीयत्वेन गौरवापत्तेरित्याहुः । तदसत्, अमुमर्थं शाब्दयामि अयमर्थः शाब्दित इत्याद्यनुभवसिद्धायाः शाब्दत्वजातेरपह्नोतुमशक्यत्वात् । अतएव तदवच्छिन्नं प्रति शक्त्या पदजन्यपदार्थोपस्थित्यादेः कारणत्वकल्पनागौरवमपि प्रामाणिकत्वान्न दोषाय । वस्तुतस्तु अमुमर्थं शृणोमि श्रुतमेवेदं पुराणादिभ्य इत्याकारानुभवसिद्धैव शाब्दत्वजातिः । न च श्रुधातोः श्रावणप्रत्यक्ष एव शक्तेः शाब्दत्वजातिः कथं तादृशानुभवसिद्धा इति वाच्यम् । श्रुतेर्ज्ञानार्थत्वात् "आत्मा वाऽरे श्रोतव्यो मन्तव्य इत्यादिश्रुतौ[2] मया अयमर्थः श्रुत इत्यादिलौकिकवाक्ये च शाब्दबोधेऽपि प्रयोगात् ।

---

(१) तदवच्छिन्नोत्पत्तिनियामिकाया इति ख०, ग० ।

(२) "आत्मा वाऽरे मैत्रेयि श्रोतव्यः" इत्यादिश्रुताविति ख०, ग० ।

न च तत्र शाब्दे लक्षणेति वाच्यम् । श्रुवः प्रत्यक्षे लक्षणेत्यस्यापि[१] सुवचत्वात् । अथास्तु शाब्दत्वं जातिरस्तु वा तदवच्छिन्नं प्रति पदज्ञानजन्यपदार्थोपस्थित्यादेर्हेतुत्वं, तथापि सा जातिर्मानसत्वव्याप्यैव तथाच चक्षुरादिवच्छब्दोऽपि प्रत्यक्षप्रमाणान्तर्गत एव न तु प्रमाणान्तरं । न च तस्य मानसत्वव्याप्यत्वे यागादेः शाब्दबोधानन्तरं यागं साक्षात्करोमीत्यनुव्यवसायापत्तिः तत्र इदं नानुमितं न वा साक्षात्कृतं किन्तु श्रुतमेवेदं पदेभ्य इत्यनुव्यवसायाभावापत्तिश्चेति[२] वाच्यम् । लौकिकविषयतास्वरूप[३]साक्षात्कारत्वावच्छिन्नविषयत्वतदभावयोस्तद्विषयत्वात्[४] । अन्यथा सुरभि चन्दनं इत्युपनीतभानानन्तरं सौरभं साक्षात्करोमीत्यनुव्यवसायापत्तेः सौरभं न साक्षात्करोमीत्यनुव्यवसायाभावापत्तेश्च[५] । न च तस्य मानसत्वव्याप्यत्वे उद्बुद्धसंस्कारोपस्थितघटादीनामपि[६] यागादिशाब्दबोधे उपनीतभानापत्तिः तथाच यागादिकं शृणोमीत्यनुव्यवसायवत् घटादिकं शृणोमीत्यनुव्यवसायः स्यादिति वाच्यम् । शाब्दत्वावच्छिन्नविषयतायास्तत्राभावेन

---

(१) शाब्दे शक्तिः श्रावणप्रत्यक्षे लक्षणेत्यस्यापीति ख०, ग० ।

(२) इत्यनुव्यवसायानुपपत्तिश्चेतीति ख०, ग० ।

(३) लौकिकविषयतात्मकेति ख०, ग० ।

(४) तथाचैतन्मते शाब्दस्य मानसोपनीतभानात्मकतया लौकिकविषयत्वाभावात् यागादेः शाब्दबोधानन्तरं न यागं साक्षात् करोमीत्यनुव्यवसायापत्तिर्न वा इदं न साक्षात्कृतमित्यनुव्यवसायानुपपत्तिरिति भावः ।

(५) इत्यनुव्यवसायानुपपत्तेश्चेति ख०, ग० ।

(६) पदाजन्योपस्थितघटादीनामपीत्यर्थः ।

तादृशानुव्यवसायाभावात् यदंशे वृत्त्या पदजन्यपदार्थोपस्थित्यादि-जन्यत्वं तत्रैव तादृशविषयतायाः सत्त्वादिति चेत्, न, शाब्दत्वजाते-र्मानसत्वव्याप्यत्वे मानाभावात् तदवच्छिन्नं प्रति वृत्त्या पदजन्य-पदार्थोपस्थित्याकाङ्क्षाज्ञानादेर्हेतुत्वस्यावश्यकत्वेन लाघव-गौरवानव-काशात्। न च शाब्दसामग्रीदशायां मानससामग्र्यावश्यकत्वात् मानस-सामग्र्येव मानमिति वाच्यम्। मानसज्ञानं प्रति शाब्दसामग्र्याः प्रति-बन्धकत्वाभावस्यासिद्धतया तदानीं मानससामग्र्या अपि सन्दिग्ध-त्वात्। न च शाब्दत्वस्य मानसत्वविरुद्धत्वे मानसत्वावच्छिन्नं प्रति शाब्दसामग्रीप्रतिबन्धकत्वस्य कल्पनीयतया तद्व्याप्यत्वे च न तथेति लाघवतर्कसहकृतं[1] मानसत्वव्याप्यत्व-तदभावान्यतरसाध्यकप्रमेयत्व-हेतुकानुमानमेव प्रमाणमिति वाच्यम्। न हि ममापि मानसत्वा-वच्छिन्नं प्रति शाब्दसामग्रीत्वेन प्रतिबन्धकत्वं, अपि तु अनुमित्यादि-सामग्रीसाधारणेन मानसेतरज्ञानसामग्रीत्वेन, तच्चानुमित्याद्युत्पत्ति-दशायां मानसोत्पत्तिवारणाय भवतामप्यावश्यकमिति कुतो लाघवं परन्तु विपरीतमेव गौरवं तथाहि शाब्दत्वस्य मानसत्व-विरुद्धत्वे मानसेतरज्ञानसामग्र्या मानसत्वमेव प्रतिबध्यतावच्छेदकं तद्व्याप्यत्वे तु शाब्देतरमानसत्वमेव प्रतिबध्यतावच्छेदकं अन्यथा स्मृतिसामग्रीसत्त्वे भिन्नविषयकलौकिकप्रत्यक्षसामग्रीसत्त्वे चाक्षुषा-द्युपनीतभानादिसामग्रीसत्त्वे च मानसान्तरवत् शाब्दात्मकमानस-स्याप्यनुत्पत्त्यापत्तेः, किञ्च शाब्दत्वस्य मानसत्वव्याप्यत्वे यत्र पदजन्य-यागाद्युपस्थितिरच्छृङ्खलघटाद्युपस्थितिश्च समूहालम्बनोपस्थितिरूपा

---

(१) लाघवज्ञानसहकृतमिति क० ।

त्वस्य कारणान्तरसाम्यात्[१]। तथापि शब्दो न प्रमा-

---

तत्र आकाङ्क्षा-योग्यतादिसमूहालम्बनं ततो यागादेः शाब्दबोधः तत्र शाब्दबोधकाले उच्छृङ्खलोपस्थितघटादेरपि भानापत्तिः। न चेष्टापत्तिः, शाब्दबोधानन्तरं घटं जानामीत्यनुव्यवसायापत्तेः, अपि च योग्यतासंशयदशायामपि शब्दश्रवणानन्तरं वाक्यार्थनिश्चयोऽनुभवसिद्धः स कथं स्यात् योग्यतासंशये सति ज्ञानसंशयसामग्रीसत्त्वादर्थसंशयोत्पत्त्यापत्तेः एकपदार्थेऽपरपदार्थवत्त्वस्य योग्यतात्वादिति कृतं पल्लवितेन।

इदानीं वैशेषिकमतमाशङ्कते, 'तथापीति आकाङ्क्षादिज्ञानविशिष्टस्य शब्दस्य शब्दाविषयकप्रमोपधायकत्वेऽपीत्यर्थः, 'न प्रमाणान्तरमिति, ननु प्रमाणान्तरत्वं यदि स्वभिन्नप्रमाणत्वं तदा तदभावे साध्ये सिद्धसाधनं[२]। अथ प्रत्यक्षानुमानभिन्नप्रमाणत्वं तदा तन्मते अप्रसिद्धिः तेनोपमानानभ्युपगमात्, अनुमानभिन्नत्वञ्चेत् तदा तदभावे साध्ये सिद्धसाधनं नैयायिकैरपि शब्दलिङ्गकानुमितौ शब्दस्य करणत्वस्वीकारादिति चेत्, न, प्रमाणान्तरत्वं हि अनुमितिभिन्नशब्दाविषयकप्रमितिकरणत्वं, तदभावः साध्यः स्वविषयकप्रत्यक्षकरणतया बाधवारणाय शब्दाविषयकेति। न च प्रत्यक्षकरणत्वमेव नास्ति व्यापाराभावादिति वाच्यम्। स्वविशिष्टबुद्धौ

---

(१) कारणान्तरसाम्यादिति ख०।

(२) तथाच स्वस्मिन् स्वभिन्नप्रमाणत्वाभावस्य सर्ववादिसम्मतत्वमिति भावः।

**णान्तरं पदार्थसंसर्गस्यानुमानादेव सिद्धेः(१)। तथाहि**

---

करणत्वसम्भवात् निर्विकल्पकस्यैव व्यापारत्वात्। न चैवं शब्दविषयक-
शाब्दकरणे शब्दो गुण इति शब्दे नैयायिकानां अंशतः सिद्धसाधनं
इति वाच्यम्। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्तद्वहि-
र्भावेन वा पक्षत्वात्(२)। यद्वा 'न प्रमाणान्तरं' क्लृप्तप्रमाणान्तर्गतं,
प्रत्यक्षानुमित्यन्यतरत्वव्याप्यतावच्छेदकानुभववृत्तिधर्मजन्यतात्मकमिति
यावत्, इदमिन्द्रियादावेव प्रसिद्धं, ध्वंसादेरपीन्द्रियादिजन्यतया
अप्रसिद्धिवारणाय अनुभववृत्तीति, स्मृतेरप्यनुमानजन्यतया अनु-
मानस्य क्लृप्तप्रमाणान्तर्गतत्वसम्पादनाय ज्ञानत्वं विहायानुभवत्वेनो-
पादानं(३)। एतच्च ज्ञायमानशब्दकरणतापक्षे, शब्दज्ञानकरणतापक्षे
तु शब्दज्ञानं पक्षो बोध्यः, तत्र हेतुमाह, 'पदार्थसंसर्गस्येति, 'अनु-
मानत एव सिद्धेः' अनुमितिसामग्रीत एव ग्रहात्, अनुमिति-

---

(१) अनुमानत एव सिद्धेरिति ख०, अयमेव पाठः टीकाकारसम्मत इति।

(२) तादृशशब्दभिन्नशब्दस्य पक्षत्वादित्यर्थः।

(३) 'अनुभवत्वेनोपादानमित्यनन्तरं 'शाब्देन्द्रियसाधारण्यसत्त्वाभावात् तदन्तर्गतत्वेन तादृशजन्यतात्मकत्वमानविवक्षणे साध्याप्रसिद्धिः कालादि-निष्ठजनकतानिरूपितजन्यताया अपि अनुभववृत्तित्वात् तद्वृत्तिजन्य-तात्वस्य घटादिजन्यतायामपि सत्त्वात् तादृशजन्यतात्वस्य व्याप्यताव-च्छेदकत्वाभावात् सामानाधिकरण्यसम्बन्धेनानुभववृत्तित्वविशिष्टजन्य-तात्वस्य तादृशव्याप्यतावच्छेदकत्वे त्वनुमानवैफल्यं तादृशजन्यतावच्छेदेन तादृशान्यतरत्वव्याप्यत्वसिद्धावेवोद्देश्यस्यापि सिद्धेरिति पूर्वकल्प एव सम्यगिति ध्येयं' इत्यधिकः पाठः क-चिह्नितपुस्तके वर्त्तते।

सामग्रीभिन्नसामग्या अग्रहादिति यावत्, एवञ्च अनुमितिसामग्री-भिन्नसामग्रीजन्यशब्दाविषयकज्ञानाकरणत्वादिति हेतुरिति भावः। नन्वयं हेतुः स्वरूपासिद्धः घटमानयेत्यादिशब्दजन्यज्ञानस्यानुमिति-सामग्रीभिन्नसामग्रीजन्यत्वादित्यतआह, 'तथाहीति। यद्दा अनुमिति-सामग्रीभिन्नसामग्रीजन्यशब्दाविषयकज्ञानाकरणत्वादिति हेतुरुह्यः, नन्वयं हेतुः स्वरूपासिद्धः तादृशसामग्रीजन्यशब्दाविषयकज्ञानं पदार्थसंसर्गज्ञानमेव तस्यैव करणत्वात् शब्दस्येत्यतआह, 'पदार्थसंसर्ग-स्येति, 'सिद्धेः' ग्रहात्, तथाच तादृशसामग्रीजन्यत्वमेव पदार्थसंसर्ग-ज्ञाने नास्तीति भावः। अनुमानेन सिद्धिप्रकारमेवाह, 'तथाहीति, यद्यपि क्लृप्तप्रमाणान्तर्गतत्वे साध्ये नायं हेतुः सम्भवति अतीन्द्रिये परमाण्वादौ व्यभिचारात् तथापि तस्मिन् साध्ये 'अनुमानतः' अनु-मानविधया, 'सिद्धेः' साधकत्वादित्यर्थः, तथाच पदार्थसंसर्गानुमाप-कत्वादिति हेतुरिति भावः। पदार्थसंसर्गकानुमापकत्वमेव कथं तदाह, 'तथाहीति ।

केचित्तु 'शब्दो न प्रमाणान्तरं' इत्यस्य शब्दत्वं तज्ज्ञानत्वं वा अनुभवत्वसाक्षाद्व्याप्यजात्यवच्छिन्नकार्य्यताप्रतियोगिककारणताव-च्छेदकं नेत्यर्थः, तत्त्वे साधकाभावादिति हेतुरुह्यः। ननु शब्दस्येन्न प्रमाणान्तरं तदा घटमानयेत्यादिवाक्यप्रयोगानन्तरं[१] पदार्थसंसर्ग-बोधः कथं स्यादित्यत आह, 'पदार्थेति, अनुमानतः सिद्धिप्रकार-मेव विवृणोति, 'तथाहीतीत्याहुः।

---

(१) घटमानयेत्यादिवाक्यश्रवणानन्तरमिति ख०, ग० ।

**गामभ्याज दण्डेनेति[१] पदानि वैदिकपदानि वा तात्पर्य्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्व्वकाणि**

---

पदश्रवणानन्तरं पदार्थोपस्थितिस्तदनन्तरं पदानि पक्षीकृत्य पदार्थान् पक्षीकृत्य वा पदार्थसंसर्गः श्रोत्रानुमीयते न तु पदार्थ-संसर्गस्य शाब्दबोधः इति वैशेषिकमतं तत्रादौ पदपक्षकानुमानप्रकारं दर्शयति, 'दण्डेनेति, पदार्थपक्षकन्त्वग्रे वक्ष्यते, गुरुनये लौकिकः शब्दोऽनुवादकः वैदिक एव प्रमाणं तन्मतनिरासार्थं वैदिकपदानि पक्षीकृत्य वैदिकस्थलेऽप्यनुमानात् पदार्थसंसर्गसिद्धिप्रकारं दर्शयति, 'वैदिकेति, अत्र वैदिकशब्दत्वेन न पक्षता किन्तु स्वर्गकामोऽग्निष्टो-मेन यजेतेत्यादिक्रमेण अन्यथा पदार्थादेर्विशिष्टज्ञानासम्भवादिति बोध्यं। 'तात्पर्य्यविषयेति तात्पर्य्यविषयीभूतोयः स्मारितपदार्थसंसर्गः तज्ज्ञानपूर्व्वकाणीत्यर्थः'। न च तात्पर्य्यविषयीभूतोयः संसर्गस्तज्ज्ञान-पूर्व्वकाणीत्येव सम्यक् किं स्मारितपदार्थेत्यनेनेति वाच्यम्। दण्डेन गामभ्याजेति प्रयोगानन्तरं गोपदार्थास्पदार्थादिविषयकज्ञानमनु-भवसिद्धं अनुमानेनापि तादृक्ज्ञानं करणीयं अन्यथा तद्विषयक-ज्ञानार्थं शब्दस्य प्रमाणान्तरत्वापत्तिरतस्तदुपादानात्। न च तथापि कर्म्मत्वे गोसंसर्गावगाहिज्ञानं कर्म्मत्वं गोसन्न वेति संशय-निवर्त्तकं तच्च एतदनुमानान्न वृत्तं तेन शब्दोऽवश्यं प्रमाणान्तर-मङ्गीकार्य्यमिति वाच्यम्। तात्पर्य्यविषयः स्मारितपदार्थसंसर्गो यत्र तज्ज्ञानपूर्व्वकाणीतिव्युत्पत्त्या तात्पर्य्यविषयस्मारितपदार्थसंसर्ग-

---

(१) दण्डेन गामभ्याजेतीति ख०, एतत्पाठस्यैव टीकाकारसम्मतत्वमिति ।

वत्पदार्थज्ञानपूर्व्वकाणीति[१] साध्यार्थः[२]। न च स्मारितेति व्यर्थं, तदनुपादाने यथा पदार्थत्वरूपेण गोसंसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वं सिद्ध्यति तथा पदार्थत्वरूपेण घटादिसंसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वस्यापि सिद्ध्यापत्तेः। न च तत्संसर्गस्य तात्पर्य्याविषयतया कथं तत्संसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वं सेत्स्यतीति वाच्यम्। यदा पदार्थसंसर्गोऽपि तात्पर्य्यविषयः अथ च गवादिपदेन स न स्मारितस्तदा तत्सिद्ध्यापत्तेः। न च प्रकृतपदे तज्ज्ञानपूर्व्वकत्वस्य बाधादेव न सिद्धिरिति वाच्यम्। यदा तज्ज्ञानमपि वक्तुः पूर्व्वमस्ति तदा बाधाभावात्, स्मारितत्वोपादाने तु तस्य तदानीमस्मारिततया न तत्संसर्गवज्ज्ञानपूर्व्वकत्वसिद्धिः। न च तत्सिद्धावपि न क्षतिः उद्देश्यस्य कर्म्मत्वे गोसंसर्गावगाहिज्ञानस्य वृत्तत्वादधिकन्तु प्रविष्टमिति न्यायादिति वाच्यम्। तथा सति दण्डेनेत्यादिप्रयोगानन्तरं घटाद्यविषयकज्ञानमनुभवसिद्धं अनुमानेन च तन्न वृत्तमिति तदर्थं शब्दस्य प्रमाणान्तरतापत्तेः एवं सर्व्वत्र बोध्यं[३]। न च घटादिरपि

(१) न च तथापि तत्सम्बन्धेन गोमत्त्वनिश्चयस्यैव विरोधित्वात् तस्यानिर्व्वाहात् तद्दोषतादवस्थ्यमिति वाच्यं। तत्सम्बन्धेन तज्ज्ञानस्यैव तत्र तत्प्रयोजकतत्सम्बन्धवत्त्वज्ञानस्यापि विरोधित्वादिति भावः।

(२) साध्यत्वादिति क०।

(३) 'एवं सर्व्वत्र बोध्यं' इत्यनन्तरं 'न च तथाप्यनुमितौ ज्ञानपूर्व्वकत्वस्याधिकस्य भानात् शाब्दान्यूनानतिरिक्तविषयत्वमनुमितेरसिद्धमिति वाच्यं। ज्ञानपूर्व्वकत्वाद्यतिरिक्तशाब्दविषयविशेष्यप्रकारकसंसर्गातिरिक्तविशेष्यप्रकारसंसर्गाविषयत्वमन्यूनानतिरिक्तविषयकत्वं तच्च तादृशपूर्व्वकभानेऽपि तादृशानुमितावक्षुस्मित्यभिप्रायादिति ध्येयं' इत्यधिकः पाठः क-चिह्नितपुस्तके वर्त्तत इति।

घटादिपदेन स्मारित एवेति वाच्यम् । स्मारितपदार्थत्यस्य हि प्रकृतपदस्मारितेत्यर्थः[१] प्रकृतपदस्मारितत्वं द्वितीयपदार्थेऽपि विशेषणं देयं अन्यथा यदा करणत्व-कर्म्मत्वोभयनिष्ठगोसंसर्ग एव तात्पर्य्यं वर्त्तते अथ चाम्पदेन करणत्वं न स्मारितं तदा तात्पर्य्यविषयप्रकृत-गोपदस्मारितार्थसंसर्गवत्पदार्थत्वरूपेण करणत्वज्ञानपूर्व्वकत्वस्यापि सिद्ध्यापत्तेः तत्सिद्धौ च तदानीं करणत्वाविषयकज्ञानस्यानुभवसिद्ध-स्यानुमानादनिर्व्वाहात्[२] तदर्थं शब्दस्य प्रमाणान्तरतापत्तेः, इत्यञ्च तात्पर्य्यविषयो य एतद्गोपदस्मारितार्थसंसर्गस्तद्वान् यः एतदम्पद-स्मारितार्थस्तज्ज्ञानपूर्व्वकाणि एवं तात्पर्य्यविषयीभूतो य एतद्दण्ड-पदस्मारितार्थसंसर्गस्तद्वान् य एतट्टापदस्मारितार्थस्तज्ज्ञानपूर्व्वकाणी-त्यादिक्रमेण नानैव साध्यं समूहालम्बनानुमितिः । न च यदा दण्डे-नेत्यादिप्रयुक्तेन गोपदेन सम्बन्धिविधया आकाशमपि स्मारितं कर्म्मत्वनिष्ठतत्संर्गोऽपि तात्पर्य्यविषयः तदा एतद्गोपदस्मारितत्वरूपेणा-काशादिसंसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वस्यापि सिद्धिप्रसङ्गादिति वाच्यम् । वृत्त्या[३] एतद्गोपदस्मारितत्वस्य विवक्षितत्वात् एवमम्पदस्य स्मारि-तत्वमपि वृत्त्या विवक्षणीयं, अन्यथा यदाम्पदेन यथाकथञ्चित्

---

(१) प्रकृतपदस्मारितेत्यर्थादिति क० ।

(२) करणत्वाविषयकज्ञानस्यानुमानादनिर्वाहादिति ख०, ग० ।

(३) अत्र वृत्तित्वं शक्ति-लक्षणान्यतरसम्बन्धत्वं, तथाच सम्बन्धत्वेन तादृ-शान्यतरसम्बन्धज्ञानजन्यपदस्मारितत्वं अत्र विवक्षणीयं, अतः उक्तस्थले आकाशस्य जनकत्वेन जनकत्वरूपसम्बन्धज्ञानजन्यपद-स्मारितत्वेऽपि न वृत्त्या पदस्मारितत्वमिति ।

सम्बन्धेन करणत्वमपि स्मारितं तन्निष्ठगोसंसर्गोऽपि तात्पर्य्यविषयः तदा तस्यापि सिद्ध्यापत्तेः, तात्पर्य्यविषयत्वं संसर्गविशेषणञ्च[१] यदाम्-पदार्थकर्म्मत्वनिष्ठगोपदार्थस्य समवायरूपसंसर्गतात्पर्य्येण दण्डेनेत्यादि-वाक्यं प्रयुक्तं तदा एतद्गोपदस्मारितार्थसंसर्गत्वरूपेण एककालीनत्वा-दिसंसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वस्यापि सिद्धिवारणाय। तात्पर्य्यविषय-त्वञ्च एतत्पुरुषीया एतत्कालीना या एतद्वाक्यजन्यप्रतीतीच्छा तद्विषयत्वं, यदा एककालीनत्वादौ समवाये च तात्पर्य्येण दण्डेने-त्यादिवाक्यं प्रयुक्तं तदा तात्पर्य्यविषयीभूतैतद्गोपदस्मारितार्थसंसर्गत्व-रूपेण एककालीनत्वादिसंसर्गवत्कर्म्मत्वज्ञानपूर्व्वकत्वस्यापि सिद्धिः स्यादित्याकाङ्क्षानिरूपकत्वमपि संसर्गविशेषणं देयं,[२] आकाङ्क्षानि-रूपकत्वञ्च एतद्गोपदनिरूपितैतदम्पदनिष्ठाकाङ्क्षानिरूपकत्वं, अन्यथा एककालीनत्वादेरपि कुत्रचिदाकाङ्क्षानिरूपकत्वेन तद्दोषतादव-स्थ्यात्। न च वैशेषिकैः शाब्दत्वजातेरनभ्युपगमात् तन्नये आकाङ्क्षा-निरूपकत्वं[३] दुर्व्वचमिति वाच्यम्। तैरपि शाब्दत्वजातिरभ्युपेयत-एव परन्तु सा जातिरुक्तानुमितिवृत्तिरनुमितित्वव्याप्येत्येवाभ्युप-गमात्, अस्तु वा तत्तत्संसर्गभिन्नसंसर्गत्वमेवाकाङ्क्षानिरूपकत्वं,[४] एवं यदा गवि कर्म्मत्वे च तात्पर्य्येण दण्डेनेत्यादिकं वाक्यं प्रयुक्तं अथ

(१) संसर्गविशेषणञ्चेत्यस्य अग्रिमेण सिद्धिवारणायेत्यनेन सहान्वयः।

(२) आकाङ्क्षानिरूपकत्वस्यापि संसर्गविशेषणत्वमिति ख०, ग०।

(३) शाब्दबोधानुकूलानुपूर्व्वीमत्त्वरूपाकाङ्क्षानिरूपकत्वस्य शाब्दत्वघटित-त्वेन तादृशजात्यनभ्युपगमे तस्य दुर्व्वचत्वमिति तात्पर्य्यम्।

(४) आकाङ्क्षानिरूपकसम्बन्धत्वमिति क०।

आकाङ्क्षादिमत्पदकदम्बत्वात् घटमानयेतिवत्।

---

च गोपदेन लक्षणया घटादिरपि स्मारितः अम्पदेन लक्षणया करणत्वमपि स्मारितं तयोः संसर्गोऽपि तात्पर्य्यविषयः एतदुभयन्तु न तात्पर्य्यविषयः तदा एतद्गोपदस्मारितार्थसंसर्गवदेतदम्पदार्थत्व-रूपेण घटादिसंसर्गवत्करणत्वज्ञानपूर्व्वकत्वस्यापि सिद्धिः स्यादिति गोपदस्मारितार्थेऽम्पदस्मारितार्थे च तात्पर्य्यविषयत्वं विशेषणं देयं। ननु गोपदार्थाम्पदार्थघटितसाध्ये संसर्गे तात्पर्य्यविषयत्वविशेषणं व्यर्थं तात्पर्य्याविषयीभूतैककालीनत्वादिसंसर्गस्य प्रकृतस्थले आकाङ्क्षाया-अनिरूपकत्वादेवासिद्धेः इति चेत्, सत्यं, तदुभयघटितसाध्ये न देयमेव तत्, किन्तु यत्राध्याजपदमपि पक्षीकृतं तत्र चानुकूलत्व-विषयत्वाख्यसम्बन्धद्वयमेवाकाङ्क्षानिरूपकं तदभिप्रायेण मूले तदु-पादानमिति सर्व्वं रमणीयं। 'आकाङ्क्षादिमत्पदकदम्बत्वादिति गोपदाकाङ्क्षादिमदम्पदत्वात् दण्डपदाकाङ्क्षादिमद्द्वापदत्वादित्यर्थः, समूहालम्बनश्च परामर्शः, 'आकाङ्क्षादीत्यादिना योग्यतापरिग्रहः, यत्पदाकाङ्क्षायोग्यतावद्यत्पदं भवति[१] तत् तत्तात्पर्य्यविषयीभूतो यः वृत्त्या तत्पदस्मारिततात्पर्य्यविषयीभूतस्यार्थस्याकाङ्क्षानिरूपक-संसर्गः तद्वान् यो वृत्त्या तत्पदोपस्थापिततात्पर्य्यविषयीभूतार्थः तज्ज्ञानपूर्व्वकमिति सामान्यमुखी व्याप्तिः[२] विशेषव्याप्तौ 'घटमान-

---

(१) यद् यत्पदाकाङ्क्षायोग्यतावद्‌यद्‌यत्पदं भवतीति ख० ।

(२) अत्रेदं चिन्त्यं यत्तद्भ्यां सामान्यत उदाहरणवाक्याधीनसामान्यव्याप्ति-लाभः ततो विशेषहेतुपरामर्शः, अथ वा तादृशोदाहरणानन्तरं

येति दृष्टान्तासङ्गतेः। एवञ्च वह्निना सिञ्चतीत्यादौ टापदाकाङ्क्षा-दिमत्सिच्पदे व्यभिचारः सिच्पदार्थस्य एतट्टापदोपस्थापितार्थ-संसर्गवत्त्वाभावादतो यत्पदयोग्यतावत्त्वं हेतावुपात्तं, तदर्थश्च न यत्पदार्थाबाधितार्थकत्वं, तथासति यत्पदद्वयेन पदार्थौ नोपस्थापितः परस्परमबाधितार्थकन्तु भवति तत्रैव व्यभिचारापत्तेः तदुभयपद-स्मारितस्यैवार्थस्याप्रसिद्धेरपि तु वृत्त्या यत्पदस्मारितार्थाबाधितार्थस्य वृत्त्या स्मारकत्वं तत्, अत्रार्थद्वय एव तात्पर्य्यविषयत्वं विशेषणं देयं, अन्यथा तात्पर्य्यं विनैव यत्पदद्वयं प्रयुक्तं अथ च वृत्त्या स्मारितार्थकं परस्परमबाधितार्थकञ्च भवति तत्रैव व्यभिचारापत्तेः तात्पर्य्य-विषयीभूतस्यैव तदर्थस्याप्रसिद्धेः, अबाधितत्वन्तु तात्पर्य्यविषयसंसर्गेण बोध्यं अन्यथा पदार्थमात्रे तात्पर्य्येण यत्पदद्वयं प्रयुक्तं तत्संसर्गे तात्पर्य्यं नास्ति किन्तु पदार्थोपस्थापकत्वं अबाधितार्थकत्वञ्च वर्त्तते तत्रैव व्यभिचारापत्तेस्तात्पर्य्यविषयतत्पदार्थसंसर्गस्यैवाप्रसिद्धेः। न च

---

सामान्यहेतौ व्याप्तिज्ञानं ततोऽस्मादेव व्याप्तिविशिष्टविशेषहेतोः पक्षधर्म्मताज्ञानात् विशेषरूपेणैव साध्यसिद्धिरिति यत्तद्घटितसा-मान्यव्याप्तिज्ञापकसामान्योदाहरणस्थले कार्य्य-कारणभावः तथाच यत्पदाकाङ्क्षा-योग्यतावद्यत्पदं भवति तत् तत्तात्पर्य्यविषयीभूतो यः वृत्त्या तत्पदस्मारिततात्पर्य्यविषयीभूतस्यार्थस्य आकाङ्क्षानिरू-पकसंसर्गः तद्वान् यो वृत्त्या तत्पदोपस्थापिततात्पर्य्यविषयीभूतार्थः तज्ज्ञानपूर्व्वकम्भवति इत्युदाहरणानन्तरं सामान्यहेतौ व्याप्तिग्रहात् अमुपदं गोमत्त्वधर्म्मताज्ञानपूर्व्वकं गोपदाकाङ्क्षावदमुपदत्वादिति क्रमेण हेतुषु व्याप्ति-पक्षधर्म्मताज्ञानात् समूहालम्बनात्मकात् तत्त-द्घटितसमूहालम्बनात्मकानुमितिर्भविष्यतीति।

**योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात् तत्पर-**

---

तद्वारणाय संसर्गतात्पर्य्यकत्वे सतीत्येव विशेषणमुपादीयतामिति वाच्यम् । तथापि यदा घट-कर्म्मत्वयोरभेदसंसर्गे तात्पर्य्येण घटमिति प्रयुक्तं वृत्तित्वसंसर्गे तात्पर्य्यं नास्ति तदा तदम्पदे व्यभिचारापत्तेः अम्पदोपस्थापितार्थस्य तात्पर्य्यविषयीभूतसंसर्गवत्त्वाभावात् यतस्तात्पर्य्यविषयीभूतोघटतादात्म्यसंसर्गोनाम्पदार्थनिष्ठः अम्पदार्थनिष्ठघटवृत्तित्वसंसर्गश्च न तात्पर्य्यविषय इति, यदा चाधाराधेयभावसम्बन्धे तात्पर्य्येण घटः कर्म्मत्वमिति प्रयुक्तं तदा तत्कर्म्मत्वपदे[१] व्यभिचारः कर्म्मत्वपदार्थे घटपदार्थस्याकाङ्क्षानिरूपकाभेदसंसर्गवत्त्वाभावात् अतो यत्पदाकाङ्क्षावत्त्वं विशेषणं । न च तथापि स दोषस्तदवस्थः कर्म्मत्वपदस्यापि तादात्म्यसम्बन्धेनान्वयबोधजनने घटपदाकाङ्क्षावत्त्वादिति वाच्यं । आकाङ्क्षानिरूपकसंसर्गेणाबाधितत्वस्य योग्यताघटकत्वलाभाय तदुपादानात् तदयं निर्गलितहेत्वर्थः वृत्त्या यत्पदोपस्थापिततात्पर्य्यविषयीभूतार्थतात्पर्य्यविषयाकाङ्क्षानिरूपकसम्बन्धेनाबाधितस्य तात्पर्य्यविषयीभूतार्थस्य वृत्त्या स्मारकं यत्पदं भवतीति सर्व्वं सुस्थम् ।

प्रकृतसाध्ये लीलावतीकारोक्तहेतुद्वयं दूषयति, 'योग्यतेति, ननु संसृष्टार्थपरत्वं एकपदार्थसंसर्गवान् योऽपरपदार्थस्तत्प्रतीतीच्छयोच्चरितत्वं, तथाच योग्यतोपादानं व्यर्थं विसंवादिवाक्यस्थलेऽपरपदार्थस्यैकपदार्थसंसर्गवत्त्वाभावाद्धेत्वभावेनैव व्यभिचारस्य बाधित-

---

(१) तद्घट-तत्कर्म्मत्वपदे इति क० ।

**सन्निधिमत्त्वादिति न हेतुः, संसृष्टोहि योऽर्थस्तत्परत्वं तत्परसन्निधिमत्त्वं वा असिद्धं संसर्गस्य प्रागप्रतीतेः।**

त्वादिति चेत्, न, संसृष्टार्थपरत्वं हि एकपदार्थेऽपरपदार्थसंसर्गप्रतीतीच्छयोच्चरितत्वं एवञ्च विसंवादिवाक्ये व्यभिचारवारणाय योग्यतोपादानं, योग्यसतात्पर्य्यकेण वाक्येन यत्र पदार्थस्मरणं न जनितं तत्र व्यभिचारवारणायासत्तिमत्त्वे सतीति स्मारकत्वार्थकं, 'तत्परेति संसृष्टार्थपरेत्यर्थः, तथाचैकपदार्थेऽपरपदार्थसंसर्गप्रतीतीच्छयोच्चरितत्वे सति आसत्तिमत्त्वादित्यर्थः, अत्रापि योग्यतानुषञ्जनीया। न च हेत्वोरभेद इति वाच्यं। विशेष्य-विशेषणभावभेदेन(१) भेदात्।

केचित्तु अत्र योग्यता न प्रवेशनीया। न चात्र योग्यताया-अप्रवेशेऽयोग्यवाक्ये व्यभिचार इति वाच्यं। एतद्दोषस्यानाप्तोक्त-इत्यादिना स्वयमेवाग्रे वक्ष्यमाणत्वात् इति प्राहुः।

यथाश्रुते दूषणमाह, 'संसृष्टो हीति एकपदार्थसंसर्गवान् योऽपरपदार्थस्तत्परत्वमित्यर्थः, 'तत्परेति तत्परत्वे सति सन्निधिमत्त्वञ्चेत्यर्थः, 'वाकारश्चार्थे, 'असिद्धं' प्रकृतानुमानात् पूर्व्वमज्ञातं, विशिष्टज्ञाने विशेषणज्ञानं हेतुमाह, 'संसर्गस्येति एकपदार्थसंसर्गवत्त्वस्यापरपदार्थे प्रागप्रतीतेरित्यर्थः। न चैवं भवतामपि साध्याप्रसिद्धिरिति वाच्यम्। यत्तन्मते सामान्यतोव्याप्तिस्थलेऽप्रसिद्धस्यैव साध्यस्य पक्षधर्म्मताबलात् सिद्धेर्हेतुप्रसिद्धिस्त्वावश्यमपेक्षितेति भावः। इदमुपलक्षणं पूर्वोक्तक्रमेण योग्यताविशेषणमपि व्यर्थमित्यपि बोध्यं।

(१) विशेषण-विशेष्यभावभेदेनेति ख०, ग०।

**संसृष्टत्वप्रकारकप्रतीतिपरत्वं तत्प्रकारकप्रतीतिपरसन्निधिमत्त्वं वा अनाप्तोक्ते निराकाङ्क्षे च व्यभिचारि।**

---

नन्वेकपदार्थेऽपरपदार्थसंसर्गप्रतीतीच्छयोच्चरितत्वं संसृष्टार्थपरत्वं तादृशोच्चरितत्वे सति सन्निधिमत्त्वं तत्परसन्निधिमत्त्वमित्यत आह, 'संसृष्टत्वप्रकारकेति एकपदार्थेऽपरपदार्थसंसृष्टत्वप्रकारकेत्यर्थः, अत्र प्रकारकत्वं विषयकत्वमात्रं अन्यथा स्वरूपासिद्धं स्यात्, 'अनाप्तोक्त-इति अयोग्य इत्यर्थः। न चैतदयुक्तं योग्यताया हेतुघटकत्वादिति वाच्यम्। 'अनाप्तोक्तपदस्य स्थिरजलाभिप्रायेण पयसा सिञ्चतीत्याद्यनाप्तोक्तविशेषपरत्वात्। न च तत्रापि न व्यभिचारः तस्याप्ययोग्यत्वादिति वाच्यम्। लीलावतीकारमते हि अन्वयप्रयोजकरूपवत्त्वं योग्यता सा च तत्र वर्त्तत एव जलत्वस्य सेककरणत्वान्वयप्रयोजकरूपत्वेन तस्य करकायां सत्त्वात्, केषाञ्चिन्मते 'अनाप्तोक्त-इति द्वितीयहेतौ दूषणं तत्र योग्यताया अनिवेशात्, 'निराकाङ्क्षे चेति हेतुद्वये दूषणमिति ध्येयं। 'निराकाङ्क्षे चेति घटः कर्म्मत्वमानयनं कृतिरित्यादावित्यर्थः, घटपदार्थे कर्म्मत्वपदार्थस्याकाङ्क्षानिरूपकसंसर्गाप्रसिद्ध्या साध्यासत्त्वादिति भावः।

ननु यदाभ्याजधात्वर्थाख्यातार्थयोर्विषयत्वरूपसंसर्गे तात्पर्य्येण दण्डेनेत्यादिवाक्यं प्रयुक्तं अनुकूलत्वसंसर्गे च तात्पर्य्यं नास्ति तदा तद्वाक्यजन्यज्ञाने न्यायनयेऽनुकूलत्वसंसर्गो न भासते भवन्मते च तदानीमभ्याजपदार्थसंसर्गत्वरूपेण तदपि सिद्धेदित्यत आह, 'संसर्गस्येति अभ्याजधात्वर्थाख्यातार्थयोः संसर्गस्येत्यर्थः, 'बहुप्रकारकत्वेऽपीति अनेक-

संसर्गस्य बहुप्रकारकत्वेऽपि नानभिमतसंसर्गसिद्धिस्तस्य तात्पर्य्याविषयत्वात्। अन्यथा शब्दादप्यभिमतान्वय-बोधो न स्यात्[1]। अतएव विशेषण-विशेष्यभाववदर्थ-कानि तद्बोधपूर्व्वकाणि वेति[2] न साध्यं।

यत्तु स्मारितार्थसंसर्गवन्तीति साध्यं, मत्वर्थश्च

---

रूपत्वेऽपीत्यर्थः, 'अनभिमतेति दण्डेनेत्यादिवाक्यजन्यज्ञानविषयतया नैयायिकानभिमतेत्यर्थः, 'तस्य' अनभिमतसंसर्गस्य, तथा चैतदर्थमेव मया तात्पर्य्यविषयत्वं संसर्गविशेषणमुपात्तमिति भावः। 'अन्यथा' तस्य तात्पर्य्यविषयत्वे, 'शब्दात्' दण्डेनेत्यादिवाक्यात्, न्यायनये इति शेषः, 'अभिमतान्वयबोधः' अभिमतोयोऽन्वयबोधः एकसंसर्गमात्र-विषयकशाब्दबोध इति[3] यावत् स न स्यादित्यर्थः, 'अतएव' अन-भिमतसंसर्गसिद्धिप्रसङ्गादेव, 'विशेषण-विशेष्येत्यादि, सार्थकानीत्ये-तावन्मात्रोक्तौ संसर्गस्य न सिद्धिरित्यतो 'विशेषण-विशेष्यभाववदिति विशेषणता-विशेष्यतान्यतरवदित्यर्थः, विशेषणत्वमपरपदार्थनिष्ठवै-शिष्ट्यप्रतियोगितया भासमानत्वं, विशेष्यत्वञ्चापरपदार्थप्रतियोगिक-वैशिष्ट्यानुयोगितया भासमानत्वमिति भावः। 'तद्बोधेति तादृशा-न्वयबोधेत्यर्थः।

आचार्य्योयं साध्यमाशङ्क्य दूषयति, 'यत्त्वित्यादिना, अत्रापि तात्पर्य्यविषयीभूतो यो वृत्त्या एतत्पदस्मारिततात्पर्य्यविषयार्थस्य

---

(१) अभिमतसंसर्गसिद्धिर्न स्यादितीति क०।

(२) तद्बोधपूर्व्वकाणीति वेति क०।

(३) संसर्गमात्रविषयकशाब्दबोध इतीति ख०।

**लिङ्गतया ज्ञापकत्वं । न चान्योन्याश्रयः, पूर्व्वपूर्व्वा-**

---

संसर्गस्तद्वत्त्वमिति साध्यार्थः, एवं प्रत्येकं तत्तत्पदमादाय नानैव साध्यं प्रत्येकमम्पदादिकमेव पक्षः हेतुश्च पूर्व्वोक्त एव समूहालम्बनौ त्वनुमिति-परामर्शाविति बोध्यम्। नन्वत्र मत्वर्थः कः सम्बन्धः[1] संयोग-समवायादेः पक्षे बाधितत्वादित्यत आह, 'मत्वर्थश्चेति, 'लिङ्गतयेति, 'लिङ्गपदं पक्षपरं, अन्यथा पदानां लिङ्गत्वाभावेन बाधापत्तेः, शब्द एव तादात्म्यसम्बन्धेन लिङ्गमित्याशयेन वा, 'ज्ञापकत्वं' कारणीभूतज्ञानावच्छेदकत्वं[2]। ननु 'लिङ्गतयेति किमर्थं ज्ञापकत्वमात्रस्यैव सम्बन्धत्वे दोषाभावात्। न चैवं नैयायिकैः सिद्धसाधनमुद्भावनीयं तैरपि शब्दस्य ज्ञापकत्वस्वीकारादिति वाच्यम्। न हि नैयायिकैः सह विवादे इदमनुमानं किन्तु वाक्यश्रोतुर्वैशेषिकनये यया रीत्या अनुमानविधया शब्दात् संसर्गधीः सा रीतिरुपदर्श्यते तत्र च नैयायिकैः सिद्धसाधनोद्भावनप्रसङ्गाभावात् अन्यथा 'लिङ्गतयेत्युक्तावपि सिद्धसाधनोद्भावनसम्भवात् नैयायिकैः शब्दस्य लिङ्गतयापि ज्ञापकत्वस्वीकारात् पूर्व्वोक्तसंसर्गज्ञानपूर्व्वकत्वानुमाने तदापत्तेश्च नैयायिकैरपि तदङ्गीकारादिति चेत्, न, वैशेषिकनये पदानां लिङ्गविधयैव ज्ञापकत्वेन तस्य स्वरूपकथनमात्रपरत्वात् सम्बन्धस्तु ज्ञापकत्वमात्रमेवेति दिक्। 'न चेति, पक्षे ज्ञापकत्वसंसर्गेण एतादृशसंसर्गसिद्धौ तद्दृष्टान्तेन

---

(१) कः सम्बन्धो मत्वर्थं इति ख०, ग०।

(२) ज्ञाननिष्ठायाः कारणताया विषयविधयावच्छेदकत्वमित्यर्थः।

नुमितिहेतुत्वेन(१) अनादित्वात् । तन्न । ज्ञापकत्व-
मात्रेणार्थासिद्धेः । प्रमापकत्वे तेनैव व्यभिचारात् ।

---

दृष्टान्ते ज्ञापकत्वसम्बन्धेन तादृशसंसर्गसिद्धिः दृष्टान्ते ज्ञापकत्वसम्बन्धेन एतादृशसंसर्गसिद्धावेव पक्षे ज्ञापकत्वसम्बन्धेन तादृशसंसर्गसिद्धि-रित्यन्योन्याश्रयः, अन्योन्याश्रयाभावे हेतुमाह, 'पूर्व्वपूर्व्वेति पूर्व्व-पूर्व्वाणां वाक्यानां उत्तरोत्तरवाक्ये तादृशसंसर्गानुमितौ दृष्टान्त-विधया प्रयोजकत्वेनेत्यर्थः, 'अनादित्वादिति पक्षीयसाध्यसिद्धेर्दृष्टा-न्तीयसाध्यसिद्धेरादावनपेक्षितत्वादित्यर्थः ।

केचित्तु 'हेतुत्वेनेत्यनन्तरं छेदः, तथाच 'हेतुत्वेनेत्यन्तमन्योन्या-श्रयाभावे हेतुः, अर्थस्तु पूर्व्ववत् । नन्वेवमनवस्थेत्यतआह, 'अनादि-त्वादिति वीजाङ्कुरवदनादित्वादित्यर्थः, तथाच प्रामाणिकी अन-वस्था न दोषायेति भाव इत्याहुः । तदसत् । पञ्चम्यन्तेनैव मुख्य-हेतुप्रयोगनियमात् तृतीयाया असङ्गतत्वापत्तेरिति ध्येयम् ।

'ज्ञापकत्वमात्रेण' ज्ञापकत्वसम्बन्धेन, स्मारितपदार्थसंसर्गस्य सा-ध्यत्वे इति शेषः, 'अर्थेति एकपदार्थे अपरपदार्थसंसर्गासिद्धेरित्यर्थः, प्रवर्त्तकस्य तथा ज्ञानमिति भावः । ननु स्मारितपदार्थसंसर्गवन्तीति न साध्यं करणीयं किन्त्वेकपदार्थसंसर्गवत्यपरपदार्थे यदेकपदार्थ-संसर्गज्ञानं तज्जनकानीति साधनीयं तथाच नोक्तदोष इत्यत आह, 'प्रमापकत्व इति एकपदार्थसंसर्गवत्यपरपदार्थे यदेकपदार्थसंसर्गज्ञानं तज्जनकत्व इत्यर्थः, साध्य इति शेषः, 'तेनैव' अनाप्तोक्तेनैव, कर-

---

(१) पूर्व्वपूर्व्ववत्तदनुमितिहेतुत्वनेति ख० ।

काभिप्रायप्रयुक्तपयसा सिञ्चतीत्यादिवाक्येनैवेति यावत्, एतदनु-मानस्याचार्य्यीयत्वात्तन्मते चान्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वात् योग्यतागर्भपूर्व्वोक्तहेतोस्तत्रापि सत्त्वादेकपदार्थसंसर्गवत्त्वस्यापरपदार्थेऽभावेन साध्यस्य चासत्त्वादिति भावः। बाधाभावरूपयोग्यताया-हेतुविशेषणत्वे तु 'प्रमापकत्वं' प्रमोपधायकत्वं, प्रमास्वरूपयोग्यत्वं वा, आद्येऽजनितशाब्दबोधके शब्दे व्यभिचारः, अन्त्ये निराकाङ्क्षा-देरपि स्वरूपयोग्यत्वेनाकाङ्क्षादिमत्त्वविशेषणं हेतौ व्यर्थं योग्यताव-त्त्वस्यैव सम्यक्त्वात् यदि च साकाङ्क्षशब्दत्वेन स्वरूपयोग्यता तदा आकाङ्क्षावत्त्वमेव सम्यक् योग्यतादिविशेषणं व्यर्थं इत्यादीनि दूष-णान्यवसेयानि।

केचित्तु 'ज्ञापकत्वमात्रेण' ज्ञापकत्वसम्बन्धेन, साध्यत्व इति शेषः, 'अर्थेति, 'अर्थः' उद्देश्यः संसर्गानुमितिरिति यावत्, अस्यासिद्धेरि-त्यर्थः, अभावप्रतियोगितावच्छेदकेन हि सम्बन्धेन साध्यं साधयत्य-नुमानं ज्ञापकत्वञ्च नाभावप्रतियोगितावच्छेदकं वृत्त्यनियामकत्वा-दिति भावः। ननु वृत्तिनियमाकसम्बन्ध एव साध्यतावच्छेदकसम्बन्ध-इत्यत आह, 'प्रमापकत्व इति धर्म्मिपरो निर्द्देशः, प्रमा विशिष्टज्ञानं तज्जनके सम्बन्धे वृत्तिनियामकसम्बन्धे इति यावत्, साध्यतावच्छेदके इति शेषः, 'तेनैव' पदेनैव, 'व्यभिचारादिति पदे वृत्तिनियाम-कसम्बन्धेन पदार्थसंसर्गासत्त्वात् इत्याहुः।

मिश्रानुयायिनस्तु, ननु 'स्मारितार्थसंसर्गवन्तीत्यत्र स्मारितप-दार्थसंसर्गज्ञानजनकत्वमात्रं साध्यं एकपदार्थेऽपरपदार्थसंसर्गवति यदपरपदार्थज्ञानं तज्जनकत्वं वा आद्ये आह, 'ज्ञापकत्वेति

ज्ञानावच्छेदकतया च संसर्गसिद्धिः ज्ञानज्ञानस्य तद्विषयविषयकत्वनियमात् ।

---

ज्ञापकत्वसाध्यकानुमानसाहेनेत्यर्थः, 'अर्थेति एकपदार्थेऽपरपदार्थसंसर्गसिद्धेरित्यर्थः, प्रवर्त्तकञ्च तज्ज्ञानमिति भावः । अन्ये आहु, 'प्रमापकत्व इति एकपदार्थेऽपरपदार्थसंसर्गवति यत्तज्ज्ञानं तज्जनकत्व इत्यर्थः, साध्य इति शेषः, 'तेनैव' अनाप्तोक्तेनैवेत्याहुः[१] । तदसत्, अत्र संसर्गस्यैव साध्यत्वात् ज्ञापकत्वस्य च मत्वर्थतया साध्यतावच्छेदसम्बन्धत्वात् ।

ननु भवदुक्तानुमानाज्ज्ञापकत्वेन गृहीतं संसर्गज्ञानं सिद्ध्यतु संसर्गस्तु कथं सिद्धेत्तस्य व्यापकत्वेनागृहीतत्वादित्यत आह, 'ज्ञानावच्छेदकतयेति परामर्शे ज्ञानांशे संसर्गस्य विशेषणतावच्छेदकतया वह्निज्ञानानुमितौ वह्निवदिव[२] तज्ज्ञानमित्यर्थः । अनुमितेः संसर्गावगाहने प्रमाणान्तरमाह, 'ज्ञानज्ञानस्येति, 'तद्विषयेति ज्ञानविषययावद्विषयकत्वादित्यर्थः, यावदित्यकरणे यत्किञ्चिद्विषयविषयकत्वसिद्धावपि संसर्गविषयकत्वासिद्धेः । ननु नायं नियमः ज्ञानमितिपदजन्ये शाब्दज्ञाने आत्मा ज्ञानवान् इत्यनुमित्यादौ च व्यभिचारात् । न च विषयविशिष्टतया तज्ज्ञानावगाहिज्ञानस्य तज्ज्ञानयावद्विषयविषयकत्वमिति नियम इति वाच्यम् । घटः श्याम इति ज्ञानस्य घटज्ञानमित्यादिशब्दतो ज्ञाने

---

(१) अन्वयप्रयोजकरूपवत्त्वं योग्यतेति भावः ।

(२) वह्नित्ववदत्रेति क०, ग० ।

## संसर्गे च सम्बन्धिन एव विशेषकत्वात् ।

व्यभिचारात् । न च तज्ज्ञानविषयीभूतयावद्विषयविशिष्टतया तज्ज्ञानावगाहिज्ञानस्य तज्ज्ञानयावद्विषयविषयकत्वमिति नियम इति वाच्यम् । उक्तसंसर्गज्ञानानुमितेः संसर्गज्ञानविषयीभूतयावद्विषयविशिष्टतया संसर्गज्ञानावगाहित्वस्यैवाप्रसिद्धेः तत्रैव विवादात् । न च तज्ज्ञानयावद्विषयोपस्थितेरव्यवहितोत्तरवर्त्ति यत्तज्ज्ञानविषयकं ज्ञानं तत्तज्ज्ञानयावद्विषयविषयकमिति नियमः अनुव्यवसायादौ तथा दर्शनात् उक्तानुमित्यादौ च ज्ञानविषयस्य नोपस्थितत्वं अनुव्यवसायादौ च व्यवसायादित एव तद्विषयस्योपस्थितत्वं प्रकृते च पदार्थसंसर्गज्ञानानुमितिजनकीभूतपरामर्शेनैव पदार्थसंसर्गज्ञानयावद्विषयाणामुपस्थितत्वमिति वाच्यम् । तथाप्ययं घट इत्यादिज्ञानाव्यवहितोत्तरज्ञानवानित्यनुमित्यादौ[१] व्यभिचारादिति । मैवं, बाधकाभावे सति तज्ज्ञानविषयकं यज्ज्ञानं तत्तज्ज्ञानयावद्विषयविषयकमिति नियमात् उक्तस्थले कारणाभावादेरेव बाधकस्य सत्त्वान्न व्यभिचारः । नन्वेवमपि सम्बन्धिनः पदार्थस्य भानं कथं स्यादित्यत आह, 'संसर्गे चेति व्यापकविशेषणविशेषणीभूतसंसर्गांशे चेत्यर्थः, 'सम्बन्धिनः' पदार्थस्य, 'विशेषकत्वादिति विशेष्यतेऽनेनेति व्युत्पत्त्या परामर्शे विशेषणत्वादित्यर्थः । ननु तथापि गोत्वाभ्याजत्वादिरूपेण गवाभ्याजनादिसंसर्गसिद्धिः कथं स्यात् स्मारितपदार्थत्वादिरूपेणैव व्यापकताग्रहात् प्रवर्त्तकस्य तज्ज्ञानं[२] अत आह,

(१) ज्ञानाव्यवहितोत्तरेत्यस्य अनुमित्यादावित्यनेन सह सम्बन्धः ।

(२) तथा ज्ञानमिति ख०, ग० ।

पक्षधर्म्मताबलात् व्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य सिद्धिः। अथैवं भ्रान्तिज्ञानमपि भ्रमः स्यात्। न चेष्टापत्तिः, ईश्वरस्यापि भ्रान्तत्वापत्तेः। इदं रजतमिति भ्रमादिव शुक्तौ रजतज्ञानवानयमिति भ्रमस्य ज्ञानात् भ्रान्तिज्ञप्रवृत्त्यापत्तेश्च।

---

'पक्षधर्म्मतेति, 'व्यापकत्वेनेति तादृप्येणेत्यादिः, 'संसर्गविशेषस्येति गोत्वाभ्याजनत्वादिविशिष्टोपस्थितसंसर्गस्येत्यर्थः। असद्विषयकं ज्ञानं भ्रम इत्यभिप्रायेणाशङ्कते, 'अथैवमिति, 'एवं' ज्ञानज्ञानस्येत्यादिनियमे, 'भ्रान्तीति भ्रमस्य ज्ञानमित्यर्थः, 'भ्रमः स्यादिति उक्तव्याप्तिबलाद्भ्रमविषययावद्विषयकत्वेन तस्यापि भ्रमविषयीभूतासद्वैशिष्ट्यविषयकत्वादिति भावः। भ्रमस्येव तज्ज्ञानस्यापि भ्रमत्वे न कश्चिद्दोष इत्याशयवतः संशयं निराकरोति, 'न चेति, 'ईश्वरस्येति, तस्य सर्वज्ञत्वेन सर्वभ्रमविषयकज्ञानवत्त्वादिति भावः। ननु बाधकाभावे सतीति विशेषणादेव नेश्वरज्ञानस्य भ्रमत्वं तस्य सन्मात्रविषयकत्वेनैव धर्मिग्राहकप्रमाणेन सिद्धेरित्यस्वरसादाह, 'इदं रजतमिति, 'शुक्ताविति, 'प्रवृत्त्यापत्तेरित्यनेनान्वितं, 'ज्ञानात्' भ्रमानुव्यवसायात्, 'भ्रान्तिज्ञेति भ्रान्तिज्ञपुरुषस्येत्यर्थः। भ्रमविषययावद्विषयकत्वेनोभयोरप्यविशेषादिति भावः। एतदप्यापाततः, रजतज्ञानवानयमितिज्ञानेन रजतत्वविशिष्टेदंविषयकज्ञानवानयमिति ज्ञानं विवक्षितं, इदंविशेष्यकरजतत्वप्रकारकज्ञानवानिति ज्ञानं वा, आद्ये प्रवृत्ताविष्टापत्तिरेव तस्यापि शुक्तौ रजतत्वप्रकारकत्वेन भवतापि

ततः प्रवृत्तिस्वीकारात्, अन्ये तस्य भ्रमविषययावद्विषयकत्वेऽपि इष्ट-तावच्छेदक-प्रवृत्तिविषययोर्वैशिष्ट्यानवगाहित्वेन तस्मात् प्रवृत्त्यापादन-मसङ्गतं। न चेष्टतावच्छेदक-प्रवृत्तिविषययोरसद्वैशिष्ट्यस्यापि यावद-न्तर्गतत्वेन तदवगाहित्वमस्त्येवेति वाच्यम् । तथापि प्रवृत्तिविषये इष्टतावच्छेदकाप्रकारकत्वात्[१] तस्मात् प्रवृत्त्यापादनासम्भवात् तादृ-शज्ञानस्यैव प्रवर्त्तकत्वात् । अथ इष्टतावच्छेदक-प्रवृत्तिविषयवैशि-ष्ट्यावगाहित्वेन प्रवर्त्तकत्वमित्यभिमानेन प्रवृत्त्यापादनं, किञ्च उक्तव्या-प्यङ्गीकारे भ्रमानुव्यवसायेऽसद्वैशिष्ट्यमवश्यं विषयः तच्च संसर्गमर्य्या-दयैव भविष्यति अन्यरूपेणासतो भानानङ्गीकारात् तथाच प्रवृत्ति-विषये इष्टतावच्छेदकप्रकारकत्वमस्त्येवेति चेत् ।न। तादृशव्याप्त्यन-ङ्गीकर्तृमतेऽपि तादृशभ्रमानुव्यवसायात् प्रवृत्तेर्दुर्वारत्वात् वैशिष्ट्य-विषयकत्वप्रयोजकव्यवसायरूपप्रत्यासत्तेः सम्भवात् तन्मतेऽप्यवश्यम-नुव्यवसायस्य वैशिष्ट्यविषयकत्वात् प्रवृत्तिविषये इष्टत्तावच्छेदकवि-शिष्टबुद्ध्यर्व्यवसायादिरूपसामग्रीसत्त्वेन प्रवृत्तिविषये इष्टतावच्छेदक-प्रकारकत्वाच्च । न च शुक्तीरजतत्वाभाववतीतिबाधबुद्ध्युत्तरं भ्रमा-नुव्यवसायात् प्रवृत्तिरापाद्यते अस्मन्मते तत्र प्रतिबन्धकसत्त्वेनानु-व्यवसाये शुक्तौ न रजतत्वं प्रकारः तन्मते ज्ञानज्ञानस्येति नियम-बलेनावश्यं रजतत्ववैशिष्ट्यं भासते[२] तच्च संसर्गमर्य्यादया नान्यप्रका-रेण सम्भवतीति तस्य प्रवृत्तिविषये रजतत्वप्रकारत्वादिति वाच्यम् । तन्मतेऽपि बाधकाभावे सतीति विशेषणसद्भावात्तत्र रजतत्ववैशि-

---

(१) इष्टतावच्छेदकप्रकारकत्वाभावादिति ख०, ग० ।

(२) रजतत्ववैशिष्ट्यविषयकत्वमिति ख०, ग० ।

**यत्तु भ्रमविषयविषयकत्वेन न भ्रमत्वं[1] भ्रमविषयाणां[2] सिद्ध्यसिद्धिपराहतत्वात् इति, तच्च वक्ष्यामः ।**

---

ष्यविषयकत्वात् बाधबुद्धिरूपबाधकसद्भावात्, अतएव शुक्तिविशेष्यक-रजतत्वप्रकारकज्ञानवानयमिति शाब्दादिज्ञानात् प्रवृत्तिरापाद्यते तत्रास्मन्मते शुक्तौ रजतत्ववैशिष्ट्योपस्थापकपदाभावात् शुक्तौ न रजतत्ववैशिष्ट्यं विषयः तन्मते च व्याप्तिबलेनावश्यं तस्य विषयत्वादित्यपि परास्तं, तत्रापि कारणाभावरूपबाधकसद्भावादिति सङ्क्षेपः ।

'अथैवमिति पूर्वपक्षे असद्विषयकत्वमेव भ्रमत्वमिति स्वीकुर्वतो वैशेषिकैकदेशिनः सिद्धान्तमुपन्यस्य दूषयति,[3] 'यत्त्वित्यादिना, अन्यथा 'अथैवमिति पूर्वपक्षिणं प्रति यत्त्वित्यादिनाक्षेपे 'तच्च वक्ष्याम-इत्यस्याननुगुणतापत्तेः 'अथैवमिति पूर्वपक्षिणाऽग्रे सिद्धान्तानभिधानात् तदुपरि दोषाभिधाने तस्यैव सिद्धान्तकरणौचित्यादित्यवसेयम्[4] । 'भ्रमविषयविषयकत्वेन' भ्रमविषययावद्विषयकत्वेन, 'न भ्रमत्वं', आपादयितुं शक्यमिति शेषः, 'सिद्ध्यसिद्धीति भ्रमविषयाणां यावतां सत्त्वासत्त्वाभ्यामित्यर्थः, 'पराहतत्वादिति आपादनस्य व्याहतत्वादित्यर्थः, भ्रमविषयाणां यावतां सत्त्वे तद्विषयकत्वेन कथं

---

(१) भ्रमविषयविषयकत्वेनाभ्रमत्वमिति क० ।

(२) भ्रमविषयस्येति ख० ।

(३) सिद्धान्त्येव दूषयतीति क० ।

(४) अन्यथेत्यादिरवसेयमित्यन्तः पाठः ख०-ग०चिह्नितपुस्तकद्वये नास्ति ।

**नैवं, असद्विषयकत्वेन न भ्रमत्वं[१] भ्रमविषयाणां**

---

भ्रमत्वमापादनीयम् सन्मात्रविषयकत्व-भ्रमत्वयोर्विरोधात्, असत्त्व-श्चेत्तथापि असत आपादकतावच्छेदककोटिप्रविष्टत्वेन आपादक-तावच्छेदकप्रकारकापादकज्ञानाभावादापादनासम्भवात् असतः संस-र्गमर्य्यादयैव भानाङ्गीकारादिति भावः । यद्वा असत्त्वञ्चेत्तदा तद्विषयकत्वमप्यसदेव तथाच तेन कथमापादनीयं असति व्याप्य-भावेनापादकत्वस्यानुमापकत्वस्य वा असम्भवादिति भावः । 'तत्र' व्याघातरूपायां समाधानयुक्तौ,[२] 'वक्ष्याम इति दूषणमित्यादिः, 'नैवमित्यादिना असद्विषयकत्वस्य भ्रमरूपतानिराकरणावसरेऽनु-पदमेवेत्यर्थः, एतत्समाधानं तदा सम्भवति यद्यसद्विषयकत्वं भ्रमत्वं भवति अन्यथा सन्मात्रविषयकत्व-व्यधिकरणप्रकारकत्वरूपप्रमात्व-भ्रमत्वयोः[३] विरोधाभावेनैतत्समाधानासम्भवात् तस्यैव दूषणी-यत्वादिति भावः । 'असद्विषयकत्वेनेति, धान्येन धनवानित्यादा-विवाभेदे तृतीया, 'भ्रमत्वं' भ्रमपदप्रवृत्तिनिमित्तं, तथाच भ्रम-पदप्रवृत्तिनिमित्तं नासद्विषयकत्वरूपमिति समुदितार्थः ।

केचित्तु 'भ्रमत्वं' भ्रमपदप्रयोज्यत्वं, तृतीयार्थोऽवच्छिन्नत्वं, तथाच भ्रमपदप्रयोज्यत्वं नासद्विषयकत्वावच्छिन्नमिति समुदितार्थं इत्याहुः ।

'भ्रमविषयाणामिति, शुक्ति-रजतत्व-तद्वैशिष्ट्यानां सर्वेषां पार-

---

(१) असद्विषयकत्वेनाभ्रमत्वमिति ख० ।

(२) 'तत्र' व्याघातरूपायां समाधानयुक्ताविप्ययं पाठः ख०-ग०चिह्नित-पुस्तकद्वये नास्ति ।

(३) सन्मात्रविषयकत्व-भ्रमत्वयोरिति ख०, ग० ।

सत्त्वात् किन्तु व्यधिकरणप्रकारकत्वेन । न च भ्रमस्य ज्ञाने व्यधिकरणं प्रकारः, रजतत्वप्रकारकत्वस्य भ्रमेऽपि सत्त्वात् अन्यथा भ्रान्त्युच्छेदः[१] प्रमाणाभा-

---

मार्थिकत्वादित्यर्थः । नन्वेवं सद्विषयकत्वेऽपि रजतत्वभ्रमस्य यथा भ्रमत्वं तथा रजतत्वभ्रमविषयकज्ञानस्यापि भ्रमत्वमस्त्वित्यत आह, 'किन्त्विति, 'व्यधिकरणेति विशेष्यताव्यधिकरणेत्यर्थः, अत्रापि तृतीया पूर्ववत् । ननु व्यधिकरणप्रकारकत्वे भ्रमत्व एव भ्रमस्य ज्ञानं कथं न भ्रम इति तटस्थाशङ्कायामाह, 'न चेति, 'व्यधिरणं प्रकार इति । न च प्रतियोगिवाचकपदस्य[२] अनुयोगिवाचकपद-समानलिङ्गकत्वनियमात् व्यधिकरणमित्यत्र नपुंसकलिङ्गकत्व-मनुपपन्नं प्रकार इत्यस्य पुंलिङ्गकत्वादिति वाच्यम् । अत्रापि व्यधिकरणमित्येवानुयोगि व्यधिकरणमुद्दिश्य प्रकारभेदविधाना-दतः सामान्यतो नपुंसकलिङ्गत्वमेवोचितं प्रकारशब्दस्य च अज-हल्लिङ्गकत्वान्न नपुंसकलिङ्गत्वमिति भावः । 'रजतत्वप्रकारकत्वस्येति भ्रमस्य ज्ञाने प्रकारीभूतस्य रजतत्वप्रकारकत्वस्येत्यर्थः, शुक्तिविशेष्यक-त्वस्य चेत्यपि बोध्यं, 'अन्यथा' रजतत्वप्रकारकत्वस्य भ्रमेऽसत्त्वे, 'भ्रान्तीति रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वाश्रय-ज्ञानोच्छेद इत्यर्थः, 'प्रमाणाभावादिति, 'प्रमाणं' प्रमा, तस्यां रज-

---

(१) भ्रमोच्छेद इति क० ।

(२) प्रतियोगित्वमनुयोगित्वञ्चान्वयबोधस्य अन्वयस्याभेदः स च प्रकारस्येति भावः ।

**वात्। ननु प्रतारकवाक्ये व्यभिचारः विशेषदर्शनेन तत्र संसर्गज्ञानाभावात्। न च संसर्गमप्रतीत्य वाक्य-**

---

त्वाभाववद्विशेष्यकत्वाच्छिन्नरजतत्वप्रकारकत्वाभावादित्यर्थः, भ्रम-प्रमातिरिक्तं च विशिष्टज्ञानमप्रसिद्धमिति भावः[१]।

केचित्तु 'अन्यथा' भ्रमविषयकज्ञानमात्रे शुक्त्यादौ रजतत्वादेर्व्यधिकरणस्य प्रकारत्वे, 'भ्रान्तीति रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकज्ञानोच्छेद इत्यर्थः, 'प्रमाणेति, तथा सति भ्रम-ग्राहकस्य सर्वस्यैव ज्ञानस्य शुक्त्यादौ रजतत्वादिवैशिष्ट्यावगाहित्वेन शुक्त्यादौ तदभाववत्त्वावगाहनासम्भवेन रजतत्वाभाववति शुक्त्यादौ रजतत्वप्रकारकत्वरूपभ्रान्तित्वावगाहनासम्भवादिति भाव इत्याहुः।

अन्ये तु 'अन्यथा' असद्वैशिष्ट्यविषयकत्वस्य भ्रमत्वरूपत्वे, 'भ्रान्त्युच्छेदः' भ्रममात्रस्यैवोच्छेदः, 'प्रमाणेति, ज्ञानज्ञानस्येत्यादिव्याप्तिबलात् भ्रान्तिग्राहकस्य सर्वस्यैवासद्वैशिष्ट्यविषयकतया भ्रमत्वेन विषयासाधकत्वादिति भाव इत्याहुः। तदसत्, शुक्तौ रजतत्वस्यासद्वैशिष्ट्यविषयकत्वेऽपि भ्रमांशे भ्रमत्वांशे च प्रमात्वानपायादिति सङ्क्षेपः।

'ननु प्रतारकेति वस्तुगत्या घटवति भूतले परप्रतारणेच्छया प्रयुक्ते घटाभाववद्भूतलमिति विसम्वादिवाक्ये इत्यर्थः, तेन 'भ्रान्तप्रकारकवाक्ये च व्यभिचार इत्यग्रिमग्रन्थेन न पौनरुक्त्यमिति ध्येयं, 'विशेषेति प्रतारकस्य वक्तुर्घटवद्भूतलमिति स्वस्य निश्चयसत्त्वेनेत्यर्थः, 'संसर्गेति घटाभाव-भूतलयोः संसर्गज्ञानाभावादित्यर्थः।

---

(१) विशिष्टेत्यनेन निर्व्विकल्पकज्ञानव्यावृत्तिः तथाच भ्रम-प्रमातिरिक्तस्य निर्विकल्पकज्ञानस्य प्रसिद्धत्वेऽपि न क्षतिः।

**रचना न सम्भवतीत्याहार्य्यं तस्य संसर्गज्ञानं सम्भवतीति[१] वाच्यं। तावत्पदज्ञानादेव शुकस्येव वाक्यरच-**

---

न च बाधाभावरूपयोग्यताविशेषितहेतोस्तत्राभावात् कथं व्यभिचार इति वाच्यम्। 'योग्यताविरहाच्चेत्यनेनास्य दोषस्याग्रे स्वयमेव वक्ष्यमाणत्वात्।

केचित्तु अन्वयप्रयोजकरूपवत्त्वं योग्यता हेतौ प्रविष्टेति भ्रमेणाशङ्कते, 'नन्विति, तथाच 'प्रतारकवाक्ये' इत्यस्य करकाकरणकोन सेक इति जानानेन परस्य करकाकरणकत्वेन सेकबोधो भवत्विति प्रतारणेच्छया प्रयुक्ते पयसा सिञ्चतीति वाक्ये इत्यर्थः, अग्रे च बाधाभावरूपयोग्यता हेतौ प्रविष्टेत्यभिप्रायेण 'योग्यताविरहाच्चेति समाधास्यत इत्याहुः।

'संसर्गं' एकपदार्थेऽपरपदार्थसंसर्गं, 'वाक्यरचना' वाक्योद्देश्यकप्रवृत्तिः, 'आहार्य्येति, तस्याप्रतिबध्यत्वादिति भावः। यद्यपि आहार्य्यज्ञानसत्त्वेऽपि प्रमापूर्व्वकत्वपर्य्यवसायिसाध्यविरहाद्व्यभिचारस्तदवस्थ एव, तथापि स्फुटत्वात् तदुपेक्ष्य दूषणान्तरमाह, 'तावत्पदेति सुखादिरूपेष्टसाधनतया आनुपूर्वीज्ञानादेवेत्यर्थः, वाक्यार्थज्ञानं विनापीति शेषः। ननु पद्याद्यतिरिक्तस्य वाक्यानुकूलकृतौ वाक्यार्थज्ञानरूपेष्टसाधनताज्ञानमेव हेतुरिति स्वविषयकज्ञानेच्छाद्वारा प्रतारणास्थलेऽपि वाक्यार्थज्ञानमवश्यमपेक्षि-

---

(१) तस्य संसर्गस्य ज्ञानमस्तीतीति क०।

नोपपत्तेः। अन्यथापि तस्यैव तन्त्रत्वादिति चेत्, न, एतद्वाक्यमेतस्य पदार्थसंसर्गं बोधयिष्यतीत्याशयेन वाक्यप्रयोगात् तस्यापि संसर्गज्ञानात् योग्यताविरहाच्च। अतएव विसम्वादिवाक्ये शुकवदुच्चरिते न

तमित्यत आह, 'अन्यथापीति पक्षि-पशुभिन्नस्य मूर्ख-बालकादेर्वाक्यानुकूलज्ञतात्वपीत्यर्थः, 'तस्यैव' सुखादिरूपेष्टसाधनत्वेनानुपूर्वीज्ञानस्यैव। 'आशयेनेति इच्छयेत्यर्थः। अन्यथाज्ञातार्थस्यान्यथावुबोधयिषाया:[१] प्रतारणत्वादिति भावः। 'तस्यापि' प्रतारकस्यापि, 'संसर्गज्ञानादिति पदार्थानां[२] परस्परसंसर्गज्ञानादित्यर्थः, संसर्गबोधनेच्छां प्रति संसर्गज्ञानज्ञानद्वारा संसर्गज्ञानस्यापेक्षितत्वात् संसर्गज्ञानं विना प्रतारणाया असम्भवादिति भावः। न च विशेषदर्शनसत्त्वात् कथं संसर्गज्ञानमिति वाच्यं। आहार्य्यसंसर्गज्ञानस्य यथाकथञ्चित् संसर्गज्ञानस्य[३] च तत्सत्त्वेऽपि सम्भवात्। न च तथापि संसर्गज्ञानजन्यत्वं नास्त्येवेति व्यभिचार इति वाच्यं। संसर्गज्ञानपूर्व्वकत्वमात्रस्य साध्यत्वादित्यभिप्रायात्। ननु तथापि प्रमापर्य्यवसायिसाध्यविरहाद्व्यभिचार एवेत्यस्वरसादाह, 'योग्यतेति, बाधविरह एव योग्यता हेतौ प्रविष्टेति भावः। 'अतएव' हेतौ बाधाभावरूपयोग्यताविशेषणादेव, 'शुकवदुच्चरित इति एकपदार्थे-

(१) एकप्रकारेण ज्ञातार्थस्य प्रकारान्तरेण ज्ञापनेच्छाया इत्यर्थः।

(२) प्रकृतपदार्थानामिति क०।

(३) लौकिकाप्रामाण्याश्रयस्येत्यर्थः।

**व्यभिचारः। शब्दात् संसर्गप्रत्ययस्तु योग्यताभ्रमात्। अथ संसर्गज्ञानं विना शुकस्यान्यस्य वा सम्वादि-**

ऽपरपदार्थसंसर्गज्ञानवदन्येनोच्चरित इत्यर्थः। यद्यपि तादृशयोग्यताविशेषणानुपादाने प्रमापर्य्यवसायिसाध्यविरहेऽपि तत्तात्पर्य्यक-विसम्वादिवाक्यमात्र एव व्यभिचारो भवतीति शुकवदुच्चरितं-त्वपर्य्यन्तानुधावनं व्यर्थं, तथापि तादृशवाक्ये एकपदार्थेऽपर-पदार्थज्ञानमात्रपूर्वकत्वसाध्येऽपि व्यभिचारः सम्भवतीति तावत्प-र्य्यन्तानुधावनं। न च तथापि शुकोच्चरिते इत्यस्यैव सम्यक्त्वाच्छु-कवदिति व्यर्थमेवेति वाच्यम्। शुकोच्चरिते तात्पर्य्यगर्भहेतुभावेन व्यभिचारासम्भवात् पुंवचसि तु एकपदार्थेऽपरपदार्थसंसर्गज्ञाना-भावेऽपि इदं वाक्यं सेक-वह्निकरणत्व-संसर्गाणां ज्ञानं जनयत्विति सामान्यतस्तात्पर्य्यसम्भवादिति भावः। ननु यदि तत्र न योग्यता तर्हि कदाचित् कथं तत्र संसर्गप्रत्ययः हेत्वभावादित्यत आह, 'शब्दादिति, प्रयोजकत्वे पञ्चमी, 'योग्यताभ्रमादिति, हेतु-भ्रमादनुमितिरिति भावः। 'संसर्गज्ञानं विनेति अपरपदार्थे एकपदार्थसंसर्गज्ञानं(१) विनेत्यर्थः, उच्चरिते इति शेषः। शुकवाक्ये तात्पर्य्यघटितहेतुभावाद्व्यभिचारो न सम्भवतीत्यत आह, 'अन्यस्य वेति, तत्रापि अपरपदार्थे एकपदार्थसंसर्गज्ञानाभावेऽपि इदं वाक्यं भूतल-घट-संसर्गाणां ज्ञानं जनयत्विति सामान्यतस्ता-त्पर्य्यं सम्भवतीति बोध्यम्। 'भ्रान्तेति वस्तुगत्या घटाभाववति भूतले घटवद्भूतलमिति भ्रान्तेन प्रतारणेच्छया प्रयुक्ते घटा-

(१) एकपदार्थेऽपरपदार्थसंसर्गज्ञानमिति ख०।

**वाक्ये भ्रान्तप्रतारकवाक्ये च व्यभिचारः कथं वा तत्र संसर्गप्रमा वक्तृज्ञानानुमानासम्भवादिति[१] चेत्। न। यदि तत्र संसर्गप्रमा तदा वेदतुल्यतेत्युक्तं।**

---

भाववद्भूतलमिति वाक्ये इत्यर्थः, योग्यतावत्त्वलाभाय 'भ्रान्तेति, 'व्यभिचार इति प्रकृतैकपदार्थसंसर्गवत्प्रकृतापरपदार्थज्ञानपूर्वकत्वाभावादिति भावः। न च भ्रान्तप्रतारकवाक्ये कथं व्यभिचारः अन्यथा ज्ञातार्थस्यान्यथा बुबोधयिषात्मिकायाः[२] प्रतारणायाः संसर्गज्ञानजन्यत्वनियमेन प्रतारणान्यथानुपपत्त्या एकपदार्थसंसर्गवद्परपदार्थज्ञानस्याहार्य्यस्यापि विषयाबाधात् प्रमारूपस्यावश्यकत्वात् सामान्यतस्तादृशपदार्थज्ञानपूर्वकत्वस्यैव साध्यत्वादिति वाच्यम्। साध्ये स्वारसिकज्ञानस्य प्रमात्वेन विवक्षितत्वात् काकतालीयसम्वादत्वादाहार्य्यज्ञानस्य प्रमाणान्तरफलत्वात्। यद्वा[३] 'भ्रान्तप्रतारकवाक्ये इत्यस्य भ्रान्तप्रतारकस्यैव वाक्यं इति व्युत्पत्त्या करणापाटवजन्यवाक्य इत्यर्थादिति मन्तव्यं। 'तत्र' तेषु स्थलेषु, 'संसर्गप्रमा' संसर्गज्ञानं, प्रमात्वपर्य्यन्तानुधावनस्य व्यर्थत्वात्, 'वक्तृज्ञानेति, बाधादिति भावः। 'वेदतुल्यतेति वेदे यथा ईश्वरीयसंसर्गप्रमापूर्वकत्वमादाय साध्यसत्त्वं तथा प्रकृतेऽपीत्यर्थः, यदि न संसर्गप्रमा तदा एतद्वाक्यजन्यप्रतीत्यप्रसिद्ध्या तात्पर्य्यघटितहेतुभावादेव न

---

(१) क्लृप्तवक्तृज्ञानानुमानासम्भवादितीति क०।

(२) अन्यार्थबुबोधयिषात्मिकाया इति ख०।

(३) साध्य इत्यादिः यद्वेत्यन्तः पाठः ख-ग-चिह्नितपुस्तकद्वये नास्ति।

आकाङ्क्षा-योग्यतासत्तिश्च ज्ञातोपयुज्यते, अन्यथा शाब्दभ्रमानुपपत्तेरिति। उच्यते। अर्थज्ञानं प्रवर्त्तकं

---

व्यभिचार इति भावः। 'उक्तमिति प्रत्यक्षखण्डे उत्पत्तिवादे इत्यर्थः। ननु आकाङ्क्षादिज्ञानं विनापि शब्दश्रवणानन्तरमनुभवसिद्धः पदार्थसंसर्गबोधः स वैशेषिकमते कथं स्यात् हेतुविशेषणीभूताकाङ्क्षाद्यज्ञानेनानुमानासम्भवात् अतः शब्दोऽवश्यं मानान्तरमङ्गीकार्य्यं इत्यत आह, 'आकाङ्क्षेति, भवन्मतेऽपि शाब्दबोधे इति शेषः। 'अन्यथेति यदि ताः स्वरूपसत्यः शाब्दधीकारणानीत्यर्थः,[१] 'शाब्देति शाब्दबोधस्याकाङ्क्षादिभ्रमेणानुपपत्तेरित्यर्थः, स्वरूपसदाकाङ्क्षादेरभावादिति भावः। यथाश्रुतन्तु न सङ्गच्छते योग्यतायाः स्वरूपसदुपयोगित्वे शाब्दभ्रमानुपपत्तावपि आकाङ्क्षासत्त्योः स्वरूपसदुपयोगित्वे तद्विरहात् वह्निना सिञ्चतीत्यादौ शाब्दभ्रमस्थलेऽपि स्वरूपसत्योस्तयोः सत्त्वादिति ध्येयम्। तस्मादनेनैव प्रकारेण सर्वत्र शब्दात् संसर्गबोधो भविष्यति किं शब्दस्य प्रमाणान्तरत्वेनेति वैशेषिकाणां पूर्वपक्षः तत्र गूढाभिसन्धिः समाधानमाह, 'अर्थज्ञानमिति इदन्त्वावच्छिन्ने तादात्म्यसम्बन्धेन रजतप्रकारकं ज्ञानमित्यर्थः, 'प्रवर्त्तकं' इदं रजतं न वेत्यादिसंशयाभावप्रयोजकं, तादृशसंशयप्रतिबन्धकमिति यावत्, यथाश्रुतन्तु न सङ्गच्छते रजतादिनिष्ठेष्टसाधनतादिज्ञानस्य उपादानप्रत्यक्षविधया इदं रजतमित्यादिप्रत्यक्षस्य च प्रवृत्तेर्हेतुत्वेनेदं

---

(१) शाब्दधीकारणानीति शेष इति क०।

न तु तज्ज्ञानज्ञानं गौरवात् व्यभिचाराच्च, अतो रजतज्ञानवानयमिति ज्ञानं न प्रवर्त्तकं किन्त्विदं रजतमिति ज्ञानं, इदमपि ज्ञानं रजतविषयकमिति

---

रजतमित्यादिवाक्यजन्यशाब्दबोधस्य क्वापि प्रवृत्त्यनुपधायकत्वात्। यद्वा 'प्रवर्त्तकं' तादात्म्यसम्बन्धेन रजतादिप्रकारकप्रवृत्तिस्वरूपयोग्यमित्यर्थः, तथाच प्राचान्नये तद्विशेष्यक-तत्संसर्गक-तत्प्रकारक-प्रवृत्तित्वावच्छिन्नं प्रति तादृशज्ञानत्वेन शाब्दबोधादिसाधारणेन सामान्यतः कार्य्य-कारणभावान्तराभ्युपगमाच्छाब्दबोधोऽपि तादृश-प्रवृत्तिस्वरूपयोग्य इति नाशङ्कितिः, एवमग्रेऽपि। 'न तु तज्ज्ञान-ज्ञानमिति न तु तादृशज्ञानज्ञानमित्यर्थः, 'व्यभिचाराच्चेति तादृशज्ञानज्ञानसत्त्वेऽप्युक्तसंशयोत्पादाच्चेत्यर्थः, यद्वाकल्पे इदं रजत-मित्याद्यभेदप्रत्यक्षाज्जायमानायां प्रवृत्तौ व्यभिचाराच्चेत्यर्थः। सामान्यत उक्तमर्थं[१] प्रकृते योजयति, 'रजतज्ञानेति रजतपदार्थसंसर्ग-वदिदम्पदार्थज्ञानवानित्यानुमानिकं ज्ञानमित्यर्थः, ज्ञानवानयमि-त्यभिधानन्तु आकाङ्क्षादिमद्वाक्यप्रयोक्तृत्वलिङ्गकपुरुषपक्षकानुमाना-भिप्रायेण, प्रकृते तु तादृशज्ञानपूर्वकमिदमिति बोध्यम्, 'इदं रजतमिति इदं रजतमित्याकारकं ज्ञानमित्यर्थः, अर्थज्ञानं प्रवर्त्त-कमित्यत्रार्थज्ञानपदेन रजतविषयकं ज्ञानमुक्तमिति भ्रमेणाशङ्कते, 'इदमपीति, संसर्गविशेषणतया रजतपदार्थत्वरूपेण रजतस्यापि

---

[१] सामान्यत उक्तेति ख०, ग०।

**चेत्, सत्यं, न तु रजतत्वप्रकारकं प्रवर्त्तकञ्च तथा, अन्यथा भ्रान्तस्येव भ्रान्तिज्ञस्यापि प्रवृत्तिप्रसङ्गः**

भानादिति भावः। भ्रमन्निराकरोति, 'सत्यमिति, 'न तु रजतत्व-प्रकारकमिति न तु रजतत्वात्मकतादात्म्यसम्बन्धेन इदन्त्वावच्छिन्ने रजतप्रकारकमित्यर्थः, यथाश्रुते 'किञ्चेत्यादिना वक्ष्यमाणेन पौन-रुक्त्यापत्तेः, तथाच इदं रजतमित्यादिवाक्यश्रवणानन्तरमिदं रजतं न वेति संशयाभावस्यानुभवसिद्धतया तत्प्रतिबन्धकीभूतज्ञा-नस्यावश्यकं तच्चोक्तानुमानान्न निर्वहतीति तन्निर्वाहाय शब्दस्य मानान्तरत्वं। यद्वा इदं रजतमित्यादिवाक्यश्रवणानन्तरं तादा-त्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यं ज्ञानं सर्वसिद्धं तच्चो-क्तानुमानान्न निर्वहतीति तदर्थं शब्दस्य मानान्तरत्वमिति भावः।

केचित्तु 'न तु रजतत्वप्रकारकमिति न त्विदन्त्वावच्छिन्ने समवायसम्बन्धेन रजतत्वप्रकारकमित्यर्थ इत्याहुः, तदसत्, तथा सति न्यायनयेऽपि इदं रजतमिति वाक्यात् तादृशशाब्दबोधा-सम्भवादसामञ्जस्यापत्तेरिति[१] ध्येयं।

ननु ज्ञानं यत्र यत्र यद्यत्प्रकारकं ज्ञानज्ञानमपि तत्र तत्प्रकारकमिति[२] नियमादुक्तानुमानमपीदन्त्वावच्छिन्ने तादात्म्य-सम्बन्धेन रजतप्रकारकमित्यत आह, 'अन्यथेति तादृशनियम-इत्यर्थः, 'भ्रान्तस्येव' इदं रजतमिति भ्रमस्येव, 'भ्रान्तिज्ञस्य' तादृ-शभ्रमविषयकज्ञानमात्रस्य, 'प्रवृत्तिप्रसङ्गः' निरुक्तसंशयप्रतिबन्ध-

(१) असङ्गतत्वापत्तेरितीति ख०, ग०।

(२) तत्र तत्तत्संसर्गक-तत्तत्प्रकारकमितीति क०।

तदुभयसङ्करापत्तिश्च[१] । एतेन लक्षणाद्यनुरोधा-त्तात्पर्य्यग्रहो वाक्यार्थधीहेतुः तात्पर्य्यञ्च पदार्थसंसर्ग-विशेषप्रतीत्युद्देश्यकत्वं, तथाच तद्ग्राहकानुमानादेव तात्पर्य्यज्ञानावच्छेदकतया संसर्गसिद्धिरित्यपास्तं[२] ।

---

प्रसङ्गः निरुक्तसंशयप्रतिबन्धकरूपफलोपहितत्वप्रसङ्ग इति यावत्, यद्वा-कल्पे 'प्रवृत्तिप्रसङ्गः' निरुक्तप्रवृत्तिस्वरूपयोग्यत्वप्रसङ्गः, 'तदुभयेति भ्रमविषयकेश्वरज्ञान-भ्रमयोरभेदापत्तिरित्यर्थः, उभयोरेव व्यधिक-रणप्रकारकज्ञानत्वादिति भावः । 'एतेन' इदन्त्वावच्छिन्ने तादात्म्य-सम्बन्धेन रजतप्रकारकज्ञानस्यैव इदं रजतं न वेति संशयप्रतिबन्धकत्वेन तादृशज्ञानस्यैव तादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यत्वेन वा, 'इति परास्तमित्यग्रेतनेनान्वयः, 'लक्षणादीति लक्षणादिस्थले शाब्दबोधे विनिगमकानुरोधेनेत्यर्थः, 'आदिना नानार्थश्लिष्टपरिग्रहः, तात्पर्य्यग्रहस्याहेतुत्वे यष्टीः प्रवेशयेत्यादौ लाक्षणिकस्थले यष्टिधरस्य लाक्षणिकार्थस्यैवान्वयबोधः न तु शक्यार्थस्येत्यत्र विनिगमकाभावापत्तेः एवं भोजनसमये सैन्धवमानयेत्यादिप्रयुक्ते लवणस्यैवान्वयबोधो न तु अश्वस्येत्यत्रापि विनिगमकाभावापत्तेश्चेति भावः । 'संसर्गप्रतीत्युद्देश्य-कत्वमिति[३] एकपदार्थेऽपरपदार्थसंसर्गप्रतीतीच्छयोच्चरितत्वमित्यर्थः, 'तात्पर्य्यज्ञानावच्छेदकतया' तात्पर्य्यघटकज्ञानावच्छेदकतया, 'संसर्ग-

---

(१) तद्द्वयसङ्करापत्तिश्चेति क०, ख० ।

(२) इति परास्तमित्यपि पाठान्तरं ईदृशपाठ एव टीकाकारसम्मत इति ।

(३) 'पदार्थसंसर्गविशेषप्रतीत्युद्देश्यकत्वं' इत्यत्र 'संसर्गप्रतीत्युद्देश्यकत्वं' इति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य ईदृशः पाठो धृतो मथुरानाथेनेति सम्भाव्यते ।

किञ्च व्यापकतावच्छेदकप्रकारिकानुमितिरतः[१] स्मारितपदार्थसंसर्गज्ञानपूर्व्विकाणीत्यनुमितिः स्यात् न तु

सिद्धिरिति, अतः किं शब्दस्य प्रमाणान्तरत्वेनेति शेषः, अन्यथा संसर्गसिद्धेरनपास्तत्वेनाशक्यताऽपातात्, 'परास्तमिति, इदं रजतं न वेति संशयप्रतिबन्धकज्ञानस्य तादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यज्ञानस्य वा अतोऽसम्भवादिति भावः। ननु तथापि निरुक्तसंशयप्रतिबन्धकत्वं निरुक्तप्रवृत्तिस्वरूपयोग्यत्वं वा न तावदिदन्त्वावच्छिन्नविशेष्यक-तादात्म्यसंसर्गकरजतप्रकारकज्ञानत्वेन अपि तु इदन्त्वाश्रय-रजतयोरभेदसंसर्गावगाहिज्ञानत्वेन अस्य सामान्यधर्म्मत्वेन लघुत्वादत एव इदं-रजतयोरभेदः अत्र रजताभेद इत्यादिज्ञानस्यापि तादृशसंशयप्रतिबन्धकत्वं तादृशप्रवृत्तिस्वरूपयोग्यत्वञ्चेति मन्यते तन्मते शब्दस्य प्रमाणान्तरत्वमनर्थकमेव उक्तानुमानादपि तादृशज्ञाननिर्वाहादित्यरुचेराह, 'किञ्चेति, 'व्यापकतावच्छेदकेति व्यापकतावच्छेदकत्वेन गृहीतधर्मप्रकारिकैवेत्यर्थः, 'स्मारितपदार्थेति एतद्रजतपदस्मारितार्थसंसर्गवदेतदिदम्पदस्मारितार्थज्ञानपूर्वकाणीत्यर्थः, 'न तु रजतज्ञानेति न तु रजताभेदवदिदंज्ञानेत्यर्थः, तथाच येनेदन्त्वाश्रय-रजतयोरभेदसंसर्गावगाहिज्ञानत्वेनेदं रजतं न वेति संशयप्रतिबन्धकत्वं तादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यत्वं वा अभ्युपगम्यते तेनापि रजतांशे निरवच्छिन्नरजतत्वप्रकारितानिरूपिता अभेदसंसर्गांशे चाभेदत्वातिरिक्त-

(१) तत इति ख०।

**रजतज्ञानपूर्व्वकाणीति तस्मात् प्रवर्त्तकं ज्ञानं शब्दादेव। अतएव प्रवृत्त्यर्थमनुवादकता शब्दस्येत्यपास्तं[१]।**

---

प्रकारित्वानिरूपिता या इदं रजताभेदवदिति धीविषयिता सैवावच्छेदककोटौ प्रवेशनीया, अन्यथा प्रमेयवत् पदार्थवत्प्रमेयसंसर्गवत् पदार्थसंसर्गवत् रजतीयप्रमेयवत् रजतीयजातिमदित्यादिज्ञानस्याप्युक्तसंशये प्रतिबन्धकत्वापत्तेः प्रकृतानुमानाच्च तत्र वृत्तं रजतत्वरूपेण रजतस्याभेदत्वेन च अभेदस्याभानात् पदार्थत्वेनैव रजतस्य संसर्गत्वेनैव चाभेदस्य भानादिति भावः। 'प्रवर्त्तकं ज्ञानमिति इदं रजतमिति वाक्यश्रवणानन्तरमनुभवसिद्धस्येदं रजतं न वेत्यादिसंशयाभावस्य प्रयोजकं ज्ञानमित्यर्थः, यद्वा तादृशवाक्यश्रवणानन्तरमनुभवसिद्धं तादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यं ज्ञानमित्यर्थः, 'शब्दादेवेति, उक्तानुमानव्यवच्छेदमात्रे तात्पर्य्यं नोक्तानुमानादित्यर्थः, अतः शब्दो मानान्तरमिति शेषः। जरन्मीमांसकमतं निराकरोति, 'अत एवेति यत एवोक्तानुमाने स्मारितपदार्थत्वमेव प्रकारः न तु रजतत्वादिकं अत एवेत्यर्थः, 'इति परास्तमित्यनेनान्वयः, 'प्रवृत्त्यर्थं' इदं रजतमित्यादिवाक्यश्रवणानन्तरमिदं रजतं न वेत्यादिसंशयाभावसम्पत्त्यर्थं तदानीं तादृशसंशयप्रतिबन्धार्थमिति यावत्, यद्वा तादृशवाक्यश्रवणानन्तरं तादात्म्यसम्बन्धेन रजतप्रकारकप्रवृत्तिस्वरूपयोग्यज्ञानार्थमित्यर्थः, उक्तरूपानुमानात्तदसम्भवादिति भावः। 'अनुवादकता शब्दस्येति उक्तरूपानुमानानन्तरं शाब्दानुभवजनकता शब्दस्येत्यर्थः, सर्वचोक्तानुमितिसामग्रीसम्भवेनोक्तरूपानुमितेः प्रागुत्पादा-

---

(१) अत्रापि 'परास्तमिति पाठान्तरं।

शब्दानुमित्योर्भिन्नप्रकारकत्वात् एकविषयत्वाभावेन

दिति भावः। तथाच शब्दो न प्रमाणमिति शेषः । प्रमाकरणं हि प्रमाणं प्रमा च अगृहीतग्राह्यनुभवः गृहीतमात्रग्राहीतरानुभव इति यावत्, घटो द्रव्यमित्यादिज्ञानोत्तरं जायमानस्य घटो द्रव्यमित्यादिज्ञानस्य प्रमात्वसम्पादनाय मात्रपदं[1], स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्तिनिश्चयाविषयाविषयकेतरानुभव इति फलितार्थः, शाब्दबोधस्य न तथा तस्योक्तानुमितिरूपतादृशनिश्चयाविषयाविषयकत्वात्, संशयोत्तरप्रत्यक्षानुमित्योः प्रमात्वसम्पादनाय निश्चयत्वेनोपादानं; स्वत्वघटितत्वादननुगतत्ववारणाय[2] चरमनिषेधद्वयोपादानमिति भावः । एतन्मते शब्दमात्रस्यैव गृहीतमात्रग्राह्यनुभवमात्रजनकत्वेनाप्रमाणत्वं वक्ष्यमाणजरन्मीमांसकमते तु लौकिकशब्दस्यैव तथात्वादप्रमाणत्वं वैदिकस्तु प्रमाणमिति न तेन सह पुनरुक्तिः । 'अतएवेत्यस्यार्थं विवृणोति, 'शाब्देति, 'भिन्नेति शाब्दबोधे रजतत्वादेः प्रकारत्वादनुमितौ च स्मारितपदार्थत्वस्य प्रकारत्वादित्यर्थः, 'एकविषयत्वाभावेनेति शाब्दबोधस्योक्तानुमितिविषयमात्रविषयक-

(१) तथाच तादृशज्ञानस्य गृहीतेतरघटग्राहित्वेन न गृहीतमात्रग्राहित्वमिति भावः ।

(२) ननु स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्तिनिश्चयाविषयविषयकानुभवः प्रमा इत्यनेनैव सामञ्जस्ये निषेधद्वयोपादानं व्यर्थमित्यत आह, अननुगतत्ववारणाय चरमनिषेधद्वयोपादानमितीति, निषेधद्वयोपादानेन प्रतियोगिस्वत्वं सूचितं न त्वनुयोगिस्वत्वं, तथाच स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्तिनिश्चयाविषयाविषयको यो यः स्वसामानाधिकरण्य-स्वाव्यवहितपूर्ववर्त्तित्वोभयसम्बन्धेन स्वविशिष्टनिश्चयाविषयाविषयको यो य इति यावत्, तत्तदनुभवभेदकूटविशिष्टानुभवः प्रमा इति फलितार्थः स्वपदद्वयं भेदप्रतियोग्यनुभवपरमिति ।

अननुवादकत्वात् तस्यैव प्रमाणत्वात् । नन्वेते पदार्था-

त्वाभावेनेत्यर्थः, 'अननुवादकत्वादिति गृहीतमात्रग्राहीतरत्वादित्य-र्थः, 'तस्यैव' तस्यापि शब्दस्यापीति यावत्, 'प्रमाणत्वादिति गृहीत-मात्रग्राहीतरानुभवकरणत्वादित्यर्थः, इदञ्च सुगमसमाधानत्वादुक्तं । वस्तुतस्तु सर्वत्र शाब्दबोधपूर्वमुक्तरूपानुमितिसामग्रीसत्त्वे मानाभा-वेन यत्र प्रथमं नैतादृशानुमितिसामग्री तत्रैव गृहीतमात्रग्राही-तरानुभवकरणत्वसम्भवः । किञ्च स्वसमानाधिकरण-स्वाव्यवहितपूर्व-वर्त्तिनिश्चयाविषयाविषयकेतरानुभवत्वं न प्रमात्वं तथा सति घटः सत्तावानित्याद्यनुमितेः परामर्शविषयमात्रविषयकत्वेनाप्रमा-त्वापत्तेः,[१] परन्तु अगृहीतग्राहि-तद्विशेष्यक-तत्प्रकारकानुभवत्वं तत्र तत्प्रमात्वं, अगृहीतग्राहित्वञ्च गृहीतग्राहीतरत्वं स्वसमानाधिकर-ण-स्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारनिश्चयविषयविषयकेतरत्वमिति यावत्, तथाच स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमा-नाकारनिश्चयविषयविषयकेतरतद्विशेष्यक-तत्प्रकारकानुभवत्वं तत्र तत्प्रमात्वं, तादृशानुभवकरणत्वञ्च तत्र तत्प्रमाणत्वमिति फलितं,

(१) परामर्शविषयमात्रविषयकत्वेन घटः सत्ताव्याप्यवानिति परामर्शविषय-मात्रविषयकत्वेनेत्यर्थः । न च पर्वतो वह्निव्याप्यवानिति परामर्शोत्तरं जायमानायाः पर्वतो वह्निमानित्यनुमितेः परामर्शविषयमात्रविषयक-त्वेन प्रमात्वापत्तिसम्भवे प्रसिद्धस्थलपरित्यागो निर्बीज इति वाच्यं । पर्व-तीयवह्नेः प्रागननुभवात् तादृशपरामर्शस्य वह्नित्वेन महानसीयवह्न्या-दिविषयकत्वेन उक्तानुमितेस्तादृशपरामर्शाविषयपर्वतीयवह्निविषयक-त्वेनाप्रमात्वासम्भवात् ।

स्तात्पर्य्यविषयमिथःसंसर्गवन्तः आकाङ्क्षादिमत्पदस्मा-

---

रकसमानाकारत्वञ्च स्वस्मिन् यादृशी तद्विशेष्यकत्वावच्छिन्नतत्प्रका-
रिता तादृशतद्विशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वं, इत्यञ्चोक्ता-
नुमानस्य शाब्दबोधसमानाकारत्वमेव नास्ति शाब्दबोधे तावदे-
कपदार्थेऽपरपदार्थः प्रकार उक्तानुमाने च तत्संसर्गइति भेदादिति
कुतः शाब्दबोधस्याप्रमात्वं। एतेन तात्पर्य्यज्ञानं यदि शाब्दधीहे-
तुस्तदा शब्दमात्रस्यैव गृहीतमात्रग्राह्यनुभवमात्रजनकत्वादप्रमाणत्वं
तात्पर्य्यस्य तद्विशेष्यक-तत्प्रकारकप्रतीतीच्छयोच्चरितत्वरूपतया तज्-
ज्ञान एव शाब्दबोधविषयीभूतस्य सर्वस्यैव प्रथमं भानादित्यपि
निरस्तं। यथोक्ततात्पर्य्यज्ञानस्य शाब्दधीसमानाकारत्वाभावादिति
ध्येयम्। ननु मा भूदुक्तानुमानादिदन्त्वावच्छिन्ने रजतत्वादिप्रकारेण
रजतादिसंसर्गज्ञानं तथापि विशिष्य पदार्थपत्रकादीदृशानुमानाद्-
भविष्यतीत्याशयेनाशङ्कते, 'नन्विति, 'एते पदार्था इति इदन्त्वा-
श्रयरजतादय इत्यर्थः, 'तात्पर्य्येति तात्पर्य्यविषयीभूतो यः परस्प-
रसंसर्गस्तद्वन्त इत्यर्थः, अत्र इदन्त्वाश्रयरजतादयस्तात्पर्य्यविषय-
संसर्गवन्त इति साध्ये इदं रजतं न वेत्यादिसंशयनिवर्त्तकज्ञानस्य न
निर्वाहः इदं रजतसंसर्गवदित्याकारकनिश्चयस्यैव तादृशसंशयनिवर्त्त-
कत्वादतो यत्र यस्य संसर्गबोधो वस्तुतः शब्दाज्जायते तं पक्षयि-
त्वा तात्पर्य्यविषयीभूततत्संसर्गः साधनीयः इति लाभाय 'मिथः-
पदं, तथाच इदं रजतमित्यादौ इदं रजतसंसर्गवदित्यादिक्रमेण
साध्यं, रजतमानयेत्यादौ च कर्मत्वं रजतसंसर्गवदानयनं रजतकर्म-

त्वसंसर्गवत्कृतिस्तात्पर्य्यविषयीभूतानयनसंसर्गवतीत्यादिक्रमेण नानैव साध्यं पक्षोऽपि नाना समूहालम्बना त्वनुमितिः, आनयेत्यत्र यदा-नयन-कृत्योरनुकूलत्वसंसर्गे तात्पर्य्यं तदा कृतिं पक्षीकृत्यानयन-संसर्गसाधने कृतौ आनयनस्य विषयत्वसंसर्गस्यापि सिद्धिर्मा भूदि-ति 'तात्पर्य्यविषयेति संसर्गविशेषणं । न च तत्सिद्धौ क्षतिविरहः उद्देश्यस्यानुकूलत्वसंसर्गज्ञानस्य वृत्तत्वादधिकन्तु प्रविष्टमिति न्याया-दिति वाच्यम् । तर्हि तदानीं तद्विषयकबुद्धेरनुभवसिद्धाया अनु-मानादवृत्तत्वात्तदनुरोधेनैव शब्दस्य प्रमाणान्तरत्वापत्तेः । एवं सर्वत्र बोध्यं, तात्पर्य्यविषयत्वञ्च एतत्पुरुषीयैतत्कालीना या एतदुभय-पदजन्यसंसर्गप्रतीतीच्छा तद्विषयत्वं, तेन न संसर्गमात्रस्यैव पुरुषा-न्तरीय-कालान्तरीय-वाक्यान्तरजन्यप्रतीतीच्छाविषयत्वादर्थान्तर-तादवस्थ्यं । आकाङ्क्षानिरूपकत्वमपि संसर्गविशेषणं देयं, इतरथा यदा कृत्यानयनयोरनुकूलत्वे समानकालीनत्वे च संसर्गे तात्पर्य्यं तदा कृतावानयनस्य समानकालीनत्वसंसर्गस्यापि सिद्धिः स्यात् । आकाङ्क्षानिरूपकत्वञ्च एतत्पदद्वयाकाङ्क्षानिरूपकत्वं वाच्यम्,(१) अन्यथा तस्यापि कुत्रचिदाकाङ्क्षानिरूपकत्वात् । न च वैशेषिकैः शाब्दत्वजातेरनभ्युपगमादाकाङ्क्षानिरूपकत्वं दुर्वचमिति वाच्यम् । तैरपि शाब्दत्वजातिरभ्युपेयत एव परन्तु सा जातिरुक्तानुमिति-वृत्तिरनुमितित्वव्याप्यैत्येवाभ्युपगमात् । अस्तु वा तत्संसर्गभिन्न-संसर्गत्वमेवाकाङ्क्षानिरूपकसम्बन्धत्वमिति न काप्यनुपपत्तिः। इदं रजतमित्यादौ इदंपदक-रजतसंसर्गसाध्यकानुमाने तु तात्पर्य्य-

(१) बोध्यमिति ख०, ग० ।

विषयत्वं संसर्गविशेषणमनुपादेयं इदं-रजतयोरभेदसंसर्गे समान-
कालीनत्वसंसर्गे च तात्पर्य्यदशायां समानकालीनत्वसंसर्गसिद्धिवा-
रणायावश्यं आकाङ्क्षानिरूपकत्वेन संसर्गो विशेषणीयः, तथाच
तत एवाभेदसंसर्गमात्रे तात्पर्य्यदशायामपि तात्पर्य्याविषयसंसर्गान्त-
रसिद्धिवारणात् संसर्गान्तरस्य तन्नाकाङ्क्षानिरूपकत्वविरहात्, एवं
रजतमानयेत्यादावपि कर्मत्वपञ्चक-रजतसंसर्गसाध्यकानुमाने तात्प-
र्यविषयत्वं संसर्गविशेषणमनुपादेयम् रजत-कर्मत्वयोराधाराधेयभावे
समानकालीनत्वे च संसर्गे तात्पर्य्यदशायां कर्मत्वे रजतस्य संस-
र्गसिद्धिवारणायावश्यमाकाङ्क्षानिरूपकत्वेन संसर्गो विशेषणीयः,
तथाच रजत-कर्मत्वयोराधाराधेयभावसम्बन्धमात्रे तात्पर्यदशा-
यामपि तत एव तात्पर्याविषयसमानकालीनत्वादिसंसर्गसिद्धेर्वा-
रणादिति बोध्यम्। 'आकाङ्क्षादीति रजतपदाकाङ्क्षादिमत्पद-
स्मारितत्वादित्यर्थः, आदिना योग्यतापरिग्रहः, अत्र स्मारितत्वमात्रं
घट-पटयोरपीति रजतपदयोग्यतावत्पदस्मारितत्वमुक्तं, रजतपद-
योग्यतावत्त्वं रजतपदार्थाबाधितार्थकत्वं। न च रजतपदयोग्यता-
वत्पदस्मारितत्वं रजतमानयेत्यत्राम्पदोपस्थापिते कर्मत्वे वर्त्तते तत्रेदं
रजतमित्यत्र यदिदम्पद-रजतपदे तदुभयनिष्ठाकाङ्क्षानिरूपकतदु-
भयतात्पर्यविषयीभूतरजतसंसर्गो नास्तीति व्यभिचार इति वाच्यम्।
एतद्रजतपदार्थाबाधितार्थकैतदिदम्पदस्मारितत्वस्य हेतुत्वात् यद्यद्र-
जतपदार्थाबाधितार्थकयत्पदस्मारितं भवति तत्तत्पदद्वयतात्पर्य-
विषयीभूततत्पदद्वयनिष्ठाकाङ्क्षानिरूपकरजतसंसर्गवद्भवति रजतेने-
त्यादिवाक्यस्थटापदादिस्मारितरजतनिष्ठकरणत्वादिवदिति सामान्य-

मुखी व्याप्तिः । न च तथापि रजतपदार्थत्वं रजतपदजन्यस्मृति-विशेष्यत्वं तच्च लक्षणादिना घटादावपीति घटादिलाक्षणिकरजत-पदघटितरजतमानयेत्यादिवाक्यस्थाम्पदोपस्थापिते घटनिष्ठकर्म्मत्वे व्यभिचार इति वाच्यम् । रजतासत्तिमत्त्वेन रजतपदविशेषणात्, रजतासत्तिश्च रजतान्यविशिष्यकस्मृत्यनुपधायकत्वं । न च तथापि रजतमानयेत्यत्राम्पदेन कर्मत्वत्वरूपेण स्मारिते घटनिष्ठकर्मत्वे व्यभि-चार इति वाच्यम् । रजतपदार्थाबाधितार्थकत्वपदेन रजतपदार्थ-बाधितार्थोपस्थापकभिन्नत्वस्य विवक्षितत्वात् घटनिष्ठकर्मत्वस्य रजत-पदार्थे बाधितत्वात् । एवञ्च यद्रजतान्यविशेष्यकस्मृत्यनुपधायकयद्र-जतपदजन्यस्मृतिविशेष्यबाधितार्थोपस्थापकभिन्नयत्पदस्मारितं भवति तत्तत्पदद्वयतात्पर्यविषयीभूततत्पदद्वयनिष्ठाकाङ्क्षानिरूपकरजतसंस-र्गवद्भवतीति सामान्यतो व्याप्तिः फलिता । न च तथापि शुक्तो-दीरितेऽप्रत्यायके रजतमानयेत्यत्राम्पदोपस्थापिते रजतनिष्ठकर्मत्वे व्यभिचारः तत्र तात्पर्यगर्भसाध्याप्रसिद्धेः तात्पर्यवत्त्वेन हेतुविशेषणेऽपि रजत-कर्मत्वयोस्तादात्म्यसंसर्गतात्पर्य्यके रजतमानयेत्यत्राम्पदोपस्था-पिते रजतनिष्ठकर्मत्वे व्यभिचारः तात्पर्य्यविषयीभूतरजतसंसर्गस्य रजततादात्म्यस्य रजतकर्म्मत्वेऽभावादिति वाच्यम् । इदं रजतमान-येत्यादौ इदङ्कर्म्मत्वादिपक्षक-रजतसंसर्गसाध्यकानुमाने तात्पर्य्यविष-यत्वस्य संसर्गविशेषणत्वाभावेन व्यभिचारविरहात्, यत्र तु तात्पर्य्य-घटितं साध्यमुपादीयते तत्र योग्यताघटकाबाधितत्वस्य तत्तत्पद-द्वयतात्पर्य्यविषयीभूतसंसर्गेण विवक्षणीयत्वात् । आकाङ्क्षाविशेषणो-पादानञ्च रजतं कर्म्मत्वमित्यत्र रजतपदार्थाबाधितार्थोपस्थापककर्म्म-

त्वपदोपस्थापिते रजतनिष्ठकर्मत्वे रजतपद-कर्मत्वपदोभयनिष्ठाका-ङ्क्षानिरूपकरजतसंसर्गवत्त्वाभावेन व्यभिचारवारणाय, कर्मत्वपदस्य रजतपदाकाङ्क्षावत्त्वविरहात्। यद्यपि कर्मत्वपदेऽपि तादात्म्यसम्बन्धेन रजतपदाकाङ्क्षावत्त्वमस्त्येव तथापि तत्तत्पदद्वयनिष्ठाकाङ्क्षानिरूपक-सम्बन्धेनाबाधितत्वं योग्यताघटकं वाच्यमेतल्लाभायैव चाकाङ्क्षापद-मिति भावः। हेत्वन्तरमाह, 'योग्यतेति एतद्रजतपदयोग्यतास-त्तिमत्त्वे सति रजतसंसर्गपरैतदम्पदस्मारितत्वादित्यर्थः, यद्यद्र-जतपदयोग्यतासत्तिमत्त्वे सति रजतसंसर्गपरयत्पदस्मारितं भवति तत्तत्पदद्वयतात्पर्य्यविषयीभूतसंसर्गवद्भवति रजतेनेत्यादिवाक्यस्थटा-पदादिस्मारितरजतनिष्ठकरणत्वादिवदिति सामान्यमुखी व्याप्तिः अतोनान्वयदृष्टान्तासिद्धिः, अत्र रजतमानयेत्यत्रामपदेन कर्मत्वत्व-रूपेण स्मारिते घटनिष्ठकर्मत्वे व्यभिचारवारणाय रजतपदयोग्य-तावत्त्वं विशेषणं, रजतपदयोग्यता च रजतपदजन्यस्मृतिविशेष्याबा-धितत्वं, तथापि वक्ता यत्र रजतसंसर्गप्रतीतीच्छया रजतमानयेत्या-दिवाक्यं प्रयुक्तं श्रोत्रा च लक्षणया रजतपदेन घटः स्मारितः अम्-पदेन च घटनिष्ठकर्मत्वं स्मारितं तत्र घटनिष्ठकर्मत्वे व्यभिचार-इति रजतपदासत्तिमत्त्वं विशेषणं, तदर्थश्च रजतपदजन्यरजतमा-त्रविशेष्यकस्मृतिसमानकालीनस्मृतिगोचरत्वं, मात्रपदोपादानाच्च रजतमानयेत्यादिवाक्यस्थरजतपदेन रजत-घटोभयविशेष्यकसमूहा-लम्बनस्मृतिर्जनिता तत्र घटनिष्ठकर्मत्वे न व्यभिचारः, स्मृतिद्वयाज-नकत्वेन च रजतपदं विशेषणीयं नातः क्रमिकरजत-घटविशेष्यक-स्मृतिद्वयमादाय तद्दोषतादवस्थ्यं निरुक्ततात्पर्य्यकेण घटादिसंसर्गता-

रितत्वात् योग्यतासत्तिमत्त्वे सति संसर्गपरपदस्मारितत्वाद्वा, अनाप्तोक्ते योग्यताविरहात् न व्यभिचारः, तच्च बाधकसत्त्वात्, तज्जन्यज्ञानस्य भ्रमत्वात्

---

त्पर्य्यकेण वा रजतपदोत्तरामादिपदेन स्मारिते रजतकर्मत्व-करणत्वादौ व्यभिचारवारणाय रजतसंसर्गपरत्वप्रवेशः(१)। यद्यप्येवमपि रजत-कर्मत्वयोः तादात्म्यसंसर्ग एव तात्पर्य्यदशायामाधाराधेयभावेन रजताबाधिते रजतकरणत्वादौ व्यभिचारस्तथापि तात्पर्यविषय-संसर्गेणाबाधितार्थकत्वविवक्षणान्न व्यभिचार एतल्लाभाय तदुपादान-मिति(२) ध्येयं। ननु करकाभिप्रायेण प्रयुक्ते पयसा सिञ्चतीति वाक्ये व्यभिचार इत्यत आह, 'अनाप्तोक्त इति, योग्यताविरह एव कुतस्तदाह, 'तच्चेति, 'बाधकसम्भवात्'(३) बाधकसत्त्वात्। नन्वन्वय-प्रयोजकरूपवत्त्वमेव योग्यता सा च तत्रास्त्येवेत्यत आह, 'तज्जन्येति, तथाचान्वयप्रयोजकरूपवत्त्वस्य योग्यतात्वे तज्जन्यज्ञानस्य भ्रमत्वं न स्यात् योग्यताभ्रमस्य तत्प्रयोजकस्याभावादतो बाधविरह एव योग्यतेति भावः। नन्वेवं द्रवीभूतजलाभिप्रायेण प्रयुक्तं पयसा सिञ्चतीति वाक्यमपि प्रमाणं न स्यादयोग्यत्वात् न ह्येकाकारवा-

---

(१) रजतसंसर्गपरेतीति ख०, ग०।

(२) तात्पर्य्यविषयसंसर्गेणाबाधितत्वलाभाय तदुपादानमितीति ख०, ग०।

(३) टीकाकृता ईदृशपाठधारणेन 'बाधकसत्त्वात्' इत्यत्र कुत्रचिन्मूलपुस्तके 'बाधकसम्भवात्' इति पाठो वर्त्तत इत्यनुमीयते।

एकाकारवाक्यस्यापि बाधकसत्त्वासत्त्वाभ्यां योग्या-योग्यत्वात्। अथ प्रतिपत्तुर्जिज्ञासां प्रति योग्यता सा च श्रोतरि तदुत्पाद्यसंसर्गावगमप्रागभावरूपा-काङ्क्षा बाधकप्रमाविरहो योग्यता अव्यवहितसंसर्ग-प्रतियोगिज्ञानमासत्तिः ताश्च स्वरूपसत्यो हेतवो न तु ज्ञाताः गौरवात् तद्बोधं विनाऽन्वयानुभवे विलम्बा-भावात् संसर्गनिरूप्यत्वेन प्रथमं दुरवधारणत्वाच्चेति न तानि लिङ्गविशेषणानीति चेत्, न, योग्यतादि-

---

कस्य योग्यत्वमयोग्यत्वञ्च सम्भवतीत्यत आह, 'एकाकारवाक्य-स्येति, 'बाधकेति विषयबाधसत्त्वासत्त्वाभ्यामित्यर्थः। 'अथेति, यद्यपि योग्यतादिज्ञानस्य कारणत्वं व्यवस्थापितमेव तथापि संसर्गघटितत्वेन दुर्ग्रहत्वान्न तासां ज्ञातानां शाब्दबोधोपयोगित्वमिति दूषणोद्धा-राय पुनराशङ्केयं। 'प्रतिपत्तुः' श्रोतुः, 'जिज्ञासां प्रति योग्यतेति, अजिज्ञासोरपि वाक्यार्थबोधाद्योग्यतानुधावनं। योग्यतामेव विवृ-णोति, 'तदुत्पाद्येति प्रकृतवाक्योत्पाद्येत्यर्थः, 'बाधकेति एकपदार्थे-ऽपरपदार्थसंसर्गाभावनिश्चयाभाव इत्यर्थः, 'अव्यवहितेति एकसंसर्ग-प्रतियोगिज्ञानाव्यवहितापरसंसर्गप्रतियोग्युपस्थितिरित्यर्थः, 'हेतवः' अस्मन्नये शाब्दधीहेतवः, 'न तानि लिङ्गविशेषणानीति,[१] तासां

---

(१) न ता लिङ्गविशेषणानीतीति ख०, इत्येव पाठः खचिह्नितमूलपुस्तके वर्त्तते।

शून्यत्वेऽपि तदभिमानेन संसर्गप्रत्ययादन्यथा शाब्दाभासोच्छेदप्रसङ्गः। राजा पुत्रमाकाङ्क्षति पुरुषं वेति संशये विपर्य्यये च वाक्यार्थधीप्रतिबन्धाच्च, योग्यता-

लिङ्गविशेषणत्वे तासामज्ञानदशायामपि वाक्यार्थबोधो जायते स न स्यादिति तदनुरोधेन शब्दस्यातिरिक्तप्रमाणत्वापत्तेरिति भावः। नन्विदमेवासिद्धमित्यत आह, 'अन्यथेति, तदभिमानेन संसर्गप्रत्यय-इत्यर्थः, 'शाब्दाभासेति निराकाङ्क्षानासन्नायोग्यवाक्यात् शाब्दाभासो न स्यादित्यर्थः, तथाच उक्तरूपा नाकाङ्क्षादयः किन्तु तात्पर्य्यविशेष आकाङ्क्षा, पदाव्यवधानमासत्तिः,[१] तदभावप्रमाविरहः यत्र यस्य येन सम्बन्धेनान्वयः तत्र तेन संसर्गेण तद्वत्त्वं वा[२] योग्यता, हेतुनिविष्टमपीदमेव आकाङ्क्षादिकं, तज्ज्ञानञ्च न्यायमतेऽपि शाब्दधीहेतुरिति भावः। आकाङ्क्षानिश्चयस्य हेतुत्वे युक्त्यन्तरमाह, 'राजा पुत्रमिति राजा पुत्रविशेष्यकतात्पर्य्यप्रकारः पुरुषविशेष्यकतात्पर्य्यप्रकारो वेत्यर्थः, 'विपर्य्यय इति राजा पुरुषं नाकाङ्क्षतीति व्यतिरेकनिश्चय इत्यर्थः, 'वाक्यार्थधीति अयमेति पुत्रो राज्ञः पुरुषोऽपसार्य्यतामिति वाक्यात् पुरुषे राजान्वयधीप्रतिबन्धाच्चेत्यर्थः। तथाच यत्संशय-व्यतिरेकनिश्चयौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुरिति नियमबलेन आकाङ्क्षानिश्चयः

(१) पदाव्यवधानमात्रमासत्तिरिति क०।

(२) तदभावप्रमाविरहः यत्र यस्य येन सम्बन्धेनान्वयधीः तत्र तस्य तत्संसर्गवत्त्वं तेन संसर्गेण तद्वत्त्वं वेति क०।

याश्च संशयसाधारणं ज्ञानमात्रं हेतुः, स्व-परबाधक-प्रमाविरहः क्वचित् निश्चीयतेऽपि यथेह घटो नास्तीत्यत्र स्वयोग्यानुपलब्ध्या घटाभावनिश्चयेनान्यस्यापि घटप्रमाविरहो निश्चीयते। क्वचिद्बाधकप्रमामात्र-

---

कारणमिति भावः। अव्यवधानसंशये शाब्दबोधाभावात् तन्निर्णयोऽपि हेतुरिति बोध्यम्[१]। ननु परप्रमाया अयोग्यत्वेन लिङ्ग-विशेषणीभूतस्व-परसाधारणतदभावप्रमाविरहरूपयोग्यतायाः सर्वत्र निश्चेतुमशक्यतया कथमनुमितिरित्यत आह, 'योग्यतायाश्चेति, 'हेतुः' अनुमितिहेतुः, भवन्मते यथा शाब्दबोध इति भावः। ननु संशयसाधारणमित्ययुक्तं तन्निश्चयस्य कस्यचिदप्यसम्भवेन[२] सर्वत्र तत्संशयस्यैव हेतुत्वादित्यत आह, 'स्व-परेति, 'बाधकप्रमा-विरहः' तदभावप्रमाविरहः, 'अन्यस्यापीति, घटाभाववत्त्वेन हेतु-नेति शेषः। ननु तथापि तदभावप्रमाविरहरूपाया योग्यतायाः संशयसाधारणं ज्ञानमनुमितिहेतुरित्ययुक्तं तदभावप्रमाविरहसंश-यदशायां तत्संसर्गानुमितेरसम्भवात्तदभावप्रमाविरहसंशयसामग्री-दशायां तत्तदभावोभयकोट्युपस्थिति-विशेषादर्शनादिसत्त्वेन तद-भावसंशयसामग्र्या आवश्यकत्वात्तदभावप्रमाविरहसंशयस्य तदभाव-संशयात्मकत्वात्तदभावज्ञानस्य प्रतिबन्धकस्य सत्त्वादित्यत आह,

---

(१) 'अव्यवधानेत्यादिः बोध्यमित्यन्तः पाठः क-खचिह्नितपुस्तकद्वये नास्ति।

(२) क्वचिदप्यसम्भवेनेति क०।

**विरहसंशयेऽप्यन्वयबोधः बाधसंशयस्यादूषणत्वात्[१] ।**

---

'क्वचिदिति, 'प्रमेति तदभावप्रमेत्यर्थः, 'अन्वयबोधः' तत्संसर्गानुमितिः, 'बाधेति तदभावसंशयस्येत्यर्थः, तदभावनिश्चयत्वेनैव प्रतिबन्धकत्वादिति भावः । यद्यपि लिङ्गतावच्छेदकप्रकारकपक्षधर्मतानिश्चयस्यानुमितिहेतुतया योग्यतायाः संशयसाधारणं ज्ञानमनुमितिहेतुरित्यसङ्गतं, तथाप्येतद्दोषस्य 'वयन्त्वित्यादिना ग्रन्थकृतैव वक्ष्यमाणत्वान्नासङ्गतिः ।

केचित्तु लिङ्गतावच्छेदकप्रकारेण पक्षधर्मतानिश्चयोनानुमितिहेतुः पर्वतवृत्तिरयमालोकोधूमो वा उभयथापि वह्निव्याप्य इत्यत्र वह्निव्याप्यवानयमिति परामर्शस्थले[२] च व्यभिचारात् । किन्तु व्याप्तिप्रकारकपक्षधर्मतानिश्चयः स च प्रकृते लिङ्गतावच्छेदकयोग्यतायाः सन्देहेऽप्यस्त्येव । न चावच्छेदकसन्देहाद्व्याप्तिसन्देहो भवतीति वाच्यं। उक्तस्थल एव व्यभिचारादिति[३] भावः। इत्याहुः। तदसत् । अत्रैतदभिप्रायकत्वे 'वयन्त्वित्यादिना वक्ष्यमाणसमाधानासङ्गतेः अनया युक्त्या लिङ्गविशेषणीभूतयोग्यताया अनिश्चयेऽपि अनुमितिसम्भवात् ।

---

(१) बाधकसंशयस्यादूषकत्वादिति क० ।

(२) व्याप्तिश्चात्र साध्याभाववदवृत्तित्वरूपा, व्यापकसामानाधिकरण्यस्य व्याप्तित्वे लिङ्गतावच्छेदकभानस्यावश्यकत्वात् अन्यथा धूमव्यापकवह्निसमानाधिकरणरासभवान् पर्वत इति ज्ञानादप्यनुमित्यापत्तिः ।

(३) व्यभिचार इतीति ख० ।

किञ्च तवापि योग्यतादिकं प्रामाण्ये प्रयोजकं आप्तो-क्तत्वस्य तथात्वे गौरवात् अनाप्तोक्तेऽपि संवादेन

---

नव्यास्तु नन्वस्तु आकाङ्क्षादेर्ज्ञानमेव न्यायनये शाब्दबोधहेतुः न तु योग्यताया ज्ञानं शाब्दबोधे कारणं सम्भवति,(१) परप्रमाया-अयोग्यत्वेन स्व-परसाधारणबाधकप्रमाविरहरूपायास्तस्याः सर्वत्र निश्चेतुमशक्यत्वादित्यत आह, 'योग्यतायाश्चेति, 'हेतुः' न्यायनये शब्दबोधे हेतुः, 'स्व-परेति पूर्ववत्। ननु तथापि संशयसाधारण-मित्ययुक्तं संशयसाधारणं हि ज्ञानं तदा शाब्दधीहेतुः सम्भवति यदि क्वचित्तत्संशयः कारणं भवति, न चैवं, एकपदार्थेऽपरदार्था-भावप्रमाविरहरूपबाधकप्रमाविरहसंशयस्य(२) उक्तरूपेण ग्राह्याभाव-ज्ञानतया विशिष्टबुद्धिमात्रविरोधित्वादित्यत आह, 'क्वचित्प्रमेति, 'अन्वयबोधः' न्यायनये शाब्दबोधः, 'बाधेति ग्राह्याभावेत्यर्थः, इति सङ्गमयन्ति।

प्रकारान्तरेणापि योग्यतादिज्ञानस्य हेतुत्वं व्यवस्थापयति, 'किञ्चेत्यादिना 'तासां ज्ञानं हेतुरित्यन्तेन, 'तवापि' नैयायिक-स्यापि,(३) 'प्रामाण्ये प्रयोजकं' शाब्दप्रमायाः प्रयोजकं, 'आप्तोक्तत्व-स्येति भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवात्मकदोषचतुष्टयाभाव-वदुक्तत्वस्येत्यर्थः, 'तथात्वे' शाब्दप्रमाप्रयोजकत्वे, 'अनाप्तोक्तेऽपीति भ्रान्तप्रतारकवाक्ये करणापाटवजन्ये चेत्यर्थः, 'संवादेन' विषया-

---

(१) योग्यतायाश्च ज्ञानं कथं तन्नये शाब्दबोधहेतुरिति ख०, ग०।

(२) एकपदार्थेऽपरपदार्थाभावप्रमाविरहसंशयस्येति ख०।

(३) नैयायिकस्य नयेऽपीति ख०, ग०।

प्रामाण्याच्च। एवञ्च ज्ञायमानकरणे प्रामाण्यप्रयोजकतया ज्ञानमावश्यकमिति तासां ज्ञानं हेतुः, तच्च

---

बाधेन। न च तत्र ईश्वर एवाप्त इति वाच्यं। तथाप्याप्तोक्तत्वाभावात्, एतद्वाक्यस्य ईश्वरकण्ठ-ताल्वाद्यभिघातजन्यत्वाभावादिति भावः। इदमुपलक्षणं विप्रलम्भादिशुकवाक्येऽतिप्रसक्तेश्चेत्यपि बोध्यं। 'एवञ्च' शाब्दप्रमाप्रयोजकत्वे च, 'ज्ञायमानकरणे' इति सप्तम्यर्थो निष्ठत्वं, अन्वयश्चास्य 'प्रयोजकेत्यनेन, 'प्रामाण्यप्रयोजकतया'[१] शाब्दप्रमाप्रयोजकतया, तथाच ज्ञायमानकरणशब्दनिष्ठत्वे सति शाब्दप्रमाप्रयोजकतयेत्यर्थः, 'ज्ञानमावश्यकमिति शाब्दबोधकारणीभूतं ज्ञानं योग्यतादौ विषयतासम्बन्धेनावश्यकमित्यर्थः, ज्ञाननिष्ठशाब्दज्ञानकरणतायां विषयतासम्बन्धेनावच्छेदकत्वमावश्यकमिति तु फलितोऽर्थः। यत् ज्ञायमानकरणनिष्ठत्वे सति यज्जातीयप्रमाप्रयोजकं तत् ज्ञाननिष्ठतज्जातीयज्ञानकारणतायां विषयतासम्बन्धेनावच्छेदकं यथा प्रमानुमितिप्रयोजकं व्याप्तिविशिष्टपक्षधर्मत्वमिति सामान्यमुखी व्याप्तिरिति भावः।

केचित्तु 'ज्ञानमावश्यकमिति विषयतासम्बन्धेन शाब्दधीकारणज्ञानवत्त्वमावश्यकमित्यर्थः, यत् ज्ञायमानकरणनिष्ठत्वे सति यज्जातीयप्रमाप्रयोजकं तत् विषयतासम्बन्धेन तज्जातीयज्ञानकारणज्ञानवत् यथा प्रमानुमितिप्रयोजकं व्याप्तिविशिष्टपक्षधर्मत्वमिति सामान्यतोव्याप्तिरिति भावः। इत्याहुः। तदसत्। भगवज्ज्ञानमादाय शाब्द-

---

(१) प्रामाण्यप्रयोजकरूपवत्तया इति कस्यचिन्मूलपुस्तकस्य पाठः।

समभिव्याहारविशेषादिनेति। मैवं। यत्र विमलं जलं

---

बुद्धिस्वरूपयोग्यं कालान्तरीयपदार्थस्मरणं दैवाद्योग्यतादिविषयकमादाय च सिद्धसाधनापत्तेः।

अत्र भूयोऽवयवेन्द्रियसन्निकर्षे चक्षुरादिनिष्ठे पित्ताद्यभावे च प्रत्यक्षप्रमाप्रयोजकत्वमादाय व्यभिचारवारणाय सत्यन्तं, भूयोऽवयवेन्द्रियसन्निकर्षादिस्तु न ज्ञायमानकरणनिष्ठः, चक्षुरादेर्ज्ञायमानकरणत्वविरहात्। ज्ञायमानकरणत्वञ्च ज्ञानावच्छिन्नतज्जातीयप्रमाकरणतावत्त्वं, अन्यथा चक्षुरादेरपि चक्षुरादिलिङ्गकानुमितिं प्रति ज्ञायमानकरणतया तद्दोषतादवस्थ्यात् ज्ञायमानकरणधूमादिनिष्ठरूपादौ प्रमानुमितिमादाय व्यभिचारवारणाय तज्जातीयप्रमाप्रयोजकमिति, तज्जातीयप्रमाप्रयोजकत्वञ्च तज्जातीयप्रमात्वावच्छिन्नप्रयोजकत्वं, तेनात्मलिङ्गकानुमितिमादायात्म-मनःसंयोगबाधाभावादौ न व्यभिचारः। व्याप्तिविशिष्टपक्षधर्मतावल्लिङ्गत्वेन प्रमानुमितित्वावच्छिन्नं प्रति हेतुतेति मतेनेदमनुमानमिति न दृष्टान्तासङ्गतिः। न चैवमाकाङ्क्षासत्त्योः स्वरूपासिद्धिः आवश्यकयोग्यतया अन्यथासिद्धतया शाब्दप्रमात्वावच्छिन्नं प्रत्यप्रयोजकत्वादिति वाच्यं। आकाङ्क्षासत्तिविशिष्टयोग्यतात्वेन शाब्दप्रमात्वावच्छिन्नं प्रति प्रयोजकत्वमिति मतमाश्रित्य तदभिधानात्[१]। प्रयोजकत्वञ्च कारण-कारणतावच्छेदकसाधारणं, तच्च कारणतावच्छेदकव्यावृत्तान्यथासिद्धि-

---

(१) प्रयोजकत्वमितिमतेनैतदभिधानादिति ख०, ग०।

इत्यश्रुत्वैव नद्याः कच्छे महिषश्चरतीति शृणोति तत्रा-

चतुष्टयराहित्ये सति नियतपूर्ववर्त्तित्वं,[१] अन्यथा प्रयोजकत्वं यदि कारणतावच्छेदकत्वं तदा पूर्वपक्षिणये योग्यतादावसिद्धिः तेन योग्यतादेः शाब्दप्रमायां स्वरूपसज्जनत्वस्यैवाभ्युपगमात्। यदि च जनकत्वं तदास्मन्नये स्वरूपासिद्धिर्वैशेषिकैर्योग्यतादेः स्वरूपसज्जनकत्वानभ्युपगमात्। अथ सल्लिङ्गकपरामर्शे व्यभिचारः तस्य प्रमानुमितित्वावच्छिन्नं प्रति हेतुत्वात् विषयतासम्बन्धेन ज्ञायमानलिङ्गनिष्ठत्वाच्च। न च विषयतातिरिक्तसम्बन्धेनैव ज्ञायमानकरणवृत्तित्वं विवक्षितमिति वाच्यं। तथापि आत्मलिङ्गकप्रमानुमितिकारणीभूतसल्लिङ्गकपरामर्शे व्यभिचारादिति चेत्। न। व्याप्तिविशिष्टपक्षधर्मतावल्लिङ्गत्वेन प्रमानुमितित्वावच्छिन्नं प्रति हेतुतावादिनये सल्लिङ्गकपरामर्शत्वेन प्रमानुमितित्वावच्छिन्नं प्रति हेतुत्वे मानाभावात् ज्ञानान्यत्वे सति चेत्यपि वा विशेषणीयं। न च प्रमानुमितित्वादेः कार्यतावच्छेदकत्वाभावादसिद्धिरिति वाच्यं। अस्य प्राचीनमतानुयायित्वादिति। क्वचित्तु 'प्रामाण्यप्रयोजकरूपवत्तयेति पाठः, तत्र ज्ञायमानकरणे

(१) न चात्र कारणतावच्छेदकव्यावृत्तान्यथासिद्धिसामान्याभावनिवेशेनैव सामञ्जस्ये चतुष्टयपदं व्यर्थमिति वाच्यं। अन्यथासिद्धित्वस्याननुगतस्याभावात् तत्तदन्यथासिद्ध्यभावकूटनिवेशस्यावश्यकतया कूटलाघवार्थमेव तदुपादानात्। एतेन तादृशान्यथासिद्धिराहित्यमात्रकथनेनैव सामञ्जस्ये नियतपूर्व्ववर्त्तित्वरूपविशेष्यदलं व्यर्थमिति पूर्व्वपक्षोऽपि निरस्तः, अनियतपूर्व्ववर्त्तिगतान्यथासिद्ध्यभावघटितकूटनिवेशे कूटस्य गुरुशरीरतया महागौरवापत्तिरिति विभावनीयं।

काङ्क्षादिकमस्ति। न च नदी-कच्छयोः संसर्ग इति, व्यभिचारात्। अत एव न तन्मात्रं प्रयोजकं[१] प्रामाण्ये। अथ

---

शब्दे 'प्रामाण्यप्रयोजकरूपवत्तया ज्ञानं' शाब्दप्रमाप्रयोजकयोग्यतादिमत्त्वप्रकारेण ज्ञानं, 'आवश्यकं' अवश्यं कारणमिति तासां ज्ञानं हेतुरित्यर्थः, तत्प्रकारकज्ञानस्य हेतुत्वे तज्ज्ञानस्य सुतरां हेतुत्वादिति भावः। तत्प्रकारकज्ञानस्यैवावश्यं हेतुत्वमस्तु यज्ज्ञानावच्छिन्नयज्जातीयप्रमाकरणतावत् तत्तज्जातीयज्ञानकारणीभूतस्य तज्जातीयप्रमाप्रयोजकरूपवत्त्वप्रकारकज्ञानस्य विषयः यथा लिङ्गं ज्ञानावच्छिन्नानुमितिप्रमाकरणतावद्भवति अनुमितिकारणीभूतं यदनुमितिप्रयोजकव्याप्तिविशिष्टपक्षधर्मतावत्त्वप्रकारकं ज्ञानं तद्विषयोऽपि भवतीति व्याप्तिरिति भावः। ननु उपायाभावात्तासां ज्ञानं कथं स्यादित्यत आह, 'तच्चेति, 'समभिव्याहारविशेषः' आकाङ्क्षाग्राहकः, 'आदिशब्दादासत्ति-योग्यताग्राहकश्रोत्राप्तोपदेशपरिग्रहः। 'यत्रेति, आकाङ्क्षासद्भावार्थं 'अश्रुत्वैवेत्युक्तं, तच्छ्रवणे 'जलमित्यनेन जनितान्वयबोधत्वादाकाङ्क्षा न स्यादिति भावः। वस्तुतस्तु तच्छ्रवणेऽपि यत्र कारणान्तरविरहान्न तेन सममन्वयबोधोजातस्तत्रापि व्यभिचारो-बोध्यः, आकाङ्क्षादिमत्पदस्मारितत्वोपपत्तये[२] 'शृणोतीत्युक्तं, 'नदी-कच्छयोः संसर्ग इति तात्पर्य्यविषय इति शेषः, अन्यथा वस्तुगत्या नदी-कच्छयोः संसर्गसत्त्वादलग्नकतापत्तेः, 'व्यभिचारादिति कच्छे

---

(१) तन्मात्रं न प्रयोजकमिति ख०।

(२) स्मारितत्वोपपत्तय इति ख०, ग०।

यावत्समभिव्याहृतेत्यपि लिङ्गविशेषणं कतिपयपद-
स्मारिणस्तु संसर्गप्रत्ययोर्लिङ्गाभिमानादिति चेत्। न।
तत्सन्देहेऽपि वाक्यार्थावगमात्। तच्च संसर्गभ्रान्तिरिति

---

तात्पर्य्यविषयनदीसंसर्गाभावाद्व्यभिचार इत्यर्थः। न च तयोः संसर्गे वक्तुस्तात्पर्य्याभावेऽपि ईश्वरीयतात्पर्य्यसत्त्वात् कथं व्यभिचार इति वाच्यं। अनेन वाक्येन प्रतीतेरजननादीश्वरतात्पर्य्यस्याप्यभावात्। यद्यप्येवं तात्पर्य्यविषयसंसर्गेण योग्यतावत्त्वस्य हेतौ प्रवेशाद्व्यभिचारोऽपि न सम्भवति। तथापि तात्पर्य्याघटितहेतुपक्षे इदं दूषणं द्रष्टव्यं। वस्तुतस्तु एतदक्षरसेनैव 'वयन्त्विति वक्ष्यतीति बोध्यं। नन्वेवमाकाङ्क्षादिमत्त्वस्य तव मते प्रामाण्यप्रयोजकता न स्यात् तत्सत्त्वेऽपि यथोक्तस्थले प्रमानुत्पादादित्यत आह, 'अत एवेति आकाङ्क्षादिमत्त्वेऽपि प्रमानुत्पादादेवेत्यर्थः, 'तन्मात्रं' योग्यतादिमात्रं, किन्तु तात्पर्य्यमपीति भावः। व्यभिचारोद्धाराय शङ्कते, 'अथेत्यादि, 'यावदिति श्रूयमाणयावत्समभिव्याहृतपदकेत्यर्थः, श्रूयमानानि यावत्समभिव्याहृतपदानि यस्येति बहुव्रीहिः, 'लिङ्गेति श्रूयमाणयावत्समभिव्यहृतपदकत्वभ्रमादित्यर्थः, 'तत्सन्देहेपीऽति श्रूयमाणयावत्समभिव्याहृतपदकत्वसन्देहेऽपीत्यर्थः, तथाच न तस्य लिङ्गविशेषणत्वं लिङ्गविशेषणस्य निश्चितस्यैवानुमापकत्वादिति भावः। इदं समाधिसौकर्य्यादुक्तं। वस्तुतो यत्र समभिव्याहृतयावत्पदश्रवणेऽपि कारणान्तरविरहान्न नदी-जलयोरन्वयबोधः तत्र कल्पे एवमपि व्यभिचारस्तदवस्थ एवेत्यवधेयं। गूढाभिसन्धिराह, 'तच्चेति, आशयम-

चेत् । न । अन्यकारणाभावेन[१] पदमेव भ्रान्तिजनकं तथाचादुष्टं सत्तदेवाभ्रान्तिं जनयत् केन वारणीयं। असंसर्गाग्रहस्तत्रेति चेत् । न। संसर्गे बाधकाभावात् । अथाप्तोक्तत्वं लिङ्गविशेषणं तदेव वा लिङ्गं । न च नदी-कच्छयोः संसर्गे आप्तोक्तत्वं, आप्तोक्तत्वञ्च प्रामाण्ये

---

विद्वानाह, 'अन्येति, विशेषणसन्देहे लिङ्गाभावादिति भावः। 'पदमेवेति, स्वातन्त्र्येणेति, शेषः, 'अदुष्टमिति दोषाभावसहकृतमित्यर्थः, 'तदेव' पदमेव, तथाच भ्रमं प्रति लाघवेन शब्दज्ञानत्वेनैव पदज्ञानस्य कारणत्वकल्पनादिति भावः। आशयमुद्घाटयति, 'असंसर्गेति, 'संसर्गे इति संसर्गग्रह इत्यर्थः। न च कारणबाध एव बाधक इति वाच्यं। तस्य कारणत्वे मानाभावादिति भावः। व्यभिचारोद्धाराय पुनराशङ्कते, 'अथेति, 'आप्तोक्तत्वं' आप्तोक्तपदस्मारितत्वं, आप्तोक्तत्वञ्च प्रकृतवाक्यार्थगोचरयथार्थज्ञानवदनुसन्धीयमानत्वं, तच्च नोक्तस्थले प्रकृतवाक्यजन्यप्रतीत्यप्रसिद्धा प्रकृतवाक्यार्थाप्रसिद्धेः, तत्प्रसिद्धौ च भगवत्तात्पर्य्यमादाय तात्पर्य्यगर्भसाध्यस्यापि सत्त्वादिति भावः। एवं तर्हि योग्यतादिविशेषणं व्यर्थमत आह, 'तदेव वेति आप्तोक्तपदस्मारितत्वमेवेत्यर्थः, 'नदी-कच्छयोः संसर्गे' नदी-कच्छयोः संसर्गरूपप्रकृतवाक्यार्थांशे, 'आप्तोक्तत्वं' श्रूयमाणयावत्समभिव्याहृतपदकत्वे सति यथार्थज्ञानवदुक्तत्वं, कच्छपदे इति शेषः। नन्वाप्तोक्तत्वस्य स्वरूपसत एव शाब्दप्रमाजनकत्वात्तद्ज्ञानदशा-

---

(१) अन्यकारणाभावे इति ख० ।

तन्त्रमिति तद्वत्तया ज्ञायमानस्य हेतुत्वेन तच्च ज्ञान मावश्यकं व्याप्तिमत्तया ज्ञातस्येव लिङ्गस्य, तदवगमश्च लोके भ्रमाद्यमूलकतया महाजनपरिग्रहेण वेदे स्मृतौ चेति चेत्। न। यत्र कुत्रचिदाप्तत्वमनाप्तस्यापि सर्व्वं-

---

यामपि मम वाक्यादनुभवसिद्धो बोधः स भवन्मते कथं स्याल्लिङ्ग-विशेषणस्यानिश्चितत्वादित्यत आह, 'आप्तोक्तत्वञ्चेति, 'प्रमाणे' शब्दस्य शाब्दप्रमाजनकत्वे, 'इति' अतो हेतोः, 'तद्वत्तयेति आप्तोक्तत्वव-त्तया ज्ञायमानस्य पदस्य शाब्दबोधहेतुत्वेन तत्राप्याप्तोक्तत्वज्ञानं शाब्दबोधात्पूर्वमावश्यकमित्यर्थः, 'व्याप्तिमत्तयेति यथा व्याप्तिम-त्तया ज्ञायमानस्य लिङ्गस्यानुमितिहेतुत्वेन व्याप्तिज्ञानमनुमितेः पूर्वमावश्यकमित्यर्थः,। न च आप्तोक्तत्वस्य प्रामाण्यप्रयोजकत्वं पूर्वं निराकृतमिति वाच्यं। भ्रमादिशून्यत्वघटिताप्तोक्तत्वस्यैव गौरवादिना प्रामाण्यप्रयोजकतानिराकरणादिति भावः। मन्वादिशुकादिवाक्येऽपि तादृशयथार्थज्ञानवता परमेश्वरादिनाऽनुमन्धीयमानत्वसत्त्वेनाप्तोक्तत्व-सत्त्वान्न व्यभिचारः। नन्वाप्तोक्तत्वज्ञानं कथं स्यादित्यत आह, 'तदवगमश्चेति, 'लोके' लौकिकवाक्ये, 'भ्रमादीति, 'आदिना प्रमाद-विप्रलिप्सा-करणापाटवपरिग्रहः, 'महाजनेति विशिष्टव्यव-ह्रियमाणार्थबोधकत्वेनेत्यर्थः। आप्तत्वं विकल्प्य आप्तोक्तत्वस्य लिङ्गविशेषणत्वं दूषयति, 'यत्र कुत्रचिदिति, 'आप्तत्वं' यथार्थज्ञान-वत्त्वं, 'अनाप्तस्यापि' प्रकृतवाक्यार्थगोचरयथार्थज्ञानशून्यस्यापि, तथा-

आप्तत्वमप्रमितं, भ्रान्तेः पुरुषधर्म्मत्वात् प्रकृतवाक्यार्थ-यथार्थज्ञानवत्त्वस्याप्तत्वं प्रथमं दुर्ग्रहं, भ्रमाद्यमूलक-त्वस्य प्रवृत्तिसंवादादेश्च तद्ग्राहकस्याज्ञानात् प्रवृत्तिश्च

---

चाव्यावर्त्तकतया आप्तोक्तत्वे लिङ्गविशेषणेऽप्युक्तव्यभिचारस्तदवस्थ-इति भावः। 'सर्वत्रेति, सकलवाक्यार्थगोचरयथार्थज्ञानवत्त्वमित्यर्थः, 'अप्रमितं' अप्रसिद्धं, अप्रसिद्धौ हेतुमाह, 'भ्रान्तेरिति, सकल-वाक्यार्थगोचरज्ञानस्य यथार्थत्वे भ्रमोच्छेदात् भ्रान्तेः पुरुषधर्मत्वा-नुपपत्तेरिति भावः। 'प्रथमं' वाक्यार्थज्ञानात्पूर्वं, 'दुर्ग्रहं' दुर्निश्चेयं, निश्चेतुमशक्यस्य च न लिङ्गशेषणत्वं लिङ्गविशेषणनिश्चयाभावेनानु-मित्यसम्भवापत्तेरिति भावः। दुर्निश्चयत्वमेव उपपादयति, 'प्रवृत्ति-सम्वादेति सम्वादिप्रवृत्तिप्रयोजकत्वेत्यर्थः, 'आदिपदात्सम्वादीच्छा-प्रयोजकत्वपरिग्रहः, 'तद्ग्राहकस्येति आप्तत्वानुमापकलिङ्गविशेषण-स्येत्यर्थः, अयं प्रकृतवाक्यार्थगोचरयथार्थज्ञानवान् भ्रमाद्यमूलकैतद्-वाक्यप्रयोक्तृत्वात् सम्वादिप्रवृत्तिप्रयोजकैतद्वाक्यप्रयोक्तृत्वात् इत्यादि-क्रमेण यत्तज्ज्ञां सामान्यतोव्याप्त्या आप्तत्वस्यानुमेयत्वादिति भावः। 'अज्ञानादिति प्रकृतवाक्ये अज्ञानादित्यर्थः, प्रवृत्तिसम्वादस्य वा-क्यार्थबोधाधीनप्रवृत्त्युत्पत्तेरुत्तरकालमेव ग्राह्यत्वेन वाक्यार्थज्ञानात्पूर्वं तदज्ञानात् तदज्ञाने च तेनैव हेतुना भ्रमाद्यमूलत्वस्यानुमेयतया भ्रमाद्यमूलकत्वस्यापि ज्ञानासम्भवादिति भावः। नन्वेवन्तवापि कथं शाब्दबोधः ज्ञायमानेत्यादिव्याप्तिबलादाप्तोक्तत्वनिश्चयस्य तवापि शाब्दधीहेतुत्वादित्यत आह, 'प्रवृत्तिश्चेति शब्दस्य प्रवृत्तिश्चेत्यर्थः,

सन्देहादपि । किञ्च प्रकृतसंसर्गे अयमभ्रान्तो यथार्थ-ज्ञानवान्वेति संसर्गमप्रतीत्य ज्ञातुमशक्यं वाक्यार्थस्या-पूर्व्वत्वात् । वयन्तु ब्रूमः बाधकप्रमाणाभावो योग्यता

---

प्रवृत्तिश्च फलजननं शाब्दबोधजनकत्वमिति यावत्, 'सन्देहादपि' आप्तोक्तत्वसन्देहादपि, ज्ञानावच्छिन्नेत्यादिव्याप्तौ निश्चयत्वस्य गौरवेण साध्यकोटावप्रवेशात्सद्व्याप्तिबलेनाप्तोक्तत्वज्ञानमात्रस्यैव शाब्दधीहेतुत्वात् तत्र च लिङ्गविशेषणतया तन्निश्चयस्यावश्यकत्वादिति भावः ।

केचित्तु ननु यदि प्रवृत्तेरुत्तरकालमेव प्रवृत्तिसम्वादग्रहः तदा सम्वादिप्रवृत्तिजनकत्वहेतुना प्रामाण्यनिश्चयेऽन्योन्याश्रयः प्रामाण्यनिश्चयानन्तरमेव प्रवृत्तेरुत्पादसम्भवादित्यत आह, 'प्रवृत्तिश्चेति, 'सन्देहादपि' प्रामाण्यसन्देहादपि, निष्कम्पप्रवृत्तावेव प्रामाण्यनिश्चयस्य प्रयोजकत्वादिति भावः । इति व्याचक्षुः(१) ।

हेतुज्ञानाभावेन दुर्निश्चयत्वमुक्त्वा साध्याप्रसिद्ध्या दुर्निश्चयत्वमाह, 'किञ्चेति, 'प्रकृतेति प्रकृतकर्मत्व-रजतयोः संसर्ग इत्यर्थः, 'यथार्थेति रजतसंसर्गवति कर्मत्वे रजतसंसर्गविषयकज्ञानवानयमित्यर्थः, 'संसर्गमप्रतीत्येति कर्मत्व-रजतयोः संसर्गमप्रतीत्य पूर्वमित्यर्थः, 'वाक्यार्थस्य' कर्मत्वे रजतसंसर्गवत्त्वस्याप्तत्वघटकस्य, 'अपूर्वत्वात्' कर्मत्व-रजतयोः संसर्गप्रतीतेश्च पूर्वमज्ञातत्वात् । न चैवमाप्तोक्तत्वसन्देह एव तत्र कथं स्यात् कोटितावच्छेदकरूपेण कोट्युपस्थितिविरहादिति वाच्यं । मम

---

(१) इत्याहुरिति ख०, ग० ।

सा च न लिङ्गविशेषणं बाधकप्रमाणमात्रविरहस्य सर्व्वत्र निश्चेतुमशक्यत्वात्, तत्संशयेऽपि शब्दादन्वयबोधाच्च[१],

---

लाघवात् योग्यताया एव शाब्दप्रमाप्रयोजकत्वेनाप्तोक्तत्वस्यातथात्वात् तज्ज्ञानस्य शाब्दधीहेतुत्वाभावेन सन्देहाभावेऽपि क्षतिविरहादिति भावः। ननु नदी-कच्छयोस्तात्पर्य्यगर्भहेतुविरहादेव न व्यभिचार- इत्यस्वरसादाह, 'वयन्त्विति, 'बाधकेति एकपदार्थेऽपरपदार्थाभाव- निश्चयसामान्याभाव इत्यर्थः, 'अशक्यत्वादिति परप्रमाया अयोग्य- त्वादिति हृदयं[२]। तन्निश्चयाभावे च लिङ्गतावच्छेदकप्रकारक- लिङ्गनिश्चयाभावादनुमितिर्न स्यादिति भावः। 'तत्संशयेऽपीति योग्यतायाः संशयेऽपीत्यर्थः, तस्या लिङ्गविशेषणत्वे तु तत्कथं स्यात् लिङ्गतावच्छेदकप्रकारकलिङ्गनिश्चयस्यानुमितिहेतुत्वादिति भावः। न च साध्यसन्देहातिरिक्तसंशयान्यलिङ्गतावच्छेदकप्रकारकलिङ्गज्ञा- नत्वेनानुमितिहेतुत्वं तच्च योग्यतायाः संशयदशायामपि सम्भवत्येव उक्तरूपेण योग्यतासन्देहस्य साध्यसन्देहपर्य्यवसन्नत्वादिति वाच्यं। गौरवात् साध्यव्याप्यसाध्यवत्तासंशयादनुमित्यापत्तेश्च। न च साध्य- हेतुभेदेनानुमितिकार्य्य-कारणभावभेदाद्व योग्यतांशे संशयसा- धारणं ज्ञानमेव हेतुर्योग्यताभावाप्रकारकत्वविशेषणे गौरवाद्वैयर्थ्या- च्चेति वाच्यं। शब्दश्रवणानन्तरवदन्यत्रापि एतत्साध्यव्याप्येतद्धेतुम- त्तासंशयादनुमित्यापत्तेः। इदमुपलक्षणं यथोक्तहेतौ व्यभिचारज्ञा-

---

(१) शाब्दान्वयबोधाच्चेति क०।

(२) इति ध्येयमिति ख०, ग०।

**शब्दप्रामाण्ये तु योग्यतायाः संशय-निश्चयसाधारणं ज्ञानमात्रं[१] प्रयोजकमिति शब्दः प्रमाणमिति ।**

---

नदशायामपि वाक्यादनुभवसिद्धो बोधः कथमनुमानात्स्यादतः शब्दो मानान्तरमित्यपि बोध्यं। ननु भवन्मतेऽपि योग्यतासंशयदशायां कथं वाक्यार्थबोधः तन्निश्चयस्य शाब्दहेतुत्वादित्यत आह, 'शब्द-प्रामाण्ये त्विति शब्दे प्रमाजनकत्वे त्वित्यर्थः[२] ।

अत्रातिनव्यवैशेषिकाः[३] लिङ्गतावच्छेदकप्रकारकलिङ्गनिश्चयो-नानुमितिहेतुः पर्वतवृत्तिरयमालोकोधूमो वा उभयथापि वह्नि-व्याप्य इत्यत्र वह्निव्याप्यवानयमित्यादिपरामर्शस्थले च व्यभिचारात् किन्तु व्याप्यत्वप्रकारकलिङ्गनिश्चय एवानुमितिहेतुः स च प्रकृते-लिङ्गतावच्छेदकयोग्यतायाः संशयेऽपि सम्भवत्येव। किञ्च योग्यतायाः संशयदशायामुक्तहेतौ व्यभिचारज्ञानदशायाञ्च व्यभिचारिणोऽव्यभि-चारिणो वा पचवृत्तेरपचवृत्तेर्वा हेत्वन्तरस्य ज्ञानादेवानुमितिः स्यात् किं शब्दस्य प्रमाणान्तरत्वेन। ननु पद-पदार्थपचकानुमानात् संसर्ग-सिद्धावपि घटमानयेत्यादिशब्दश्रवणानन्तरं घटकर्मकानयनानुकूल-कृतिमानित्यादिविशेषण-विशेष्यभावेन प्रतीतेरनुभवसिद्धाया असम्भवः अनुमाने पदार्थसंसर्गस्यैव विशेषणतया भानादतः शब्दोऽवश्यं मानमङ्गीकार्य्यं। न चानुमानानन्तरं मनसा तादृशप्रतीतिसम्भव-

---

(१) संशयसाधारणं ज्ञानमिति ख० ।

(२) शाब्दप्रमाजनकत्वे त्वित्यर्थ इति क०

(३) अत्राभिनववैशेषिका इति ख०, ग० ।

इति वाच्यं। तथा कल्पने गौरवात् मानाभावात् शब्दश्रवणानन्तरं प्रथमत एव तदाकारज्ञानस्यानुभवसिद्धत्वाच्चेति चेत्, कर्मत्वादिकं पचयित्वा वस्तुगत्या कर्मत्वादौ घटादेर्यादृशः संसर्गः प्रतीयते तत्संसर्गेण घटादिकं साध्यं, एवमानयनादिकं पचीकृत्य कर्मत्वादिकं साध्यं समूहालम्बनपरामर्शादिविशेष्ये विशेषणमित्यादिन्यायेनार्थसमाजग्रस्ता तादृश्यनुमितिरिति न कोऽपि दोषः। न चैवं घटः कर्मत्वमानयनकृतिरित्यादिनिराकाङ्क्षस्थलेऽपि घटकर्मकानयनानुकूलकृतिमानित्यादिबोधापत्तिः अनुमितौ आकाङ्क्षायाः कारणत्वाभावादिति वाच्यं। व्याप्त्यादिज्ञानसत्त्वे तत्रानुमित्यात्मकतादृशबोधस्य नैयायिकेनापि दुर्वारत्वात्। अथ न पचतीत्यादौ कथमभावे कृत्यादेरन्वयबोधः तादात्म्येनाधाराधेयभावेन च सम्बन्धेन बाधात्तेन सम्बन्धेनानुमातुमशक्यत्वात्। न च प्रतियोग्यनुयोगिभावसम्बन्धेनानुमातव्यं नैयायिकमतेऽपि तेनैव सम्बन्धेनान्वयबोधादिति वाच्यं। तस्य व्याप्त्यनिरूपकत्वात् तादात्म्यातिरिक्तवृत्त्यनियामकसम्बन्धस्यैव व्याप्त्यनिरूपकत्वात्। एवं घटमानयेत्यादौ कृत्यादावानयनादेः कथमन्वयबोधः अनुकूलत्वादेर्वृत्त्यनियामकत्वादिति चेत्। न। वृत्त्यनियामकसम्बन्धस्यापि व्याप्तिनिरूपकत्वात्। न च तथापि व्याप्त्याद्यज्ञानदशायामपि वाक्यादनुभवसिद्धो बोधः स कथं स्यात् कारणाभावेनानुमित्यसम्भवादिति वाच्यं। तादृशानुभवस्यैवासिद्धेः व्याप्त्यादिज्ञानानन्तरमेव वाक्यार्थबोधस्वीकारात्। न चानन्तव्याप्त्यादिज्ञानकल्पने गौरवाल्लाघवेन शब्दस्यैव प्रमाणान्तरत्वं कल्प्यते इति वाच्यं। वाक्यार्थानुभवपूर्वं सर्ववादिसिद्धायाः पदार्थोपस्थितेरेव नियमतो

व्याप्त्यादिविषयकत्वस्वीकारादतिरिक्तकल्पनाभावेन गौरवाभावात् । वस्तुतस्तु साध्य-साधनभेदेन बहुविधान्वय-व्यतिरेकव्याप्तिबुद्धीनां परस्परव्यभिचारेण विशेषत एव कार्य्य-कारणभावो न तु सामान्यतः एवञ्च शाब्दबोधस्थलाभिषिक्तायामनुमितौ आकाङ्क्षादिज्ञानमेव हेतुः न तु व्याप्तिपक्षधर्म्मतादिज्ञानमतो व्याप्त्यादिज्ञानविरहेऽपि न क्षतिरिति प्राहुः, तदसत् शब्दश्रवणानन्तरं जायमाने वाक्यार्थबोधे शाब्दत्वजातिविशेषस्यानुमयं शृणोमि श्रुतमेवेदं पुराणादिभ्य इत्याद्यनुभवसिद्धत्वेनापह्नोतुमशक्यत्वात् । न चैवमर्थापयामीत्यनुव्यवसायबलादर्थापत्तेरप्याधिक्यापत्तिरिति वाच्यं । तादृशानुव्यवसायसत्त्वे इष्टापत्तेः । वस्तुतस्तादृशानुव्यवसायस्यैवाभावात् । न च तादृशानुव्यवसायसिद्धः शाब्दत्वजातिविशेषः[१] अनुमितित्वव्याप्य एवास्त्विति वाच्यं । वाक्यश्रवणानन्तरं जायमानस्य वाक्यार्थबोधस्यानुमितित्वे मानाभावात् प्रत्यक्षभिन्नानुभवत्वस्याप्रयोजकत्वात् । न चानुमितिसामग्र्येव मानं, तस्या एव तदानीमसिद्धेः अनुमितित्वसत्त्वेऽनुमिनोमीत्यनुव्यवसायापत्तेश्च । अथानुमितिभिन्नत्वे एव किं मानं । न चानुमितित्वे प्रमाणाभाव एव मानमिति वाच्यं । अनुमितिभिन्नत्वे प्रमाणाभाव एवानुमितित्वे मानमित्यस्यापि सुवचत्वादिति चेत्, मास्त्वभयं, तथापि भवतो नाभिमतसिद्धिः नानुमितं न साक्षात्कृतं श्रुतमेवेदमिति प्रतीतेः सर्वानुभवसिद्धाया एव मानत्वाच्च ।

केचित्तु शब्दश्रवणानन्तरं जायमानस्य वाक्यार्थबोधस्यानुमितिरूपत्वे साध्यनिश्चयदशायां सिषाधयिषामन्तरेण स न स्यात्' पक्ष-

---

(१) तादृशानुभवसिद्धशाब्दत्वनामजातिविशेष इति ख०, ग०।

ताविरहादित्यतिरिच्यते शब्दः। न च सिषाधयिषाविरहवच्छा-ब्दसामग्रीविरहोऽपि पक्षतायां प्रवेशनीयः[१] इति वाच्यं। तथा सति सिषाधयिषा-शाब्दसामग्रीविरहविशिष्टसिद्ध्यभावत्वेन पक्ष-ताया अनुमितिहेतुत्वे गौरवापत्तेः। न च विशिष्टान्तं न कार-णतावच्छेदके प्रविष्टं अपि तु अभावविशेषपरिचायकं कारणत्वन्तु तदभावव्यक्तित्वेनेति न गौरवमिति वाच्यं। अभावस्य तद्व्यक्तित्वेन कारणत्वे बहुतरकार्य्य-कारणभावविलोपप्रसङ्ग इति[२] बहुषु प्रति-पादितत्वादित्याहुः। तदसत्। अनुमितावपि पक्षताया हेतुत्वे मानाभावादिति कृतं पल्लवितेन।

---

(१) तथाच शाब्दसामग्रीदशायां साध्यनिश्चयसत्त्वे शाब्दसामग्रीविरह-विशिष्टसाध्यनिश्चयाभावसत्त्वान्न पक्षताहानिः।

(२) तथाच बाधनिश्चयाभावस्य सत्प्रतिपक्षनिश्चयाभावस्य अवच्छेदकधर्म्म-दर्शनाभावस्य च तादृशतादृशाभावत्वेन पृथक् पृथक् कारणत्वं सर्व्वानु-भवसिद्धं, यदि तत्तद्व्यक्तित्वेनाभावकारणत्वं स्वीक्रियते तदा बाधनिश्चय-सत्प्रतिपक्षनिश्चयावच्छेदकधर्म्मदर्शनैतत्त्रितयान्यतमत्वावच्छिन्नाभावस्य तद्व्यक्तित्वेन कारणत्वसम्भवात् तादृशकारणत्वं विलीयेत, विलीयेत च समानविषये शाब्दत्वावच्छिन्नं प्रति प्रत्यक्षसामग्र्यभावस्य अनुमिति-सामग्र्यभावस्य च पृथक् कारणत्वं, तत्रापि तादृशसामग्रीद्वयान्यतर-त्वावच्छिन्नाभावस्य तद्व्यक्तित्वेन कारणत्वसम्भवात्। तत्तद्व्यक्तित्वेना-भावकारणत्वं यदि न स्वीक्रियते तदा तादृशान्यतमत्वावच्छिन्नाभावस्य तादृशान्यतमत्वावच्छिन्नाभावत्वेनैव कारणत्वमवश्यमङ्गीकार्य्यं तथाच तादृशान्यतमत्वस्य गुरुशरीरतया तदपेक्षया प्रत्येकरूपावच्छिन्नाभावस्य प्रत्येकरूपावच्छिन्नाभावत्वेन कारणत्वे लाघवात् न तादृशकारणत्व-विलयप्रसङ्ग इति भावः।

अरन्मीमांसकास्तु लोके वक्तृज्ञानानुमानात्तदुप-

---

ननु घटमानयेत्यादौ सर्वत्र लौकिकवाक्ये शाब्दबोधात् पूर्वमयं वक्ता आधेयतादिसंसर्गककर्मत्वादिविषयकघटादिविशिष्टज्ञानवान् आधेयतादिसंसर्गेण कर्मत्वादिसाकाङ्क्षं यद्घटादि तस्य यज्ज्ञानं तज्जन्यं भ्रमाद्यजन्यञ्च यद्वाक्यं तत्प्रयोक्तृत्वात् योयत्संसर्गक-यत्साकाङ्क्ष-यज्ज्ञानजन्य-भ्रमाद्यजन्यवाक्यस्य प्रयोक्ता स तत्संसर्गक-तद्विषयक-तद्विशिष्टज्ञानवान् घटेनेतिवाक्यप्रयोक्ता आधेयतासंसर्गक-करणत्व-विषयकघटविशिष्टज्ञानवान् अहमिवेत्यनुमानस्य कर्मत्वादिकमाधेयतादिसंसर्गेण घटादिमत् तेन संसर्गेण स्वविषयकघटादिविशिष्टज्ञानवदुक्तपदस्मारितत्वात् घटादिकरणत्वादिवदित्यनुमानस्य वा सामग्रीसम्भवेन तादृशानुमित्यनन्तरमेव शाब्दबोध इति लौकिकशब्दोऽनुवादक एव न तु प्रमाणं अगृहीतग्राह्यनुभवकरणत्वस्यैव प्रामाण्यपदार्थत्वाद्वेदे तु वक्तुरभावेनैव तादृशानुमानासम्भवात् प्रमाणत्वमिति प्राचीनमीमांसकमतन्निराकर्त्तुमुपन्यस्यति, 'जरदिति, एतन्मते सर्वत्र लौकिकवाक्ये शाब्दबोधात्प्रागनुमितिसामग्रीसम्भवादनुमित्यनन्तरमेव शाब्दबोध इति लौकिकशब्दोऽनुवादकः, वक्ष्यमाणप्राभाकरमते तु लौकिकस्थले शाब्दबोधनिर्वाहकमेव वक्तृज्ञानानुमानमिति लौकिकः शब्दोऽनुवादक इति ततो भेदः । 'लोके' लौकिकवाक्ये, 'वक्तृज्ञानेति अयं वक्तेत्युक्तप्रकारेणेत्यर्थः । ननु वक्तृज्ञानानुमानात्कर्मत्व-घटाद्योस्तत्संसर्गस्य च सिद्धावपि कर्मत्वादौ घटादिमत्त्वं न सिद्धमित्यत आह, 'तदुपजीवीति वक्तृज्ञा-

**जीविसंसर्गानुमानादा वाक्यार्थसिद्धौ शब्दस्यानुवादकत्वं वेदे तु तदभावात् स्वातन्त्र्येण प्रामाण्यमिति[१]**

---

नानुमानोपजीवीत्यर्थः, 'संसर्गानुमानादिति कर्मत्वादिकमाधेयतादिसंसर्गेण घटादिमत् तेन संसर्गेण स्वविषयकघटादिविशिष्टज्ञानवदुक्तपदस्मारितत्वादित्यनुमानादित्यर्थः। न च भ्रमात्मकघटविशिष्टज्ञानमादाय व्यभिचार इति वाच्यं। परैर्भ्रमानभ्युपगमादिति भावः। एतस्य वक्तृज्ञानानुमानोपजीवित्वन्तु कर्मत्वविषयकघटविशिष्टज्ञानस्य हेतुघटकत्वेन तत्सिद्धिद्वारा बोध्यं। 'वाक्यार्थसिद्धौ' सर्वत्र शाब्दबोधात्प्रागुक्तवाक्यार्थसिद्धौ, 'शब्दस्य' लौकिकशब्दमात्रस्य, 'अनुवादकत्वं' गृहीतग्राह्यनुभवमात्रजनकत्वं स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमानाकारनिश्चयविषयविषयक-तद्विशेष्यक-तत्प्रकारकानुभवमात्रजनकत्वमिति यावत्, स्वपदमनुभवपरं, न तु प्रमाणत्वमिति शेषः, अगृहीग्राह्यनुभवकरणत्वस्यैव प्रामाण्यपदार्थत्वात्। अगृहीतग्राह्यनुभवकरणत्वञ्च गृहीतग्राहीतरानुभवमात्रकरणत्वं, तच्च स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमानाकारनिश्चयविषयविषयकेतर-तद्विशेष्यक-तत्प्रकारकानुभवकरणत्वं, स्वसमानाकारत्वञ्च स्वस्मिन् यादृशी तद्विशेष्यकत्वावच्छिन्न-तत्प्रकारिता तादृशतद्विशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वमिति भावः। 'तदभावादिति वक्तुरभावेन वक्तृज्ञानाद्यनुमानाभावादित्यर्थः, 'स्वातन्त्र्येण' वक्तृज्ञानाद्यनुमानं विनापि शाब्दबोधजनकत्वेन, 'वेद इति वेदस्थले

---

(१) प्रमाणत्वमितीति ख०।

वदन्ति । तन्न । वेदे क्लृप्तसामग्रीतो लोकेऽपि संसर्ग-
प्रत्ययादन्यथानुवादकतापि न स्यात् लिङ्गस्य पूर्वत्वे-
ऽपि[१] व्याप्तिस्मृतिविलम्बेन तद्विलम्बात् । अनाप्तोक्तौ
व्यभिचारात् वेदतुल्यापि सामग्री न निश्चायिकेति

---

क्लृप्तशाब्दसामग्रीत इत्यर्थः, 'संसर्गप्रत्ययादिति वक्तृज्ञानाद्यनुमानात्प्रा-
गेव संसर्गशाब्दबोधादित्यर्थः, 'अन्यथेति वैदिकस्थले क्लृप्तशाब्दसा-
मग्र्या लौकिकस्थले विरहे इत्यर्थः, 'अनुवादकतापीति गृहीत-
ग्राहिशाब्दधीजनकत्वमपीत्यर्थः, सामग्र्या अभावादिति भावः । ननु
वक्तृज्ञानाद्यनुमानात्प्रागेव संसर्गप्रत्ययो भवतीत्युक्तमयुक्तं सर्वत्र शाब्द-
सामग्रीदशायां हेतुज्ञानसत्त्वेनानुमितिसामग्र्याः सत्त्वादनुमितेरेव
प्रथममुत्पादात् शाब्दसामग्र्यपेक्षया अनुमितिसामग्र्या बलवत्त्वादि-
त्यत आह, 'लिङ्गस्येति, 'पूर्व्वत्वेऽपि'[२] हेतुतावच्छेदकरूपेण ज्ञात-
त्वेऽपि, 'तद्विलम्बात्' अनुमितिविलम्बात्, लौकिकवाक्ये क्वचिदनु-
वादकत्वन्तु दृष्टमेवेति भावः । 'अनाप्तोक्ताविति, 'अनाप्तोक्तौ' लौकि-
कवाक्ये इत्यर्थः, 'व्यभिचारात्' व्यभिचारदर्शनात् भ्रमजनकत्वदर्श-
नादिति यावत्, 'वेदतुल्येति लौकिकवाक्यस्थले वेदतुल्यसाम-
ग्रीमात्रं न निश्चायकं किन्तु आप्तोक्तत्वनिश्चयोऽपीत्यर्थः । क्वचिल्लौ-
किकवाक्ये भ्रमजनकत्वदर्शनात् लौकिकवाक्यत्वरूपसाधारणधर्मदर्श-
नेन सर्वत्र लौकिकवाक्ये भ्रमजनकत्वसंशयसम्भवात्तस्यैव प्रतिबन्धक-

---

(१) पूर्णत्वेऽपीति क० । (२) पूर्णत्वेऽपीति क० ।

चेत्। न। चक्षुरादेस्तथात्वेन तच्छङ्कायामपि प्रमापकत्वात्। ज्ञायमानं करणं सन्देहे न निश्चायकं लिङ्गवदिति चेत्। न। संशयो हि[1] न वाक्ये तस्य निश्चयात्,[2] न तज्जन्यज्ञानप्रामाण्ये तस्य तदुत्तरकाली-

---

त्वादाप्तोक्तत्वनिश्चये च न तत्संशयः आप्तोक्तत्वञ्च तत्पदार्थवत्तत्पदार्थज्ञानवदुक्तत्वं, तथाच तन्निश्चयादेव वाक्यार्थसिद्धा शब्दस्यानुवादकत्वमिति भावः। 'तथात्वेन' क्वचिद्भ्रमजनकत्वेन, 'तच्छङ्कायामपि' चक्षुष्ट्वरूपसाधारणधर्मदर्शनेन भ्रमजनकत्वशङ्कायामपि, तथाच भ्रमजनकत्वसंशयो न प्रमाम्प्रति प्रतिबन्धकः व्यभिचारादिति भावः। प्रमाणविशेषफलं प्रति संशयः प्रतिबन्धक इत्याशङ्कते, 'ज्ञायमानमिति चक्षुरादिस्तु न ज्ञायमानकरणमित्यर्थः, 'लिङ्गवदिति तद्यथा व्याप्ति-पक्षधर्मतासंशयदशायान्नानुमितिजनकमित्यर्थः, तथाच लौकिकवाक्येन संशयसत्त्वे कथं निश्चयोजननीयः। एतद्व्याप्तिबलेन संशयस्य प्रतिबन्धकत्वादिति भावः। ननु व्याप्तिबलेन प्रकृते कस्य संशयः प्रतिबन्धक उच्यते, किमानुपूर्व्वीसन्देहः, तद्वाक्यजन्यज्ञानप्रामाण्यसन्देहः, आप्तोक्तत्वसन्देहोवेति क्रमेण दूषयति, 'संशयोहीत्यादि', 'न वाक्ये' नानुपूर्व्यां, 'तस्य' आनुपूर्वीविशेषस्य; 'तस्य' तज्जन्यज्ञानप्रामाण्यसन्देहस्य, 'तदुत्तरेति तज्जन्यज्ञानोत्तरकालीनत्वादित्यर्थः, तथाच तस्य कथं प्रतिबन्धकतेति भावः[3]।

---

(१) सन्देहोहीति क०। (२) तस्य निश्चयसत्त्वादिति क०।

(३) तथाच तस्य कथं संशयः प्रतिबन्धक इति भाव इति ख०, ग०।

नत्वात्, नाप्तोक्तत्वे तन्निश्चयस्यानङ्गत्वात्[१]। ननु लोके आप्तोक्तत्वसन्देहे वाक्यार्थधीर्नेति तन्निश्चयोहेतुः तथा-च वाक्यार्थगोचरयथार्थज्ञानजन्यत्वग्राहकात्[२] तदुप-जीविनोऽनुमानात् वाक्यार्थधीरिति चेत् । न। वेदे

---

'तन्निश्चयस्यानङ्गत्वादिति, प्रमाणाभावादिति भावः। तथाच आप्तो-क्तत्वनिश्चयो यदि हेतुः स्यात्तदैव तन्निश्चयविघटनद्वारा तत्संशयः प्रतिबन्धकः स्यान्न त्वेवमिति[३] तच्छंशयोऽपि न प्रतिबन्धकः। न च भ्रमजनकत्वसंशय एव प्रतिबन्धकोवक्तव्य इति वाच्यं। तस्य विरोध्यविषयकतया लिङ्गेऽप्यप्रतिबन्धकत्वेन व्यभिचारादिति भावः। 'लोके' लौकिकवाक्यस्थले, 'आप्तोक्तत्वस्य' तत्पदार्थवत्तत्पदार्थज्ञा-नजन्यत्वस्य, सन्देहे व्यतिरेकनिश्चये च, 'तन्निश्चय इति, यत्संशयो यद्व्यतिरेकनिश्चयस्य यत्र प्रतिबन्धकः तन्निश्चयत्वावच्छिन्नस्तद्धेतु-रिति नियमादिति भावः। 'वाक्यार्थगोचरेति तत्पदार्थवत्तत्पदार्थ-ज्ञानजन्यत्वरूपाप्तोक्तत्वस्य ग्राहकादित्यर्थः, 'तदुपजीविन इति बहु-व्रीहिः[४] तदुपजीव्यात् तत्पदार्थे तत्पदार्थानुमानादित्यर्थः, 'वा-क्यार्थधीरिति सर्वत्र शब्दबोधात्पूर्वं वाक्यार्थधीरित्यर्थः, तथाचानु-

---

(१) तन्निश्चयस्यालिङ्गत्वादिति क० ।

(२) वाक्यार्थगोचरयथार्थज्ञानवज्जन्यत्वग्राहकादिति क० ।

(३) न चैवमितीति ख०, ग० ।

(४) तत् उपजीवि यस्य इति बहुव्रीहिरित्यर्थः ।

तद्रहितस्यापि सामर्थ्यावधारणात् तदनिश्चयेऽपि वेदानुकारेण पठ्यमानमन्वादिवाक्येऽपौरुषेयत्वाभिमानिनो गौडमीमांसकस्यार्थनिश्चयात्। न चासौ भ्रान्तिः, बाधकाभावात् पौरुषेयत्वनिश्चयदशायामपि तस्य तथात्वात्।

---

वादकः शब्द इति भावः। आप्तोक्तत्वनिश्चयः किं शाब्दप्रमामात्रे[१] सहकारी, किं वा लौकिकवाक्यादौ, लौकिकत्वेन ज्ञाते वाक्ये वा,[२] नाद्य इत्याह, 'वेद इति, 'तद्रहितस्यापि' विषयतया आप्तोक्तत्वज्ञानरहितस्यापि, 'सामर्थ्येति शाब्दबोधजनकत्वानुभवादित्यर्थः, तन्नयेऽपीत्यादिः, न द्वितीय इत्याह, 'तदनिश्चयेऽपीति आप्तोक्तत्वानिश्चयेऽपीत्यर्थः, 'अपौरुषेयत्वेति पुरुषाप्रणीतत्वेत्यर्थः, 'गौड़ेति, दाक्षिणात्यादीनां वेदाभिज्ञतया तत्र वेदत्वभ्रमासम्भवादपौरुषेयत्वभ्रमोन सम्भवतीति गौडेत्युक्तं। 'न चासौ भ्रान्तिरिति, तथाच लौकिकवाक्येन प्रमायाञ्जनयितव्यायां आप्तोक्तत्वनिश्चयः सहकारीति भावः। भ्रमत्वाभावे हेतुमाह, 'बाधकाभावादिति विषयाबाधादिति भावः। भ्रमत्वाभावे हेत्वन्तरमाह, 'पौरुषेयत्वेति, 'तस्य' मन्वादिवाक्याजन्यशाब्दबोधस्य, 'तथात्वात्' अपौरुषेयत्वाभिमानदशोत्पन्नमन्वादिवाक्यजन्यज्ञानसमानाकारसमानविषयकत्वात्, तथा सति प्रतीत्योर्वैलक्षण्यमनुभूयेतेति भावः। यद्वा 'तथात्वात्' तथात्वापत्तेः

---

(१) शब्दमात्र इति ख॰ ग॰। (२) लौकिकवाक्य इति क॰।

**न चासंसर्गाग्रहमात्रं तत्, अर्थस्य तथाभावेऽपि असंसर्गाग्रहत्वे संसर्गोच्छेदापत्तेः। न चाप्तोक्तत्वनिश्चयरूपकारणबाधात् संसर्गज्ञानबाधः, व्यभिचारेण हेतुतायामेव बाधात् लौकिकत्वेन ज्ञाते[१] तदङ्गमिति**

भ्रमत्वापत्तेरिति यावत्, विषयकृतवैलक्षण्याभावादिति भावः। 'न चासंसर्गेति, न चैवं ततः संवादिनी प्रवृत्तिर्न स्यात्तस्याः विशिष्टज्ञानसाध्यत्वादिति वाच्यं। गुरुनये असंसर्गाग्रहस्यैव संवादिप्रवृत्तावपि हेतुत्वात्। 'अर्थस्य' विषयस्य, 'तथाभावेऽपि' अबाधितत्वेऽपि, यद्वा 'अर्थस्य' वाक्यार्थसंसर्गग्रहस्य, तथात्वेऽपि अनुभवसिद्धत्वेऽपि, 'संसर्गोच्छेद इति[२], मानाभावादिति भावः। 'हेतुतायामेवेति, संसर्गज्ञानस्यानुभवसिद्धत्वादिति भावः। तृतीयमाशङ्कते, 'लौकिकत्वेनेति लौकिकत्वेन ज्ञाते लौकिक इत्यर्थः, अन्यथा लौकिकत्वेन ज्ञातस्य वेदस्यानुवादकतापत्तेः। 'अङ्गं' सहकारि, मन्वादिवाक्यन्तु अपौरुषेयत्वाभिमानदशायां न लौकिकत्वेन ज्ञातमिति नोक्तव्यभिचारइति भावः। 'मानाभावादिति। न च यत्संशयेत्यादिव्याप्तिरेव[३] मानमिति वाच्यं। तस्या व्याप्तेरव्यभिचारसंशयप्रतिबध्ये व्याप्तिज्ञाने व्यभि-

(१) तल्लौकिकत्वेन ज्ञान इति क०।

(२) 'संसर्गोच्छेदापत्तेरित्यत्र 'संसर्गोच्छेदः' इति कस्यचिन्मूलपुस्तकस्य पाठः ईदृशटीकाकारस्वरसेनानुमीयत इति।

(३) यत्संशये यद्व्यतिरेकनिश्चये च यदनुत्पत्तिस्तन्निश्चयस्तत्र कारणमिति व्याप्तिबलेनेत्यर्थः।

चेत्। न। मानाभावात् वाक्यार्थस्यापूर्व्वत्वेन लिङ्गाभावेन तद्ग्रहासम्भवात्। ननु अनाप्तोक्तत्वशङ्काव्युदासोऽङ्गं स च वेदेऽपौरुषेयत्वनिश्चयात् लोके चा-

---

चारात्। ग्राह्याभावानवगाहित्वेन व्यतिरेकनिश्चयविशेषणे यत्संशयइत्यस्य वैयर्थ्यापत्तेः योग्यताव्यतिरेकनिश्चयस्यापि ग्राह्याभावावगाहितया शाब्दबुद्धिमादाय योग्यतायां व्यभिचाराभावादप्रयोजकत्वाच्चेति भावः। 'वाक्यार्थस्येति, 'वाक्यार्थस्य', 'अपूर्वत्वेन' अन्वयबोधात्प्रागज्ञातत्वेन[१], तद्घटिताप्तोक्तत्वरूपसाध्याप्रसिद्ध्या लिङ्गस्य साध्यव्याप्यत्वेन गृहीतस्य कस्यचिदभावेनेत्यर्थः, यद्वा 'वाक्यार्थस्यापूर्वत्वेनेत्यनेन साध्याप्रसिद्धिमुक्त्वा हेत्वन्तरमाह, 'लिङ्गाभावेनेति भ्रमाद्यमूलकत्वप्रवृत्तिसंवादादेर्लिङ्गस्य अन्वयबोधात्प्राक्ज्ञानाभावेन चेत्यर्थः, चकारपूरणात्[२] परकीयभ्रमादेरयोग्यत्वात्प्रवृत्तिसंवादस्य च प्रवृत्त्युत्तरकालीनग्राह्यत्वादिति भावः।

केचित्तु 'लिङ्गाभावेनेति, 'लिङ्गं' कारणं, तच्च साध्यप्रसिद्धिः[३] तदभावादित्यर्थः, अत्रैव हेतुः 'अपूर्वत्वेनेत्याहुः।

आप्तोक्तत्वनिश्चयस्याजनकत्वेऽपि प्रयोजकत्वात्तदपेक्षेत्याह,[४] 'नन्विति, 'अपौरुषेयत्वेति पुरुषाप्रणीतत्वेत्यर्थः, 'तस्य' आप्तोक्तत्वा-

---

(१) अन्वयबोधात् प्रागज्ञानाभावेनेति ख०, ग०।

(२) अन्वयबोधात् प्राक् चकारपूरणात् ज्ञानाभावेन चेत्यर्थ इति क०।

(३) तच्च प्रसिद्धिरिति क०।

(४) आप्तोक्तत्वेत्यादिः नन्वितीत्यन्तः पाठः ख०, ग०-चिह्नितपुस्तकद्वये नास्ति।

प्तोक्तत्वावधारणादिति चेत्। न। तस्याशक्यत्वात्। यदि चापौरुषेयत्वनिश्चये सत्येव वेदादर्थप्रत्ययः[१] तदा दोषवत्पुरुषाप्रणीतत्वे सत्याकाङ्क्षादिमत्पदस्मारितत्वेन वेदे पदार्थसंसर्गसिद्धिरस्त्विति वेदोऽप्यनुवादकः स्यात्। तदुक्तं, "व्यस्तपुंदूषणाशङ्कैः स्मारितत्वात्

---

वधारणस्य, 'अशक्यत्वादिति अन्वयबोधात् प्रागित्यादिः, वाक्यार्थस्यापूर्वत्वेनाप्तोक्तत्वरूपसाध्याप्रसिद्धेः तथाचानाप्तोक्तत्वशङ्काव्युदासो-नाङ्गमिति भावः। इदमुपलक्षणं तच्छङ्काव्युदासस्याङ्गत्वेऽपि यत्र कारणान्तरविरहात्तच्छङ्काविरहस्तत्रानुवादकत्वसम्भवाच्चेत्यपि द्रष्टव्यं। दूषणान्तरमाह, 'यदि चेति, 'तदेति, एते पदार्थास्तात्पर्य्यविषयमिथःसंसर्गवन्त इति साध्यादि, 'दोषवदिति, अयोग्यवाक्ये व्यभिचारवारणाय सत्यन्तं पदविशेषणं। न च तत्र योग्यताविरहान्न व्यभिचार इति वाच्यं। आदिपदेन योग्यताया अपरिग्रहात्। न चैवं विसम्वादिशुकवाक्ये व्यभिचार इति वाच्यं। आदिपदेन तात्पर्यपरिग्रहात्। आकाङ्क्षाव्यावृत्तिस्तु पूर्वरीत्या बोध्या। 'पदार्थसंसर्गसिद्धिरिति, शाब्दबोधात्प्रागित्यादिः। 'तदुक्तमिति आचार्य्यचरणैरपीति शेषः[२]। 'व्यस्तेति, 'व्यस्ता' विगता, 'पुंदूषणाशङ्का' वक्तृदूषणाशङ्का येषां पदानां एतादृशैः पदैः स्मारितत्वात्, 'असौ'

---

(१) वेदादर्थनिश्चय इति ख०।

(२) उदयनाचार्य्यैरित्यर्थः।

पदैरमी। अन्विता इति[१] निर्णीते वेदस्यापि न तत्कुतः" ॥ न चैवं शब्दस्य प्रमाणत्वमपि, अनुमानादेव वाक्यार्थप्रमोत्पत्तेरिति।

प्राभाकरास्तु व्यभिचारिशब्दव्यावृत्तमव्यभिचार्य-

पदार्थाः, 'अन्विताः' परस्परसंसर्गवन्तः, 'इति निर्णीते' इत्यनुमानेन वेदस्थलेऽपि शाब्दबोधात् प्रागर्थे निर्णीते, 'वेदस्यापि', 'तत्' अनुवादकत्वं, न कुत इत्यन्वयः। दूषणान्तरमाह, 'न चेति न वेत्यर्थः, 'एवं' सर्वत्र शाब्दबोधात्प्राक्पदार्थसंसर्गानुमानस्यावश्यकत्वे, 'प्रमाणत्वमपि' वाक्यार्थबोधजनकत्वमपि, सिद्ध्यतीति शेषः[२]। 'अनुमानादेवेति, शाब्दमात्रस्थल एवानुमानादेवाभिमतवाक्यार्थप्रमोत्पत्तेः शब्दस्य संसर्गप्रमाजनकत्वकल्पनायां प्रयोजनाभावादिति भावः[३]।

कपिञ्जलानालभेतेत्यादौ कपिञ्जलपदार्थविशेष्यकत्रित्वप्रकारकप्रतीतिपरमिति सामान्यतस्तात्पर्यग्रहोऽपेक्षित इति कपिञ्जलपदार्थत्वेन वक्त्रिच्छाज्ञानात् वेदोनानुवादकः लोकस्थले च विशिष्य तात्पर्यज्ञानस्यापेक्षिततया गृहीतग्राहिशाब्दानुभवकरणतया लौकिकशब्दोऽनुवादक इति मतमवतारयति, 'प्राभाकरास्त्वित्यादिना,[४] 'व्यभिचारिशब्देति प्रमितिस्वरूपायोग्यव्यावृत्तमित्यर्थः, यद्वा विस-

(१) यदीति क०।

(२) अस्तीति शेष इति क०।

(३) प्रयोजनाभावादित्यर्थ इति ख०, ग०।

(४) कपिञ्जलेत्यादिः प्राभाकरास्त्वित्यादिनेत्यन्तः पाठः ख०-ग०चिह्नितपुस्तकद्वये नास्ति।

नुगतप्रमाप्रयोजकमुपेयं यदभावादनाप्तोक्तवाक्याद-
प्रमा अन्यथा कार्य्यवैचित्र्यं[(१)] न स्यात्, तच्च ज्ञात-

---

त्वादिप्रवृत्तिहेतुज्ञानजनकव्यावृत्तमित्यर्थः, न त्वप्रमाजनकव्यावृत्त-
मित्यर्थः, तैरप्रमानभ्युपगमात्, 'अव्यभिचारीति निखिलप्रमाजन-
कवाक्यवृत्तीत्यर्थः, किञ्चिदिति शेषः, 'अप्रमा' प्रमाविरहः, 'कार्य्यवै-
चित्र्यमिति क्वचित्प्रमा क्वचित्तदभाव इत्येवं रूपमित्यर्थः, । न चैवं
शाब्दप्रमात्वावच्छिन्नं प्रति किञ्चित्कारणाभ्युपगमे तन्मते प्रमाया-
गुणजन्यत्वापत्तिः[(२)] प्रमात्वघटितधर्मावच्छिन्नकार्यताप्रतियोगिकका-
रणताश्रयस्यैव गुणत्वात् तथाच तस्यापसिद्धान्त इति वाच्यं। शाब्द-
ज्ञानत्वमेव हि तस्य कार्यतावच्छेदकं न तु शाब्दप्रमात्वं गौरवात्
व्यावृत्त्यभावाच्चेति[(३)] न तस्य गुणत्वमिति भावः। परिशेषसौकर्य्यार्थं
तत्स्वरूपमभिधाय तज्ज्ञानकारणत्वं साधयति,[(४)] 'तच्चेति तच्छब्द-

---

(१) शब्दात् कार्य्यवैचित्र्यमिति क०।

(२) तथाच यैरप्रमा स्वीक्रियते तेषां मते कार्य्यवैचित्र्यस्य कारणवैचित्र्य-
प्रयोज्यत्वात् प्रमाभ्रमयोर्वैचित्र्यार्थं प्रमात्वावच्छिन्नं प्रति गुणत्वेन
अप्रमात्वावच्छिन्नं प्रति दोषत्वेन कारणत्वमवश्यमुपेयं, किन्तु यैरप्रमा
न स्वीक्रियते तेषां मते प्रमा-भ्रमयोर्वैचित्र्यासम्भवात् प्रमात्वावच्छिन्नं
प्रति गुणत्वेन कारणत्वं निष्प्रयोजनकमिति गुणजन्यत्वापादनं सम्भव-
दुक्तिकमिति भावः।

(३) प्रमात्वं अप्रमाव्यावर्त्तकं यन्मते अप्रमा नास्ति तन्मते प्रमात्वमव्यावर्त्त-
कमिति तात्पर्य्यं।

(४) परिशेषेत्यादिः साधयतीत्यन्तः पाठः ख०-ग०चिह्नितपुस्तकद्वये नास्ति।

•वृत्तिशब्दप्रयोजकमित्यर्थः, 'ज्ञातमुपयुज्यत इति शाब्दबोधं प्रती-त्यादिः. ज्ञानवृत्तिशाब्दबोधकारणतायां विषयतयाऽवच्छेदकमि-त्यर्थः, प्रवेशनाच्चैव स्वलिङ्गकानुमितौ ज्ञातोपयोगित्वेन सिद्धसा-धनवारणाय शाब्दज्ञानेति । शाब्दज्ञानस्य स्वाविषयकत्वेन विशेष-णीयत्वेन पदादिजन्यपदार्थोपस्थितिनिष्ठायाः स्वविषयकशाब्दज्ञा-नकारणताया विषयतासम्बन्धेनावच्छेदकत्वमादाय न सिद्धसाधनं । शाब्दबोधजनकीभूतज्ञानविषयत्वं नार्थः भगवज्ज्ञानमादाय नैया-यिकनये सिद्धसाधनात् तन्मतेऽपि तच्छाब्दबुद्धिं प्रति स्वरूपयोग्यस्य कालान्तरीयपदज्ञानस्य दैवात् तात्पर्यविषयत्वेन सिद्धसाधनाच्चेति मन्तव्यं । 'ज्ञायमानकरण इति, अत्र सप्तम्यर्थः निष्ठत्वं, अन्वयश्चास्य वैलक्षण्येन, तथाच ज्ञायमानकरणनिष्ठत्वे सति ज्ञानोपयोगिव्यभि-चारिवैलक्षण्यत्वादित्यर्थः, 'ज्ञानोपयोगीत्यत्र ज्ञानपदं[१] शाब्दबो-धपरं, अन्यथा व्याप्तौ व्यभिचारात्। साध्ये विशिष्य शाब्दबोध-प्रवेशात् यज्ज्ञायमानकरणनिष्ठत्वे सति यज्ज्ञानोपयोगिव्यभिचा-रिवैलक्षण्यं भवति तज्ज्ञानवृत्तिस्वाविषयकतज्ज्ञानकारणतायाः[२] विषयतया अवच्छेदकं भवतीति सामान्यतो व्याप्तिलाभाय सामा-न्यतो ज्ञानेत्युक्तं, चक्षुरादिनिष्ठे पित्ताद्यभावे भूयोऽवयवेन्द्रियस-न्निकर्षे च प्रत्यक्षमादाय व्यभिचारवारणाय सत्यन्तं। ज्ञायमान-करणत्वञ्च ज्ञानावच्छिन्नतत्प्रमाकरणतावत्त्वं, अन्यथा चक्षुरादेरपि ज्ञायमानत्वेन करणत्वेन च तद्वृत्तिभूयोऽवयवेन्द्रियसन्निकर्षादौ

(१) द्वितीयज्ञानपदमिति क० ।

(२) तज्ज्ञानवृत्तितज्ज्ञानकारणताया इति ख०, ग० ।

मुपयुज्यते ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवै-

---

व्यभिचारतादवस्थ्यात् चक्षुरादेरप्यनुमितिं प्रति ज्ञानावच्छिन्न-तत्करणतावत्त्वेन तद्दोषतादवस्थ्यमिति तन्नेति, ज्ञायमानकरण-धूमादिनिष्ठरूपादौ व्यभिचारवारणाय तज्ज्ञानोपयोगीति, उप-योगित्वं कारण-कारणतावच्छेदकसाधारणं, अतो न दृष्टान्तासङ्गतिः। साध्याभावनिश्चयाभाव-तद्व्याप्यवत्पक्षनिश्चयाभावादिषु[१] व्यभिचारः तस्यापि ज्ञायमानकरणलिङ्गनिष्ठत्वात् तदनुमितिजनकत्वाच्च, एव-मात्मलिङ्गकानुमितौ कारणीभूतपरामर्शात्ममनःसंयोगानुमितिप्रा-गभावादौ च व्यभिचार इति तद्वारणाय 'व्यभिचारिवैलक्षण्येति व्यभिचारिव्यावृत्तत्वेत्यर्थः, तदर्थश्च प्रमेतरज्ञानजनकावृत्तित्वं, प्रमा-त्वमनुभवत्वमात्रं, तथाच स्मृतिजनकावृत्तित्वं पर्यवसितोऽर्थः, यथा-श्रुते तन्मते भ्रमाप्रसिद्ध्या अप्रसिद्ध्यापत्तेः[२]। एवञ्च साध्याभावनिश्च-याभावादौ आत्मलिङ्गकपरामर्शादौ तादृशानुमितिप्रागभावादौ पक्षतादौ च न क्वापि व्यभिचारः तेषां स्मृतिजनकात्मवृत्तित्वात्। आत्मा तु न ज्ञायमानकरणनिष्ठ इति न तत्र व्यभिचारः। न च तत्र सूर्यक्रियायां कालत्वेनाधिकरणत्वेन वा सूर्यलिङ्गकानुमिति-हेतुभूतायां व्यभिचारः, तदितरोपयोगिताया एव हेतूकरणात्।

केचित्तु 'व्यभिचारिवैलक्षण्यत्वं' भ्रमाजनकत्वं, भ्रमत्वं प्रमेतर-ज्ञानत्वं प्रमात्वमप्यनुभवत्वमात्रमेव, तथाच स्मृत्यजनकत्वं पर्यवसि-

---

(१) साध्याभावनिश्चयाभाव-साध्याभावव्याप्यवत्पक्षनिश्चयाभावादिष्विति

(२) प्रमेतरज्ञानाप्रसिद्ध्यापत्तेरित्यर्थः। ख०, ग०।

नोऽर्थः, शक्तिश्च न पदार्थस्मृतिजनिका किन्तु तस्या ज्ञानमेवेति न दृष्टान्तासङ्गतिः। अजनकत्वञ्च जनकतावच्छेदकशून्यत्वं नातः स्मृत्यनुपधायिकायामात्मलिङ्गकानुमितिजनकीभूतपरामर्शात्मम-नःसंयोगादिव्यक्तौ व्यभिचारः, जनकता च ज्ञायमानलिङ्गत्वाव-च्छिन्नजनकताव्यावृत्ता उद्बोधकीयजनकताव्यावृत्ता च ग्राह्या तेन वस्तुमात्रस्यैव ज्ञायमानलिङ्गविधया प्रमेयसामान्यात्मककूटलिङ्गका-नुमितिस्थानाभिषिक्तत्वाध्यस्मृतिजनकत्वेऽपि नाप्रसिद्धिः। न वा व्याप्ति-यथार्थतात्पर्यकत्वयोरपि क्वचिदुद्बोधकविधया स्मृतिजनक-त्वेऽपि दृष्टान्तासिद्धि-स्वरूपासिद्धी। पक्षता च परनये नानु-मितिजनिकेति[१] न तत्र व्यभिचारः। न चात्मलिङ्गकप्रमानुमिति-प्रागभावे व्यभिचार इति वाच्यम्। प्रागभावस्य तैरनभ्युपगमात् तज्ज्ञानानधिकरणत्वेन वा ज्ञायमानकरणस्य विशेषणीयत्वादि-त्याहुः।

अन्ये तु 'ज्ञायमानकरण इत्यत्र सप्तम्यर्थो जन्यत्वं, अन्वयश्चास्य ज्ञाने, तथाच ज्ञायमानकरणजन्यज्ञानोपयोगिव्यभिचारिवैलक्षण्य-त्वादित्यर्थः, यज्ज्ञायमानकरणजन्ययज्ज्ञानोपयोगिव्यभिचारिवैल-क्षण्यं भवति तज्ज्ञानवृत्तित्वाविषयकतज्ज्ञानकरणतायां विषयतया अवच्छेदकं भवतीति सामान्यमुखी व्याप्तिः, भूयोऽवयवेन्द्रियसन्निकर्षे चक्षुरादिनिष्ठपित्ताद्यभावे च प्रत्यक्षमादाय व्यभिचारवारणाय ज्ञायमानकरणजन्येति यज्ज्ञानविशेषणं, तदर्थश्च ज्ञायमानत्वघटि-

---

(१) परैरनुमितिधारास्वीकारात् न तेषां मते पक्षताया हेतुत्वमिति तात्पर्य्यं।

लक्षण्यत्वात् प्रमाहेतुत्वाद्वा व्याप्तिवच्छब्दशक्तिवच्चेति,

---

तद्धर्मावच्छिन्नकारणताकेति, अन्यथा चक्षुरादेरपि ज्ञायमानत्वात् करणत्वाच्च व्यभिचारस्य तदवस्थत्वात्,[१] उपयोगित्वञ्च कारण-कारणतावच्छेदकसाधारणं, तेन न दृष्टान्तासिद्धिः। अनुमिति-मादायात्ममनःसंयोगादौ बाधाभावादौ च व्यभिचारंवारणाय 'व्यभिचारीति, व्यभिचारिवैलक्षण्यत्वञ्च भ्रमजनकतावच्छेदका-वच्छिन्नान्यत्वं, भ्रमत्वं प्रमेतरज्ञानत्वं, नातस्तन्नयेऽप्रसिद्धिः, प्रमात्व-मपि अनुभवत्वमात्रमेव, तथाच स्मृतिजनकतावच्छेदकावच्छिन्नान्यत्वं पर्यवसितोऽर्थः, स्मृत्यनुपधायिकायामात्ममनःसंयोगादिव्यक्तौ व्यभि-चारवारणायावच्छेदकानुसरणं, अन्यत्सर्वं पूर्ववत्। प्रागभावस्तु तन्मते नास्त्येव तेनानुमित्यादिप्रागभावे न व्यभिचार इत्याहुः। तदुभयमप्यसत् यद्धर्मावच्छिन्नविशेष्यक-यद्धर्मावच्छिन्नप्रकारकस्मृतिः कदापि कस्यापि न जाता तद्धर्मावच्छिन्नविशेष्यक-तद्धर्मावच्छिन्ना-भावनिश्चयाभावादौ व्यभिचारप्रसङ्गादिति सङ्क्षेपः।

'प्रमेति, प्रमापदं शाब्दज्ञानपरं, तेन व्याप्त्यादौ न व्यभिचारः। यद्यज्ज्ञानहेतुर्भवति तज्ज्ञानवृत्तित्वाविषयकतज्ज्ञानकारणतायां विषयतया अवच्छेदकं भवतीति सामान्यमुखी व्याप्तिः, हेतुत्वमुप-योगित्वमात्रं कारण-कारणतावच्छेदकसाधारणं, अतो न दृष्टान्ता-सङ्गतिः। न चानुमितिमादायात्ममनःसंयोगे बाधाभावादौ व्यभि-चार इति वाच्यम्। यद्यज्ज्ञानवृत्त्यनुभवमात्रवृत्तिधर्मावच्छिन्न-

---

(१) तद्दोषतादवस्थ्यादिति ख०, ग०।

अन्यथा शब्दाभासोच्छेदप्रसङ्गः। न चाप्तोक्तत्वं तथा, संवादात् प्रमाणे शुकोदीरिते भ्रान्तप्रतारकसंवादि-

---

कार्यतानिरूपितोपयोगितावद्भवतीति विवक्षणीयत्वात्। न च तथापि भूयोऽवयवेन्द्रियसन्निकर्षे व्यभिचार इति वाच्यम्। ज्ञाय-मानत्वघटितधर्मावच्छिन्नकरणताकयज्ज्ञानवृत्तीति विवक्षणीय-त्वात्। न च तथापि परामर्शे व्यभिचार इति वाच्यम्। ज्ञानान्यत्वे सतीत्यनेन हेतोर्विशेषणीयत्वात् पक्षता-प्रागभावादिस्तु नैतन्मतेऽनु-मितिहेतुरिति न तत्र व्यभिचारः। अत्रानुकूलतर्कमाह, 'अन्यथेति यदि स्वरूपसदेव तात्पर्यं हेतुः न तु तन्निश्चय इत्यर्थः, 'शब्दा-भासोच्छेदेति तात्पर्यसन्देहदशायां सतात्पर्यकशब्दात् शाब्दा-नुत्पत्त्युच्छेदप्रसङ्ग इत्यर्थः,(१) वस्तुगत्या तात्पर्यस्य तत्र सत्त्वेन तदर्थान्वयबोधसम्भवादित्यर्थः।

परे तु 'अन्यथेति भवन्मत इति शेषः। शब्दाभासेति घटो-ऽस्तीति वाक्ये घटाभावतात्पर्यभ्रमे घटाभावबोधः(२) न स्यादित्यर्थः, इत्याहुः।

तात्पर्यं परिशेषयितुं प्रयोजकान्तरं निरस्यति, 'न चेत्यादिना, 'आप्तोक्तत्वं' प्रकृतवाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वं, 'तथा' प्रमाप्रयो-जकं, 'संवादात्' संवादिप्रवृत्तिजनकत्वात्, अबाधितविषयकत्वाद्वा,(३)

---

(१) इत्यर्थ इत्यनन्तरं "यद्वा अन्यपरादन्यपरत्वभ्रमे यत्र तात्पर्यं तदर्थ-बोधानुत्पत्त्युच्छेदप्रसङ्गः" इत्यधिकः पाठः क-चिह्नितपुस्तके वर्त्तत इति।

(२) घटाभावभ्रम इति ख०, ग०।

(३) अबाधितविषयकबोधजनकत्वादिति क०।

**वाक्ये वेदे च तद्भावादाप्तोक्तत्वानुमाने व्यभिचारि-व्यावृत्तलिङ्गाभावाच्च । भावे वा तद्वत एव शब्दस्य प्रत्यायकत्वात्[१] ।**

---

'भ्रान्तेति, भ्रान्तप्रतारकस्य भ्रमरूपविशेषादर्शनेन वाक्यार्थगोचर-यथार्थज्ञानवत्त्वरूपाप्तत्वस्यासम्भवादिति भावः। 'वेद इति मूर्खपठ्य-मानवेद इत्यर्थः। ननु भवन्मये वर्णानां नित्यैकतया शुकादिवाक्येऽपि शिवकमादायाप्तोक्तत्वमस्ति। न च तथापि दैववशसम्पन्ने अपूर्वा-नुपूर्व्वीकशुकादिमात्रोक्तवाक्येऽव्याप्तिरिति वाच्यम् । भवन्मयेऽपि तस्याप्रमाणत्वात् व्यवहारस्त्वसंसर्गाग्रहात् अन्यथा वक्ष्यमाणयथार्थ-तात्पर्य्यहेतुतापक्षेऽपि तत्राप्रतीकारात् । एवं भ्रान्तप्रतारकवाक्येऽपि प्रकृतवाक्यार्थाभिज्ञोक्ततादृशवाक्यादभिन्नत्वादाप्तोक्तत्वमस्ति भ्रान्त-प्रतारकमात्रोक्तापूर्वानुपूर्व्वीकवाक्यन्तु नान्वयबोधं जनयति[२] व्यवहा-रस्तु असंसर्गाग्रहात् मूर्खपठ्यमानवेदोऽपि कदाचित् पण्डितपठ्यमानः वर्णानां नित्यैकत्वाभ्युपगमात्, अन्यथा वक्ष्यमाणतात्पर्य्यहेतुतापक्षेऽपि तत्राप्रतीकारात् इत्यस्वरसादाह,[३] 'आप्तोक्तत्वानुमान इति। ननु दोषाजन्यानुपूर्वीकत्वे सति अर्थज्ञानजन्यत्वमेव[४] लिङ्गं स्यादित्यत-आह, 'भावे वेति, 'तद्वत एव' तल्लिङ्गवत एव, 'प्रत्यायकत्वादिति

---

(१) प्रमापकत्वादिति क० ।

(२) नान्वयधीजनकमिति ख०, ग० ।

(३) इत्यरुचेराहेति ख०, ग० ।

(४) दोषाप्रभवत्वे सत्यर्थधीजन्यत्वमेवेति ख०, ग० ।

**एतेनाप्रमाहेतुत्वं न भ्रम-प्रमाद-विप्रलिप्सा-करणा-पाटवानां परस्परं व्यभिचारात् मिलितस्याव्यापक-**

---

प्रत्यायकत्वप्रसङ्गादित्यर्थः। न चेष्टापत्तिः, सम्बादिशुकादिवाक्ये मौनिश्लोके च तदभावात् वर्णानां नित्यतया शब्दमात्रे तदभावाच्चेति भावः। इदमुपलक्षणं वस्तुतस्तु आप्तोक्तत्वस्य प्रकृतवाक्यार्थगोचर-यथार्थज्ञानवदुक्तत्वरूपस्य शाब्दधीजनकत्वे नानावाक्यार्थगोचर-यथार्थज्ञानानन्तरोक्तस्यैकमात्रतात्पर्यकनानार्थकस्य तात्पर्याविषयेऽपि शाब्दबोधजनकत्वापत्तेः तादृशयथार्थज्ञानजन्यानुपूर्वीकत्वस्याप्तोक्तत्व-रूपत्वे वेद-मौनिश्लोकयोरव्याप्तेश्च वेदानुपूर्व्या नित्यत्वादित्येव दूषणं सारं[१]।

केचित्तु भ्रमजनकदोषाभावः प्रमायां हेतुः भ्रमजनकदोषश्च न भ्रमप्रमादादिः परस्परं व्यभिचारात् किन्त्वाप्तोक्तत्वाभाव इति तदभाव आप्तोक्तत्वं शाब्दप्रमाहेतुरित्याप्तोक्तत्वस्य हेतुत्वे युक्तिमा-हुस्तन्मतमुपन्यस्य दूषयति, 'एतेनेति, 'भ्रमेति, 'भ्रमः' उच्चारणी-यवाक्यार्थगोचरोवक्तुर्भ्रम इत्यर्थः, 'प्रमादेति, 'प्रमादः' अनवधानता, सा च वाक्यार्थज्ञानस्वरूपगोचरस्य वक्तुरुच्चारणीयवाक्यार्थनिश्चय-व्यतिरेकः, षष्ठ्यन्तेन शुकादिवाक्यार्थनिश्चयव्यतिरेको वारितः, 'विप्रलिप्सेति, 'विप्रलिप्सा' प्रतारणा, सा च एकरूपेणावगतान्य-रूपेण बुबोधयिषा, 'करणापाटवेति, इच्छाविषयीभूतवर्णानु-कूलकरणसंयोगानुत्पादकालीन-तदननुकूलकरणसंयोगः करणापा-

---

(१) सम्यगिति ग०।

त्वात् । किन्त्वाप्तोक्तत्वाभावस्याप्रमाहेतुत्वं तदभाव-श्चाप्तोक्तत्वं प्रमाहेतुरित्यपास्तं । आप्तोक्तत्वस्य प्रथमं लिङ्गाभावेन ज्ञातुमशक्यत्वात् ।

अतएव व्यभिचारशङ्काविरहो[१] हेतुः सा च लोके भ्रमादिमूलेत्याप्तोक्तत्वानुमानादुच्छिद्यते,[२] वेदे चापौरुषेयत्वनिश्चयेनेति निरस्तं । अभिमतवाक्यार्थ-

---

टवं, 'करणं' कण्ठादि, 'अव्यापकत्वादिति प्रत्येकसत्त्वेऽपि शब्दाभासदर्शनादित्यर्थः, 'अप्रमाहेतुत्वमिति, दूतीति शेषः ।

बाधितार्थकत्वशङ्काविरहः शाब्दबोधे हेतुः, सा च लौकिकवाक्ये आप्तोक्तत्वनिश्चयादुच्छिद्यते वेदे चापौरुषेयत्वनिश्चयादतो बाधितार्थकत्वशङ्काविरोधित्वेनाप्तोक्तत्वनिश्चयो हेतुः । न चैवं वेदे व्यभिचारः, तत्र बाधितार्थकत्वशङ्काविरोधिनोऽपौरुषेयत्वनिश्चयस्यैव सत्त्वादित्यपि मतं निराकरोति, 'अतएवेति आप्तोक्तत्वस्य प्रथममगृहीतत्वादेवेत्यर्थः । 'व्यभिचारः' बाधितार्थकत्वं, 'भ्रमादिमूलेति वक्तुर्भ्रमादिशङ्कामूलेत्यर्थः, 'उच्छिद्यते' नोत्पद्यते, 'निश्चयेनेति, तथाच बाधितार्थकत्वशङ्काविरोधित्वेनाप्तोक्तत्वनिश्चयो हेतुरिति भावः ।

केचित्तु बाधितार्थकत्वशङ्काविरहः शाब्दप्रमाहेतुरिति केचिद्-

---

(१) व्यभिचारशङ्कानिरासोऽपीति क० ।

(२) विच्छिद्यत इति ख० ।

स्यापूर्व्वत्वेन साध्याप्रसिद्धेः वेदे सदोषपुरुषाप्रणीत-पदस्मारितत्वेन संसर्गसिद्धेरनुवादकतापत्तेश्च। नापि दोषाभावः भ्रान्तप्रतारकवाक्यजन्यज्ञाने प्रत्यक्षेणा-गृहीतसंवादे तदभावात्। दोषाभावस्य हेतुत्वात् तत्र वाक्यं मूकमेव व्यवहारस्तु प्रत्यक्षादिति चेत्। न।

---

वदन्ति तन्मतं निराकरोति,[१] 'अतएवेति, इति यथाश्रुतग्रन्थं सङ्ग-मयन्ति। तदसत्, बाधितार्थकत्वशङ्काविरहस्य शब्दाभाससाधारण-तया व्यभिचारिव्यावृत्तत्वाभावेन तद्दूषणस्य प्रकृतानुपयोगित्वात्।

अभिमतेति प्रकृतेत्यर्थः, 'अपूर्वत्वेन' अन्वयबोधात्पूर्वमप्रतीतत्वेन, 'साध्यस्य' आपोक्तत्वरूपसाध्यस्य। नन्वेवं वक्ष्यमाणतात्पर्यमपि प्रथमं दुर्ग्रहन्तस्यापि प्रकृतवाक्यार्थयाथार्थ्यघटितत्वात् इत्यरुचेराह, 'वेद इति, 'सदोषेति एते पदार्था मिथः संसर्गवन्तः सदोषपुरु-षाप्रणीतपदस्मारितत्वादित्यादिक्रमेणेत्यर्थः, व्यभिचारशङ्कोच्छेदार्थं अपौरुषेयत्वनिश्चयस्यावश्यकत्वेन सदोषपुरुषाप्रणीतत्वग्रहे विलम्बा-भावादिति भावः। अत्र पदं सतात्पर्यकत्वेन विशेषणीयं तेन विसम्वादिशुकोदीरितपदार्थेषु न व्यभिचार इति ध्येयं। 'दोषा-भाव इति, शाब्दप्रमाप्रयोजक इति शेषः। 'दोषाः' भ्रम-प्रमाद-विप्रलिप्सा-करणापाटवरूपाः। 'तदभावादिति प्रतारणारूपदोष-सत्त्वात् दोषाभावासत्त्वादित्यर्थः। शङ्कते, 'दोषाभावस्येति, 'हेतु-त्वात्' शाब्दप्रमायां हेतुत्वात्, 'मूकमेव' प्रमित्यजनकमेव, 'व्यवहारः'

---

(१) दूषयतीति ख०, ग०।

अनुभवापलापापातात्[१] तद्धेतुत्वे विवादात् वेदेऽप्य-
नुवादकतापत्तेश्च। किञ्च दोषाभावस्य प्रमाहेतुत्वे-
ऽप्रमायां दोषः कारणं तस्य च प्रत्येकं हेतुत्वे[२] व्यभि-
चारः मिलितस्य तत्त्वे[३] एकस्मादप्रमा न स्यात् भ्रमा-

प्रवृत्त्यादिः, 'प्रत्ययादिति, असंसर्गाग्रहादेति शेषः, तेन सर्वत्र प्रत्ययासत्त्वेऽपि न व्यवहारानुपपत्तिः। 'अनुभवेति, तद्वाक्यश्रवणानन्तरं इदं शाब्दयामीत्यनुव्यवसायादिति भावः। ननु क्लृप्तकारणबाधादनुव्यवसायस्य तत्राप्रमात्वं कल्प्यते इत्यत आह, 'तद्धेतुत्व-इति दोषाभावस्य शाब्दप्रमाहेतुत्व इत्यर्थः। ननु अविद्यमानार्थप्रतिपिपादयिषारूपप्रतारणा दोषः भ्रान्तप्रतारकवाक्ये च सा नास्त्येवेत्यत आह, 'वेदेऽपीति, दोषाभावज्ञाने सति सदोषपुरुषाप्रणीतपदस्मारितत्वेन लिङ्गेन प्रथमं संसर्गसिद्धेः सम्भवादिति भावः। ननु हेतुज्ञानसत्त्वेऽपि सर्वत्र प्रथमं व्याप्त्यादिज्ञानस्यावश्यकत्वे मानाभावात् वेदस्य नानुवादकतेत्यस्वरसादाह, 'किञ्चेति, 'अप्रमायामिति, कारणं वक्तव्यमिति शेषः, अन्यथा अप्रमाप्रयोजकाभावात् प्रमेति सिद्धान्तस्य व्याकोपापत्तेरिति भावः। अप्रमा च तन्नये असंसर्गाग्रहविशिष्टमगृहीतभेदं ज्ञानद्वयं, 'तस्य चेति भ्रमादेर्दोषस्येत्यर्थः, 'तत्त्वे' तद्धेतुत्वे। ननु दोषत्वेन कारणतास्त्वित्यत आह,

(१) अनुभवापलापादिति ख०।

(२) तस्य च हेतुत्वे प्रत्येकं व्यभिचार इति ख०।

(३) मिलितस्य हेतुत्व इति क०।

दीनां प्रत्येकं दोषत्वेऽननुगमः मिलितस्य तु तत्त्वे[१] एकस्मादप्रमानुदयप्रसङ्गः। तस्मात् लाघवात् यथार्थतात्पर्य्यकत्वं शाब्दप्रमाप्रयोजकं तच्च यथार्थवाक्यार्थ-

'भ्रमादीनामिति भ्रमत्वादीनामित्यर्थः, 'दोषत्वे' दोषरूपत्वे, 'अननुगम इति पूर्ववद्व्यभिचार इत्यर्थः, 'मिलितस्य' मिलनस्य, चतुष्टयरूपापेक्षाबुद्धिविशेषविषयत्वस्येति यावत्, 'तत्त्व इति तत्पदेन दोषत्वपरामर्शः तथाच दोषत्वत्व इत्यर्थः, यदि च भ्रमाभावत्वादिना भ्रमाद्यभावकूटमेव प्रमाकारणं प्रमाकरणतावच्छेदकावच्छिन्नप्रतियोगिताकाभावत्वेन अनुगतीकृतानाञ्च भ्रमादीनां अप्रमाकारणत्वं भ्रान्तप्रतारकवाक्ये चोक्तप्रतारणाविरहान्न व्यभिचारः तथापि वक्ष्यमाणतात्पर्यापेक्षया भ्रमाद्यभावचतुष्टयस्य कारणत्वे गौरवं विसम्वादिशुकवाक्येऽतिप्रसङ्गश्चेत्यभिप्रायेणोपसंहरति, 'तस्माल्लाघवादिति, 'लाघवादित्युपलक्षणं विसम्वादिशुकवाक्यव्यावृत्तत्वाच्चेत्यपि बोध्यं। 'यथार्थवाक्यार्थेति यद्विशेष्यक-यत्प्रकारिका शाब्दप्रमा फलीभूता तद्विशेष्यक-तत्प्रकारकयथार्थप्रतीतिप्रयोजनकत्वमित्यर्थः। न च तन्मते यथार्थत्वविशेषणं व्यर्थं अव्यावर्त्तकत्वादिति वाच्यं। सिद्धान्ते 'गौरवादित्यनन्तरं अस्यापि दोषत्वोद्दनीयत्वात्। ननु तादृशप्रतीतिप्रयोजनकत्वं न तादृशप्रतीतीच्छाजन्यत्वं वर्णमात्रस्यैव तेषां नित्यतया शाब्दमात्रे तदसम्भवात्। अथ तादृ-

(१) तथात्व इति क०।

प्रतीतिप्रयोजनकत्वं लोक-वेदसाधारणं तदभावाद-प्रमा स एव दोषः, न हि जात्यैव कश्चिद्दोषः, तद्वि-

---

शप्रतीतीच्छाजन्यानुपूर्व्वीकत्वं आनुपूर्व्वी च तन्मये शब्दसमवेत-पदार्थान्तरं सा च वर्णानां नित्यत्वेऽप्यनित्यैवेति नासम्भव इति चेत्। न। लौकिकवाक्यसङ्ग्रहेऽपि वेदासङ्ग्रहात् वेदानुपूर्व्व्यास्तन्मये नित्य-त्वात्। नापि तादृशप्रतीतिजनकत्वं, तज्जनकत्वं हि स्वरूपयोग्यत्वं[१] फलोपधायकत्वं वा, नाद्यः लक्षणादिना सर्व्वस्यैव सर्व्वत्र स्वरूप-योग्यतया अव्यावर्त्तकत्वात् एकतात्पर्य्यकलौकिकवाक्यस्यापि अन्य-विषयकप्रतीतिस्वरूपयोग्यतया 'अतएवान्यघटाभिप्रायेणेत्याद्यग्रिम-ग्रन्थासङ्गतेश्च। न द्वितीयः प्रथमन्दुर्ग्रहत्वात् एकस्यैव शब्दस्य पुरुषभेदेन कालभेदेन च नानार्थप्रत्यायकत्वादव्यवस्थितेः, 'अत-एवान्यघटाभिप्रायेणेत्याद्यग्रिमग्रन्थासङ्गतेश्च तेन ग्रन्थेन वक्तुरिच्छा-विरहादेव गेहवर्त्तिघटानन्वयबोधप्रतिपादनादिति। मैवं। तादृ-शप्रतीतीच्छयोच्चरितत्वस्य तदर्थत्वात्, उच्चरितत्वञ्च ज्ञापितत्वं न तु जन्यत्वं, तेन वर्णानां नित्यत्वेऽपि न क्षतिः न वा ईश्वरानभ्युपगमे-ऽपि मौनिश्लोकेऽव्याप्तिः, इदञ्च तन्मये वेदेऽप्यस्ति यथार्थप्रतीती-च्छया अध्यापकेनैव ज्ञापितत्वात् मूर्खपठ्यमानवेदस्तु पण्डितपठ्यमा-नवेदादभिन्न एव वेदस्य नित्यत्वात् नित्यानुमेयवेदे च तदर्थज्ञाप-कत्वेन ज्ञानमेव पृथक्सामग्री वक्ष्यत इति तत्रैव तस्य व्यभिचारो न दोषाय। न च तथापि तात्पर्य्यभ्रमेण तात्पर्य्याविषयेऽपि विषया-

---

[१] तत्स्वरूपयोग्यत्वमिति ख०, ग०।

घातकत्वाच्च भ्रमादीनां दोषत्वं। अतएव भ्रान्तप्रता-

---

बाधात् शाब्दप्रमाजनकेऽव्याप्तिरिति वाच्यं। परनये तात्पर्यभ्रमेण शाब्दबुद्ध्यनभ्युपगमात् स्वरूपसतो यथार्थतात्पर्य्यस्य लाघवात् तद्विशिष्टज्ञानस्य च शाब्दधीहेतुत्वात् भ्रमस्य च तन्नये विशिष्टज्ञानत्वाभावादिति भावः। 'शुकादिवाक्यञ्च प्रमाणमित्याद्यग्रिमग्रन्थन्तु तत्रैवोपपादयिष्यामः। ननु तदेव प्रमाप्रयोजकं यदभावात्प्रमित्यभावइति कुतोऽस्य शाब्दप्रयोजकत्वमित्यत आह, 'तदभावादिति, 'अप्रमा' प्रमित्यभावः,[१] भ्रमस्य तैरनङ्गीकारात्[२]। ननु दोषादेवाप्रमेति नियमात्कथं ततः सा स्यादित्यत आह,'स एव दोषइति, 'स एव' यथार्थतात्पर्यज्ञानाभाव एव, 'दोषः' शाब्दप्रमायां दोषः। ननु तदभावस्य कथं दोषत्वं दोषत्वस्य जातिरूपत्वादित्यत-आह, 'न हीति, 'दोषः' दोषव्यवहारविषयः, तथाच दोषपदशक्यतावच्छेदकं न जातिरित्यर्थः, ज्ञानत्वादिना साङ्कर्य्यादिति भावः[३]। नन्वेवं तदभावस्य दोषत्वे कथं भ्रमादिषु दोषव्यवहार इत्यत आह, 'तद्विघातकत्वाच्चेति शाब्दप्रमाकारणीभूतस्य यथार्थतात्पर्यस्य विघातकत्वाच्चेत्यर्थः, 'तद्विघातकत्वं' तद्विरोधित्वं, 'भ्रमादीनां' भ्रमप्रमाद-विप्रलिप्सा-करणापाटवानां, 'दोषत्वं' दोषव्यवहारविषयत्वं।

---

(१) प्रमाया अभाव इति ख०, ग०।

(२) तन्नयेऽनङ्गीकारादिति क०।

(३) ज्ञानत्वशून्ये पित्तादिदोषे दोषत्वं वर्त्तते दोषत्वशून्ये दोषानात्मकज्ञाने ज्ञानत्वं वर्त्तते दोषात्मकज्ञाने ज्ञानत्वं दोषत्वञ्च वर्त्तत इति साङ्कर्य्यं।

रकवाक्यं शुकादिवाक्यञ्च प्रमाणं संवादात् । अत-एवान्यघटाभिप्रायेण[१] गेहे घटोऽस्तीत्युक्ते यत्र घटा-न्तरं दृष्ट्वा तमानयति तत्रान्यपरत्वाच्छब्दो न प्रमाणं व्यवहारस्तु प्रत्यक्षादेव यष्टीः प्रवेशयेति च मुख्यार्थबोधे

---

यद्यपि स्वप्रतीतविपरीतप्रतिपिपादयिषायाः प्रतारणाया न यथार्थ-तात्पर्यविरोधित्वं भ्रान्तप्रतारकस्थले तत्सत्त्वेऽपि यथार्थतात्पर्यसत्त्वात्, तथापि अविद्यमानार्थप्रतिपिपादयिषारूपप्रतारणैव दोष इत्यभि-प्रायेणैवेदमुक्तं। 'अतएव' यथार्थतात्पर्यस्य शाब्दप्रमाप्रयोजकत्वादेव, एवमग्रेऽपि, 'भ्रान्तप्रतारकेति, तत्रापि प्रतारणानुरोधेन प्रकृतवा-क्यार्थगोचरयथार्थप्रतीतीच्छायाः सत्त्वादिति भावः । 'शुकादिवा-क्यञ्चेति, यद्यपि तन्मये ईश्वरानभ्युपगमात् शुकादिवाक्ये न यथो-क्ततात्पर्य्यसम्भवः[२] तथापि शुकादिवाक्यपदं शिक्षकोक्तवाक्यसमा-नाकारशुकादिवाक्यपरं, तत्र तन्मये वर्णानां नित्यैकतया शिक्षक-पुरुषमादाय यथोक्ततात्पर्यसम्भवात् । दैववशसम्पन्नापूर्वार्थकशुकादि-मात्रोक्तवाक्यन्तु न प्रमाणं व्यवहारस्तत्संसर्गाग्रहादिति भावः । 'अन्यघटाभिप्रायेण' नीलघटाभिप्रायेण, 'घटान्तरं' पीतघटं, 'अन्य-परत्वात्' अन्यमात्रतात्पर्यकत्वात् नीलघटतात्पर्यकत्वादिति यावत्,[३] 'न प्रमाणं' न पीतघटे प्रमाणं, न पीतघटविषयकप्रमितिजनक-

---

(१) अन्यगृहवर्त्तिघटाभिप्रायेणेति ख० ।

(२) न यथोक्तवाक्यार्थस्य सम्भव इति क० ।

(३) पीतघटातात्पर्य्यकत्वादिति यावदिति ख०, ग० ।

**न प्रमाणं यत्परः शब्दः स शब्दार्थ इति न्यायात्। तच्च तात्पर्य्यं ज्ञातमुपयुज्यते ज्ञायमानकरणे ज्ञानोप-**

---

मिति यावत्, 'व्यवहारस्त्विति पीतघटविषयकव्यवहारस्त्वित्यर्थः। यद्यपि यथा शुकादिवाक्येऽपि शिक्षकवाक्यमादाय यथार्थतात्पर्य-सम्भवः वर्णानान्नित्यैकरूपत्वाभ्युपगमात् तथा नीलघटमात्राभि-प्रायप्रयुक्ते गेहे घटोऽस्तीतिवाक्येऽपि पीतघटाभिप्रायकपुरुषान्तरी-यगेहेघटोऽस्तीतिवाक्यमादाय पीतघटतात्पर्यकत्वसम्भवात् कुतो न पीतघटे प्रमाणं, तथापि घटान्तरपदं न पीतघटपरं अपि तु यद्यद्घटप्रतीतीच्छया गेहे घटोऽस्तीतिवाक्यं कदापि केनापि नोच्चरितन्तादृशघटव्यक्तिविशेषपरमित्यदोषइति ध्येयं। 'यष्टीः प्रवे-शयेति चेति, अतएवेत्यनुषज्यते, 'मुख्यार्थबोधे' कर्मत्वविशेष्यकयष्टि-प्रकारकबोधे, 'न प्रमाणं' न प्रमितिजनकं, 'यत्परः' यदर्थतात्प-र्यकः,(१) 'स शब्दार्थः' शब्दजन्यप्रमितिविषयः, तात्पर्यभ्रमेण च न शाब्दप्रमेति भावः। पूर्वं सामान्यतः शाब्दप्रमाप्रयोजकत्वेन पक्ष-यित्वा ज्ञातोपयोगित्वं साधितमिदानीं विशिष्य तात्पर्यत्वेन पक्ष-यित्वा ज्ञातोपयोगित्वं साधयति, 'तच्चेति, अतो न पौनरुक्त्यं, 'ज्ञातमुपयुज्यत इति ज्ञाननिष्ठस्वाविषयकशाब्दबोधकारणतायाः विषयतासम्बन्धेनावच्छेदकमित्यर्थः, यथाश्रुते उक्तक्रमेणासङ्गतेः, 'ज्ञा-यमानकरण इति, आधेयत्वं सप्तम्यर्थः, अन्वयश्चास्य 'वैलक्षण्ये, 'ज्ञा-नोपयोगीत्यत्र ज्ञानपदं शाब्दबोधपरं, तथाच ज्ञायमानकरणवृत्तित्वे

---

(१) यत्र यदर्थतात्पर्य्यक इति क०।

योगिव्यभिचारिवैलक्षण्याद्व्याप्तिवच्छक्तिवच्च,[१] अन्यथा अन्यपरादन्यान्वयबोधो न स्यात् इति शब्दाभासोच्छेद-

सति शाब्दबोधोपयोगिव्यभिचारिवैलक्षण्यादित्यर्थः, यज्ज्ञायमान-करणवृत्तित्वे सति यज्ज्ञानोपयोगिव्यभिचारिवैलक्षण्यं भवति तज्-ज्ञानवृत्तित्वाविषयकतज्ज्ञानकारणताया विषयतया अवच्छेदकं भव-तीति सामान्यतोव्याप्तिः,[२] तेन न 'व्याप्तिवदिति दृष्टान्तासङ्गतिः,[३] प्रत्यवयवव्यावृत्तिस्तु पूर्ववद्बोध्या[४]। तत्रानुकूलतर्कमाह, 'अन्यथेति यदि स्वरूपसदेव यथार्थतात्पर्यं हेतुः न तु तन्निश्चय इत्यर्थः, 'अन्य-परात्' अन्यपरत्वमात्रेणानिश्चितात् एकपरत्वेन सन्दिग्धात् अन्यपर-त्वेन निश्चितादिति यावत्, उभयतात्पर्यकशब्दादिति शेषः, 'अन्या-न्वयबोधो न स्यात्' अन्यमात्रस्यैवान्वयबोधो न स्यात्, यत्र तात्पर्य-सन्देहः तत्राप्यन्वयबोधः स्यादिति यावत्, स्वरूपसतोयथार्थतात्पर्य-स्याविशिष्टत्वादिति भावः। 'शब्दाभासोच्छेदप्रसङ्गः' तात्पर्यसन्देह-दशायां शाब्दबोधाजनकशब्दोच्छेदप्रसङ्गः। ननु यथार्थतात्पर्य-निश्चयस्य शाब्दधीहेतुत्वे तात्पर्यभ्रमात् शाब्दबोधो न स्यात् भ्रमस्य तन्मते[५] विशिष्टज्ञानत्वाभावेन निश्चयत्वाभावादित्यत आह, 'तद्-

(१) शब्दशक्तिवच्चेति ख०।

(२) सामान्यमुखी व्याप्तिरिति ख०, ग०।

(३) तेन व्याप्तिवदिति दृष्टान्तसङ्गतिरिति ख०, ग०।

(४) पूर्व्ववदवसेयेति ख०, ग०।

(५) भवन्मत इति ख०, ग०।

प्रसङ्गः, तद्भ्रमाच्च शाब्दभ्रमः। अतएव यष्टीः प्रवेशयेत्यत्र लक्षणा नानार्थे विनिगमना च तयोस्तात्पर्य्यग्रहमूलकत्वात्। यदि च यत्र वास्तवं तात्पर्य्यं तं शब्दोबोधयति तदा लक्षणायां मुख्यार्थान्वयानुपपत्त्यु-

---

भ्रमाच्चेति तात्पर्यभ्रमाच्चेत्यर्थः, तात्पर्यभ्रमस्य उपस्थिततात्पर्यासंसर्गाग्रहः,[१] 'शाब्दभ्रमः' शब्दोपस्थितपदार्थानां असंसर्गाग्रहो न तु शाब्दानुभवइत्यर्थः, तथाच इष्टापत्तिरिति भावः। 'अतएवेति तात्पर्यनिश्चयस्य हेतुत्वादेवेत्यर्थः, 'यष्टीः प्रवेशयेत्यत्रेति शक्य-लक्ष्योभयतात्पर्यके यष्टीः प्रवेशयेत्यत्रेत्यर्थः, 'लक्षणा' कदाचिल्लक्ष्यार्थस्यैवान्वयबोधः, अन्यथा स्वरूपसतोयथार्थतात्पर्यस्याविशिष्टत्वात् तत्र सर्वदैवोभयोरन्वयबोधः[२] स्यादिति भावः। पूर्वं स्वरूपसतोयथार्थतात्पर्यस्य हेतुत्वे उपोद्घलकमुक्तं इदानीं तज्ज्ञानस्येति न पौनरुक्त्यं, 'नानार्थे' नानार्थतात्पर्यके, 'विनिगमना' कदाचित्किञ्चिदर्थमादायैवान्वयबोधः, 'तयोः' लक्षणा-नानार्थविनिगमनयोः, 'तात्पर्यग्रहेति तदर्थमात्रे तात्पर्यग्रहेत्यर्थः। तात्पर्यज्ञानस्य हेतुत्वे साधकान्तरमाह, 'यदि चेति, 'वास्तवमिति न तु तात्पर्यनिश्चयोऽपेक्षित इत्यर्थः,[३] 'लक्षणायां' लाक्षणिकार्थान्वयबोधे, 'मुख्यार्थान्वयानुपपत्तीति मुख्यार्थान्वयानुपपत्तिज्ञानस्येत्यर्थः, मुख्यार्थान्वयानुपपत्तिज्ञानेन मुख्यार्थे

---

(१) शाब्द उपस्थिततात्पर्य्यासंसर्गाग्रह इति ख०, ग०।

(२) सर्व्वदैवान्वयबोध इति क०।

(३) न तु तात्पर्य्यनिश्चय इत्यर्थ इति क०।

प्रयोगो न स्यात्। अतएव पचतीत्युक्तेऽन्योक्तेन स्वयं स्मृतेन वा कलायपदेनोपस्थिते कलायं पचतीत्यन्वयबोधो न भवति तात्पर्य्यानिश्चयात्। न च तात्पर्य्यग्राहकस्य प्रकरणादेः प्राथम्यादावश्यकत्वाच्च शब्दसहकारिता न तु तात्पर्य्यग्रहस्येति वाच्यं। तेषामननु-

तात्पर्याभावग्रहे स्वतात्पर्यकत्वानुमानेनैकविशेषबाधसहकृतेन लच्यार्थे तात्पर्यग्रह इति क्रमेण[१] लच्यार्थतात्पर्य्यग्रहद्वारा तस्य तत्रोपयोगित्वादिति भावः। 'अतएव' तात्पर्यनिश्चयस्य हेतुत्वादेव, 'उपस्थित-इति कलाये उपस्थितेऽपीत्यर्थः, 'तात्पर्यानिश्चयादिति, यदा तु तात्पर्यनिश्चयस्तिष्ठति तदा तु भवत्येवेति भावः। न चैवमावश्यकत्वात् यथार्थतात्पर्यनिश्चयस्यैव हेतुतास्तु किं स्वरूपसतोयथार्थतात्पर्यस्य हेतुत्वेन तन्मतेऽन्यथाख्यात्यभावेन तात्पर्यशून्ये तात्पर्यनिश्चयासम्भवादेवातिप्रसङ्गविरहादिति वाच्यं। विशिष्टस्य यथार्थतात्पर्यविषयकनिश्चयस्य हेतुताग्राहकप्रमाणेनासति बाधके विशेषणीभूतस्य यथार्थतात्पर्यस्यापि हेतुताग्रहात् उभयोरेव हेतुता अनुमितौ परामृश्यमाणलिङ्गवदिति तेषामाशयात्। 'प्रकरणादेरिति, ज्ञानस्येति शेषः, आदिपदादङ्गुलिचेष्टाविशेषादिपरिग्रहः, प्रकरणं भोजन-गमनादि, 'प्राथम्यात्' तात्पर्यग्रहापेक्षया प्राथमिकत्वात्, 'आवश्यकत्वात्' शाब्दबोधं प्रति अवश्यक्लृप्तनियतपूर्ववर्त्तिताकत्वात्, प्रकरणादिज्ञानं विना तात्पर्यग्रहासम्भवादिति भावः। 'अननुगतत्वे-

(१) लच्यार्थ इत्यादिः क्रमेणेत्यन्तः पाठः ख०पुस्तके नास्ति।

गतत्वेन परस्परव्यभिचारादहेतुत्वात् तात्पर्य्यग्राहकता त्वननुगतानामपि व्याप्यत्वात् धूमादीनामिव। तच्च तात्पर्य्यं वेदे न्यायगम्यं, यच्च न्यायात् तात्पर्य्यमवधार्य्यते स एव वेदार्थः, लोके च न केवलं न्यायानु-

---

नेति, तज्ज्ञानस्येति शेषः। नन्वेवन्तात्पर्यग्राहकतैव प्रकरणादीनां कथं स्यात् अननुगतत्वादित्यत आह, 'तात्पर्येति, 'व्याप्यत्वादिति, व्याप्यत्वाननुगमेऽपि न दोषः तत्तल्लिङ्गकानुमितिं प्रति तत्तल्लिङ्गकपरामर्शानाङ्कारणतायाः सर्वसम्मतत्वात्, तदेवाह, 'धूमादीति धूमालोकानामननुगतानां व्याप्यतया यथा वह्निग्राहकत्वमित्यर्थः। एतावता प्रबन्धेन लौकिकोऽनुवादकोवैदिकः प्रमाणमिति व्यवस्थापयितुमाह,(१) 'तच्च तात्पर्य्यमिति, 'वेदे' वेदजन्यशाब्दबोधे, 'न्यायगम्यमिति, न्यायगम्यं सत्कारणमित्यर्थः, न्यायगम्यत्वं साक्षात्-परम्परया न्यायप्रयोज्यज्ञानविषयत्वं, तेन वेदे आप्तवाक्यादिना तात्पर्यग्रहेऽपि न क्षतिः। न्यायः अनादिमीमांसकपरम्परासिद्धा युक्तिः, सा च लाघव-गौरव-तर्क-लब्धर्थपरपदसमभिव्याहार इत्येवमादिरूपेति भावः। अत्र हेतुमाह, 'यच्चेति, साक्षात्परम्परया वेति शेषः, 'स एव', 'वेदार्थः' वेदजन्यशाब्दबोधविषयः, यत इति शेषः, तथाच वेदजन्यशाब्दबोधम्प्रति न्यायप्रयोज्यतात्पर्यग्रहो हेतुः यत्र न्यायाभावस्तत्र पदार्थोपस्थितिरसंसर्गाग्रहमात्रमिति भावः। अत्र 'वेदपदं वेदसमानार्थकस्मृत्यादेरप्युपलक्षकमिति ध्येयं। 'लोके चेति,

---

(१) व्याप्यत्वेत्यादिः आहेत्यन्तः पाठः ख॰ग॰ चिह्नितपुस्तकद्वये नास्ति।

सारि तात्पर्य्यं इति न न्यायगम्यं किन्तु पुमभिप्राय-नियन्त्रितं, न्यायाविषयेऽपि पुरुषेच्छाविषये प्रतीति-जनकत्वात् पुंवचसां। वक्ता च परकीयवाक्यार्थज्ञानो-त्पादनेच्छया वाक्यमुच्चारयति[१] सा चेच्छा यदि वक्तु-

---

लौकिकवाक्यस्थले चेत्यर्थः, 'न्यायानुसारि' न्यायविषयप्रतिपादकं, 'न न्यायगम्यमिति न साचात्परम्परया न्यायप्रयोज्यज्ञानगोचरं सदेव शाब्दधीप्रयोजकमित्यर्थः, 'पुमभिप्रायनियन्त्रितमिति न्याय-तद-तिरिक्तगन्यसाधारणवक्तृतात्पर्यमात्राधीनमित्यर्थः, तत्र शाब्दज्ञान-मिति शेषः। अत्र हेतुमाह, 'न्यायाविषयेऽपीति, अपिशब्दात् न्यायविषयसमुच्चयः, निर्द्धारणे सप्तमी, 'पुरुषेच्छाविषय इति वक्त्रि-च्छाविषयस्यैव प्रतीतिजनकत्वादित्यर्थः, 'पुंवचसां' लौकिकवचसां। ननु वक्तुस्तत्पदार्थविशिष्टज्ञानं कुतोऽनुमेयं तात्पर्य्यानुरोधेन वक्तु-स्तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकज्ञानसत्त्वेऽपि तत्पदार्थविशिष्ट-ज्ञानाभावेन बाधितत्वादित्यतो यथार्थतात्पर्यानुरोधेनैव वक्तुस्तत्प-दार्थविशिष्टज्ञानस्याबाधितत्वमुपपादयति, 'वक्तेत्यादिना 'निर्वहती-त्यन्तेन, 'वाक्यार्थज्ञानेति तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थ-प्रतीतीच्छयेत्यर्थः, परकीयतादृशज्ञानरूपं यदिष्टं तत्साधनताज्ञाना-धीनत्वात् वाक्यानुकूलकण्ठाद्यभिघातजनककृतेरिति भावः। 'सा च'

---

(१) वाक्यं रचयतीति ख०।

यथार्थवाक्यार्थज्ञानपूर्व्विका भवति तदैव परं तदुच्चारणस्य पुमभिप्रेतयथार्थवाक्यार्थज्ञानपरत्वं यथार्थज्ञानेच्छाव्याप्यं निर्व्वहतीति वक्तुर्यथार्थवाक्यार्थज्ञान-

---

परकीयतादृशज्ञानगोचरा च, 'यथार्थवाक्यार्थज्ञानपूर्व्विकेति' पूर्वकालवृत्ति-तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकज्ञानजन्या भवतीत्यर्थः, तस्याः पूर्वकाले यदि वक्तुस्तादृशज्ञानन्तिष्ठतीति समुदायार्थः, 'तदुच्चारणस्य' तद्वाक्यस्य, 'पुमभिप्रेतयथार्थवाक्यार्थज्ञानपरत्वं' तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थप्रतीतीच्छयोच्चरितत्वरूपं यथार्थतात्पर्यं, 'यथार्थज्ञानेच्छाव्याप्यमिति परकीयतत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थप्रतीतिविषयकेच्छाव्याप्यमित्यर्थः, व्याप्यता च तद्घटितत्वात् निर्वहतीति वक्तुस्तादृशेच्छापूर्वकाले वक्तुः तादृशज्ञानविरहे व्यापकीभूतायास्तादृशेच्छाया एवासम्भवेन व्याप्यीभूतस्य यथार्थतात्पर्यस्य सुतरामसम्भवात् व्यापकाभावे व्याप्याभावस्यावश्यकत्वात्। न च व्यापकीभूता वक्तुः परकीयतादृशप्रतीतीच्छैव सा कथं तादृशज्ञानं विनानुपपन्नेति वाच्यम्। वक्तुः परकीयतादृशप्रतीतीच्छा हि घटमिति वाक्यं घटवत्कर्मत्वविशेष्यकत्वावच्छिन्नघटप्रकारताशालिज्ञानञ्जनयत्वित्याकारा यथार्थत्वस्य तद्वत्ताघटितत्वात् तादृगिच्छायां तादृशज्ञानं कारणं तत्र च विशेषणीभूतघटवत्कर्मत्वादिकं विषय इति कर्मत्वादिविशेष्यक-घटादिप्रकारकज्ञानं विना सानुपपन्नेत्यभिप्रायः। 'इतीति, अबाधितामिति शेषः, अबाधितां वक्तृयथार्थवाक्यार्थज्ञानवत्तामित्यन्वयः। ननु यथार्थवाक्यार्थतात्पर्य-

वत्तामविज्ञाय यथार्थप्रतीतिपरत्वं ज्ञातुं न शक्यत इति प्रथममाप्तवाक्याद्वक्तृज्ञानानुमानपूर्व्वकमर्थतथात्वमनुसन्धाय यथार्थतात्पर्य्यनिश्चयः। अनुमानञ्चेदं वाक्यं

---

कत्वं तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थप्रतीतीच्छयोच्चरितत्वं तत्तत्पदार्थवत्तत्पदार्थ-विशेष्यकत्वावच्छिन्नतत्पदार्थ-प्रकारताशालि-प्रतीतीच्छयोच्चरितत्वमिति यावत्, तच्च शाब्दबोधात्पूर्वं निश्चेतुमशक्यं तत्पूर्वं तत्पदार्थे तत्पदार्थवत्ताज्ञानाभावात् तत्पदार्थवत्तत्पदार्थस्याच्च विशेषणतावच्छेदकत्वात् विशेषणतावच्छेदकप्रकारकज्ञानस्य च विशिष्टवैशिष्ट्यज्ञाने हेतुत्वात्। न च तत्पदार्थः तत्पदार्थवान् तत्पदार्थविशिष्टज्ञानविषयत्वादितिक्रमेण वक्तुस्तत्पदार्थविशिष्टज्ञान-विषयत्वं हेतूकृत्य तत्पदार्थवत्त्वमनुमेयं ततो यथार्थवाक्यार्थतात्पर्य-निर्णय इति वाच्यं। वक्तुः तत्पदार्थविशिष्टज्ञानस्यैव प्रागज्ञानात् सामान्यतो व्याप्तिस्थले पचधर्मतावललभ्यसाध्यप्रसिद्धेरनङ्गत्वेऽपि विशेषतो हेतुज्ञानस्यावश्यकत्वात् इत्यत आह, 'वक्तुरिति, 'यथार्थ-ज्ञानवत्तामिति तत्पदार्थविशिष्टज्ञानमित्यर्थः, 'यथार्थप्रतीतिपरत्वं' यथार्थप्रतीतिपरताघटकं तत्पदार्थवत्तत्पदार्थवत्त्वं, 'ज्ञातुं न शक्यते' तद्घटितहेतुना ज्ञातुं न शक्यते, 'प्रथमं' शाब्दबोधात्पूर्वं, अन्वयस्यास्य यथार्थतात्पर्यनिर्णय इत्यनेन, 'आप्तवाक्यादिति आप्तवाक्यत्वा-दिनेत्यर्थः, आदिपदात् वक्ष्यमाणद्वितीयहेतुपरिग्रहः, 'वक्तृज्ञानेति वक्तुस्तत्पदार्थविशिष्टज्ञानेत्यर्थः, 'अर्थतथात्वं' तत्पदार्थे तत्पदार्थवत्त्वं, 'अनुसन्धाय' अनुमाय। वक्तुस्तत्पदार्थविशिष्टज्ञानानुमानप्रकार-

भ्रमादि-विशिष्टज्ञानयोरन्यतरजन्यं वाक्यत्वादिति ।

---

माह, 'अनुमानञ्चेति वक्तुस्तत्पदार्थविशिष्टज्ञानानुमानञ्चेत्यर्थः, 'इदं वाक्यमिति घटमित्यर्थः, 'भ्रमादीति घटादिभ्रमादि-विशिष्ट-ज्ञानयोरन्यतरजन्यमित्यर्थः, 'वाक्यत्वात्' आप्तवाक्यत्वात् घटादि-ज्ञानजन्यवाक्यत्वादिति यावत्, घटमित्यादिवाक्ये शुकोक्तघट-मित्यादिवाक्ये च व्यभिचावारणाय जन्यान्तं, यद्यज्ज्ञानजन्यं वाक्यं भवति तत्तद्भ्रमादि-तद्विशिष्टज्ञानयोरन्यतरजन्यं भवतीति यत्तद्भ्यां सामान्यतोव्याप्तिः। अतएव घटादिविशिष्टज्ञानस्याप्रसिद्ध्या साध्य-प्रसिद्धिविरहात्कथमनुमितिः तस्य प्रसिद्धिसत्त्वे च व्यर्थमिदमनुमानं कर्मत्वे घटवत्त्वसाधकविशिष्टज्ञानविषयत्वरूपवक्ष्यमाणहेतुसिद्ध्यर्थमे-वास्यापेक्षणीयत्वादिति निरस्तं। यत्तद्भ्यां सामान्यतोव्याप्तिस्थले पक्ष-धर्मताबललभ्यसाध्यतावच्छेदकविशिष्टसाध्यप्रसिद्धिरनङ्गमिति प्राचां सिद्धान्तात् विशिष्टपक्षीयहेतुप्रसिद्धिस्यापेक्षिता तेन तत्र यत्तद्भ्यां सामान्यतोव्याप्त्यभ्युपगमेऽपि नैतदनुमानवैयर्थ्यमिति भावः। इदञ्च 'नन्वित्यादिना आशङ्क्य ग्रन्थकार एव स्वयमनुपदं वक्ष्यति। अत्र रूपमानयेत्यादौ रूपपदोत्तराम्पदे सामान्यव्याप्तौ व्यभिचारवारणाय साध्ये भ्रमादिपदोपादानं, भ्रमस्य तदभाववत्साकाङ्क्षं तज्ज्ञानं आकाङ्क्षा च तन्मये पदार्थान्तरं नातस्तन्मये भ्रमाप्रसिद्धिः। आदिपदात् भ्रम-विशिष्टज्ञानभिन्नतज्ज्ञानपरिग्रहः, तेन केवल-घटादिज्ञानजन्ये घटादिपदे न व्यभिचारः। विशिष्टज्ञानञ्च तन्मये तद्वत्साकाङ्क्षं तज्ज्ञानं तैर्विशिष्टबुद्धौ वैशिष्ट्यभानानभ्युपगमात्। न

ततो भ्रमादिनिरासे सति परिशेषाद्वाक्यार्थज्ञानानुमानं, अयं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यप्रयोक्तृत्वात् अहमिव, न त्वाप्तत्वात् सा-

---

चैवं सामान्यतो घटज्ञानजन्यमित्येव साध्यमस्तु किमन्यतरत्वेन साध्यतयेति वाच्यं। घटविशिष्टज्ञानत्वेन घटविशिष्टज्ञानसिद्धेरपेक्षितत्वात् तादृप्येण वक्ष्यमाणानुमाने हेतुत्वात् सामान्यतो घटज्ञानजन्यत्वस्य साध्यत्वे सिद्धसाधनप्रसङ्गाच्च हेतुसिद्ध्यर्थं तन्निश्चयस्यावश्यकत्वात्। न चैवं घटज्ञानजन्यत्वादित्येव हेतुरस्तु किं वाक्यत्वोपादानेनेति वाच्यं। धूमप्रागभाववद्भिन्नधर्मिकत्वेनावैयर्थ्यादिति[१] भावः। नन्वेतदनुमानात् घटादिविशिष्टज्ञानस्य सिद्धत्वेऽपि घटादिविशिष्टज्ञानविषयत्वं कर्मत्वादौ न सिद्धं तस्यैव वक्ष्यमाणानुमाने हेतुत्वादित्यरुचेराह, 'तत इति, वाकारः पूरणीयः, तदनन्तरं वेत्यर्थः, 'भ्रमादिनिरासे सति' वक्तुः भ्रमाद्यभावनिश्चये सति, अत्राप्यादिपदात् भ्रमविशिष्टज्ञानेतरतज्ज्ञानपरिग्रहः, 'वाक्यार्थज्ञानानुमानमिति कर्मत्वादिविषयकघटादिविशिष्टज्ञानानुमानमित्यर्थः,[२] परिशेषात् तदनुमानप्रकारमेव दर्शयति, 'अयमिति, 'स्वप्रयुक्तेति कर्मत्वविषकघटविशिष्टज्ञानवानित्यर्थः, कर्मत्वविषयकघटविशिष्टज्ञानञ्च कर्मत्वसाकाङ्क्षकर्मत्वविषयकघटज्ञानं, 'भ्रमाद्यजन्येति घटभ्रमाद्य-

---

(१) तथाच यथा धूमप्रागभावत्वस्य स्वासमानाधिकरणधूमत्वघटितत्वेऽपि न व्यर्थविशेषणघटितत्वं तथा अत्रापि न व्यर्थविशेषणघटितत्वमिति भावः। (२) कर्म्मत्वादिविशिष्टज्ञानानुमानमित्यर्थ इति ख०।

ध्याविशेषात्[१]। तत एते पदार्था यथोचितसंसर्गवन्तः

---

जन्यकर्मत्वाविषयकघटविशिष्टज्ञानाजन्यघटभ्रमादिविशिष्टज्ञानान्य-तरजन्यवाक्यप्रयोक्तृत्वादित्यर्थः, घटभ्रमादिजन्यवाक्यप्रयोक्तरि व्यभि-चारवारणाय प्रथममजन्यान्तं, भ्रमस्य निरक्त एव, आदिपदार्थोऽपि पूर्ववत्, घटेनेतिवाक्यप्रयोक्तरि व्यभिचारवारणाय द्वितीयमज-न्यान्तं, पटमित्यादिवाक्यप्रयोक्तरि शुकादौ च व्यभिचारवारणाय जन्यान्तं, अतएव च पूर्वानुमानस्यात्रोपयोगः[२] योयद्भ्रमाद्यजन्य-पद्विषयकयद्विशिष्टज्ञानाजन्ययद्भ्रमादि-यद्विशिष्टज्ञानान्यतरजन्य-वाक्यप्रयोक्ता स तद्विषयकतद्विशिष्टज्ञानवानिति[३] यत्तद्भ्यां सामा-न्यतोव्याप्तिस्तेन साध्याप्रसिद्धावपि न क्षतिरिति भावः। 'साध्यावि-शेषादिति, आप्तत्वस्य प्रकृतवाक्यार्थयथार्थज्ञानवत्त्वरूपत्वात् तस्य च कर्मत्वविषयकघटविषिष्टज्ञानवत्त्वरूपत्वादिति भावः। अनेन कर्मत्वे घटविशिष्टज्ञानविषयत्वरूपहेतुसिद्धौ तेन हेतुना कर्मत्वे घटवत्त्वा-नुमानमाह, 'तत इति, कर्मत्वादिकं आधाराधेयभावसम्बन्धेन घटादिमत् तेन सम्बन्धेन घटादिविशिष्टज्ञानविषयत्वादित्यर्थः, तेन सम्बन्धेन घटादिविशिष्टज्ञानञ्च तेन सम्बन्धेन स्वसाकाङ्क्षं घटादि-ज्ञानं, भ्रमस्थले च ज्ञानद्वयत्वात् न तद्विषयत्वमिति भावः। ननु

---

(१) साध्याभेददोषप्रसङ्गादिति ख०।

(२) अत्रोपयोगादिति ख०, ग०।

(३) यो भ्रमाद्यजन्ययदविषयकयद्विशिष्टज्ञानान्यतरजन्यवाक्यप्रयोक्ता स तद्विषयकविशिष्टज्ञानवानितीति ख०।

यथार्थज्ञानविषयत्वात् आप्तोक्तपदस्मारितत्वाद्वा मदुक्तपदार्थवदिति। ननु वक्तृज्ञानविशेषोऽनुमेयः ज्ञाने चार्थ एव विशेषः न त्वर्थाधीनोऽन्यः अर्थेनैव विशेषः इत्यौपचारिकी तृतीया तथाच वाक्यार्थज्ञानविशेषा-

---

पूर्वानुमानात् कर्मत्वादिविषयकघटादिविशिष्टज्ञानसिद्धावपि कर्मत्वादौ घटादिविशिष्टज्ञानविषयत्वं न सिद्धमनुमितौ समानसंवित्संवेद्यत्वाभावादित्यस्वरसादाह, 'आप्तोक्तेति स्वविषयकघटादिविशिष्टज्ञानवदुक्तपदस्मारितत्वादित्यर्थः, स्वविषयकघटादिविशिष्टज्ञानञ्च स्वसाकाङ्क्षं स्वविषयकघटादिविशिष्टज्ञानं, 'मदुक्तेति घटादिकरणत्ववदित्यर्थः। ननु घटादिविशिष्टज्ञानस्यैव प्रथममप्रसिद्धा साध्यप्रसिद्धिविरहात्कथं व्याप्तिग्रहः तत्प्रसिद्ध्यभ्युपगमे च व्यर्थं तदनुमानमित्याशङ्कते, 'नन्विति, 'ज्ञानविशेषोऽनुमेय इति इदं वाक्यं भ्रमादिविशिष्टज्ञानयोरन्यतरजन्यमित्यनेन वक्तुर्विशिष्टज्ञानविशेषोऽनुमेय इत्यर्थः, 'अर्थएव' विषय एव, 'अर्थाधीनः' अर्थजन्यः, 'अन्यः' आकाराख्योवैयाकरणाभ्युपगतपदार्थविशेषः। ननु यद्यर्थ एव विशेषः तदा "अर्थेनैव विशेषो हि निराकारतया धियामित्यत्र[१] कथं तृतीया जन्यत्वस्य तृतीयार्थत्वात् तस्य चाभेदेऽसम्भवादित्यत आह, 'अर्थेनैवेति, 'औपचारिकीति धान्येन धनवानित्यादाविवाभेदौपचारिकीत्यर्थः, चैत्रेण पच्यते इत्यादौ लाघवात् कृतावेव तृतीयायाः

---

(१) इत्युदयनाचार्य्यकारिकायामित्यर्थः।

शक्तिकल्पनात् जन्यत्वार्थकत्वेऽपि लाक्षणिकत्वस्याविशेषादिति भावः। यद्यपि विशेषपदस्य भावव्युत्पन्नतया इतरभेदज्ञानार्थकत्वात् जन्यत्वमेव तृतीयार्थः सम्भवतीति तथापि करणसाधनं विशेषपदमभिप्रेत्य अभेदे तृतीयाया औपचारिकत्वाभिधानं[१]।

अत्र प्राञ्चः तृतीयाया अपि अभेदे शक्तिरेव न तु लक्षणा एवं जन्यत्वादावपि। व्यत्ययानुशासितातिरिक्तार्थे सुब्विभक्तौ न लक्षणेति नियमेन प्रामाणिकगौरवस्याकिञ्चित्करत्वात्। न चैवं चतुर्विंशतिर्गुणा इत्यादौ बहुवचनादेरपेक्षाबुद्धिविशेषविषयत्वरूपबहुत्वलक्षणाव्याकोपः रथेन गम्यते घटं जानातीत्यादौ व्यापारविषयतायास्तृतीया-द्वितीययोर्लक्षणाव्याकोपश्चेति वाच्यम्। तत्राप्यनायत्या तेषां शक्तिस्वीकारात्, एवं लघौ गुरौ वा यत्र तादृशार्थे सुब्विभक्तेः प्रसिद्धप्रयोगो वर्त्तते तत्र सर्वत्रैव तस्याः शक्तिः। न चैतादृशनियम एवासिद्ध इत्यस्तु किं गुरोः शक्यतातावच्छेदकत्वस्वीकारेणेति वाच्यम्। तथा सति गत्यर्थधातुयोगे कर्म्मणि चतुर्थीविधायकाद्यनुशासनरूपस्य षष्ठ्यर्थे सप्तमीविधायकाद्यनुशासनरूपस्य सप्तम्यर्थे षष्ठीविधायकाद्यनुशासनरूपस्य च व्यत्ययानुशासनस्य वैयर्थ्यापत्तेः अनुशासनं विनापि गङ्गायां घोष इत्यादाविव लक्षणया चतुर्थ्यादिना कर्मत्वादिप्रत्ययोपपत्त्या व्यत्ययानुशासितातिरिक्तार्थे सुब्विभक्तेर्न लक्षणेति नियमप्रतिपादनस्यैव व्यत्ययानुशासनफलत्वात्। न च कर्मत्वादावपि चतुर्थ्यादेः शक्तिप्रतिपादनमेव व्यत्ययानुशासनफलमन्यथा शेषाः कर्मकरणेत्यादिना कर्मत्वादौ द्वितीं-

(१) अभेदौपचारिकत्वाभिधानमिति ख०, ग०।

याद्यनुशासनस्य सिंहादौ द्वर्यादिपदानुशासनस्यापि च वैयर्थ्यापत्तेः[१] तत्रापि च लक्षणयैव कर्मत्वादेः सिंहादिषु प्रत्ययोपपत्तेरिति वाच्यम्। अभेदादेर्गुरुत्वेऽपि व्यत्ययानुशासनवैयर्थ्यभिया अनायत्या तत्र तृतीयादेः शक्तिस्वीकारः व्यत्ययानुशासितार्थे कर्मत्वादौ च चतुर्थ्यादेर्न शक्तिः प्रकृतार्थापेक्षया गुरुत्वात् स्वारसिकप्रयोगाभावाच्च किन्तु लक्षणैवेत्यभ्युपगमात् तथाच तादृशनियमानभ्युपगमे किमनुशासनेनेत्याकूः। तदसत्। व्यत्ययानुशासनवैयर्थ्यभिया अभेदादिषु तृतीयादेः शक्तिकल्पनामपेक्ष्यैतद्भिया व्यत्ययानुशासितार्थे कर्मत्वादौ चतुर्थ्यादेः शक्तिकल्पनाया एव सम्यक्त्वात् बहुषु गुरुधर्माणां शक्यतावच्छेदकत्वकल्पनामपेक्ष्य कियत्सु गुरुधर्मस्य शक्यतावच्छेदकत्वकल्पनाया न्याय्यत्वात् तथाच शक्तिप्रतिपादनमेव व्यत्ययानुशासनफलं।

यद्वा व्यत्ययानुशासनबलात् व्यत्ययानुशासितातिरिक्तविभक्त्यर्थे सुप्विभक्तेर्न लक्षणेत्येव कल्प्यते तथाचाभेदादौ तृतीयादेर्लक्षणायां बाधकाभावः। अन्यथा गुरुधर्मस्य शक्यतावच्छेदकत्वप्रसङ्गात्। एवञ्च व्यत्ययानुशासितार्थे कर्मत्वादावपि चतुर्थ्यादेर्लक्षणैव। वस्तुतस्तु व्यत्ययानुशासितातिरिक्ते विभक्त्यर्थे सुप्विभक्तेर्लक्षणास्ति किन्तु यद्विभक्त्यर्थे यद्विभक्तेर्व्यत्ययानुशासनं तद्विभक्त्यर्थे तद्विभक्त्यतिरिक्तसुप्विभक्तेर्लक्षणा नास्तीत्येव व्यत्ययानुशासनबलात् कल्प्यते। अतएव गमनार्थकधातुयोगे चतुर्थ्येव लक्षणया साध्वी नान्येत्येव सारं।

---

(१) वैकल्यापत्तेरिति क०।

ऽनुमेयः तस्य चाप्रसिद्ध्या न व्याप्तिग्रहः। अतएवास्मिन् वाक्यार्थे अयमभ्रान्त आप्तो वेति ज्ञातुमशक्यमिति शब्द एव तमर्थं बोधयेदिति चेत्, न, तात्पर्य्यावधार-

केचित्तु गुणिनि शुक्लादिपदानुशासनवन्निरूढलक्षणाप्रतिपादनमेव व्यत्ययानुशासनफलं यादृशलक्षणया प्रयोगे वादिनो न निग्रहः सैव निरूढलक्षणा ऐच्छिकलक्षणया प्रयोगे वादिनोऽशक्तत्वप्रतिपत्तेः[१] इत्याहुः।

'तथाचेति, 'वाक्यार्थज्ञानविशेषः' घटादिविशिष्टज्ञानं, 'तस्य चाप्रसिद्धेति, साध्यप्रसिद्धिविरहादिति शेषः, तत्सिद्ध्यभ्युपगमे च व्यर्थं तदनुमानमिति भावः। 'अतएव' साध्यप्रसिद्धिविरहादेव, 'अस्मिन् वाक्यार्थ इति, 'अयं' घटादिभ्रमाभाववानित्यर्थः, 'आप्तः' कर्म्मत्वादिविषयकघटादिविशिष्टज्ञानवान्, 'ज्ञातुमशक्यमिति अनुमातुमशक्यमित्यर्थः। घटादिभ्रमस्य कर्म्मत्वविषयकघटविशिष्टज्ञानस्य सिद्धतया साध्यप्रसिद्धिविरहात् तत्प्रसिद्ध्यभ्युपगमे च[२] तदनुमानवैफल्यमिति[३] भावः। वस्तुतो हेतुसिद्धिमाह, 'अतएवेतीति बोध्यं। यद्यपि हेतावाप्तत्वमपि भ्रमादिशून्यत्वमेव तथापि रूपभेदेन पृथगुक्तं[४]। 'तमर्थमिति कर्म्मत्वादौ घटादिमत्त्वमित्यर्थः, 'बोधयेदिति, न तु एते पदार्था यथोचितसंसर्गवन्त-

(१) वादिनोऽशक्तेः प्रतिपत्तेरिति ख०, ग०।

(२) सिद्ध्युपगमे चेति ख०, ग०।

(३) तदनुमानवैकल्यादितीति क०, ग०।

(४) वस्तुत इत्यादिः पृथगुक्तमित्यन्तः पाठः ख०-ग०चिह्नितपुस्तकद्वये नास्ति।

णार्थं त्वयाप्यशाब्द्या एव संसर्गविशेषप्रतीतेरवश्या-भ्युपेयत्वात्[१] अन्यथा क्व तात्पर्य्यनिरूपणं । अतएव

---

इत्यनुमानमुक्तप्रमाणाख्या हेतुसिद्ध्यसम्भवादिति भावः । गूढाभि-सन्धिः समाधत्ते, 'तात्पर्य्येति, 'संसर्गविशेषप्रतीतेरिति आधाराधेय-भावादिरूपसंसर्गककर्मत्वादिविशेष्यकघटादिप्रकारकवक्तृप्रतीतेरित्य-र्थः, अप्रसिद्धाया अपीति शेषः, 'अवश्याभ्युपेयत्वादिति प्रथममिदं वाक्यं घटादिभ्रमादि-विशिष्टज्ञानयोरन्यतरजन्यं घटज्ञानजन्यवा-क्यत्वादिति यत्तद्भ्यां सामान्यतोव्याप्त्यानुमानं ततोऽयं वक्ता कर्मत्व-विशेष्यकघटप्रकारकज्ञानवान् घटभ्रमाद्यजन्यकर्मत्वाविषयकघटवि-शिष्टज्ञानाजन्य-घटभ्रमादि-विशिष्टज्ञानयोरन्यतरजन्य-वाक्यप्रयोक्तृ-त्वादिति यत्तद्भ्यां सामान्यतोव्याप्त्याऽनुमानमिति क्रमेणानुमेयतया अवश्याभ्युपेयत्वादित्यर्थः, 'अन्यथा' तादृशप्रतीतेरनुमानानभ्युपगमे, 'क्व तात्पर्य्यनिरूपणमिति, तात्पर्य्यस्य तादृशप्रतीतिघटितत्वात्-तज्ज्ञानं विना तज्ज्ञानासम्भवादिति भावः । तथाच अप्रसिद्धा तादृशप्रतीतेरनुमानानुरोधेन यत्तद्भ्यां सामान्यतो व्याप्तिस्थले यत्तद्भ्यां साध्यान्तर-हेत्वन्तरयोर्व्याप्तिज्ञानात् हेतुतावच्छेदकरूपेण प्रकृतपक्षीयहेतोः पक्षधर्मताज्ञानादप्रसिद्धमपि प्रकृतपक्षीयसाध्यं पक्षधर्मताबलात् सिद्ध्यतीत्यभ्युपेयं तच्च ममापि तुल्यमिति गूढाभि-सन्धिः । 'अतएव' यत्तद्भ्यां सामान्यतोव्याप्त्या अप्रसिद्धस्याप्यनुमेय-

---

(१) अभ्युपेयत्वादिति कस्यचिन्मूलपुस्तकस्य पाठः, परन्तु टीकाकारस्वरसेन स पाठो न समीचीनः ।

आप्तोक्तत्वञ्च प्रमाद्यजन्यत्वनिरूपणमपि सुकरं । शाब्दन्तु संसर्गज्ञानं प्रथमं न भवति ज्ञानान्तरन्तु भवत्येव । न चैवं शब्दो न प्रमाणं तदर्थस्य प्रागेव सिद्धेरिति

---

त्वादेव, 'आप्तोक्तत्वेति कर्मत्वादिविषयकघटादिविशिष्टज्ञानवदुक्तत्वेत्यर्थः, 'प्रमाद्यजन्यत्वेति घटादिप्रमाद्यजन्यत्वेत्यर्थः, यत्तद्भ्यां सामान्यतोव्याप्त्या अप्रसिद्धघटादिभ्रमजन्यत्वस्यासिद्धत्वेऽपि(१) तदभाववत्त्वस्य कर्मत्वविषयकघटविशिष्टज्ञानस्यासिद्धत्वेऽपि तद्वत्त्वस्यानुमानसम्भवादिति भावः । ननु तथापि तात्पर्य्यग्रहात् पूर्वमेकपदार्थेऽपरपदार्थसंसर्गप्रतीतिः कथं स्यादित्यत आह, 'शाब्दन्त्विति, 'संसर्गज्ञानं' एकपदार्थेऽपरपदार्थसंसर्गज्ञानं, 'प्रथमं' तात्पर्यग्रहात् पूर्वं, 'ज्ञानान्तरन्त्विति आनुमानिकज्ञ नन्त्वित्यर्थः, तात्पर्यनिश्चयस्य शाब्दानुभवं प्रत्येव हेतुत्वादिति भावः । 'न चैवमिति, 'एवं' तात्पर्यनिश्चयात्पूर्वं नियमतस्तत्पदार्थे तत्पदार्थसंसर्गज्ञानाभ्युपगमे, 'न प्रमाणं' न विशिष्टानुभवजनकं, 'तदर्थस्य' तज्जन्यविशिष्टानुभवविषयस्यैकपदार्थेऽपरपदार्थसंसर्गस्य, 'सिद्धेः' अनुमानात् सिद्धेः, तथाच प्रयोजनाभावात् शब्दस्य न विशिष्टानुभवजनकत्वमिति भावः । गूढाभिसन्धिराह, 'तवापीति, तात्पर्यघटकतया तदनुमानादेव तत्तत्पदार्थानान्तत्तत्संसर्गाणाञ्च सिद्धेरिति भावः । यदि च तत्तत्पदार्थानान्तत्तत्संसर्गानाञ्चानुमानात्सिद्धावपि घटवत्तया कर्मत्वं शाब्दयामि घटवत्तया कर्मत्वं शृणोमीत्याद्यनुव्यवसायानुपपत्त्या

---

(१) घटादिभ्रमस्यासिद्धत्वेऽपीति क० ।

वाच्यम्। तत्रापि तुल्यत्वात्। ननु तथापि कथमर्थ-विशेषसिद्धिः विशेषेण व्याप्त्यग्रहादिति चेत्। न। यथा यो यत्र प्रवर्त्तते स तज्ज्ञानातीति सामान्यतो-व्याप्तिज्ञाने पाकादौ प्रवृत्तिदर्शनात् पाकविषयक-कार्य्यताज्ञानानुमानं, यथा च चेष्टाविशेषदर्शनात् दशसंख्याभिप्रायमात्रज्ञाने घटे तच्चेष्टादर्शनात्[१] घटे

शब्दस्य विशिष्टानुभवजनकत्वस्वीकार इत्युच्यते, तदा ममापि तुल्यमिति गुढ़ाभिसन्धिः। तत्पदार्थे तत्पदार्थवत्त्वानुमाने शङ्कते, 'नन्विति, 'अर्थविशेषेति प्रकृतसंसर्गेण यत्पदार्थातिरिक्ते यत्पदार्थव-त्त्वग्रहो नास्ति प्रकृतसंसर्गेण तत्पदार्थे तत्पदार्थवत्त्वसिद्धिरित्यर्थः,[२] 'विशेषेणेति, दृष्टान्ताभावेन विशेषेण व्याप्त्यग्रहादित्यर्थः। 'यथेति, पाकविषयकप्रवृत्तिमत्त्वस्यान्यत्राग्रहदशायामिति शेषः,[३] 'पाकादा-विति पाकादिविषयकप्रवृत्तिमत्त्वस्य पुरुषे दर्शनादित्यर्थः, 'पाक-विषयकेति अयं पाकविषयककार्यताज्ञानवान् पाकविषयकप्रवृत्ति-मत्त्वादिति क्रमेण पाकविषयककार्यताज्ञानानुमानमित्यर्थः, 'चेष्टा-विशेषदर्शनादिति अङ्गुलीनां चेष्टाविशेषदर्शनादित्यर्थः, 'दशसंख्या-भिप्रायमात्रेति सामान्यतो दशसङ्ख्याभिप्रायमात्रज्ञानसत्त्वेऽपी-त्यर्थः, 'मात्रपदात् घटविषयकदशसङ्ख्याभिप्रायज्ञानव्यवच्छेदः, यो घटविषयकचेष्टाविशेषवान् स घटविषयकदशसङ्ख्याभिप्रायवानिति विशेषतो व्याप्तिग्रहाभावादिति भावः। 'घटे तच्चेष्टादर्शनादिति

(१) तच्चेष्टाविशेषदर्शनादिति क०। (२) इति भावः इति ख०।
(३) अग्रहदशायामित्यर्थ इति ख०।

दृशत्वज्ञानं तथा सामान्यतोव्याप्त्याऽत्रापि विशेषसिद्धिः ।
यद्वा इदं वाक्यं साकाङ्क्षैतदर्थविषयकैकज्ञानहे-

---

घटविषयकचेष्टाविशेषस्य पुरुषे दर्शनादित्यर्थः, यो यद्विषयकचेष्टा-
विशेषवान् स तद्विषयकदृशसञ्ज्ञाभिप्रायवानिति यत्तज्ज्ञां सामान्यतो-
व्याप्त्येति शेषः, चेष्टायां घटविषयकता तु व्यापारानुबन्धिनीत्यव-
धेयं । 'घटे दृशत्वज्ञानमिति घटविषयकदृशसञ्ज्ञाभिप्रायज्ञानमि-
त्यर्थः, 'सामान्यतो व्याप्त्येति यो यत्संसर्गेण यद्विशिष्टज्ञानविषयः
स तत्संसर्गेण तद्वानिति सामान्यतो व्याप्त्येत्यर्थः, 'अत्रापि' अनयो-
रपि यत्पदार्थातिरिक्ते प्रकृतसंसर्गेण यत्पदार्थवत्त्वज्ञानन्नास्ति तत्प-
दार्थद्वयोरपीति यावत्, 'विशेषसिद्धिः' विशेषतः प्रकृतसंसर्गसिद्धिः,
इदमुपलक्षणं विशेषतो व्यतिरेकव्याप्त्यापि तयोः संसर्गसिद्धिर्द्रष्टव्या ।

महार्णवोक्तं प्रकारान्तरेण वाक्यपक्षककर्मत्वादिविशिष्टज्ञानानु-
मानमाह,(१) 'यद्वेति, 'इदं वाक्यं' घटमित्यादिवाक्यं, 'साकाङ्क्षेति
आधाराधेयभावादिसम्बन्धेन या घट-कर्मत्वोभयपरस्परनिरूपिता-
काङ्क्षा तद्वद्घट-कर्मत्वाद्युभयविषयकज्ञानं तद्धेतुकमित्यर्थः, एता-
दृशज्ञानमेव परनये विशिष्टज्ञानं आकाङ्क्षा च तन्मते ज्ञाननिष्ठः
पदार्थविशेषः तस्य च प्रतियोगिविधया निरूपकं विशेषणत्वेन नैया-
यिकाभिमतं घटादि अनुयोगिविधया निरूपकं विशेष्यतया नैया-
यिकाभिमतं कर्मत्वादीति भावः । वैशिष्ट्यविषयकज्ञानजन्यत्वन्तु न
साध्यं गुरुनये समवायस्यातीन्द्रियतया तज्ज्ञानस्य वैशिष्ट्यागोचर-

---

(१) प्रकारान्तरेण कर्मत्वादिविशिष्टज्ञानानुमाहेति ख०, ग० ।

तुकं आप्तोक्तत्वे सति एतदर्थप्रतिपादकत्वात् मद्वाक्य-

---

त्वात् वैशिष्ट्यस्य प्रथमं दुर्निरूप्यत्वाच्चोपेक्षितं,[१] 'आप्तोक्तत्वे सतीति भ्रमाजन्यत्वे सतीत्यर्थः, 'एतदर्थप्रतिपादकेति घट-कर्मत्वाद्युभयप्रतिपादकशब्दत्वादित्यर्थः, यो भ्रमाजन्यत्वे सति यदुभयप्रतिपादकः शब्दः स आधाराधेयभावसम्बन्धावच्छिन्नतदुभयनिरूपिताकाङ्क्षावत्तदुभयविषयकज्ञानहेतुक इति सामान्यतोव्याप्तिः, अत्र तदुभयप्रतिपादकत्वमात्रं वह्निकरणत्व-सेकोभयप्रतिपादके वह्निना सिञ्चतीत्यादौ व्यभिचारि वह्निकरणत्व-सेकोभयविषयकज्ञाने वह्निकरणकत्व-सेकोभयनिरूपिताकाङ्क्षायास्तैरनङ्गीकारादन्यथा तादृशज्ञानस्यैव तन्मते विशिष्टज्ञानत्वेनान्यथाख्यात्यापत्तेरिति भ्रमाजन्यत्वं विशेषणं, भ्रमत्वञ्च तत्तदभाववत्तदुभयनिरूपिताकाङ्क्षावत्त्वं, वह्निना सिञ्चतीत्यादौ भ्रमस्थानाभिषिक्तज्ञानद्वयस्यैव तादृशाकाङ्क्षावत्त्वेन तज्जन्यत्वान्न व्यभिचारः, तदुभयाप्रतिपादके भ्रमाजन्ये वाक्यान्तरे व्यभिचारवारणाय च विशेष्यदलं तदर्थस्य आधाराधेयभावादिसम्बन्धावच्छिन्नतदुभयपरस्परनिरूपिताकाङ्क्षावत्प्रतीतीच्छयोच्चरितत्वं तादृशप्रतीतीजन्यत्वं वा तेन वह्नेरालोकमानयेत्यादौ वह्नि-कर्मत्वोभयप्रतिपादके वह्निभ्रमाजन्ये न व्यभिचारः, न वा शुकाद्युच्चरितघटमानयेत्यादौ व्यभिचार इति भावः। 'तत इति अनेनानुमानेन

---

[१] वैशिष्ट्येत्यादिः उपेक्षितमित्यन्तः पाठः ख॰-ग॰चिह्नितपुस्तकद्वये नास्ति।

**वत्, तत एते पदार्थाः परस्परसंसर्गवन्तः[१] साकाङ्क्षत्वे सत्येकज्ञानविषयत्वात् सत्यरजतज्ञानविषयवत्,[२] एवं**

हेतुसिद्धेरनन्तरमित्यर्थः, 'एते पदार्था इति कर्मत्वादय इत्यर्थः, 'परस्परसंसर्गवन्तः' आधाराधेयभावसम्बन्धेन घटादिमन्तः, 'साकाङ्क्षत्वे सतीति अनुयोगितया आधाराधेयभावादिसम्बन्धावच्छिन्न-घटाद्याकाङ्क्षानिरूपकत्वे सतीत्यर्थः, 'एकज्ञानेति घटादिविषयकैक-ज्ञानविषयत्वादित्यर्थः, योऽनुयोगितया यत्सम्बन्धावच्छिन्नयदाका-ङ्क्षानिरूपकत्वे सति तद्विषयकज्ञानविषयः स तत्सम्बन्धेन तद्वानिति सामान्यतोव्याप्तिः, शुक्ति-रजतत्वे इत्यादिसमूहालम्बनविषये शुक्त्यादौ व्यभिचारवारणाय सत्यन्तं। यद्यप्येवमपि तत्र व्यभिचारतादवस्थ्यं इदं रजतमित्यादिभ्रमस्थानाभिषिक्तरजतत्वादिप्रत्येकमात्रविषयक-ज्ञानद्वयनिष्ठशुक्ति-रजतत्वोभयनिरूपिताकाङ्क्षानिरूपकत्वात् शुक्तेः, तथापि स्वनिरूपितघटाद्याकाङ्क्षावद्यद्घटादिविषयकज्ञानं तद्-विषयत्वं समुदायेन विवक्षितं, सामान्यमुखी च व्याप्तिः भ्रमस्थाना-भिषिक्तशुक्ति-रजतत्वप्रत्येकमात्रविषयकज्ञानद्वयस्य शुक्ति-रजतत्वो-भयनिरूपिताकाङ्क्षावत्त्वेऽपि शुक्ति-रजत्वोभयविषयकसमूहालम्बनस्य तादृशाकाङ्क्षावत्त्वविरहान्न व्यभिचारः, शुक्ति-रजतत्वोभयविषयक-समूहालम्बनस्य शुक्ति-रजतत्वोभयनिरूपिताकाङ्क्षावत्त्वाभ्युपगमे ता-दृशज्ञानस्यैव तन्मते विशिष्टज्ञानत्वेनान्यथाख्यात्यापत्तेरिति भावः। 'सत्यरजतज्ञानेति रजतत्वविशिष्टज्ञानविषयरजतत्वाश्रयवदित्यर्थः, 'एवमिति वक्तृपञ्चक-वाक्यपञ्चकानुमानान्यतरेण वक्तुः कर्मत्वादि-

(१) मिथः संसर्गवन्त इति क०। (२) सत्यरजतज्ञानविषयवदितीति क०।

वक्तुर्यथार्थवाक्यार्थज्ञानेऽनुमिते प्रकरणादिना वक्त्रभिप्रेतयथार्थप्रतीतिपरत्वज्ञानं ततो वेदतुल्यतया शब्दादर्थप्रत्यय इत्यनुवादकः शब्दः वक्तृज्ञानावच्छेदकतया संसर्गज्ञानानुमानात् तदुपजीविसंसर्गानुमानाद्वा वाक्यार्थस्य प्रागेव सिद्धेः । यत्तु संसर्गाग्रहो भ्रमः[१]

---

विषयकघटादिविशिष्टज्ञानेऽनुमिते इत्यर्थः, तदनुमितेन हेतुना कर्मत्वादौ घटादिमत्त्वे चानुमिते इति शेषः, 'प्रकरणादिनेति, आदिपदाद्वक्तृचेष्टाविशेषादिपरिग्रहः, प्रकरणञ्च भोजन-गमनादि, 'वक्त्रभिप्रेतयथार्थप्रतीतिपरत्वज्ञानं' प्रकृतवाक्यार्थप्रतीतिपरत्वज्ञानं कर्मत्वादिविशेष्यक-घटादिप्रकारकयथार्थप्रतीतीच्छयोच्चरितत्वज्ञानमिति यावत्, 'वेदतुल्यतयेति वेदस्थले क्लृप्तशाब्दानुभवसामग्रीविशिष्टतयेत्यर्थः, 'शब्दात्' लौकिकशब्दात्, 'अनुवादकः शब्द इति अनुवादको लौकिकः शब्द इत्यर्थः, अनुवादकत्वञ्च स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्ति-स्वसमानाकारनिश्चयविषयविषयक-तद्विशेष्यक-तत्प्रकारकानुभवमात्रजनकत्वं, स्वपदमनुभवपरं, अनुवादकत्वमेवोपपादयति, 'वक्तृज्ञानेति वक्तृज्ञानविशेषणतयेत्यर्थः, 'संसर्गज्ञानानुमानात्' कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमानात् । ननु कर्मत्वादिविषयकघटादिविशिष्टज्ञानानुमानात् कर्मत्व-घटाद्योस्तत्संसर्गस्य च सिद्धावपि कर्मत्वादौ घटादिमत्त्वं न सिद्धमित्यत आह, 'तदुपजीवीति, 'संसर्गानुमानाद्वेति कर्मत्वादौ घटादिमत्त्वानुमानाद्वेत्यर्थः, सर्वत्रैवेति शेषः, 'वाक्यार्थस्य' स्वार्थस्य, विशिष्येति

---

(१) यत्त्वसंसर्गाग्रहो भ्रम इति ख० ।

शेषः। इदमुपलक्षणं यथार्थतात्पर्य्यानुमानादपि यथार्थत्वघटकतया सर्वत्र विशिष्टस्वार्थसिद्धिर्द्रष्टव्या। एवञ्च लौकिकशब्दो न प्रमाणं अगृहीतग्राह्यनुभवकरणत्वस्य प्रमाणत्वरूपत्वादगृहीतग्राह्यनुभवकरणत्वञ्च गृहीतग्राहीतरानुभवकरणत्वं तच्च स्वसमानाधिकरण-स्वाव्यवहितपूर्ववर्त्तिस्वसमानाकारनिश्चयाविषयविषयकेतरतद्विशेष्यक-तत्प्रकारकानुभवकरणत्वं, स्वसमानाकारत्वञ्च स्वस्मिन् यादृशी तद्विशेष्यकत्वावच्छिन्नतत्प्रकारिता तादृशतद्विशेष्यकत्वावच्छिन्नतत्प्रकारिताशालित्वं। नन्वेवं क्रमेण तुल्ययुक्त्या वेदस्याप्यप्रामाण्यं स्यात् यथार्थतात्पर्य्यज्ञानस्य लोक-वेदसाधारणशाब्दानुभवमात्रं प्रत्येव हेतुत्वादिति चेत्, न, वेदे प्रामाण्यान्यथानुपपत्त्या सामान्यत एतत्कपिञ्जलपदार्थत्वादिना कपिञ्जलपदार्थादिविशेष्यक-चित्वादिप्रकारक-यथार्थप्रतीतिपरत्वज्ञानस्यैव शाब्दबोधहेतुतया वेदजन्यशाब्दबोध-कारणीभूतस्य यथार्थतात्पर्य्यज्ञानस्य तदुपजीव्यस्य वा एतत्कपिञ्जलपदार्थः चित्ववानित्याद्याकारकस्य सामान्यतस्तत्पदार्थसंसर्गानुमानस्य(१) वेदजन्यशाब्दबोधसमानाकारत्वाभावात्। न चैवं लोकेऽपि प्रामाण्यान्यथानुपपत्त्या सामान्यत एतदम्पदार्थत्वादिना एतदम्-पदार्थविशेष्यकघटादिप्रकारकयथार्थप्रतीतिपरत्वज्ञानं हेतुरस्तु एवञ्च लोक-वेदभेदेन कार्य्य-कारणभावद्वयाभावाल्लाघवमपीति वाच्यम्। लोके सामान्यत एतदम्पदार्थविशेष्यक-घटप्रकारकयथार्थप्रतीति-परमिदमिति यथार्थतात्पर्यनिश्चयेऽपि कर्मत्वप्रतीतिपरन्न वेति

(१) सामान्यतः पदार्थसंसर्गानुमानस्येति ख०, ग०।

विशिष्य सन्देहे[१] कर्मत्वप्रतीतिपरत्वेति विशिष्य व्यतिरेकनिश्चये च[२] शाब्दानुदयाद्विशिष्य यथार्थतात्पर्यनिश्चयस्यैव हेतुत्वात् तस्य च विशिष्यार्थोपस्थितिसाध्यत्वात्[३]। न चैतद्वेदेऽपि सुवचमिति वाच्यम्। तत्र एतत्कपिञ्जलपदार्थविशेष्यक-चित्वप्रकारकयथार्थ-प्रतीतिपरमिदमिति सामान्यतो यथार्थतात्पर्यनिश्चये विशिष्य रक्तच्छागप्रतीतिपरत्न वेत्यादिसन्देहाद्यनवकाशात् ज्ञात्वपि एतत्-कपिञ्जलपदेन रक्तच्छागातिरिक्तार्थाप्रतिपादनात् रक्तच्छागातिरिक्ते एतत्कपिञ्जलपदार्थत्वादर्शनादेतत्कपिञ्जलपदार्थत्वप्रकारकनिश्चयस्यैव विशिष्य रक्तच्छागत्वप्रकारकताहृशसन्देहादौ विरोधित्वात् लोके च लक्षणादिना एतदम्पदार्थत्वस्यान्यत्रापि दृष्टत्वादेतदम्पदार्थ-त्वप्रकारकनिश्चयेऽपि कर्मत्वत्वप्रकारकताहृशसन्देहादिसम्भवादिति प्राभाकराभिमानः।

केचित्तु वेदे प्रामाण्यान्यथानुपपत्त्या तद्विशेष्यक-तत्प्रकारक-प्रतीतित्वेन रूपेण तद्विशेष्यक-तत्प्रकारकयथार्थप्रतीतिपरत्वज्ञानं शाब्दधीहेतुः यथार्थत्वज्ञानं नापेक्षितं तत्कार्य्यतावच्छेदकञ्च लोक-वेदसाधारणं शाब्दबुद्धित्वमेव वेदजन्यत्वप्रवेशे गौरवात् लोके च तद्विशेष्यक-तत्प्रकारकयथार्थप्रतीतित्वेन रूपेण तज्ज्ञानं विशेषसामग्री तद्विशेष्यक-तत्प्रकारकप्रतीतित्वेन तात्पर्य्यनिश्चयेऽपि तात्पर्य्यघटकप्रतीतौ यथार्थत्वसंशये तद्व्यतिरेकनिश्चये च शाब्दानु-

(१) विशिष्टसन्देह इति क०।

(२) विशिष्टव्यतिरेकनिश्चये चेति क०।

(३) विशिष्टार्थोपस्थितिसाध्यत्वादिति ख०।

**तदभावश्च संसर्गग्रह एवेति भ्रमाभावेऽनुमीयमाने संसर्गज्ञानमेवानुमितं इत्याप्तत्वानुमानान्तर्गतमेव वक्तृ-ज्ञानानुमानं न तु वक्तुर्ज्ञानानुमाने तल्लिङ्गं[१] इति।**

---

दयात् वेदे तु तात्पर्य्यस्य न्यायगम्यत्वेन वेदत्वेनाबाधितार्थकत्व-निश्चयेन च तद्विशेष्यक-तत्प्रकारकप्रतीतित्वरूपेण निर्णयदशायां यथार्थत्वसन्देहाद्यनवकाशादिति लौकिकशब्द एवानुवादकः यथार्थ-त्वग्रहार्थं तत्पदार्थे तत्पदार्थवत्त्वग्रहस्यावश्यकत्वात् यथार्थत्वघटकतया तत्पदार्थे तत्पदार्थवत्त्वस्य तात्पर्य्यग्रहेण विषयीकृतत्वाच्चेति प्राभा-कराभिमान इति प्राञ्चः।

'संसर्गाग्रहो भ्रम इति पाठः विशिष्टज्ञानाभावो भ्रम इत्यर्थः, 'तदभावश्च' भ्रमाभावश्च, 'संसर्गग्रह एव' विशिष्टज्ञानमेव। यद्यपि समवायस्यातीन्द्रियतया न विशिष्टज्ञानस्य संसर्गगोचरत्वं तथापि यत्र संयोगादिः संसर्गस्तदभिप्रायेणेदं[२]। 'भ्रमाभावे' घटादि-भ्रमाभावे, 'संसर्गज्ञानमेवेति घटादिविशिष्टज्ञानमेवेत्यर्थः, 'आप्त-त्वानुमानेति घटादिभ्रमाभावानुमानरूपमेवेत्यर्थः, 'वक्तृज्ञानेति वक्तुर्घटादिविशिष्टज्ञानानुमानमित्यर्थः, 'वक्तुर्ज्ञानानुमाने' वक्तुः कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमाने, 'तत्' वक्तुर्घटादि-भ्रमाभावानुमानं, 'लिङ्गं' प्रयोजकम्, तथाच अयञ्च वक्ता स्वप्रयुक्त-

---

(१) न तु तल्लिङ्गमिति ख०।

(२) यद्यपीत्यादिः तदभिप्रायेणेदमित्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

**तन्न, भ्रमो हि ज्ञानद्वयं अगृहीतभेदं तदभावश्च गृहीत-**

त्यादितृतीयानुमानं इदं वाक्यमित्यादि प्रथमानुमानञ्च[१] नाङ्गी-करणीयं, वक्तुर्घटादिभ्रमाभावानुमानादेव घटादिविशिष्टज्ञानसिद्धौ तद्विषयत्वेन हेतुना कर्मत्वादौ घटादिमत्त्वसिद्धेः सम्भवादिति भावः। क्वचित्तु 'असंसर्गाग्रहोऽभ्रमः' इति पाठः, तत्र च 'असंसर्गा-ग्रहः' संसर्गग्रहाभावाभावः, 'अभ्रम इत्यकारप्रश्लेषाद्भ्रमाभाव इत्यर्थः, 'तदभावश्च' संसर्गग्रहाभावाभावश्च, 'संसर्गग्रह एवेति, अभावाभावस्य प्रतियोगिरूपत्वादिति भावः। अन्यत्सर्वं पूर्ववत्। घटादिभ्रमाभावानुमानात् घटादिविशिष्टज्ञानसिद्धावपि कर्मत्वादौ तद्विषयत्वं न सिद्धं तस्यैव वक्ष्यमाणानुमाने हेतुत्वादिति तृतीया-नुमानमावश्यकं तदावश्यकत्वे च तद्धेतुसिद्ध्यर्थं प्रथमानुमानमाव-श्यकमिति समाधाने सत्यपि स्फुटतरं समाधानान्तरमाह, 'भ्रमो हीति, 'अगृहीतभेदमिति स्वरूपतो विषयतश्च भेदग्रहाभावविशि-ष्टमित्यर्थः, वैशिष्ट्यञ्च एककालावच्छेदेनैकात्मवृत्तित्वं,[२] 'गृहीत-भेदज्ञानमिति गृहीतो विषयीकृतो भेदो येनेति व्युत्पत्त्या स्वरूपतो विषयतश्च[३] भेदज्ञानमित्यर्थः[४] ज्ञानद्वयाभावश्चेति शेषः, विशिष्टा-भावस्य विशेषणाभाव-विशेष्याभावोभयरूपत्वादिति[५] भावः। तथा-

(१) तृतीयानुमानं प्रथमानुमानञ्चेति ख०, ग०।

(२) वैशिष्ट्यञ्च एककालावच्छिन्नैकात्मवृत्तित्वमिति ख०।

(३) विशेषतश्चेति क०, ग०।

(४) भेदग्रहविशिष्टमित्यर्थ इति क०।

(५) विशेषणाभाव-विशेष्याभावान्यतररूपत्वादिति क०।

भेदज्ञानं, न हि ज्ञानाभावे सुषुप्तौ भ्रमव्यवहारः, ततो भ्रमाभावनिश्चयानन्तरं वक्तृज्ञानानुमानं । किञ्च

---

चैतादृशभ्रमाभावानुमितावपि न विशिष्टज्ञानसिद्धिरिति भावः। संसर्गाग्रहस्य[१] भ्रमत्वं खण्डयति, 'न हीति, 'ज्ञानाभावे' विशिष्टज्ञानाभावे, 'सुषुप्तौ', असंसर्गाग्रहदशायाञ्चेति शेषः। उपसंहरति, 'तत इति तस्मादित्यर्थः, 'भ्रमाभावेति घटादिभ्रमाभावेत्यर्थः, 'वक्तृज्ञानेति वक्तुः कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमानमित्यर्थः, आवश्यकमिति शेषः। 'आप्तोक्तत्वानुमानमेवेति वह्निकरणकत्वादिभ्रमाभाववदुक्तत्वानुमानमेवेत्यर्थः, 'वक्तृज्ञानेति वक्तुर्वह्निकरणकत्वादिविशिष्टज्ञानानुमानमित्यर्थः, 'तर्हीति, तर्हि वह्निकरणकत्वादिभ्रमाभाववदुक्तत्वस्य अनुमापकं यल्लिङ्गं तदेव वह्निकरणकत्वादिशाब्दप्रमाकरणमस्तु किं यथार्थतात्पर्य्यहेतुत्वेन भवन्मते वह्निकरणकत्वादिभ्रमाभावस्य वह्निकरणकत्वादिविशिष्टज्ञानरूपतया तद्वदुक्तत्वानुमापकलिङ्गस्यापि व्यभिचारिशब्दव्यावृत्तत्वात् मम तु वह्निकरणकत्वादिभ्रमाभावस्य वह्निकरणत्वादिविशिष्टज्ञानरूपतया तद्वदुक्तत्वानुमापकलिङ्गस्य शुकाद्युदीरितवह्निनासिञ्चतीत्यादिवाक्येऽपि सत्त्वान्न व्यभिचारिशब्दव्यावृत्तत्वमतो न शाब्दप्रमाजनकत्वमित्यर्थः। न च भवन्मतेऽपि कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमापकलिङ्गकोटिप्रविष्टघटादिभ्रमाद्यजन्यनिरुक्तवाक्यत्वमेव शाब्दप्रमाजनकमस्तु तस्य व्यभिचारिशब्दव्यावृत्तत्वादिति

---

(१) संसर्गग्रहाभावस्येति ग०।

यथाप्तोक्तत्वानुमानमेव वक्तृज्ञानानुमानं, तर्हि यादृशं लिङ्गं तादृशमेव गमकमस्त्विति।

अत्रोच्यते। यथार्थवाक्यार्थधीपरत्वं न ज्ञातं प्रमो-

---

तुल्योऽयमनुयोग इति वाच्यम्। गौरवेण तस्याहेतुत्वादिति भावः।

केचित्तु तुल्यत्वित्यादिन्यायेन इष्टापत्तिमाह, 'किञ्चेति, 'आप्तोक्तत्वानुमानं' अप्तत्वानुमानं घटादिभ्रमाभावानुमानमिति यावत्, 'वक्तृज्ञानेति वक्तुर्घटादिविशिष्टज्ञानानुमानमित्यर्थः, 'तर्हीति, तर्हि यादृशं घटादिभ्रमाभावानुमानं वक्तुः कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमाने 'लिङ्गं' प्रयोजकं, 'तादृशमेव' तदेव, 'गमकमस्तु' कर्मत्वादौ घटादिमत्त्वानुमाने प्रयोजकमस्तु, तृतीयानुमानं प्रथमानुमानञ्च नाङ्गीकरिष्याम इत्यर्थः, इति प्राहुः।

अन्ये तु 'आप्तोक्तत्वानुमानेत्यादि केचित्तुमतवत्, 'यादृशं लिङ्गमित्यादेस्तु यादृशं घटादिभ्रमाभावानुमाने लिङ्गं तादृशमेव वक्तुः कर्मत्वादिविषयक-घटादिविशिष्टज्ञानानुमापकमस्त्वित्यर्थः, तथाच यदि भ्रमाभावमनुमाय वक्तुः तादृशज्ञानमनुमीयते तदैव भ्रमाभावानुमानेनैव घटादिविशिष्टज्ञानसिद्धेर्वक्तुः तादृशज्ञानानुमानवैयर्थ्यमाशङ्कनीयं भ्रमाभावानुमापकेन वक्तुस्तादृशज्ञानानुमाने तु नैतस्याः शङ्कायाः अवकाश इति भावः। इति प्राहुः।

इति प्रभाकरपूर्व्वपक्षः।

'यथार्थवाक्यार्थेति यथार्थतात्पर्य्यनिश्चयो न शाब्दानुभवजनक-

त्पादकं गौरवात् वाक्यार्थनिरूप्यत्वेन प्रथमं ज्ञातु-

---

-इत्यर्थः, 'गौरवादिति यथार्थतात्पर्य्यस्य तद्विशेष्यक-तत्प्रकारक-यथार्थप्रतीतीच्छयोच्चरितत्वरूपतया यथार्थत्वप्रवेशेन गौरवादित्यर्थः, भवन्मते यथार्थत्वस्याव्यावर्त्तकतया व्यर्थत्वाच्चेत्यपि द्रष्टव्यं, किन्तु लाघवाद्यथार्थविशेषणताविरहाच्च तद्विशेष्यक-तत्प्रकारकप्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यनिश्चय एव शाब्दधीजनकः भवन्मते अन्यथाख्यात्यभावेन वह्निना सिञ्चतीत्यादौ तद्विशेष्यक-तत्प्रकारकप्रतीतेरप्रसिद्धत्वादेवातिप्रसङ्गविरहात्। न च लोकस्थले तात्पर्य्यघटकप्रतीतौ यथार्थत्वसंशये शाब्दबोधानुदयात् यथार्थत्वांशनिवेशनमावश्यकमिति वाच्यम्। तस्यैवासिद्धेः। तात्पर्य्ययाथार्थ्यसंशयस्य योग्यतासंशयपर्य्यवसिततया अननुगुणत्वाच्च[१]। न च तथापि तव नये शाब्दप्रमात्वावच्छिन्नं प्रति यथार्थतात्पर्य्यनिश्चयो हेतुरावश्यकः अन्यथा तात्पर्य्यनिश्चयमात्रस्य तदवच्छिन्नं प्रति हेतुत्वे वह्निना सिञ्चतीत्यादावपि शाब्दप्रमोत्पत्त्यापत्तेः भ्रमरूपतद्विशेष्यक-तत्प्रकारकप्रतीतेः तत्रापि प्रसिद्धत्वादिति वाच्यम्। मम वह्निना सिञ्चतीत्यादौ शाब्दानुभवानुरोधेन शाब्दानुभवसामान्यं प्रति निरुक्ततात्पर्य्यनिश्चयस्य हेतुत्वावश्यकत्वे शाब्दप्रमात्वावच्छिन्नं प्रति लाघवात् संशयनिश्चयसाधारणतत्पदार्थतत्पदार्थवत्त्वरूपयोग्यताप्रमाया एव हेतुत्वाद्यथार्थतात्पर्य्यनिश्चयस्य तदपेक्षया गुरुत्वादिति भावः। ननु निरुक्त-

---

(१) तात्पर्य्ययाथार्थ्यसंशयस्येत्यादिः अननुगुणत्वाच्चेत्यन्तः पाठः ख० ग० पुस्तकद्वये नास्ति।

मशक्यत्वाच्च तस्यापूर्व्वत्वात् । यच्च लोके भ्रमादिनिरासानन्तरं वक्तृज्ञानावच्छेदकतया तदग्रे स्वातन्त्र्येण वा पुमभिप्रेतवाक्यार्थज्ञाने तत्प्रतीतिपरत्वं प्रकरणादिना ज्ञायत इत्युक्तं, तन्न, वाक्यार्थमज्ञात्वा अयमभ्रान्त इति ज्ञातुं पुरुषत्वाद्वक्तुर्भ्रम-प्रमादसम्भवेन प्रथमं

---

यथार्थप्रतीतीच्छयोच्चरितत्वं न यथार्थतात्पर्य्यमपि तु तत्पदार्थे-वत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वं तद्वाच्यम्, तथाच तद्विशेष्यक-तत्प्रकारकप्रतीतीच्छयोच्चरितत्वापेक्षया लाघवमेव न वा वैयर्थ्यमि-त्यरुचेराह, 'वाक्यार्थेति तत्पदार्थे तत्पदार्थवत्त्वनिश्चयाधीननिश्चा-यकत्वेनेत्यर्थः, 'प्रथमं' शाब्दानुभवात् पूर्वं, 'ज्ञातुं' निश्चेतुं, 'तस्या-पूर्वत्वादिति तत्पदार्थे तत्पदार्थवत्त्वस्य शाब्दबोधात् पूर्वमनिश्चितत्वा-दित्यर्थः। ननु पूर्वोक्तक्रमेण शाब्दबोधात् पूर्वं तत्पदार्थे तत्पदार्थ-वत्त्वं निश्चित्य तन्निश्चयः[१] स्यादित्यत आह, 'यच्चेति, 'पुमभिप्रेतेति तत्पदार्थे तत्पदार्थवत्त्वनिश्चये इत्यर्थः, 'तत्प्रतीतिपरत्वं' यथार्थ-प्रतीतिपरत्वं, 'वाक्यार्थं' घटादिकं, 'अत्र' घटादौ, 'ज्ञातुमिति 'अशक्यत्वादित्यग्रेतनेनान्वयः। ननु शाब्दधीपूर्व्वं घटादेर्ज्ञानमस्त्येव कथमन्यथा तत्रापि तात्पर्य्यधीरित्यत आह, 'पुरुषत्वादिति, 'भ्रम-प्रमादसम्भवेनेति, पुंवाक्यत्वस्य व्यभिचारित्वादिति भावः[२]। ननु मा भूत् पुंवाक्यत्वेन भ्रमाद्यजन्यत्वग्रहस्तथापि संवादिप्रवृत्तिप्रयो-

---

(१) निश्चय इति ख०, ग०। (२) व्यभिचारित्वादिति शेष इति क०।

भ्रमाद्यजन्यत्वस्य ग्रहीतुमशक्यत्वात् प्रवृत्तिसंवादादे-र्ज्ञानोत्तरकालीनत्वात् भ्रमादिजन्यविलक्षणत्वेन च शब्दस्याज्ञानात् ज्ञाने वा यादृशो लिङ्गत्वं तस्यैव प्रत्यायकत्वं अव्यभिचारात् वेदेऽपि वाक्यार्थमविज्ञाय तद्यथार्थप्रतीतिपरत्वं न्यायेनापि ज्ञातुमशक्यं विषयनिरूप्यत्वात् प्रतीतेः लोके तात्पर्य्यनिरूपणार्थे-

जकवाक्यत्वेन लिङ्गेन तद्ग्रहः स्यादित्यत आह, 'प्रवृत्तिसंवादादे-रिति संवादिप्रवृत्त्यादेरित्यर्थः, 'ज्ञानोत्तरेति शाब्दज्ञानोत्तरेत्यर्थः, तथाच शाब्दधीपूर्वं तत्प्रयोजकत्वग्रहो नास्तीति भावः। ननु प्रमाणशाब्दभ्रमादिजन्यशब्दव्यावृत्तं किञ्चिद्वैलक्षण्यमस्ति तेनैव भ्रमाद्यजन्यत्वमनुमेयमित्यत आह, 'भ्रमादीति, 'यादृशः' वैलक्षण्यस्य, 'तस्यैवेत्येवकाराद्यथार्थतात्पर्य्यव्यवच्छेदः, 'प्रत्यायकत्वं' शाब्दधीजनकत्वं, तथाच शब्दस्य नानुवादकत्वमिति भावः। इदमापाततः तादृशवैलक्षण्यस्य शाब्दधीजनकत्वे नानार्थस्थले तात्पर्य्याविषयेऽपि योग्यार्थे प्रामाण्यापत्तेः। वस्तुतस्तु तादृशवैलक्षण्ये मानाभावः, इत्येव तत्त्वं।[१] विशेषतो यथार्थतात्पर्य्यनिश्चयस्य वेदस्थले व्यभिचारमप्याह, 'वेदेऽपीति, 'वाक्यार्थं' तत्पदार्थे तत्पदार्थवत्त्वं, 'अविज्ञाय' विशेषतोऽनिश्चित्य, 'तद्यथार्थेति प्रकृतवाक्यार्थयथार्थेत्यर्थः, 'ज्ञातुं' विशेषतो निश्चेतुं, 'विषयनिरूप्यत्वादिति तत्पदार्थे तत्पदार्थवत्त्वनिश्चयाधीनत्वादित्यर्थः, 'प्रतीतेरिति तत्पदार्थवत्त्वरूपेण तत्पदार्थ-

(१) इत्येव तत्त्वमित्यनन्तरं वेदे कृतकारणत्वाल्लोकेऽपि कारणत्वमित्यन्ते-त्यधिकः पाठः क० पुस्तके वर्त्तते।

मशाब्दवाक्यार्थप्रतीतेः प्रथमं त्वयापि स्वीकारात् । अन्यथा वक्तृज्ञानानुमानं[१] न स्यात् । न च लोकवन्मानान्तरात्तदवगमः, वेदार्थस्य तदविषयत्वात् वेदस्य प्रथमं मूकत्वात्, न च न्यायसिद्धे वेदार्थे मानान्तरात्तात्पर्य्यग्रहः, वेदस्यानुवादकतापत्तेः शब्दस्याप्रमाण-

---

प्रकारिकायाः प्रतीतेरित्यर्थः । नन्विदमेवासिद्धमित्यत आह, 'लोक' इति, 'तात्पर्य्येति यथार्थतात्पर्य्येत्यर्थः, 'वाक्यार्थप्रतीतेः' तत्पदार्थे तत्पदार्थवत्त्वप्रतीतेः, 'त्वयापि स्वीकारादिति, तथाच तादृश-प्रतीतिप्रतीतेर्विषयनिरूप्यत्वाभावे भवतां तदभ्युपगमो व्यर्थः स्यादिति भावः । तादृशप्रतीतिप्रतीतेर्विषयनिरूप्यत्वे युक्त्यन्तरमाह, 'अन्यथेति तादृशप्रतीतिप्रतीतेर्विषयनिरूप्यत्वाभावे इत्यर्थः, 'वक्तृ-ज्ञानानुमानमिति, अपिः शेषः, 'न स्यादिति सार्थकं न स्यादित्यर्थः, तत्पदार्थे तत्पदार्थवत्त्वप्रतीत्युपपादनायैव तदभ्युपगमादिति भावः । 'मानान्तरात्' अनुमानादितः, 'तदवगम इति विशिष्य तत्तत्पदार्थे तत्पदार्थवत्त्वावगम इत्यर्थः, 'तदविषयत्वादिति वेद-जन्यशाब्दधीपूर्वं प्रमाणान्तराविषयत्वादित्यर्थः, 'मूकत्वादिति शा-ब्दबोधाजनकत्वादित्यर्थः, यथार्थतात्पर्य्यज्ञानरूपकारणाभावादिति भावः । ननु वेदार्थस्य वेदजन्यशाब्दधीपूर्व्वं प्रमाणान्तराविषयत्वमेवासिद्धमित्यरुचेराह, 'न चेति न वेत्यर्थः, 'तात्पर्य्यग्रहः' लोकोक्त-क्रमेण वेदजन्यशाब्दधीपूर्व्वं निरुक्तयथार्थतात्पर्य्यग्रहः, 'अप्रमाणत्वा-

---

(१) अनुमानापेक्षेति क०, ख० ।

त्वापत्तेर्व्वा। अज्ञाते वाक्यार्थे तर्क-संशययोरप्यभावात्। अयं पदार्थोऽपरपदार्थसंसृष्टो न वेति संशये तर्के वा एककोटौ संसर्ग उपस्थित इति चेत्, न, अनिश्चिते

---

पत्तेरिति स्वार्थानुभवाजनकत्वापत्तेरित्यर्थः। लोक-वेदयोरुभयत्रैव प्रमाणान्तराद्वाक्यार्थबोधावश्यकत्वे शब्दस्य स्वार्थानुभवजनकत्वाभ्युपगमे प्रयोजनाभावात् प्रवृत्त्यादेस्तत एवोपपत्तेरिति भावः। ननु तर्क-संशयान्यतरोपस्थिते वेदार्थे तात्पर्य्यनिरूपणमस्तु तथाच वेदस्य नानुवादकता तर्क-संशयेतरज्ञानागृहीतयाद्विज्ञानमात्रजनकत्वस्यैवानुवादकतापदार्थत्वाभ्युपगमात्। न च तथापि यथार्थतात्पर्य्यग्रहमादायानुवादकत्वं दुर्वारमिति वाच्यम्। तात्पर्य्यग्रहस्यापि यत्किञ्चिदंशे तर्क-संशयाकारत्वाभ्युपगमादित्यत आह, 'अज्ञात इति अनिश्चिते वेदार्थे इत्यर्थः, अयं पुरुषो यद्येतत्पदार्थवदेतत्पदार्थज्ञानवान्न स्यादेतद्वेदप्रयोक्ता न स्यादिति तर्कस्य अयमेतत्पदार्थवदेतत्पदार्थज्ञानवान्न वेति संशयस्य च वेदार्थनिश्चयाधीनत्वादिति भावः। ननु तथापि यत्र संशयादौ न वाक्यार्थोपस्थितिः कारणं तत्संशयाद्युपस्थितोऽस्तु वेदार्थ इत्यभिप्रायवानाशङ्कते, 'अयमिति, 'तर्के वेति अयं पदार्थो यद्येतत्पदार्थसंसृष्टो न स्यादेतत्पदसमभिव्याहृतवैदिकपदार्थो न स्यादिति तर्क इत्यर्थः, आपादकस्यापि तर्के उपनीतभाने बाधकाभावादिति भावः। 'अनिश्चिते इति तत्पदार्थवत्त्वेन तत्पदार्थेऽनिश्चिते इत्यर्थः, 'तात्पर्य्यानिश्चयात्' तात्पर्य्यनिश्चयासम्भवात्, विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छेदकप्रकारक-

तात्पर्य्यानिश्चयात् तयोरगृहीतासंसर्गविषयत्वेनासदर्थविषयकत्वेन वा वाक्यार्थाविषयत्वाच्च। अन्यथा लोकेऽपि ताभ्यामेवोपस्थितिरिति किं वक्तृज्ञानानु-

---

निश्चयस्य हेतुत्वादिति भावः। यद्यपि तर्को निश्चयविशेष एव,(१) तथापि तत्पदार्थे तत्पदार्थवत्त्वनिश्चयो न स इति हृदयं। ननु विशेष्ये विशेषणमितिन्यायेन तात्पर्य्यग्रहः स्यादित्यत आह, 'तयोरिति तर्क-संशययोरित्यर्थः, 'अगृहीतासंसर्गविषयत्वेनेति अगृहीतासंसर्गविषयकज्ञानद्वयरूपत्वेनेत्यर्थः, इदञ्च तन्मते, 'असदर्थविषयकेति असद्वैशिष्ट्यविषयकत्वेन वेत्यर्थः, इदञ्चासद्वैशिष्ट्यविषयकज्ञानं भ्रम-इति टीकाकारमते, 'वाक्यार्थेति प्रकृतसंसर्गेण तत्पदार्थे तत्पदार्थाविषयकत्वादित्यर्थः। न च यत्कोटिधर्मिणि वर्त्तते तदंशे संशयस्य विशिष्टज्ञानत्वं प्रकृतसंसर्गविषयकत्वञ्च वर्त्तत एवेति वाच्यम्। ज्ञानप्रत्यासत्तिमनङ्गीकुर्वतस्तस्य मते धर्मिणस्तत्कोटेश्च तदानीमसन्निकृष्टतया तत्कोटेरपि विशिष्टज्ञानत्वाभावादिति भावः। मीमांसकमते कोटिद्वयोपस्थितिर्धर्म्मिज्ञानमसंसर्गाग्रहकालीनमित्येव संशयः तत्प्रकारकं ज्ञानमेव च तन्निश्चयः तथाच विद्यमान-कोटिप्रकारकं ज्ञानमपि न जायते संशयजनकदोषेण प्रतिबन्धादित्यभिमानः(२)। 'उपस्थितिः' प्रकृतसंसर्गेण तत्पदार्थे तत्पदार्थवत्त्वस्योपस्थितिः, 'किमिति, तथाच वेदवल्लोकस्यापि नानुवाद-

---

(१) मानसप्रत्यक्षविशेष एवेत्यर्थः, तर्कत्वस्य मानसत्वव्याप्यजातित्वात्।

(२) मीमांसकेत्यादिः इत्यभिमान इत्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

**मानेन। वस्तुतस्तु यदि यथार्थतात्पर्य्यकत्वं ज्ञातं शाब्दप्रमोत्पादकं तदा लोक-वेदयोस्तादृशपदस्मारितत्वेन पदार्थसंसर्गानुमितिसम्भवात् न शब्दः प्रमाणं स्यात्।**

---

कतेति भावः। ननु विशेषतो यथार्थतात्पर्य्यनिश्चयस्य लौकिकवाक्यजन्यशाब्दबुद्धिं प्रत्येव हेतुत्वादेदृशस्थले तद्व्यभिचारो न दोषाय वेदे चित्रवत्कपिञ्जलपदार्थपरमिदमित्यादिक्रमेण सामान्यतः कपिञ्जलपदार्थत्वादिप्रकारेण तन्निश्चयस्यैव हेतुत्वात् तस्य च विशिष्य तत्पदार्थे तत्पदार्थवत्त्वनिश्चयं विनापि सामान्यतस्तत्पदार्थे तत्पदार्थवत्त्वनिश्चयादेव सम्भवात्। न च सामान्यतस्तत्पदार्थे तत्पदार्थवत्त्वनिश्चय एव प्रथमं कथं स्यादिति वाच्यम्। अनुमानादितोऽपि तत्सम्भवात् अनुमानादिना प्रथमं सामान्यतस्तन्निश्चयाभ्युपगमेऽप्यनुवादकत्वाप्रसक्तेरित्यस्वरसादाह, 'वस्तुतस्त्विति, 'लोक-वेदयोरिति, शब्दात् पदार्थोपस्थित्यनन्तरमिति शेषः, 'तादृशपदेति, कर्मत्वादिकं घटादिमत् स्वविशेष्यक-घटादिप्रकारकयथार्थप्रतीतीच्छयोच्चरितपदस्मारितत्वात् घटादिपदार्थवत्, स्वप्रतीतीच्छयोच्चरितपदस्मारितत्वाद्वा घटनिष्ठकरणत्ववदिति क्रमेणेति शेषः, 'पदार्थसंसर्गेति शाब्दबोधान्यूनानतिरिक्तविषयकपदार्थसंसर्गानुमितिसम्भवादित्यर्थः। भवन्मये सिद्धेरनुमितिप्रतिबन्धकत्वाभावात्तात्पर्य्यघटकतया पूर्वं पदार्थसंसर्गसिद्धावपि नानुमित्यनुपपत्तिरिति भावः। 'न शब्दः प्रमाणं स्यादिति अनुमित्यतिरिक्तानुभवकरणं न स्यादित्यर्थः, तथाच जितं वैशेषिकैरिति भावः। ननु व्याप्तिस्मृत्यादेरनावश्यकतया

अपिच पुंवाक्यस्य दोष-विशिष्टज्ञानान्यतरजन्यत्वेऽनु-मिते परिशेषाद्दोषाजन्यत्वनिश्चयदशायां वेदतुल्या सामग्री पुंवाक्येऽपि वृत्तेति तत एवार्थनिश्चयात् वेद-वत्तस्यापि प्रामाण्यं, अनुमितानुमानस्य व्याप्तिस्मृ-

---

सर्वत्रानुमानासम्भवाच्छब्दस्य प्रमाणान्तरत्वमित्यस्वरसात् यन्मते यथार्थतात्पर्य्यनिश्चयस्य न हेतुत्वमपि तु प्राथमिकत्वादावश्यकत्वाच्च दोषाजन्यत्वे सति दोष-विशिष्टज्ञानान्यतरजन्यत्वनिश्चय एव हेतुस्त-न्मतेन समाधत्ते, 'अपि चेति, 'पुंवाक्यस्य' लौकिकवाक्यस्य, 'दोषः' भ्रमादिः, 'परिशेषात्' भ्रमाभाववदुक्तत्वे सति प्रमादाद्यभाववदुक्त-त्वादिना, 'वेदतुल्या सामग्रीति तात्पर्य्यग्रहापेक्षया प्राथमिकत्वात् तात्पर्य्यग्रहार्थमावश्यकत्वाच्च वेदसाधारणशाब्दानुभवसामान्यं प्रति हेतुत्वेन क्लृप्तदोषाजन्यत्वे सति दोष-विशिष्टज्ञानान्यतरजन्यत्वनिश्चय-रूपा सामग्रीत्यर्थः, विसंवादिशुकवाक्यवारणाय विशेष्यदलं, 'पुंवाक्ये' लौकिकवाक्ये, 'तत एव' तादृशान्यतरजन्यत्वनिश्चयादेव, यथार्थता-त्पर्य्यग्रहपूर्व्वमिति शेषः,[१] 'अर्थनिश्चयात्' लौकिकवाक्यार्थनिश्चयात्। ननु तादृशान्यतरजन्यत्वनिश्चयस्य प्राथमिकत्वे आवश्यकत्वेऽपि गौर-वान्न तस्य शाब्दधीहेतुत्वं किन्तु यथार्थतात्पर्य्यनिश्चय एव हेतुरिति यथार्थतात्पर्यनिश्चयपूर्वं न तस्माच्छाब्दबोधसम्भव इत्यत आह, 'अनु-मितानुमानस्येति परम्परया दोषाजन्यत्वानुमानाधीनस्य यथार्थतात्प-र्य्यनिश्चयानुमानस्येत्यर्थः, 'व्याप्तिस्मृत्यादीति व्याप्तिस्मृत्यादेरनावश्यक-

---

(१) यथार्थतात्पर्य्यनिश्चयात् पूर्व्वमिति शेष इति ग०।

त्यादिविलम्बितत्वात्। एतेनाबाधितार्थपरत्वं लोके

त्वात् सर्व्वत्र शाब्दबोधपूर्वमसम्भवित्वादित्यर्थः, तथाच यथार्थतात्पर्य्य-निश्चयस्य लघुत्वेऽपि व्यभिचारान्न हेतुत्वमिति भावः। इदमप्यापाततः व्यभिचारास्फूर्त्तिदशायां लाघवात् यथार्थतात्पर्यनिश्चयस्य हेतुत्वसिद्धौ सर्वत्र व्याप्तिस्मृत्यादेरप्यावश्यकत्वकल्पनाद्यत्र तूभयवादिसिद्धो व्याप्तिस्मृत्याद्यभावस्तत्र शाब्दबोधाभावस्यैवाभ्युपगमात् अनुभवस्य विवादग्रस्तत्वादिति। वस्तुतस्तु तत्पदार्थवत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वरूपयथार्थतात्पर्यनिश्चयस्य लाघवाच्छाब्दबुद्धिहेतुत्वे लोकवद्वेदस्याप्यनुवादकत्वापत्तिः तत्रापि तात्पर्यघटकतया तत्पदार्थे तत्पदार्थवत्त्वस्य शाब्दबोधात् प्रागेव सिद्धेः। अथ वेदप्रामाण्यान्यथानुपपत्त्या वेदस्थले त्रित्ववत्कपिञ्जलपदार्थपरमिदमित्यादिक्रमेण सामान्यतस्तन्निश्चयो हेतुः तथाच तात्पर्य्यघटकतया तत्पदार्थवत्तत्पदार्थज्ञानस्य वेदजन्यज्ञानसमानाकारकत्वाभावाद्वेदस्य नानुवादकत्वं लोके च घटवत्कर्म्मत्वपरमिदमित्यादिक्रमेण विशेषतस्तन्निश्चय एव हेतुः अन्यथा घटवदम्पदार्थपरमिति सामान्यतोनिश्चयसत्त्वेऽपि घटवत्कर्मत्वप्रतीतिपरन्न वेति विशेषतः संशयादिसम्भवात्तादृशसामान्यतोनिश्चयसत्त्वे तादृशविशेषसंशयादिसत्त्वेऽपि शाब्दबोधप्रसङ्ग इत्यनायत्या लौकिकः शब्दोऽनुवादकइति चेत्। न। कार्य्य-कारणभावद्वयापत्तेः। किञ्च वेदस्थलेऽपि त्रित्ववत्कपिञ्जलपदार्थपरमिदमित्यादिक्रमेण सामान्यतो यथार्थतात्पर्यनिश्चयसत्त्वे विशेषतो रक्तच्छागत्वादिरूपेण रक्तच्छागपरन्न वा रक्तच्छागपरनेति संशय-व्यतिरेकनिश्चययोः सत्त्वेऽपि

वेदे च प्रमापकं लोके वाक्यार्थो बाधितोऽपि दृष्ट इति श्रोतुः प्रमाणावतारं विना न बाधाभावनिश्चयः स-

---

शाब्दबोधप्रसङ्गाद्विशेषतो निरुक्तयथार्थतात्पर्य्यनिश्चय एव शाब्दधी-हेतुर्वाच्यः भिन्नप्रकारकतया सामान्यतो यथार्थतात्पर्य्यनिश्चयस्य विशेषतस्तादृशसंशयादिविरोधित्वे मानाभावादन्यथा लोकस्थलेऽपि सामान्यतो यथार्थतात्पर्य्यनिश्चयस्यैव हेतुत्वस्य सुवचत्वादतो वेद-प्रामाण्यान्यथानुपपत्त्या लोक-वेदसाधारणकार्य्य-कारणभावैक्यलाघ-वात्[१] तत्प्रकारक-तद्विशेष्यकप्रतीतीच्छयोच्चरितत्वरूपतत्तात्पर्य्यस्य शरीरगुरुत्वेऽपि तन्निश्चय एव हेतुरिति लौकिकशब्दोऽपि नानु-वादकइत्येव नैयायिकसिद्धान्तनिगर्वः । 'एतेनेति 'निरस्तमित्यग्रे-तनेनान्वयः, 'अबाधितार्थेति तत्पदार्थवत्तत्पदार्थप्रतीतिजनकत्व-मित्यर्थः । नन्वेवं भवन्मतेऽपि लोक-वेदयोः शाब्दबोधसामग्र्यभेद-इत्यत आह, 'लोक इति घटमानयेत्यादिलौकिकवाक्य इत्यर्थः, 'वाक्यार्थः' प्रकृतवाक्यघटकीभूतामादिपदार्थः, 'बाधितोऽपि' वक्त्र-भिप्रायविषयत्वाभाववत्त्वानपि कर्म्मत्वाद्यतिरिक्तोऽपीति यावत्, एतदम्-पदेन लक्षणादिना कदाचित् करणत्वादिरूपार्थस्यापि बोधना-देतदम्पदजन्यशाब्दधीविषयत्वरूपस्यैतदम्पदार्थत्वस्य कारणत्वादावपि सत्त्वादिति भावः । 'प्रमाणावतारं विना' विशिष्याबाधितार्थकत्वं प्रमाणावतारं विना घटवत्कर्म्मत्वप्रतीतिजनकमिदमिति विशेषतो-ऽबाधितार्थकत्वनिश्चयं विनेति यावत्, घटवदेतदम्पदार्थप्रतीति-

---

(१) लोक-वेदसाधारणकारणभावैक्ये लाघवाच्चेति क० ।

च क्वचिच्छ्रोतुरिन्द्रियेण क्वचिदन्नुरागतत्वानुमानेन वेदे

जनकमिति सामान्यतो निश्चयादिति शेषः, 'न बाधाभावनिश्चयः' न शब्दाद्बाधाभावनिश्चयः न कर्म्मत्वादौ घटादिमत्त्वशाब्दबोध-इति यावत्, लोके विशेषतोऽबाधितार्थकत्वनिश्चय एव शाब्दधी-हेतुर्न तु सामान्यतस्तन्निश्चय इति समुदायार्थः, घटवदेतदम्-पदार्थप्रतीतिजनकमिदमिति सामान्यतो निश्चयस्य तत्र हेतुत्वे सामान्यतस्तादृशनिश्चयसत्त्वे कर्म्मत्वं घटवन्न वेति विशेषतः संशयेऽपि शाब्दबोधापत्तेः कर्म्मत्वातिरिक्तस्याप्येतदम्पदार्थतया सामान्यतस्त-न्निश्चयस्य विशेषतस्तादृशसंशयं प्रत्यविरोधित्वात् विशेषतो निश्चयस्य हेतुत्वे च तत्सत्त्वे तादृशसंशयस्यैवासम्भवान्नातिप्रसङ्ग इति भावः। ननु शाब्दबोधात् पूर्वं विशेषतो घटवत्कर्म्मत्वमित्यादिनिश्चयः कथं स्यादित्यत आह, 'स चेति विशेषतः कर्म्मत्वादौ घटादिमत्त्वनिश्चय-श्चेत्यर्थः, 'इन्द्रियेणेति, वाक्यज्ञाने च सति वाक्यपचकानुमानेनेति शेषः,(१) 'आप्तत्वानुमानेनेति पूर्व्वोक्तक्रमेण कर्म्मत्वादिविषयक-घटादि-विशिष्टज्ञानानुमानेनेत्यर्थः, 'वेदे त्विति, अनुवादकत्वापत्त्येति शेषः, 'तन्निश्चय इति चित्रवदेतत्कपिञ्जलपदार्थप्रतीतिजनकमित्यादि-क्रमेण सामान्यतोऽबाधितार्थकत्वनिश्चय इत्यर्थः, शाब्दधीहेतुरिति शेषः। ननु तत्रापि चित्रवदेतत्कपिञ्जलपदार्थप्रतीतिजनकमिद-मिति सामान्यतो निश्चयस्य हेतुत्वे तत्सत्त्वे रक्तच्छागस्त्रित्ववान्न

(१) इन्द्रियेणेतीत्यादिः शेष इत्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

तु न्यायात्तन्निश्चयः तदर्थस्य प्रमाणान्तराविषयत्वात् न तत्र शङ्केति सामग्रीभेद इति निरस्तं। प्रथमं भ्रमाद्यभावस्याप्तत्वस्य वा निश्चेतुमशक्यत्वात् वेदस्या-

---

वेति संशयेऽपि शाब्दबोधापत्तिरित्यत आह, 'तदर्थस्येति वेदस्थ-कपिञ्जलादिपदार्थस्येत्यर्थः, 'प्रमाणान्तराविषयत्वात्' रक्तच्छागाद्य-तिरिक्ते प्रमाणाविषयत्वात् रक्तच्छागाद्यतिरिक्तेऽदृष्टत्वादिति यावत्, ज्ञात्वपि वेदस्थकपिञ्जलादिपदेन रक्तच्छागाद्यतिरिक्तार्थाप्रतिपाद-नाद्वेदस्य प्रतिनियतविषयत्वादित्यभिमानः। 'न तत्र शङ्केति न तत्र सामान्यतस्तादृशनिश्चयसत्त्वेऽपि विशेषतस्तादृशशङ्केत्यर्थः, 'सामग्रीभेदः' लोक-वेदसाधारणशाब्दबोधसामग्रीभेदः[१]। 'प्रथमं' शाब्दबोधात् पूर्व्वं, 'भ्रमाद्यभावस्य' जन्यतासम्बन्धेन भ्रमाद्यभावस्य भ्रमाद्यजन्यत्वस्येति यावत्, 'आप्तत्वस्येति कर्म्मत्वादिविषयकघटादि-विशिष्टज्ञानस्येत्यर्थः, 'निश्चेतुं' अनुमातुं, पुंवाक्यत्वस्य व्यभिचारि-तया संवादिप्रवृत्त्यादेश्च शाब्दज्ञानोत्तरकालीनतया भ्रमाद्यजन्य-त्वानुमाने लिङ्गज्ञानाभावात् भ्रमाद्यजन्यत्वानुमानाभावे च तादृश-विशिष्टज्ञानवत्त्वरूपस्याप्तत्वस्यानुमानासम्भवात् भ्रमाद्यजन्यत्वघटित-हेतुनैव पूर्व्वोक्तक्रमेण वक्तुस्तादृशविशिष्टज्ञानस्यानुमेयत्वादिति भावः। 'वेदस्येति, समानप्रकारकज्ञानस्यैव प्रतिबन्धकतया छित्ववदेतत्-कपिञ्जलपदार्थप्रतीतिजनकमिदमिति सामान्यनिश्चयसत्वेऽपि रक्त-च्छागस्त्विवान्न वेति विशेषतः संशयसम्भवाल्लोकवत् तत्राप्यनायत्या

---

(१) लोक-वेदयोः शाब्दबोधसामग्रीभेद इति क०।

नुवादकतापत्तेश्च। तस्मात् भ्रमाद्यजन्यत्वं आप्तोक्तत्वं अबाधितार्थकत्वं यथार्थतात्पर्य्यकत्वं निरस्तव्यभिचार-शङ्कत्वं अन्यद्वा व्यभिचारिव्यावृत्तं यत्प्रमोत्पादकं तत् स्वरूपसत् न ज्ञातं। अन्यथा तादृशस्य वाक्यार्था-

---

विशेषतोऽबाधितार्थकत्वनिश्चयस्यैव हेतुत्वेन वक्तव्यत्वादिति भावः। उपसंहरति, 'तस्मादिति, 'भ्रमाद्यजन्यत्वमिति। यद्यप्यपि चेत्यादिना भ्रमाद्यजन्यत्वज्ञानस्य हेतुत्वमभ्युपगतं तथाप्येकदेशिमतेन तदभि-धानान्न दोषः। 'आप्तोक्तत्वमिति तत्पदार्थविशेष्यक-तत्पदार्थप्रका-रकयथार्थप्रतीतिमदुक्तत्वरूपं तत्पदार्थवत्तत्पदार्थप्रतीतिमदुक्तत्वरूपं वा आप्तोक्तत्वमित्यर्थः, 'अबाधितेति तत्पदार्थवत्तत्पदार्थप्रतीति-जनकत्वमित्यर्थः, 'यथार्थेति तद्विशेष्यक-तत्प्रकारकयथार्थप्रतीती-च्छयोच्चरितत्वरूपं तत्पदार्थवत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वरूपं वा यथार्थतात्पर्य्यकत्वमित्यर्थः, 'निरस्तेति निरस्ता व्यभिचारशङ्का प्रमित्यजनकत्वशङ्का यतस्तत्त्वमिति व्युत्पत्त्या प्रमाजनकत्वमित्यर्थः, तद्वद्विशेष्यक-तत्प्रकारकयथार्थप्रतीतिजनकत्वमिति यावत्, 'अन्यद्वा' दोषाभावादिकं वा, 'यत्प्रमोत्पादकमिति यत्प्रमोत्पादकतया पराभिमतमित्यर्थः, 'स्वरूपसदिति गगनादिवदव्यवहितपूर्ववर्त्ति-मात्रमित्यर्थः, शाब्दप्रमोत्पादकमिति शेषः। 'अन्यथेति आप्तोक्त-त्वादिज्ञानस्य शाब्दप्रमोत्पादकत्वे इत्यर्थः, 'तादृशस्येति आप्तोक्ता-दिपदस्येत्यर्थः, स्मारितत्वसम्बन्धेनेति शेषः, 'वाक्यार्थेति तत्पदार्थ

**व्यभिचारितया तादृशपदस्मारितत्वात् लिङ्गादेव संसर्गसिद्धिः स्यादिति जितं वैशेषिकैः । अथ व्यवहारानुमितव्यवहर्त्तृकार्य्यान्वितज्ञाने[१] उपस्थितत्वेन पदानां हेतुत्वग्रहादन्विताभिधायकत्वं[२] गृहीतं न तु लिङ्गज्ञानस्य तदानीं शब्दस्य लिङ्गत्वेनानुपस्थितेरिति**

---

तत्पदार्थवत्त्वव्याप्यतयेत्यर्थः, 'तादृशपदेति आप्तोक्तादिपदेत्यर्थः, कर्मत्वादिकं घटादिमत् स्वविशेष्यक-घटादिप्रकारकयथार्थज्ञानवदुक्तपदस्मारितत्वात् घटादिमत्त्वज्ञानवदुक्तपदस्मारितत्वाद्वा घटनिष्ठकरणत्वादिवदित्यादिक्रमेणेति भावः । 'संसर्गसिद्धिरिति शाब्दबोधान्यूनानतिरिक्तविषयकपदार्थद्वयसंसर्गज्ञानसम्भवः स्यादित्यर्थः, भवन्मते सिद्धेरनुमितिप्रतिबन्धकत्वाभावादाप्तोक्तत्वादिघटकतया तत्पदार्थवत्त्वस्य पूर्वं निश्चयेऽपि नानुमित्यनुपपत्तिरिति भावः । 'जितमिति, शब्दस्यानुमानान्तर्गतत्वनिर्वाहादिति भावः । वैशेषिकजयमसहमान आशङ्कते, 'अथेति, 'व्यवहारेति घटमानयेत्यादिवाक्याधीनप्रयोज्यवृद्धप्रवृत्त्यनुमितेत्यर्थः, 'व्यवहर्त्त्विति प्रयोज्यवृद्धस्य घटानयनविषयकं कार्य्यमित्याकारककार्य्यविशेष्यकज्ञानेत्यर्थः, 'पदानां' प्रयोजकवृद्धोक्तघटमानयेत्यादिपदानां, 'हेतुत्वेति बालकस्य हेतुत्वग्रहादित्यर्थः, 'अन्वितेति शब्दस्य स्वातन्त्र्येण पदार्थद्वयसंसर्गज्ञानजनकत्वमित्यर्थः, 'लिङ्गज्ञानस्य' लिङ्गतया शब्दज्ञानस्य, लिङ्गत्वं

---

(१) व्यवहारानुमितव्यवहार्य्यकार्य्यान्वितज्ञान इति क० ।

(२) अन्विताभिधायित्वमिति क० ।

चेत्। न। लिङ्गाभावेनैव[१] शब्दादन्वितज्ञानोपपत्ते-र्नाकाङ्क्षादिमच्छब्दत्वेन कारणता गौरवात्। शब्दस्य लिङ्गत्वं सम्भवदपि बालेन न ज्ञातमिति चेत्, सोऽयं बालस्य दोषो न वस्तुन इत्यादि वक्ष्यते[२]। किञ्चैवं[३] लोकवद्वेदेऽपि अनुवादकता[४] स्यात्। एतेन वाक्यार्थ-तात्पर्य्यग्राहकानुमानात् तात्पर्य्यावच्छेदकतया तदुप-

---

व्याप्तिविशिष्टपक्षधर्मत्वं। 'नाकाङ्क्षेति, बालकेन कारणतामात्रस्य ग्रहान्नोपजीव्यविरोध इति भावः[५]। 'लिङ्गत्वमिति, स्मारितत्वसम्ब-न्धेनेति शेषः। 'सोऽयमिति बालकेन तस्य लिङ्गत्वमगृहीतमेता-वतैव न तस्य लिङ्गतया जनकताहानिरित्यर्थः। 'किञ्चैवमिति, 'एवं' आप्तोक्तत्वादिज्ञानस्य शाब्दधीहेतुत्वे, 'वेदेऽपीति, आप्तोक्त-त्वादिघटकतया तत्रापि तत्पदार्थे तत्पदार्थवत्त्वस्य प्रथमं सिद्धेरिति भावः। पूर्वोक्तस्यैवायमुपसंहार इति न पौनरुक्त्यं, आप्तोक्तत्वाद्यभि-प्रायेणेदमिति न पौनरुक्त्यमित्यपि कश्चित्, एवञ्च वैशेषिकदूषणं प्राभाकरमत एव स्यान्नास्माकमित्याशयेन उद्धृतमपि दूषणं पुन-रुद्धरन्नाह 'एतेनेति,[६] 'वाक्यार्थतात्पर्य्येति प्रकृतवाक्यार्थयथार्थ-तात्पर्य्येत्यर्थः, 'अवच्छेदकतयेति घटकतयेत्यर्थः, 'तदुपजीविन इति

---

(१) लिङ्गाभावादेवेति क०। (२) न तु वस्तुन इति वक्ष्यत इति क०।
(३) किञ्चैवमपीति ख०। (४) अनुवादकतैवेति ख०।
(५) कारणमात्रस्य ग्रहादिति भाव इति ख०, ग०।
(६) एवञ्चेत्यादिः एतेनेतीत्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

जीविनोऽनुमानात् स्वातन्त्र्येण वाक्यार्थसिद्धेर्न शब्दः प्रमाणमिति[१] वैशेषिकमतमपास्तं । यथार्थतात्पर्य्य-

---

यथार्थतात्पर्य्यानुमानोपजीविन इत्यर्थः, 'अनुमानादिति कर्मत्वं घटवत् स्वविशेष्यक-घटप्रकारकयथार्थप्रतीतीच्छयोच्चरितपदस्मारितत्वात्[२] घटवत्, स्वप्रतीतीच्छयोच्चरितपदस्मारितत्वाद्वा घटवृत्तिकरणत्वादिवदित्यादिक्रमेणानुमानादित्यर्थः, शाब्दसामग्र्यपेक्षया अनुमितिसामग्र्या बलवत्त्वात् सिद्धेस्तानुमितिप्रतिबन्धकत्वे मानाभावादिति भावः । 'स्वातन्त्र्येण' तात्पर्य्याघटकतया, 'वाक्यार्थसिद्धेरिति सर्वत्र शाब्दबोधात् पूर्वं तत्तत्पदार्थे तत्तत्पदार्थवत्त्वसिद्धेरित्यर्थः, 'शब्द इति लोक-वेदसाधारणं शब्दमात्रमित्यर्थः, 'न प्रमाणमिति न अननुवादक इत्यर्थः, 'वैशेषिकमतमिति वैशेषिकैकदेशिमतमित्यर्थः, मीमांसकनये लौकिकशब्दस्यैवानुवादकत्वमेतन्नये च शब्दमात्रस्य तथात्वमिति मतभेदः ।

केचित्तु 'न शब्दः प्रमाणमिति न लौकिकः शब्दोऽननुवादक इत्यर्थः, मीमांसकनये वक्तृज्ञानावच्छेदकतया तदुपजीविसंसर्गानुमानाद्वा सर्वत्र प्रथमं वाक्यार्थसिद्धेर्लौकिकशब्दस्यानुवादकत्वं, एतन्नये च यथार्थतात्पर्य्यावच्छेदकतया तदुपजीविपदार्थपञ्चकसंसर्गानु-

---

(१) न शब्दः पृथक् प्रमाणान्तरमिति क० ।

(२) स्वविशेष्यक-घटप्रकारकयथार्थप्रतीतीच्छयोच्चरितत्वादिति पाठे उच्चरितत्वपदस्य उच्चरितपदस्मारितत्वमर्थः, अन्यथा कर्मत्वरूपार्थे उच्चरितत्वाभावेन स्वरूपासिद्धिप्रसङ्ग इति ।

ग्रहस्य वाक्यार्थबोधाहेतुत्वात्। यत्तु ज्ञायमानकरणे इति,[१] तन्न, यथार्थतात्पर्य्यकत्वादेः प्रथमं ज्ञातुमशक्यत्वेनानुमानस्य बाधितत्वात् व्याप्त्यसिद्धेश्च। न हि व्याप्तिः शब्दशक्तिश्च[२] कारणं, किन्तु तद्धीः,[३] अतीतेऽनुमितिदर्शनात्। अपभ्रंशादौ शक्तिभ्रमाद-

---

मानाद्वा सर्वत्र प्रथमं वाक्यार्थसिद्धेर्लौकिकशब्दस्यानुवादकत्वमिति मतभेद इत्याहुः।

'वाक्यार्थबोधेति तत्पदार्थे तत्पदार्थवत्त्वज्ञानाभावेन प्रथमं सर्वत्रासम्भवितया शाब्दबोधाहेतुत्वादित्यर्थः। 'बाधितत्वादिति, ज्ञायमानत्वघटितधर्मावच्छिन्नशाब्दबोधकरणताश्रयत्वरूपस्य ज्ञातोपयोगित्वस्य तत्राभावादिति भावः। हेत्वन्तरमाह, 'व्याप्त्यसिद्धेरिति यत्तच्छामुक्तसामान्यव्याप्तेरसिद्धेश्चेत्यर्थः, दृष्टान्ताभावादिति भावः। ननु व्याप्ति-शक्त्योरेव व्याप्तिः सिद्धेत्यत आह, 'न हीति, 'कारणं' अनुमिति-शाब्दबोधकारणं, तथाच साध्यज्ञानोपयोगीत्यत्र उपयोगित्वस्य कारणतारूपतया साधनञ्च तत्र नास्तीति भावः। व्याप्तेरनुमितिहेतुत्वाभावे युक्तिमाह, 'अतीत इति अतीतेन लिङ्गेनेत्यर्थः, अतीते लिङ्गे तन्निष्ठसंयोगादिरूपव्याप्तेरतीतत्वादिति भावः। शाब्दबोधाहेतुत्वे युक्तिमाह, 'अपभ्रंशादाविति, इदञ्च

---

(१) इत्यादीति क०। (२) शक्तिश्चेति क०।

(३) किन्तु तद्धीः कारणमिति क०।

न्वयबोधाच्च । न च सैवोपयुज्यत इति साध्यं, प्रथमं तदसम्भवात् । तस्मात् यत् अर्थाव्यभिचारित्वेन ज्ञातं करणं तत्र व्यभिचारिवैलक्षण्यज्ञानमुपयुज्यते अन्यथा

---

स्वमते, तन्मते शक्यसंसर्गाग्रहात् शाब्दासंसर्गाग्रहस्यैव तत्र स्वीकारादिति ध्येयं । 'सैवेति, 'एवकारः 'इतिशब्दादनन्तरं योज्यः, 'सा' प्रकृतवाक्यार्थयथार्थप्रतीतिपरता, 'उपयुज्यते' 'ज्ञाननिष्ठशाब्दबोधकारणताया विषयतया अवच्छेदिका, 'इत्येव साध्यं' इत्येवानुमेयमित्यर्थः, हेतावपि ज्ञानोपयोगित्वं कारणतावच्छेदकसाधारणं वाच्यम्, तथाच न साध्य-साधनविकलो दृष्टान्त इति भावः । 'तदसम्भवादिति यथार्थतात्पर्य्यज्ञानासम्भवादित्यर्थः, तथाच तथाभिधानेऽपि बाध एवेति भावः । अनुमाने उपाधिमप्याह, 'तस्मादिति, 'यदिति यद्व्यभिचारिवैलक्षण्यमित्यर्थः, यत्र प्रमिताविति शेषः, 'अर्थाव्यभिचारित्वेन' अर्थाव्यभिचारित्वज्ञानसहकारेण, व्याप्तिज्ञानसहकारेणेति यावत्, 'तत्र' प्रमितौ, 'व्यभिचारिवैलक्षण्यज्ञानमिति तद्व्यभिचारिवैलक्षण्यस्यैव ज्ञानमित्यर्थः, व्यभिचारिवैलक्षण्यत्वेनाभिधानं स्वरूपकथनं तस्यैव ज्ञानमुपयुज्यते इत्येव प्रकृतं, तथाच ज्ञानविषयतया व्याप्तिज्ञानजन्यतत्प्रमितिजनकतावच्छेदकत्वमुपाधिः यत्र ज्ञाननिष्ठयज्ज्ञानकरणतायाः[१] विषयतया अवच्छेदकत्वं तत्र तज्ज्ञानविषयतया व्याप्तिज्ञानजन्यतत्प्रमितिजनकतावच्छेदकत्वं यथा

---

(१) यत्र ज्ञायमानकरणताकयज्ज्ञानकरणताया इति क० ।

शब्दस्यार्थाव्यभिचारितया ज्ञातस्य ज्ञापकत्वे लिङ्गता-पत्तेर्व्वज्रलेपायमानत्वात्[१]। स्यादेतदनाप्तोक्ते बाधके-नार्थाभावदर्शनात् आकाङ्क्षादिमद्वाक्यत्वेन सदर्थकं

---

व्याप्तिरिति यत्तज्ज्ञां सामान्यतः साध्यव्यापकताग्रहः पक्षे च साधना-व्यापकताग्रहः। न च शक्तिपदयोग्यताकाङ्क्षादौ उपमितिजनक-ज्ञानविषयेऽतिदेशवाक्यार्थे च साध्याव्यापकत्वमिति वाच्यम्। व्याप्ति-तात्पर्य्यान्यतरत्वरूपपक्षधर्मावच्छिन्नसाध्यव्यापकत्वादिति भावः। ननु शब्दस्यापि व्याप्यत्वेन ज्ञायमानस्यैव शाब्दधीजनकतया पक्षेऽपि ज्ञानविषयतया व्याप्तिज्ञानजन्यशाब्दधीकारणतावच्छेदकत्वसत्त्वात् न तस्य साधनाव्यापकत्वमित्यत आह, 'अन्यथेति, अस्यैव विवरणं 'शब्दस्येति, 'अर्थाव्यभिचारितया' व्याप्यतया, 'ज्ञापकत्वे' अनुभव-जनकत्वे, 'लिङ्गतापत्तेः' अनुमानान्तर्गतत्वापत्तेः अनुमितिभिन्न-स्वाविषयकानुभवकरत्वाभावापत्तेरिति यावत्। 'अनाप्तोक्त इति जलकरणकपाकाद्यभिप्रायमात्रप्रयुक्ते जलेन सिञ्चतीत्यादौ वाक्ये इत्यर्थः, 'बाधकेनेति सेकविशेष्यक-जलकरणकत्वप्रकारकशाब्दबुद्धि-जनकसामग्रीविरहेणेत्यर्थः, सा च सामग्री तात्पर्य्यग्रहरूपा प्रकरण-विशेषरूपा वा[२] इत्यन्यदेतत्। 'अर्थाभावदर्शनादिति जलकरण-

---

(१) वज्रलेपायितत्वादिति ख०।

(२) तात्पर्य्यग्राहकरूपा प्रकरणरूपा वेति ख०-पुस्तकपाठः परन्त्वयं न समीचीनः प्रकरणस्य तात्पर्य्यग्राहकत्वेन तात्पर्य्यग्राहक-प्रकरणयो-र्भेदासम्भवात् विकल्पानुपपत्तेः।

बाधितार्थकं वेति संशयान्न तावन्मात्रादर्थनिश्चयः, न हि संशायकमेव निश्चायकं,[१] इत्यधिकमपेक्षणीय-

---

कत्ववत्सेकादिप्रतीतिजनकत्वाभावदर्शनादित्यर्थः, 'आकाङ्क्षादीति, 'आकाङ्क्षादिमद्वाक्यत्वेन' कोटिद्वयसहचरितत्वेन गृहीतोयोधर्म-स्तद्वत्त्वेनेत्यर्थः,[२] 'आकाङ्क्षादीत्यादिपदात् योग्यतायाः[३] आसत्तेश्च परिग्रहः। 'सदर्थकमिति जलकरणकत्ववत्सेकप्रतीतिजनकं तादृश-प्रतीत्यजनकं वेत्यादिसंशयस्य शाब्दबोधात्पूर्वं सर्वत्र सम्भवादित्यर्थः, 'तावन्मात्रादिति आकाङ्क्षादिमत्त्वज्ञानमात्रादित्यर्थः, 'अर्थनिश्चयः' शाब्दबोधः, 'संशायकमेवेति[४] ग्राह्यसंशयविशिष्टज्ञानमेवेत्यर्थः, इदं वाक्यं जलकरणकत्ववत्सेकप्रतिपदकं न वेत्यादिसंशयस्यैव धर्मिणि सेकादिप्रतिपादकत्वनिश्चयसत्त्वेन सेकादौ जलकरणकत्वादिसंशय-पर्य्यवसन्नतया ग्राह्यसंशयत्वादिति भावः। 'इत्यधिकमपेक्षणीय-मितीति तादृशसंशयप्रतिबन्धोत्सारणाय जलकरणकत्वादिमत्सेकादि-प्रतीतिजनकत्वरूपाबाधितार्थकत्वनिश्चयरूपमतिरिक्तं कारणान्तर-मवश्यमपेक्षणीयमित्यर्थः, तथाचानुवादकः शब्द इति भावः। अथैवं सति यत्र संशयो न वृत्तस्तत्रानुवादकत्वं न स्यादिति दूषणे सत्येव

---

(१) संशायक एव निश्चायक इति ख०।

(२) कोटिद्वयसहचरितत्वेन गृहीतधर्म्मवत्त्वेनेत्यर्थ इति ख०, ग०।

(३) सजातीयान्वयदर्शनरूपाया योग्यताया इति क०।

(४) संशायक एवेतीति ग०।

मिति चेत्। न। अर्थसंशयस्य तद्बाधसंशयस्य वा प्रमाणाप्रतिबन्धकत्वात्[१]। वह्नि-तद्बाधयोः संशयेऽपि प्रत्यक्षानुमानादिना अर्थनिश्चयात् अन्यथा प्रमाणमात्रोच्छेदः, तत्पूर्व्वमर्थ-तद्बाधसंशयात्। विनाप्यर्थं

---

संशयस्यैव प्रतिबन्धकत्वमसहमान आह, 'अर्थसंशयस्येति सेको जलकरणकत्ववान्न वेत्यादिग्राह्यसंशयस्येत्यर्थः, 'तद्बाधसंशयस्येत्यादि सेको जलकरणकत्वाभाववान्न वेत्यादिग्राह्याभावसंशयस्येत्यर्थः, प्रकारभेदाच्च संशययोर्भेदः, 'प्रमाणेति तन्निश्चयाप्रतिबन्धकत्वादित्यर्थः, 'प्रत्यक्षानुमानादिनेति आदिपदाच्छब्दोद्बुद्धसंस्कारपरिग्रहः, 'अर्थनिश्चयादिति वह्निनिश्चयादित्यर्थः, 'अन्यथा' ग्राह्य-तदभावयोः संशयस्यापि निश्चयप्रतिबन्धकत्वे, वह्नि-तद्बाधयोः संशयदशायामिति शेषः, 'प्रमाणमात्रेति प्रमाणमात्रेणैव वह्निनिश्चयानुत्पत्तिप्रसङ्ग इत्यर्थः, 'अर्थ-तद्बाधेति वह्नि-तद्बाधयोः संशयस्य प्रतिबन्धकस्य सत्त्वादित्यर्थः। ननु विपरीतज्ञान-विशिष्टबुद्ध्योः केन रूपेण प्रतिबध्यप्रतिबन्धकभाव इति चेदत्र साम्प्रदायिकाः अगृहीताप्रामाण्यकतद्धर्मधर्मितावच्छेदकतदभावनिश्चयत्वेन प्रतिबन्धकता तदंशे दोषविशेषाजन्यशाब्दान्यतल्लौकिकप्रत्यक्षनिश्चयान्याहार्य्यप्रत्यक्षेतरतद्धर्मधर्मितावच्छेदकतद्विशिष्टबुद्धित्वेन प्रतिबध्यता, सन्दिग्धाप्रामाण्यकस्य निश्चिताप्रामाण्यकस्य वा तदभावनिश्चयस्य सत्त्वेऽपि तद्विशिष्ट-

---

(१) प्रमाणापरिपन्थित्वादिति क०।

बुद्ध्युदयाद्गृहीताप्रामाण्यकेति, संशयोत्तरलौकिकप्रत्यक्षस्य संशयोत्तरोपमिति-संशयकालीनपरामर्शाव्यवहितोत्तरकालीनानुमित्योः धारावाहिकसंशयस्य च सम्पादनाय लघुतरं ज्ञानत्वमपहाय गुरोरपि निश्चयत्वस्य प्रवेशः। न चैवं संशयोत्तरं विनापि विशेषदर्शनं प्रात्यक्षिकनिश्चयापत्तिरिति वाच्यं। विशेषदर्शनं विना संशयात्मकविशेषणज्ञानादिरूपकोटिद्वयविशिष्टधीसामग्रीसत्त्वेन कोटिद्वयविशिष्टबुद्धेरेवोत्पादान्न निश्चयसम्भवः[१] विशेषदर्शने चैककोटिविशिष्टबुद्धिप्रतिबन्धादर्थवशसिद्धोनिश्चय इति[२]। न चैवं विशेषदर्शनोत्पत्तिसमय एव प्रात्यक्षिकनिश्चयापत्तिः प्रतिबन्धकाभावस्य कार्य्यसहवर्त्तितया हेतुत्वेन तदानीमप्युभयकोटिविशिष्टबुद्ध्यसम्भवादिति[३] वाच्यम्। तदानीमेव प्रात्यक्षिकनिश्चयस्याभ्युपगमात् क्षणविलम्बस्य शपथनिर्णेयत्वात्। न च तथापि पर्वतो वह्न्यभाववानित्यादिभ्रमोत्तरं वह्निव्याप्यधूमवानित्यादिविशेषदर्शने सति[४] कथं पर्वतो वह्निमानित्याद्यलौकिकप्रत्यक्षमिति वाच्यं। विशेषदर्शनोत्पत्तिदशायां[५]

---

(१) कोटिद्वयविशिष्टबुद्धेरेवोत्पादात् निश्चयासम्भवादिति क०।

(२) अनुभवसिद्धो निश्चय इतीति ख०, ग०।

(३) तथाच विशेषदर्शनोत्पत्तिप्राक्क्षणे विशेषदर्शनरूपप्रतिबन्धकाभावस्य सत्त्वेऽपि तदुत्पत्तिक्षणे तदभावस्यासत्त्वान्न कार्य्यकालवर्त्तिनो विशेषदर्शनाभावरूपकारणस्य सत्त्वं येन कोटिद्वयविशिष्टबुद्धिः सम्भवतीति भावः।

(४) वह्न्यवच्छेदकीभूतधर्म्मादिदर्शने सतीति ख०, ग०।

(५) अवच्छेदकीभूतधर्म्मदर्शनोत्पत्तिदशायामिति ख०, ग०।

वह्न्यभावभ्रमेऽप्रामाण्यज्ञानोदयात् तदानीमप्रामाण्यज्ञानाभावे तु विशेषदर्शनेन[१] वह्न्यभावभ्रमनाश एव[२] चतुर्थक्षणे वह्निप्रत्यक्षाभ्युपगमात् क्षणविलम्बस्याकिञ्चित्करत्वात्। शङ्खोन पीत इति निश्चये सत्यपि पित्तात्मकदोषवशात् शङ्खः पीत इत्यलौकिकभ्रमस्य वंशोनोरग इति निश्चयेऽपि वंशेऽलौकिकोरगत्वभ्रमस्य[३] इयन्दिक् न प्राचीति निश्चयेऽपि इयन्दिक् प्राचीत्यलौकिकभ्रमस्य[४] चानुभवसिद्धत्वात् प्रतिबध्यतावच्छेदककोटौ दोषविशेषाजन्येति, भ्रमसामान्यजनकदोषवारणाय विशेषपदं, अन्यथा भ्रममात्रस्यैवाप्रतिबध्यत्वापत्तेः। मुखं चन्द्र इत्यादिबाधितार्थकरूपकादौ बाधनिश्चयेऽप्याहार्य्ययोग्यताभ्रमादभेदान्वयबोधादेरनुभवसिद्धत्वाच्छाब्दान्येति, वह्निना सिञ्चतीत्यादौ बाधनिश्चयदशायां शाब्दबुद्ध्यभावस्य तत्पदार्थे तत्पदार्थवत्त्वरूपयोग्यताज्ञानविरहात्, आहार्य्ययोग्यताज्ञाने च बाधनिश्चयेऽपि रूपकादिवत्तत्रापि शाब्दबोधस्येष्टत्वात्। बाधनिश्चयेऽप्याहार्य्यलौकिकप्रत्यक्षोदयादाहार्य्यप्रत्यक्षेतरेति, आहार्य्यत्वञ्च स्वसमानाधिकरण-तद्विशिष्टप्रत्यक्षत्व-तद्विशिष्टानुभवत्वप्रकारकेच्छाव्यवहितोत्तरवर्त्तित्वं तद्विशिष्टानुभवोजायतान्तद्विशिष्टज्ञानं जायतामित्यादीच्छासत्त्वेऽपि बाधबुद्धिसत्त्वे अनुमिति-स्मृत्याद्यनु-

(१) अप्रामाण्यज्ञानाभावे त्वित्यनन्तरं अवच्छेदकीभूतधर्म्मदर्शनेनेत्ययं पाठः ख०, ग० पुस्तकद्वये भवितुं युक्तः।

(२) वह्न्यभावभ्रमनाशोत्तरमिति ग०।

(३) मण्डूकवसाञ्जनवशादित्यादिः।

(४) दिग्भ्रमरूपदोषवशादित्यादिः।

दृथात्मप्रत्यक्षपदं, निश्चयत्वस्य गुरुतया बाधनिश्चयोत्तरं संशयापादक-
तया च तदपहाय सामान्यतोबुद्धित्वप्रवेशः, अन्धकारे घटाभाव-
निश्चयोत्तरमालोकसमवधाने विनाप्यप्रामाण्यज्ञानं घटलौकिक-
प्रत्यक्षस्य कुङ्कुमे गन्धाभावनिश्चयोत्तरं विनाप्यप्रामाण्यज्ञानं तैल-
संयोगे गन्धलौकिकप्रत्यक्षस्य चाभ्युपगमात् लौकिकप्रत्यक्षनिश्चयं
प्रति समानेन्द्रियजन्यविपरीतलौकिकनिश्चयस्यैव प्रतिबन्धकत्वाभ्युप-
गमाच्च लौकिकप्रत्यक्षनिश्चयान्येति, आनुमानिकादितदभावनिश्च-
यस्य इन्द्रियान्तरजन्यतदभावनिश्चयस्य च तल्लौकिकसंशयविरोधि-
त्वात् प्रतियोगिकोटौ निश्चयत्वप्रवेशः। वस्तुतस्तु तत्र तल्लौकिक-
प्रत्यक्षनिर्णयस्यैव कार्यसहभावेन तल्लौकिकसंशयविरोधितया प्रति-
योगिकोटौ निर्णयो न प्रवेशनीयः, किन्तु तल्लौकिकप्रत्यक्षान्यत्वमेव
वक्तव्यं। न च तल्लौकिकप्रत्यक्षनिर्णयान्यत्वस्य तल्लौकिकप्रत्यक्षान्यत्वस्य
वा प्रवेशे चक्षुरादिना तदभावनिश्चयेऽपि चक्षुरादिना अनुभूय-
मानतदारोपानुपपत्तिरिति वाच्यं। अगृहीताप्रामाण्यकतदिन्द्रिय-
जन्यतदभावलौकिकनिश्चयत्वेन प्रतिबन्धकता दोषविशेषाजन्याना-
हार्य्यतदिन्द्रियजन्यतद्विशिष्टप्रत्यक्षत्वेन प्रतिबध्यतेति प्रतिबध्य-प्रति-
बन्धकभावान्तराभ्युगमात्। चक्षुषा मण्डुकवसाञ्जनदोषवशादुर-
गत्वाभावाभावलौकिकप्रत्यक्षात्मकभ्रमेऽपि त्वचोरगत्वाभावप्रत्यक्षस्य,
चक्षुषा दर्पणादौ मुखाद्यभावाभावलौकिकप्रत्यक्षात्मकभ्रमेऽपि त्वचा
दर्पणादौ मुखाद्यभावप्रत्यक्षस्य, अन्धकारे त्वचा घटाभावादिलौकिक-
प्रत्यक्षनिश्चयेऽपि आलोकसमवधाने विनाप्यप्रामाण्यज्ञानं घट-
लौकिकप्रत्यक्षस्य चानुभवात्तदिन्द्रियजन्येति प्रतिबध्य-प्रतिबन्धकता-

वच्छेदकयोर्विशेषणं, तच्च तत्तदिन्द्रियादिजन्यतावच्छेदकचाक्षुषत्वादिपरिचायकं। न चैवं त्वचा घटाभावलौकिकनिश्चयेऽपि चक्षुषा घटादिविशिष्टलौकिकप्रत्यक्षापत्तिरिति वाच्यम्। इष्टत्वात्, एवमानुमानिकादितदभावनिश्चयेऽपि तद्विशिष्टलौकिकप्रत्यक्षस्येष्टत्वात् समानेन्द्रियजन्योपनीतभानात्मकतदभावनिश्चयेऽपि तद्विशिष्टलौकिकप्रत्यक्षोदयात् प्रतिबन्धकतावच्छेदके लौकिकेति, प्रतिबध्यतावच्छेदके च तत् न निवेशनीयं प्रयोजनाभावात्, उपनीतभानं प्रत्यपि अधिकन्त्विति न्यायात् समानेन्द्रियजन्यतदभावलौकिकनिश्चयस्यापि प्रतिबन्धकत्वात्, चक्षुषा शङ्खेन पीतः अयं नोरग इति लौकिकप्रत्यक्षनिश्चयेऽपि तत्समानकालोत्पन्नात् तदुत्तरोत्पन्नाद्वा पित्तमण्डूकवसाञ्जनाद्यात्मकदोषात् शङ्खः पीतः अयमुरग इति चाक्षुषभ्रमस्य स्फटिको न रक्त इति चाक्षुषलौकिकनिश्चयेऽपि तत्समानकालोत्पन्नात् तदुत्तरोत्पन्नाद्वा जवाकुसुमसान्निध्यात्मकदोषाद्रक्तः स्फटिक इति चाक्षुषभ्रमस्य चोदयाद्दोषविशेषाजन्येति, अन्यत्सर्वं पूर्ववत्। एवमेव तदभावव्याप्यवत्त्वादिनिश्चय-तद्विशिष्टबुद्ध्योरपि प्रतिबध्य-प्रतिबन्धकभावोबोध्य इत्याहुः। तदसत्। आहार्य्यप्रत्यक्षेतरतद्विशिष्टबुद्धित्वस्य प्रतिबध्यतावच्छेदकत्वे तद्विशिष्टप्रत्यक्षं जायतामित्यादीच्छाविरहदशायां बाधनिश्चयसत्त्वे आहार्य्यप्रत्यक्षेतरतद्विशिष्टबुद्धेरसम्भवेऽप्याहार्य्यप्रत्यक्षात्मकतद्विशिष्टबुद्धिप्रसक्तेर्दुर्वारत्वात्। न चाहार्य्यप्रत्यक्षं प्रति तत्तदिच्छानां विशेषतो हेतुत्वात्तदभावादेव तदानीं नाहार्य्यप्रत्यक्षोदय इति वाच्यं। अनन्तकार्य्य-कारणभावकल्पनापत्तेः। एवं तद्विशिष्टप्रत्यक्षं जायतामित्यादीच्छासत्त्वे बाध-

बुद्धिसत्त्वे आहार्य्यप्रत्यक्षेतरतद्विशिष्टबुद्धिवारणायानाहार्य्यप्रत्यक्षं प्रति तदिच्छाभावानां विशेषतोहेतुतापत्तेश्चेति[१]। न चाहार्य्यप्रत्यक्षेतरत्वं प्रतिबध्यतावच्छेदके न निवेशनीयमपि तु तत्तद्विशिष्टप्रत्यक्षं जायतां तत्तद्विशिष्टानुभवोजायतामितीच्छाविरहस्योत्तेजकत्वमुपेयमिति वाच्यं। तद्विशिष्टप्रत्यक्षञ्जायतामितीच्छासत्त्वे बाधनिश्चयसत्त्वेऽप्यनुमिति-स्मृत्याद्यापत्तेः।

केचित्तु अगृहीताप्रामाण्यकतदभावनिश्चयत्वेन प्रतिबन्धकता प्रत्यक्ष-शाब्दान्यतद्विशिष्टबुद्धित्वेन प्रतिबध्यतेति स्मृत्यनुमितिसाधारणः[२] एकः प्रतिबध्य-प्रतिबन्धकभावः, प्रत्यक्षं प्रति तु तद्विशिष्टप्रत्यक्षत्वादिप्रकारकेच्छाविरहविशिष्टागृहीताप्रामाण्यकतदभावनिश्चयत्वेन प्रतिबन्धकता तदंशे दोषविशेषाजन्य-तल्लौकिकप्रत्यक्षनिश्चयान्य-तद्विशिष्टप्रत्यक्षत्वेन प्रतिबध्यतेति लौकिकालौकिकसंशयोपनीतभानसाधारणः[३] एकः, अपरश्च तद्विशिष्टप्रत्यक्षत्वादिप्रकारकेच्छाविरहकूटविशिष्टागृहीताप्रामाण्यकतदिन्द्रियजन्यलौकिकतदभावनिश्चयत्वेन[४] प्रतिबन्धकता तदंशे दोषविशेषाजन्यतदिन्द्रियजन्यतद्विशिष्टलौकिकप्रत्यक्षत्वेन प्रतिबध्यतेति लौकिकप्रत्यक्षमात्रसाधारण-

---

(१) तदिच्छाभावानां हेतुत्वापत्तेश्चेति ख०, ग०।

(२) स्मृत्यनुमित्युपमितिमात्रसाधारण इति क०।

(३) लौकिकालौकिकसंशयोपनीतभानोभयसाधारण इति क०, लौकिकालौकिकसंशयोपनीतभानप्रत्यक्षमात्रसाधारण इति ग०।

(४) अगृहीताप्रामाण्यकतद्विशिष्टप्रत्यक्षत्वादिप्रकारकेच्छाविरहकूटविशिष्टतदिन्द्रियजन्यलौकिकतदभावनिश्चयत्वेनेति ख०, ग०।

इति प्रतिबध्य-प्रतिबन्धकभावद्वयं, एवमेव तदभावव्याप्यवत्त्वादि-निश्चय-तद्विशिष्टबुद्ध्योरपीति प्राञ्चः ।

वस्तुतस्तु सम्प्रदायमतमेव रमणीयं तद्विशिष्टप्रत्यक्षत्वादिप्रकारके-च्छाविरहकूटानां परस्परं विशेषण-विशेष्यभावे विनिगमनाभावादङ्ग-तरकार्य्य-कारणभावावश्यकतया[१] तदपेच्छाव्यवहितोत्तरवर्त्तित्वसम्ब-न्धेन तादृशतादृशेच्छावत्प्रत्यक्षत्वावच्छिन्नं प्रति तादृशतादृशेच्छानां अनाहार्य्यप्रत्यक्षं प्रति तादृशतादृशेच्छाभावानाञ्च हेतुत्वस्यैव लघी-यस्त्वात्[२] । न च तादृशेच्छाविरहकूटानां विशेषण-विशेष्यभाव-भेदेन प्रतियोगितावच्छेदकभेदेऽपि समनियततया अभावस्यैकत्वा-न्नानन्तकार्य्य-कारणभाव इति[३] वाच्यं । अभावस्य धर्मिण एकत्वे-ऽपि प्रतियोगितावच्छेदकभेदेन तत्तत्प्रतियोगितावच्छेदकघटित-धर्माणां विनिगमनाविरहेण कारणतावच्छेदकीभूतानां नानात्वान्ना-

---

(१) न च तत्तदिच्छाविरहकूटत्वेन तत्तदिच्छाविरहकूटस्य कारणतावच्छे-दकत्वसम्भवे विशेषण-विशेष्यभावे विनिगमनाविरहात् कथं कार्य्य-कारणभावानन्त्यमिति वाच्यं । एकवारणपरिष्कृतापत्तिभिया व्या-सज्यवृत्तिकारणतावच्छेदकत्वानङ्गीकारेण कूटत्वेन तत्तदिच्छाविरह-कूटस्य कारणतावच्छेदकत्वासम्भवात् ।

(२) तादृशतादृशेच्छावत्प्रत्यक्षत्वावच्छिन्नं प्रति तादृशतादृशेच्छाया हेतु-त्वस्यैव लघीयस्त्वमिति क० ।

(३) तथाच तदिच्छाविरहविशिष्टापरेच्छाविरहविशिष्टतदभावनिश्चयत्वा-वच्छिन्नाभावस्य अपरेच्छाविरहविशिष्टतदिच्छाविरहविशिष्टतदभाव-निश्चयत्वावच्छिन्नाभावसमनियतत्वेन अभिन्नतया न कारणबहुत्वमिति भावः ।

नाकार्य्य-कारणभावस्य दुर्वारत्वात्[१]। न च तद्व्यक्तित्वेन तदभाव-व्यक्तेर्हेतुत्वं न तु प्रतियोगितावच्छेदकानां कारणतावच्छेदकेऽन्तर्भाव-इति वाच्यं। अभावस्य तद्व्यक्तित्वेन हेतुत्वेऽपसिद्धान्तात् प्रतियोगितावच्छेदकप्रतियोगिघटितधर्म्मेणैवाभावस्य हेतुत्वनियमादन्यथा अगृहीताप्रामाण्यकाव्यभिचाराकाङ्क्षादिनिश्चयस्य हेतुत्वमपेक्ष्य अ-निश्चिताप्रामाण्यकव्यभिचारज्ञानाकाङ्क्षादिव्यतिरेकज्ञानाभावस्य[२] हेतुतायां गौरवाभिधानस्यासङ्गतत्वापत्तेरिति।

उच्छृङ्खलास्तु तल्लौकिकप्रत्यक्षान्यत्वं प्रतिबध्यतावच्छेदके न निवेशनीयमपि तु लौकिकालौकिकप्रत्यक्षसाधारणविशिष्टबुद्धित्वमेकमेव[३] प्रतिबध्यतावच्छेदकं वाच्यं। न चैवमुपनीतभानानुमित्याद्यात्मकतदभावनिश्चयसत्त्वे इन्द्रियान्तरजन्यलौकिकतदभावनिश्चयसत्त्वेऽपि च तद्विशिष्टलौकिकप्रत्यक्षं न स्यादिति वाच्यं। असत्यप्रामाण्यज्ञाने तदानीं तदनुत्पादस्येष्टत्वात् तथाच वाक्यार्थधिक-

(१) तथाच कारणीभूतस्याभावस्य एकत्वेऽपि कारणतावच्छेदकीभूतानां तत्तदिच्छाविरहाणां मध्ये एकस्य कारणतावच्छेदकत्वं अपरस्य कारणतावच्छेदकतावच्छेदकत्वं इत्यत्र विनिगमनाभावेन कारणबहुत्वमिति भावः।

(२) अनिश्चिताप्रामाण्यकव्यभिचारज्ञानाभावस्य अनिश्चिताप्रामाण्यकाकाङ्क्षादिव्यतिरेकज्ञानाभावस्य चेत्यर्थः, सन्दिग्धाप्रामाण्यकव्यभिचारनिश्चयस्य व्यभिचारसंशयपर्य्यवसन्नतया तादृशनिश्चयदशायां अनुमितिवारणाय अगृहीताप्रामाण्यकत्वमपहाय अनिश्चिताप्रामाण्यकत्वविशेषणमुक्तमिति।

(३) लौकिकालौकिकसाधारणज्ञानत्वमेवेति ख०, ग०।

मतानुयायित्वे एकएव प्रतिबध्य-प्रतिबन्धकभावः, इच्छाया उत्तेज-कत्वपक्षे च प्रतिबध्य-प्रतिबन्धकभावद्वयं लौकिकप्रत्यक्षं प्रति पृथक्-प्रतिबध्य-प्रतिबन्धकभावकल्पनात्, एवं शाब्दान्यत्वमपि प्रतिबध्य-तावच्छेदके न निवेशनीयमपि तु लाघवाच्छाब्दधीसाधारणमेव प्रतिबध्यतावच्छेदकमुपेयं मुखं चन्द्र इत्यादिबाधितार्थकरूपकादौ तु मुखादिषु न चन्द्राद्यभेदान्वयबोधः किन्तु चन्द्रपदस्य चन्द्रसदृ-शादौ लक्षणया तदभेदादेरेव मुखादौ बोध इत्यभ्युपगमात्। न चैवं योग्यताज्ञानस्य शाब्दधीहेतुत्वे मानाभावः वह्निना सिञ्चती-त्यादौ बाधनिश्चयस्य प्रतिबन्धकत्वादेव शाब्दबोधाभावोपपत्तेरिति वाच्यं। तद्धेतुत्वाभावस्येष्टत्वात्, बाधनिश्चयस्य प्रतिबध्यतावच्छेदके शाब्दान्यत्वं प्रवेश्य शाब्दबोधं प्रति योग्यताज्ञानरूपकारणान्तर-कल्पनाया अन्याय्यत्वात् प्रक्षालनाद्धीतिन्यायात्[१] इत्याहुः।

उपाध्यायास्तु पर्वतोवह्न्यभाववानित्यादिभ्रमोत्तरं वह्निव्याप्यधूम-वान्पर्वत इत्यादिविशेषदर्शने सति विनापि वह्न्यभावभ्रमेऽप्रामाण्य-ज्ञानं तृतीयक्षण एव पर्वतोवह्निमानितिप्रत्यक्षस्यानुभवसिद्धत्वात् स्थाणुर्न वेतिसंशयोत्तरं विशेषदर्शनाद्यग्रिमक्षण एवायं स्थाणुरिति प्रात्यक्षिकनिश्चयो न तु विशेषदर्शनाद्युत्पत्तिसमये इत्यस्याप्यनुभव-सिद्धत्वाच्च संशय-निश्चयसाधारणं विशेषदर्शनाद्यभावविशिष्टानिश्चि-ताप्रामाण्यकतदभावज्ञानत्वमेव प्रतिबन्धकतावच्छेदकं न तु केवल-मगृहीताप्रामाण्यकतदभावनिश्चयत्वं। न चैतस्य प्रतिबध्यतावच्छेदकं यदि तदंशे दोषविशेषाजन्य-शाब्दान्य-तल्लौकिकप्रत्यक्षनिश्चयान्या-

(१) प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायादित्यर्थः।

हार्य्यप्रत्यक्षेतरतद्विशिष्टबुद्धित्वं तदा संशयोत्तरमपि संशयो न स्यात् संशयोत्तरमुपमितिः स्मृतिश्च न स्यात् बाधनिश्चयोत्तरमप्यनुमितिः स्यात्[१] परामर्शात्मकविशेषदर्शनसत्त्वादिति वाच्यं । तदंशे दोष-विशेषाजन्य-तल्लौकिकप्रत्यक्षान्याहार्य्यप्रत्यक्षेतरतद्विशिष्टप्रत्यक्षनिश्चय-त्वस्य प्रतिबध्यतावच्छेदकत्वात् । न चैवमपि बाधनिश्चयोत्तरमपि संशयापत्तिर्बाधनिश्चयोत्तरं स्मृत्यनुमित्यापत्तिश्चेति[२] वाच्यं । अगृहीताप्रामाण्यकतदभावनिश्चयत्वेन प्रतिबन्धकता तदंशे दोष-विशेषाजन्य-शाब्दान्य-तत्प्रत्यक्षनिश्चयान्यानाहार्य्यतद्विशिष्टबुद्धित्वेन प्रतिबध्यतेति लौकिकालौकिकसंशय-स्मृत्यनुमित्युपमितिसाधारण-प्रतिबध्य-प्रतिबन्धकभावान्तराभ्युपगमात्, अत्र च विशेषदर्शनादेर्नो-त्तेजकत्वं, दोषविशेषजन्यसंशयव्युदासाय दोषविशेषाजन्येति, आहा-र्य्यसंशयव्युदासायानाहार्य्येति, लौकिकप्रत्यक्षं प्रति च विशेषदर्शना-द्यभावविशिष्टानिश्चिताप्रामाण्यक-तदिन्द्रियजन्य-तदभावलौकिकवि-शिष्टज्ञानत्वेन प्रतिबन्धकता दोषविशेषाजन्यानाहार्य्य-तदिन्द्रिय-जन्यतद्विशिष्टलौकिकप्रत्यक्षनिश्चयत्वेन प्रतिबध्यतेति प्रतिबध्य-प्रति-बन्धकभावत्रयमित्याहुः । तदसत् । क्षणैकविलम्बस्यादोषतया भ्रम-संशयोत्तरप्रत्यक्षस्थले क्षणैकापलापादेव सर्वोपपत्तौ प्रतिबध्य-प्रति-बन्धकभावत्रयकल्पनस्यान्याय्यत्वात् विशेषदर्शनाद्यभावविशिष्टत्वस्य प्रतिबन्धकतावच्छेदककोटिप्रवेशे गौरवाच्च ।

---

(१) बाधनिश्चयोत्तरमप्यनुमित्यापत्तिश्चेति ख०, ग० ।

(२) स्मृत्युपमित्यापत्तिरिति ख०, स्मृत्यनुमित्युपमित्यापत्तिश्चेति ग० ।

मिथ्यास्तु आहार्य्यादिप्रत्यक्षवत् प्रत्यक्षनिश्चयमात्रं प्रत्येव तदभाव-निश्चयस्तदभावसंशयश्च न विरोधी अतएव पर्वतो वह्न्यभाववानि-त्यादिभ्रमोत्तरं विशेषदर्शने सति विनाप्यप्रामाण्यज्ञानं द्वितीयक्षणे एव पर्वतो वह्निमानित्यादिप्रत्यक्षनिश्चयोऽनानुपपन्नः, एवञ्च अगृहीता-प्रामाण्यकतदभावनिश्चयत्वेन प्रतिबन्धकता तदंशे दोषविशेषाजन्य-शाब्दान्य-तत्प्रत्यक्षनिश्चयान्याहार्य्यप्रत्यक्षेतरतद्विशिष्टबुद्धित्वेन प्रति-बध्यतेत्येक एव विपरीतज्ञान-विशिष्टबुद्ध्योः प्रतिबध्य-प्रतिबन्धकभावः। न चैवं तदभावनिश्चयोत्तरं विनापि विशेषदर्शनं तद्विशिष्टप्रत्यक्षनिश्च-यापत्तिः तदभावसंशयोत्तरं विशेषदर्शनोत्पत्तिसमय एव तद्विशिष्ट-प्रत्यक्षनिश्चयापत्तिश्चेति वाच्यं। तल्लौकिकप्रत्यक्षनिश्चयान्यागृहीताप्रा-माण्यक-तद्विपरीतज्ञानाव्यवहितोत्तरतत्प्रत्यक्षनिश्चयत्वावच्छिन्नं प्रति तद्विपरीतज्ञानविरोधित्वेन विशेषदर्शनादेर्हेतुत्वात् आनुमानिकादि-तदभावनिश्चयोत्तरं तदिन्द्रियान्तरजन्यतदभावलौकिकप्रत्यक्षोत्तरञ्च विनापि विशेषदर्शनादिकं तल्लौकिकनिश्चयोदयात् तल्लौकिकप्रत्यक्ष-निश्चयान्येति तत्प्रत्यक्षनिश्चयविशेषणं। न चैवं समानेन्द्रियजन्य-तदभावलौकिकप्रत्यक्षोत्तरमपि विना विशेषदर्शनं तल्लौकिकप्रत्यक्ष-निश्चयापत्तिरिति वाच्यं। तदिन्द्रियजन्यतद्विपरीतलौकिकप्रत्यक्षा-व्यवहितोत्तरतदिन्द्रियजन्यतल्लौकिकप्रत्यक्षनिश्चयत्वावच्छिन्नं प्रत्यपि तद्विपरीतज्ञानविरोधित्वेन विशेषदर्शनादेर्हेतुत्वकल्पनात्, अव्यवहि-तोत्तरत्वञ्च[१] उभयचैवोत्पत्तिक्षणसाधारणं तेन विपरीतनिश्चय-

---

(१) स्वोत्पत्तिक्षणसाधारणं स्वाव्यवहितोत्तरत्वञ्च स्वध्वंसाधिकरणसमय-ध्वंसानधिकरणत्वे सति स्वप्रागभावानधिकरणत्वमिति।

तद्विशिष्टप्रत्यक्षनिश्चययोर्न्न युगपदुत्पत्तिरित्याङ्कः । तदत्यन्तमसत् । विशेषदर्शनं विना भ्रमसंशयोत्तरं विपरीतज्ञानोत्तरतत्प्रत्यक्षनिश्चयानुत्पादेऽपि तत्प्रत्यक्षनिश्चयसामान्योत्पत्त्यापत्तेः[१] तद्विपरीतज्ञानं विना केवलविशेषादर्शनादिदशायामपि तद्विपरीतज्ञानोत्तरतत्प्रत्यक्षनिश्चयापत्तेश्च । अथ तद्विपरीतज्ञानानुत्तरतत्प्रत्यक्षनिश्चयत्वावच्छिन्नं प्रति तदभावज्ञानत्वेन प्रतिबन्धकत्वं वाच्यमतोनाद्योदोषः, तद्विपरीतज्ञानोत्तरतत्प्रत्यक्षनिश्चयत्वावच्छिन्नं प्रति तद्विपरीतज्ञानत्वेनापि हेतुत्वाभ्युपगमान्न द्वितीयोऽपीति चेत्, कार्य्य-कारणभाववाहुल्यादुपाध्यायमतापेक्षयापि महद्गौरवं । अथ तद्विपरीतज्ञानानुत्तरतत्प्रत्यक्षनिश्चयत्वावच्छिन्नं प्रति तदभावज्ञानत्वेन प्रतिबन्धकत्वादेव नाद्यो दोषः, न वा द्वितीयो दोषः विशेषदर्शनस्य हि तद्विपरीतज्ञानोत्तरतत्प्रत्यक्षनिश्चयत्वं न कार्य्यतावच्छेदकमपि तु तद्विपरीतज्ञानविरोधितत्प्रत्यक्षत्वं तत्त्वर्थ्याव्यवहितोत्तरत्वं तच्च केवलविशेषदर्शनदशायां जायत एवेति । न च तद्विपरीतज्ञानानुत्तरप्रत्यक्षनिश्चयत्वावच्छिन्नं प्रति तदभावज्ञानत्वेन प्रतिबन्धकत्वे सति तदभावनिश्चये विशेषदर्शनादिकं विनापि विपरीतज्ञानोत्तरप्रत्यक्षापत्तिरिति वाच्यं । विपरीतज्ञानविरोधितत्प्रत्यक्षातिरिक्तस्य विपरीतज्ञानोत्तरप्रत्यक्षस्यालीकतया विशेषदर्शनात्मकविपरीतज्ञानविरोधिनोऽभावादेव तत्र तदनुत्पादादिति चेत्, एवमभिधाने कार्य्य-कारणभाववाहुल्याभावेऽपि अव्यवहितोत्तरत्वादिप्रवेशेन उपा-

---

(१) सामान्यसामग्रीसत्त्वादिति शेषः ।

वाक्यरचना सम्भवत्यत एतस्यायमर्थो न वा, एतत्सदर्थकं

---

थ्यायापेक्षया कार्य्यतावच्छेदकगौरवस्य दुर्व्वारत्वात्[१]। किञ्च व्याप्य-दर्शन-व्यावर्त्तकधर्मादिदर्शनसाधारणस्य तद्विपरीतज्ञानविरोधिता-वच्छेदकस्यैकस्याभावात्तद्विपरीतज्ञानविरोधित्वमप्यननुगतं। अपि च कुङ्कुमादौ गन्धाद्यभावलौकिकभ्रमोत्तरं तैलादिसंयोगे विनापि व्याप्यदर्शनादिरूपतद्विपरीतज्ञानविरोधिनं गन्धादिलौकिकप्रत्यक्ष-निश्चयोदयाद्व्यभिचारः। न च तत्र तैलादिसंयोग एव विपरीत-ज्ञानविरोध्यस्तीति वाच्यं। तस्य तद्विरोधित्वे मानाभावात्। तत्राप्रामाण्यज्ञानानभ्युपगमे चर्णिकापत्तापादेवोपपत्तिरिति चेत्, किमेतावत्कुसृष्ट्या वह्न्यभावभ्रमादिस्थलेऽपि तथा वक्तुं शक्यत्वा-दिति सङ्क्षेपः।

ननु न वयमुक्तसंशयस्य प्रतिबन्धकत्वं ब्रूमः किन्तूक्तसामग्री नार्थ-निश्चायिका संशयसामग्रीत्वादित्यत्र परिहारान्तरमाह, 'विनापीति, वस्तुतस्तु भवतु ग्राह्यसंशयः प्रतिबन्धकस्तथापि न क्षतिरित्यभ्युपगम-वादेन समाधानान्तरमाह, 'विनापीति, 'अर्थं' जलकरणकत्वचत्से-कादिकं, 'वाक्यरचना सम्भवति' आकाङ्क्षादिमद्वाक्यप्रयोगो भवति, जलकरणकत्ववत्सेकाद्यप्रतिपादकमप्याकाङ्क्षादिमद्वाक्यमस्तीति यावत्, एतेनाकाङ्क्षादिमद्वाक्यत्वं तादृशवाक्यजन्यज्ञानत्वञ्च साधारणधर्म-इति दर्शितं, जलेन सिञ्चतीत्यादिवाक्यप्रयोगविषयोऽपि च सेकादि-कमस्तीति शेषः, तेन प्रतिपाद्यत्वकोटिकसंशये सेकत्वादिरूपसाधा-रणधर्मलाभः, 'अत इति, आकाङ्क्षादिमद्वाक्यत्वरूपसमानधर्मदर्श-

---

(१) अपेत्यादिः दुर्व्वारत्वादित्यन्तः पाठः क॰पुस्तके नास्ति।

**न वा, एतज्जन्यज्ञानं सद्विषयकं न वेति संशयस्यार्था-**

---

नादिति शेषः, 'अयमिति, 'एतस्य' वाक्यस्य, 'अर्थः' प्रतिपाद्यः, 'अयं न वा' जलकरणकत्ववत्सेकादिर्न वेत्यर्थः, तादात्म्यसम्बन्धेन जलकरणकत्ववत्सेकादिकोटिरिति भावः।

केचित्तु 'अयं' जलकरणकत्ववत्सेकादिः, 'एतस्य' वाक्यस्य, 'अर्थः' प्रतिपाद्यो न वेत्यर्थः, इत्याहुः। तदसत्। एतस्य सेके जलकरणत्वांशे सन्देहरूपत्वेऽपसिद्धान्तात् धर्मितावच्छेदकांशे संशयाकारसंशयानभ्युपगमात्। तदंशे निश्चयाकारत्वे च ग्राह्यसंशयत्वानुपपत्तेरिति ध्येयं।

'एतदिति एतद्वाक्यं जलकरणकत्ववत्सेकादिप्रतीतिजनकं न वेत्यर्थः, 'सद्विषयकमिति जलकरणकत्ववत्सेकादिविषयकं न वेत्यर्थः, 'संशयस्येति, ग्राह्यसंशयपर्य्यवसन्नस्येति शेषः, धर्म्मिणि सेकत्वसेकविषयकत्वयोर्निश्चयसत्त्वेन प्रतिपाद्यधर्म्मिकसंशय-ज्ञानधर्म्मिकसंशययोरपि सेके जलकरणकत्वसन्देहपर्य्यवसन्नत्वादिति भावः। 'अर्थावगमेति शाब्दबुद्धेरुत्तरकाल एव सम्भवाच्चेत्यर्थः, तथाच शाब्दबोधात्पूर्व्वमसम्भवाच्चेति[१] फलितार्थः, संशयस्योपनीतभानात्मकतया तदपेक्षया शाब्दसामग्र्या बलवत्त्वादन्यथा सर्वत्रोपनीतभानस्यैव सम्भवाच्छाब्दबोधस्यैव दुर्लभत्वापत्तेरिति भावः।

मिश्रास्तु 'अर्थावगमेति शाब्दबोधपूर्वं सेकादौ जलकरणकत्वा-

---

(१) शाब्दबोधात् पूर्व्वं संशयसामग्र्यसम्भवादितीति क०।

वगमोत्तरकालीनत्वाच्च[1]। तस्मादाप्तोक्तत्वं भ्रमाद्य-जन्यत्वं अबाधितार्थकत्वं यथार्थवाक्यार्थप्रतीतिपरत्वं वा ज्ञातं अनुगतमपि न हेतुः प्रथमं ग्रहीतुमशक्य-

---

दिनिश्चयाभावेन शाब्दबुद्धेरुत्तरकाल एव सम्भवाच्चेत्यर्थः, विशेषण-तावच्छेदकप्रकारकनिर्णयं विना विशिष्टवैशिष्ट्यसंशयासम्भवादिति भावः, इत्याहुः। तदसत्। उक्तसंशयानां केवले जलकरणकत्वांशे संशयाकारतया विशिष्टवैशिष्ट्यज्ञानानात्मकतया शाब्दबोधं विनापि खण्डशस्तत्पदार्थज्ञानादेव विशेष्ये विशेषणमितिन्यायेन सम्भवात् विशिष्टवैशिष्ट्यज्ञानरूपत्वेऽपि प्रमाणान्तरजन्य-तन्निश्चयसम्भवाच्चेति दिक्।

यथार्थतात्पर्य्यादिज्ञानस्य शाब्दबोधाहेतुत्वे किं शाब्दबोधे कारणमिति[2] प्रतिपादयितुं पुनरुपसंहरति, 'तस्मादिति, 'आप्तो-क्तत्वमिति तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थज्ञानवदुक्तत्वरूपं तत्पदार्थवत्तत्पदार्थज्ञानवदुक्तत्वरूपं वा आप्तोक्तत्वमित्यर्थः, 'अबाधि-तार्थकत्वमिति तत्पदार्थवत्तत्पदार्थप्रतीतिजनकत्वमित्यर्थः, 'यथा-र्थवाक्यार्थेति तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकयथार्थप्रतीतीच्छ-योच्चरितत्वरूपं तत्पदार्थवत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वरूपं वा यथार्थतात्पर्य्यमित्यर्थः, 'प्रथमं' शाब्दबोधात्पूर्व्वं, 'ज्ञातुमशक्यत्वा-

---

(१) अर्थावगमोत्तरकालीनत्वादिति क०।

(२) किं किं शाब्दकारणमितीति ख०।

त्वात्, किन्तु तात्पर्य्यग्राहकत्वेनाभिमतानां न्याय-
जन्यज्ञान-प्रकरणादीनामन्यतरत् तात्पर्य्यव्याप्यत्वेना-

---

दिति[१] शाब्दबोधात्पूर्व्वं विशिष्य तत्पदार्थे तत्पदार्थसंसर्गज्ञाना-
भावात् आप्तोक्तत्वादेर्ग्रहीतुमशक्यत्वादित्यर्थः, 'तात्पर्य्यग्राहकत्वे-
नेति, एतच्च एकदेशिमतेन, स्वमते तु तत्पदार्थविशेष्यक-तत्पदार्थ-
प्रकारकप्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यज्ञानस्यैव हेतुत्वेन वक्ष्यमाण-
त्वादिति ध्येयं । 'न्यायजन्यज्ञानेति वेदाभिप्रायेण, 'प्रकरणादीनां'
प्रकरणादिज्ञानानां, 'तात्पर्य्यव्याप्यत्वेनेति तार्य्यत्पस्य व्याप्यं विषय-
तया यस्येति व्युत्पत्त्या तात्पर्य्यव्याप्यविषयकत्वेनेत्यर्थः, यथाश्रुते
न्यायजन्यज्ञानस्य तात्पर्य्यव्याप्यत्वाभावादसम्बयापत्तेः, अत्र तात्पर्य्यं
तद्विशेष्यक-तत्प्रकारकप्रतीतीच्छयोच्चरितत्वं न तु तत्पदार्थवत्तत्प-
दार्थप्रतीतीच्छयोच्चरितत्वं, वह्निना सिञ्चतीत्यादावभावात् । इद-
ञ्चापाततः तात्पर्य्यव्याप्यविषयकज्ञानत्वेन कारणत्वे तात्पर्य्याव्याप्ये
भोजनादिरूपप्रकरणत्वभ्रमेण विषयाबाधात् शाब्दप्रमानुपपत्तेः
प्रमेयत्वादिरूपेण तज्ज्ञानाच्छाब्दबोधापत्तेश्च । न च तात्पर्य्य-
व्याप्यत्वप्रकारकज्ञानत्वेन हेतुत्वमिति वाच्यं । सर्व्वत्र तेन रूपेण
ज्ञानाभावेन अव्यापकत्वात् । नापि तात्पर्य्यव्याप्यतावच्छेदकप्रकारक-
ज्ञानत्वेन हेतुत्वं प्रमेयवदित्यादिज्ञानाव्यावृत्तेः संसर्गभेदेन तात्पर्य्य-
व्याप्यत्व-तदवच्छेदकत्वयोरप्यननुगतत्वाच्च । वस्तुतस्तु तत्तत्प्रकरणत्वा-

---

(१) 'ग्रहीतुमशक्यत्वादित्यत्र 'ज्ञातुमशक्यत्वादिति कस्यचिन्मूलपुस्तकस्य पाठमनुसृत्य ईदृशपाठधारणमित्यनुमीयते ।

नुगतं, तथाकाङ्क्षासत्तिनिश्चयः, तद्विपर्य्यये संशये च शाब्दज्ञानाभावात्। योग्यतायाश्च ज्ञानमात्रं हेतुः तत्संशये विपर्य्यये प्रमायाञ्च वाक्यार्थज्ञानात्, तथा विभक्त्यादिसमभिव्याहारः सम्भूयोच्चारणञ्च शाब्द-

---

दिना तत्तत्प्रकरणादिज्ञानं तत्तच्छाब्दे विशिष्य हेतुरित्येव तत्त्वं[१]। आकाङ्क्षासत्तिनिश्चययोर्हेतुत्वे मानमाह, 'तद्विपर्यय इति तयो-र्व्यतिरेकनिश्चये इत्यर्थः, 'संशये च' तयोः संशये च, तथाच यत्संशयेत्यादिव्याप्तिबलात्[२] तयोर्निश्चयस्य हेतुतेति भावः। 'तत्-संशये' योग्यतायाः संशये, 'विपर्यये' तस्या निश्चयात्मकभ्रमे, 'प्रमायां' तस्या निश्चयात्मकप्रमायां, 'विभक्त्यादीति कर्मादिवाचक-विभक्त्यादिपदज्ञानमित्यर्थः, तेन पदयोः समभिव्याहाररूपाकाङ्क्षा-ज्ञानतोभेदः, 'आदिपदान्नाम-धात्वात्मकपदपरिग्रहः, 'सम्भूयेति

---

(१) वस्तुतस्तु इदानीं वक्तुरत्रार्थे न तात्पर्य्यं दिनान्तरे तात्पर्य्यमासीत्, इदं वाक्यं नैतत्तात्पर्य्यकं वाक्यमेतत्तात्पर्य्यकमित्यादितः शाब्दबोधा-नुदयात् तत्तत्कालीन-तत्तत्पुरुषीय-तत्तद्वाक्यत्वादिप्रकारकतात्पर्य्य-ज्ञानत्वेन कारणत्वस्यानुगतत्वाभावात् कार्य्यतावच्छेदकस्याप्यननुगमेन तत्तद्व्यक्तित्वेन कार्य्य-कारणभावपर्य्यवसानात् तद्धेतोरिति न्यायेन तत्तत्प्रकरणत्वादिना तत्तत्प्रकरणादिज्ञानमेव तत्तच्छाब्दबोधे विशिष्य हेतुरित्येव तत्त्वं इत्यधिकः पाठः क०-पुस्तके वर्त्तते।

(२) यस्य संशये यस्य व्यतिरेकनिश्चये च यस्यानुत्पादः तन्निश्चयः तत्र कारणमिति व्याप्तिबलादित्यर्थः।

ज्ञानमात्रे कारणानि नानार्थे श्लिष्टे चानेकोपस्थिता-
वपि प्रकरणादिवशादेकमर्थमादायान्वयबोधः। ल-

---

परस्परसहकारेणैकान्वयबुद्धिजनकत्वज्ञानमित्यर्थः, इदञ्च तात्पर्य्यस्य प्रकरणादेर्वा ज्ञानकालेऽपि सम्भूयैकार्थप्रतिपादकानि नैतत्पदानीति ज्ञानकालेऽपि न शाब्दबोध इत्यनुभवमनुसृत्याभिहितं। वस्तुतोऽस्य हेतुत्वे मानाभाव इत्यवधेयं।

केचित्तु सम्भूयैकार्थप्रतिपादनतात्पर्य्यकत्वं एतस्यार्थः तच्च ज्ञात-मुपयुज्यते इति तद्भ्रमादप्यन्वयबोधदर्शनादित्याहुः[१]।

ननु यथार्थतात्पर्य्यग्रहस्याहेतुत्वे कुतो नानार्थादावनेकार्थोप-स्थितावपि प्रायशः एकार्थमादायैवान्वयबोध इत्यत आह, 'नानार्थ-इति यत्रोभयत्रैव प्रकरणसम्भवस्तत्रैकत्र तात्पर्य्यविरहे उभयार्थमा-दायान्वयबोधे इष्टापत्तिरेव शरणमिति ध्येयं[२]। 'श्लिष्टे चेति श्वेत-गुणविशिष्टोधावति श्वा इतो धावतीत्यर्थद्वयके श्वेतो धावतीत्यादि-वाक्ये इत्यर्थः, 'प्रकरणादिवशादिति एकार्थग्राहकप्रकरणादिमात्र-सत्त्वादित्यर्थः, 'एकमर्थं' एकमेवार्थं। ननु तथापि यथार्थतात्पर्य्य-ग्रहस्याहेतुत्वे यष्टीः प्रवेशयेत्यादिलाक्षणिकस्थले वृत्तिजन्योपस्थि-त्यादेरविशिष्टत्वेऽपि प्रायशोलक्ष्यार्थस्य यष्टिधरस्यैवान्वयधीर्न तु शक्याया यष्टेरिति कुतो नियम इत्यत आह, 'लक्षणा चेति

---

(१) केचित्त्वित्यादिः आहुरित्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

(२) तत्रेत्यादिः ध्येयमित्यन्तः पाठः ख०, ग० पुस्तकद्वये नास्ति।

यथा च[1] न तात्पर्य्यानुपपत्त्या किन्त्वन्वयानुपपत्त्यैव प्रकरणाद्भोजनप्रयोजनकत्वेनावगतप्रवेशनस्य यष्ट्य-न्वयानुपपत्तेः। अजहत्स्वार्थायां प्रकरणादेव रुचि-

लक्ष्यार्थस्यैवान्वयबोधस्येत्यर्थः, शक्यार्थानन्वयबोधस्येति यावत्, 'न तात्पर्य्येति न मुख्यार्थतात्पर्य्यग्रहाभावेनेत्यर्थः, 'अन्वयेति अन्वयिनि अन्वयितावच्छेदकसम्बन्धेन मुख्यार्थाभावनिश्चयेनैवेत्यर्थः। ननु यष्टीः प्रवेशयेत्यत्र प्रवेशनस्यैव यष्टिपदार्थान्वयितया न तत्र शक्यार्थस्य यष्टे-रभावनिश्चयः यष्टेरपि प्रवेशनसम्भवादित्यत आह, 'प्रकरणादिति, 'अवगतेत्यनेनान्वयः, 'भोजनप्रयोजनकत्वेनेति भोजनानुकूलत्वेने-त्यर्थः, विशेषणे तृतीया, तथाच प्रकरणविशेषात् प्रवेशनत्वरूपेणोप-स्थितस्य भोजनानुकूलप्रवेशनस्येत्यर्थः, अन्वयिन इति शेषः, 'यष्ट्य-न्वयानुपपत्तेरिति प्रवेशनत्वरूपेण प्रवेशने कर्मतासम्बन्धेन यष्टेरभाव-निश्चयादित्यर्थः। इदमुपलक्षणं प्रवेशने यष्टेरन्वयबोधे विलक्षण-प्रकरणं हेतुस्तदभावात् प्रवेशने न यष्टेरन्वयबोध इत्यपि सुवचम्। यद्यपि यष्टीः प्रवेशयेत्यादौ प्रवेशने कर्मतासम्बन्धेन यष्टेरन्वयो न सम्भवत्येव कर्मत्वस्य पदार्थत्वेन प्रकारत्वनियमात् धात्वर्थ-नामार्थ-योर्भेदान्वयबुद्ध्यभावाच्च किन्तु यष्टिकर्मत्वस्य द्वितीयार्थस्यैव प्रवेशने प्रकारतया अन्वयः स्यात्तत्र च कर्मतासम्बन्धेन यष्ट्यभावनिश्चयो न विरोधीत्यसङ्गतमेव तत्, तथापि धात्वर्थ-नामार्थयोरपि च[2]

(१) लक्षणापीति क०।

(२) धात्वर्थयोरपीति क०, धात्वर्थयोरपि नामार्थयोरपि चेति ख०।

तद्भिन्नस्य यान्तीत्यनेन गमनकर्तृत्वमवगतं तदन्व-

---

भेदान्वयबुद्धिरस्त्येव परन्तु तादृशान्वयबोधे विभक्तिजन्यसंसर्गोप-
स्थितिर्हेतुः तेन चैत्रः पच्यते तण्डुलः पचति घटमानयेत्यादौ
कर्तृत्व-कर्मत्वादिसम्बन्धेन चैत्र-तण्डुल-घटादेर्न पाकानयनादावन्वयः,
न वा चैत्रोधनं घटोरूपं घटः कर्मत्वमित्यादौ स्वत्वाधेयत्वादि-
सम्बन्धेन चैत्र-घटादेर्धन-रूप-कर्मत्वादावन्वयः, चैत्रेण पच्यते तण्डुलं
पचति घटमानय चैत्रस्य धनं घटस्य रूपं घटस्य कर्मत्वमित्यादौ
कर्तृत्व-कर्मत्व स्वत्वाधेयत्वादिसम्बन्धेन चैत्र-तण्डुल-घटादेः पाका-
नयन-धन-रूप-कर्मत्वादिष्वन्वयबोधस्तु सति तात्पर्य्यग्रहे प्रकरण-
विशेषे वा दृश्यत एव। न चैवं पदोपस्थापितस्यार्थस्य प्रकारत्व-
नियमो व्याहत इति वाच्यम्। कर्तृत्व-कर्मत्वादेः प्रकारतया संसर्ग-
तया च द्विधैव भानाभ्युपगमादुभयोरेव सामग्रीसत्त्वात् तात्पर्य्य-
विशेषादेर्नियामकत्वाच्च न सर्वत्र तथात्वं, अतएव च नामार्थ-धात्वर्थ-
योर्भेदान्वयबोधे प्रकारीभूतविभक्त्यर्थोपस्थितिः तन्त्रमिति प्राचीन-
लिखनमपि सङ्गच्छते[१] अन्यथा तादृशान्वयबोधस्यैवाप्रसिद्धत्वात् तत्र
विभक्त्यर्थोपस्थितेस्तन्त्रत्वाभिधानस्यासङ्गतत्वापत्तेरिति साम्प्रदायिक-
मतानुसारेणेदमभिहितमित्यदोषः, एवं सर्वत्र बोध्यम्। नन्वेवं
छत्रिणो यान्तीत्यत्र शक्त्या छत्रित्वेन रूपेण कुतो नान्वयधीः तत्रा-
न्वयानुपपत्तिविरहादित्यत आह, 'अजहदिति, 'प्रकरणादेवेति
छत्रिविषयकापेक्षाबुद्धिविशेषविषयत्वरूपैकसार्थवाहित्वरूपेणान्वयबो-

---

(१) प्राचीनलिखनं सुष्ठु सङ्गच्छत इति ख०।

यानुपपत्तिर्लक्षणमात्रे, पचतीत्यस्य कलायमित्यन्योक्तेन समं नार्थप्रत्यायकत्वं समभिव्याहाराभावात्, तत्रापि तस्य तात्पर्य्यग्राहकत्वात् सहोच्चरितानां सम्भूयार्थ-

धकगमनप्रकरणादित्यर्थः, 'लक्षि-तदितरस्येति सावधारणं, लक्ष्येक-सार्थवाहित्वरूपेणेति शेषः, 'अवगतमिति भावसाधनं गमनकर्तृ-त्वावगम इत्यर्थः। अवधारणीयार्थमेव[१] स्फुटयति, 'तदन्वयानुप-पत्तिरिति गमनकर्तृत्वान्वयबोधाभावस्येत्यर्थः, 'लक्षिमात्रे' लक्षित्व-रूपेण लक्षिमात्रे, तथाचैतेषु योग्यतानुपपत्तिरेव लक्षणाबीजं सम्भ-वतीति भावः। 'समभीति परस्परसहकारेणैकान्वयबुद्धिजनकत्व-ज्ञानाभावादित्यर्थः, न तु यथार्थतात्पर्य्यग्रहाभावादिति भावः। ननु तत्र परस्परसहकारेणैकान्वयबुद्धिजनकत्वज्ञानसत्त्वेऽपि नान्वयबोध-इत्यत आह, 'तत्रापीति, 'तस्य' परस्परसहकारेणैकान्वयबुद्धिजन-कत्वज्ञानस्य, तथाच तत्सत्त्वे तात्पर्य्यग्रहस्यापि सत्त्वाद्भवतामपि तत्र शाब्दबोधोदुर्वार इति भावः। तादृशजनकताज्ञानस्य शाब्दबुद्धि-हेतुत्वे मानमाह, 'सहेति सम्भूयैकान्वयबुद्धिजनकत्वेन ज्ञातानामेव पदानामित्यर्थः, 'सम्भूयेति परस्परसहकारेणैकान्वयबुद्धिजनकताया-व्युत्पत्तिसिद्धत्वादित्यर्थः, व्युत्पत्तिः यत्संशय इत्यादिव्याप्तिः, तात्प-र्य्यस्य प्रकरणादेर्वा ज्ञानकालेऽपि सम्भूयैकान्वयबुद्धिजनकानि नैतत्पदानीति ज्ञाने एवमेतत्पदानि सम्भूयैकान्वयबोधजनकानि न वेति संशये च शाब्दबोधाभावात् यत्संशय इत्यादिनियमबलेन तन्निश्चयस्य हेतुत्वादिति भावः।

(१) अवधारणार्थमेवेति ख०, ग०।

प्रत्यायकत्वस्य व्युत्पत्तिसिद्धत्वात् ।

अन्ये तु नानार्थे लक्षणायाञ्च नियतोपस्थित्यर्थं पदार्थे तात्पर्य्यग्रहापेक्षा तेन विना तदभावात् न वाक्यार्थे, तदज्ञानेऽपि प्रकरणादिना[१] सैन्धवपदं

'नानार्थे लक्षणायाञ्चेति गृहीतनानार्थवृत्तिकपद इति समुदायार्थः, तेन गृहीतनानार्थशक्तिकस्य गृहीतनानार्थलक्षणकस्य गृहीतविभिन्नार्थशक्ति-लक्षणकस्य सङ्ग्रहः एकमात्रगृहीतलक्षणकस्य चासङ्ग्रहः तस्यैकमात्रगृहीतशक्तिकतुल्यत्वादिति ध्येयं । 'नियतेति वृत्तिज्ञानस्याविशिष्टत्वेऽपि कस्यचिदेवार्थस्य स्मरणार्थमित्यर्थः, 'पदार्थ-इति वृत्त्या गृहीतनानार्थवृत्तिकपदजन्यतत्स्मृतिं प्रति तत्प्रतीतीच्छयोच्चरितत्वग्रहस्य हेतुत्वमित्यर्थः, 'तेन विनेति तादृशपदजन्यपदार्थस्मृतिं प्रति पदार्थतात्पर्य्यग्रहस्य हेतुत्वं विना तत्र नियतोपस्थितेरसम्भवादित्यर्थः[२] । न चैवं तात्पर्य्यग्रहात् पूर्वं तदर्थानुपस्थितौ कथं तात्पर्य्यनिरूपणं तस्यार्थघटितत्वादिति वाच्यम् । वृत्त्या तादृशपदजन्यतदुपस्थितेरसम्भवेऽपि शक्तिवत्प्रकारान्तरेण तदुपस्थितिसम्भवादिति भावः । 'न वाक्यार्थ इति च्छेदः, न तु वाक्यार्थबोधे वाक्यार्थतात्पर्य्यग्रहापेक्षेत्यर्थः, न तु तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकशाब्दबोधे तत्पदार्थवत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वग्रहो हेतुरिति यावत् । 'तदज्ञानेऽपि' वाक्यार्थतात्पर्य्याज्ञानेऽपि,[३] तत्पदार्थवत्तया

(१) प्रकरणादित इति ख० ।

(२) नियमस्थितेरसम्भवाद्वृत्तिज्ञानस्याविशिष्टत्वादित्यर्थ इति क० ।

(३) वाक्यार्थाज्ञानेऽपीति क० ।

तुरगपरं काकपदं उपघातकपरमिति हि प्रतियन्ति । अन्यत्रान्वयप्रतियोग्युपस्थितिः तात्पर्य्यग्रहं विनैवेति

---

तत्पदार्थाज्ञानेऽपीति यावत्, 'तुरगपरं' तुरगप्रतीतीच्छयोच्चरितं, एवमग्रेऽपि, 'इतीति 'इतिशब्दः पञ्चम्यन्तः, इति प्रत्येकं पदार्थद्वय-तात्पर्य्यज्ञानादित्यर्थः, 'हिशब्दो यस्मादित्यर्थे, 'प्रतियन्ति' वाक्यार्थं प्रतियन्ति, तत्पदार्थविशेष्यक-तत्पदार्थप्रकारकशाब्दबोधवन्तो भवन्तीति यावत् । 'अन्यत्र' गृहीतनानार्थवृत्तिकपदभिन्नपदे, 'अन्वयेति वृत्त्या पदार्थस्मृतिरित्यर्थः, 'तात्पर्य्यग्रहं विनैवेति, 'एवकारोऽप्यर्थे । यद्वा 'नियतोपस्थित्यर्थं' नियतशाब्दानुभवार्थं, वृत्त्या पदजन्योपस्थितेरविशिष्टत्वेऽपि कस्यचिदेवार्थस्य शाब्दानुभवार्थमिति यावत्, 'पदार्थं इति गृहीतनानार्थवृत्तिकपदजन्यतत्तच्छाब्दानुभवं प्रति तत्तत्प्रतीतीच्छयोच्चरितत्वग्रहस्य हेतुत्वमित्यर्थः, 'तेन विनेति तत्र तद्धेतुत्वेन विना, 'तदभावात्' उक्तस्थले नियतशाब्दानुभवासम्भवादित्यर्थः, वृत्त्या पदजन्योपस्थितेरविशिष्टत्वादिति भावः । 'न वेत्यादि पूर्ववत्, 'तात्पर्य्यग्रहं विनैवेति, शाब्दधीजनिकेति शेषः, 'एवकारोऽप्यर्थे । नन्विदमयुक्तं पदार्थस्मृतिं प्रति तात्पर्य्यग्रहस्य हेतुत्वे मानाभावात् गृहीतनानावृत्तिकस्थले नियतोपस्थितेरेवासिद्धत्वात् गृहीतवृत्तिकानां सर्वेषामेवार्थानां तत्र स्मरणस्यानुभवसिद्धत्वात् सर्वेषां शाब्दबोधाभावस्तु शाब्दानुभवं प्रति तात्पर्य्यग्रहस्य तात्पर्य्यग्राहकप्रकरणादिविशेषग्रहस्य वा हेतुतया तदभावात् अन्यथा गृहीतनानार्थवृत्तिकपदजन्यत्वांशमपहाय लाघवाद्वृत्त्या पदजन्यप-

न तदपेक्षा । वस्तुतस्तु इतरपदस्य इतरपदार्थसंस-
र्गज्ञानपरत्वं तात्पर्य्यं तच्च वेदे न्यायादवधार्य्यते लोके

दार्थस्मृतिमात्रं प्रत्येव पदार्थतात्पर्य्यग्रहस्य हेतुत्वं कुतो नाभ्युपेयते पदार्थतात्पर्य्यग्रहं विनाप्यन्यत्र वृत्त्या पदार्थस्मरणस्यानुभवसिद्ध-त्वात्तत्परित्यागे प्रकृतेऽपि तुल्यत्वात् एवं यद्वाकल्पोऽपि न युक्तः खण्डशः प्रत्येकपदार्थतात्पर्य्यग्रहस्य हेतुत्वे[१] पचतीत्यादौ सर्वदैव विषयित्वानुकूलत्वादिसकलसंसर्गेणान्वयबोधापत्तेः । न च तत्संसर्ग-कान्वयबोधे तत्संसर्गतात्पर्य्यग्रहोऽपि हेतुरिति नायं दोष इति वाच्यम् । पचन् गच्छतीत्यादौ पचन्नित्यत्र विषयितासम्बन्धे तात्प-र्य्यग्रहे गच्छतीत्यत्रापि तमादायान्वयबोधापत्तेः तद्विशेष्यक-तत्प्रका-रकप्रतीतिपरत्वसंशये तद्व्यतिरेकनिश्चये वा शाब्दबोधापत्तेश्च । एतेन प्रकरणादीनां शाब्दबोधहेतुत्वं यत्पूर्वमुक्तं तदप्ययुक्तं तथा सति तादृशप्रतीतिपरत्वसंशये तद्व्यतिरेकनिश्चये वा शाब्दबोधापत्तेः प्रकरणादीनामननुगततयाऽनन्तकार्य्य-कारणभावापत्तेश्चेत्यस्वरसा-दाह, 'वस्तुतस्त्विति, 'इतरपदस्येति एकपदस्येत्यर्थः, 'इतरपदार्थेति प्रकृतसंसर्गेणेतरपदार्थविशेष्यिका स्वार्थप्रकारिका या प्रतीतिस्तदिच्छ-योच्चरितत्वमित्यर्थः, 'तात्पर्य्यमिति, शाब्दधीप्रयोजकमिति शेषः, तत्संसर्गेण तद्विशेष्यक-तत्प्रकारकशाब्दबोधं प्रति तत्संसर्गक-तद्विशे-ष्यक-तत्प्रकारकशाब्देच्छयोच्चरितत्वं प्रयोजकमिति तु फलितार्थः ।

(१) शाब्दानुभवहेतुत्व इति ख०, ग० ।

न्यायात् प्रकरणादेर्वा । अत एव शाब्दबोधे नानियतहेतुकत्वं तच्चेतरपदार्थसंसर्गज्ञानं वाक्यार्थज्ञानमेवेति सामान्याकारेण तत्परत्वग्रहः[१] हेतुर्न तु विशिष्य, तच्च स्वपरपदार्थयोः संसर्गानुभवजननं विना अनुप-

---

'अत एव' एतादृशतात्पर्य्यस्य शाब्दधीप्रयोजकत्वादेव, 'अनियतहेतुकत्वमिति अननुगतहेतुकत्वमित्यर्थः, प्रकरणादेः प्रयोजकत्वे चाननुगतहेतुकत्वापत्तिरिति भावः । ननु प्रकृतशाब्दपरत्वरूपतात्पर्य्यग्रहस्यैव शाब्दधीहेतुत्वात् कथमेतादृशप्रतीतिपरत्वधीः शाब्दधीहेतुरित्यत आह, 'तच्चेति, 'इतरपदार्थेति प्रकृतसंसर्गेणेतरपदार्थविशेष्यक-स्वार्थप्रकारकज्ञानमित्यर्थः, 'वाक्यार्थज्ञानमेव' प्रकृतशाब्दज्ञानमेव, 'सामान्याकारेणेति घटपदमस्मदाधेयत्वसंसर्गक-कर्मत्वविशेष्यकघटप्रकारकप्रतीतिपरमित्यादिरूपेणेत्यर्थः,[२] 'तत्परत्वग्रहः' तादृशप्रतीतिपरत्वग्रहः, 'न तु विशिष्येति न तु घटवत्कर्मत्वप्रतीतिपरमित्यादिरूपेण तादृशप्रतीतिपरत्वज्ञानं हेतुरित्यर्थः, अत्र हेतुमाह, 'तच्चेति तद्घटवत्कर्मत्वप्रतीतित्वादिना तादृशप्रतीतिपरत्वज्ञानञ्चेत्यर्थः, स्वाव्यवहितपूर्वमिति शेषः, 'स्वपरेति कर्मत्वादौ घटादिमत्त्वानुभवोत्पत्तिं विनेत्यर्थः । ननु श्रुतपदेभ्य एव तात्पर्य्य-

---

(१) तात्पर्य्यग्रह इति क० ।

(२) घटपदमाधेयत्वसंसर्गेण स्वार्थघटप्रकारक-कर्म्मत्वविशेष्यकप्रतीतिपरमित्यादिरूपेणेत्यर्थ इति क० ।

पन्नमिति पदानि सम्भूय जनयन्ति, अत एव[१] नानार्थे विनिगमना, तदनुपपत्तिरेव लक्षणावीजं तदभावादेव पचतिपदे[२] न स्मृतकलायान्वयबोध इति सिद्धं शब्दस्य प्रमाणान्तरत्वं । तस्य च निराकाङ्क्षादौ संस-

ग्रहात्पूर्वं कर्मत्वादौ घटादिमत्त्वानुभवः स्यादित्यत आह, 'पदानीति, 'सम्भूय' तात्पर्य्यग्रहेण समं मिलित्वेव, तथाचान्योन्याश्रय इति भावः । इदमुपलक्षणं विशिष्य तत्परत्वग्रहस्य हेतुत्वे शब्दमात्रस्यानुवादकतापत्तेश्चेत्यपि बोध्यं । 'अतएवेति एतादृशतात्पर्य्यग्रहस्य शाब्दधीहेतुत्वादेवेत्यर्थः, न तु प्रकरणादिज्ञानस्य हेतुत्वादिति भावः । 'विनिगमनेति शक्तिजन्योपस्थित्यादेरितरसकलकारणस्याविशिष्टत्वेऽपि कदाचिदेकमर्थमादायैवान्वयबोध इत्यर्थः, 'तदनुपपत्तिरेवेति, 'अत एवेत्यनुषज्यते, 'एवकारोऽप्यर्थे, तात्पर्य्यानुपपत्तिरपीत्यर्थः, 'लक्षणावीजमिति यष्टीः प्रवेशयेत्यादौ शक्त्या वाक्यार्थस्मरणस्य[३] शक्यार्थयोग्यतादिज्ञानस्य च सत्त्वेपि लक्ष्यार्थस्यैवान्वयबोधइत्यत्र नियामक इत्यर्थः, तदानीं शक्त्या अन्वयबोधाभावे नियामकइति तु फलितार्थः, तथाच न तादृशसिद्धान्तव्याघात इति भावः । 'तदभावादिति, 'अत एवेत्यनुषज्यते, 'पचतिपदइति प्रयुक्त इति शेषः, 'स्मृतेति अन्योक्तकलायपदात् स्मृतेत्यर्थः, 'शब्दस्य' लोकवेदसाधारणशब्दस्य, 'प्रमाणान्तरत्वमिति अनुमानादिभिन्नत्वे सत्यगृहीतग्राहिस्वार्थानुभवजनकत्वमित्यर्थः, ।

(१) तत एवेति क०, ख० । (२) पचतीतिपदे इति क० ।
(३) शक्यार्थस्मरणस्येति क० ।

र्थज्ञानाजनकत्वात् आकाङ्क्षादिकं सहकारीति ।

---

अत्राभिनववैशेषिकैकदेशिनः लाघवात्तत्पदार्थवत्तत्पदार्थप्रतीतीच्छयोच्चरितत्वरूपतात्पर्य्यस्य घटत्व-कर्मत्वादिना विशेषतोधीरेव लोक-वेदसाधारणशाब्दधीसामान्यहेतुः, वह्निना सिञ्चतीत्यादौ वह्निकरणकत्ववत्सेकप्रतीतेरप्रसिद्धावपि खण्डशः प्रसिद्धा वह्निकरणकत्ववत्सेकप्रतीतिपरमिति भ्रमरूपतज्ज्ञानसम्भवात् न तु तद्विशेष्यक-तत्प्रकारकप्रतीतीच्छयोच्चरितत्वधीः, तत्तत्सम्बन्धावच्छिन्नप्रकारिताप्रवेशे[१] गौरवात्, न वा वेदस्थले चित्रवत्कपिञ्जलपदार्थपरमित्यादिक्रमेण सामान्यतस्तन्निश्चयोहेतुः लोके च घटवत्कर्मत्वपरमित्यादिक्रमेण विशेषतस्तन्निश्चयोहेतुरिति मीमांसकाभिमतकार्य्यकारणभावभेदः कार्य्य-कारणभावद्वयकल्पने गौरवात् लोकस्थले विशेषतस्तादृशनिश्चयहेतुत्वसाधकपूर्वोक्तयुक्तेरुक्तक्रमेण वेदस्थलेऽप्यविशेषाच्च । तथाच लोक-वेदसाधारणं शब्दमात्रमेवानुवादकं । न चैवं वेदस्यानुवादकत्वादप्रामाण्यापत्तिरिति वाच्यं। अगृहीतग्राह्यनुभवजनकत्वरूपप्रामाण्याभावे क्षतिविरहात् तावतापि यथार्थानुभवजनकत्वरूपप्रामाण्यस्यानपायात् । न च शाब्दधीपूर्वं तत्पदार्थे तत्पदार्थवत्त्वज्ञानाभावात्तादृशतात्पर्य्यं दुर्ग्रहमिति वाच्यम् । लाघवात्तादृशतात्पर्य्यधियोहेतुत्वे क्लृप्तेऽनायत्या व्यभिचारिणा अव्यभिचारिणा वा पक्षधर्म्मेणापक्षधर्म्मेण वा येन केनापि लिङ्गेन जन्मा-

---

(१) विशेष्यतादितत्तत्सम्बन्धावच्छिन्नप्रकारितादिप्रवेश इति क० ।

न्तरीयोद्बुद्धसंस्कारेण मनसा वा येन केनापि प्रकारान्तरेण च तत्पदार्थे तत्पदार्थवत्त्वज्ञानस्याप्यवश्यं कल्पनीयत्वात्तद्विरहदशायां शाब्दबोधानुभवस्य चासिद्धत्वात्। अन्यथा तवापि सर्वत्र प्रथमं तद्विशेष्यक-तत्प्रकारकप्रतीतेरज्ञानात्कथन्तद्घटिततात्पर्य्यनिर्णय इत्यस्य दुःसमाधेयत्वादिति प्राञ्चः। तदसत्। तत्तत्सम्बन्धावच्छिन्नप्रकारितात्यक्तीनां स्वरूपतः संसर्गविधया प्रवेशेन गौरवाभावात् यथोक्ततात्पर्य्यग्रहस्यैव हेतुत्वे कर्मत्वविशेष्यक-घटप्रकारकप्रतीतीच्छयोच्चरितं न वेत्यादिसंशये तादृशप्रतीतीच्छयोच्चरितं नेत्यादिव्यतिरेकनिश्चये वा घटवत्कर्मत्वमित्यादिशाब्दबोधप्रसङ्गाच्च तात्पर्य्यज्ञानहेतुताया एवाग्रे निराकर्त्तव्यत्वाच्च शुकादितोतात्पर्य्यव्यतिरेकनिश्चयेऽपि शाब्दबोधोदयात्। न चेश्वरं तत्र तात्पर्य्यं फलैकानुमेयतया प्रथमं दुरवधारणात्। अत एवेश्वरविरहनिश्चयेऽपि वेदेऽन्वयबोधः। न च पूर्वाध्यापकतात्पर्य्यं, तत्र मीमांसानधिष्ठितेनोदीरिते शाब्दबोधापत्तेः। कुतस्तर्हि मीमांसोपयोग इति चेत्, वेदार्थान्वयबोधे साचादेव अन्वय-व्यतिरेकाभ्यान्तथैव कल्पनात्। उक्तञ्च मणिकृता न्यायजन्यज्ञानप्रकारणादीनामन्यतममिति समासः[१]।

नन्वेतादृशतात्पर्य्यनिश्चयस्य शाब्दधीहेतुत्वे किमाकाङ्क्षा-योग्यतासत्तिज्ञानस्य हेतुत्वेनेत्यत आह, 'तस्येति निरुक्ततात्पर्य्यनिश्चयस्येत्यर्थः, 'निराकाङ्क्षादौ' आकाङ्क्षाद्यभाववत्तया निश्चिते, 'संसर्ग-

---

(१) शुकादित इत्यादिः समास इत्यन्तः पाठः ख०-ग० पुस्तकद्वये नास्ति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शब्दाप्रामाण्यवादः ॥

---

ज्ञानाजनकत्वात्' शाब्दबोधाजनकत्वात्, 'आकाङ्क्षादिकं' आकाङ्क्षादिज्ञानं, 'आदिपदाद्योग्यतासत्तिपरिग्रहः ।

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये शब्दाप्रामाण्यवादरहस्यं ॥

## अथाकाङ्क्षा ।

अथ केयमाकाङ्क्षा, न तावदविनाभावः, नीलं

---

## अथाकाङ्क्षारहस्यं ।

प्रसङ्गादाकाङ्क्षां निरूपयितुं पृच्छति, 'अथ केति 'आकाङ्क्षा-दिकं सहकारीति यदुक्तं तत्र आकाङ्क्षा केत्यर्थः, 'अविनाभाव-इति तत्पदार्थेन विना यो भावः सत्त्वं तदभाव इत्यर्थः, तत्पदार्थे तत्पदार्थाभाववद्वृत्तित्वाभावस्तत्पदार्थे तत्पदार्थाकाङ्क्षेति भावः । अस्ति च अयं घट इत्यादौ इदम्पदार्थे घटपदार्थाभाववद्-वृत्तित्वाभावः, वृत्तित्वन्तादात्म्यसम्बन्धेन बोध्यं, अन्यथा चैत्रः पचति रथोगच्छतीत्यादौ चैत्रादिपदार्थस्याख्यातपदार्थसाकाङ्क्षता[१] न स्यात् चैत्रादौ तिप्पदार्थाभाववद्वृत्तित्वाभावाभावात्[२] तत्पदार्थाभावस्तु यत्सम्बन्धेन येन रूपेण तत्पदार्थान्वयोभविष्यति तत्सम्बन्धावच्छिन्न-

---

(१) तिप्पदार्थसाकाङ्क्षतेति ख०, ग० ।

(२) चैत्रादेः कृत्यादिरूपतिप्पदार्थाभाववति भूतलादौ वर्त्तमानत्वादिति भावः । ननु तथापि संयोगादिसम्बन्धेन विशिष्टरूपादिना वा कृत्याद्य-भाववति स्वस्मिन् उक्तसम्बन्धेन चैत्रादेर्वृत्तेस्तद्दोषतादवस्थ्यमित्यभावो-ऽपि अन्वयितावच्छेदकसम्बन्धेन तादृशरूपेण च वाच्य इत्याह, तत्पदा-र्थाभावस्त्विति ।

सरोजमित्यादावभावात्। विमलं जलं नद्याः कच्छे महिष इत्यत्र[1] जलान्वितनद्या अविनाभावात्[2] कच्छे साकाङ्क्षतापत्तेः। नापि समभिव्याहृतपदस्मा-

---

तद्रूपावच्छिन्नप्रतियोगिताकोवाच्यः, एवञ्च तत्पदार्थे तत्सम्बन्धेन तद्धर्मविशिष्टतत्पदार्थस्यान्वये तत्पदार्थे तत्सम्बन्धावच्छिन्न-तद्धर्माव-च्छिन्नप्रतियोगिताकतत्पदार्थाभाववदन्यत्वमाकाङ्क्षेति फलितार्थः, आकाङ्क्षाया अर्थधर्मत्वाभिप्रायेणेदन्तेन शब्दानिष्ठत्वेऽपि न क्षति-रिति मन्तव्यं। ननु तत्पदार्थतावच्छेदकावच्छेदेन तत्पदार्थे तत्प-दार्थाभाववदन्यत्वं विवक्षितं यत्किञ्चित्तत्पदार्थे तत्पदार्थाभाववद-न्यत्वं वा, आद्ये आह, 'नीलमिति, सरोजत्वावच्छेदेन नीलान्यत्व-वदन्यत्वाभावादिति भावः। नीलं सरोजमित्यादौ आदिपदात्[3] नीलोघटः पीतो घट इत्यादेः सङ्ग्रहः, द्वितीये आह, 'विमल-मिति, 'नद्या इति षष्ठ्यर्थनदीसम्बन्धस्येत्यर्थः, षष्ठ्यर्थसम्बन्धेन नदी-जलयोरेव साक्षादन्वय इति सम्प्रदायमते यथाश्रुतमेव साधु। 'अवि-नाभावात्' कच्छविशेषेऽविनाभावात्, 'साकाङ्क्षतेति नदीपदोत्तर-षष्ठीपदार्थसाकाङ्क्षतेत्यर्थः, सम्प्रदायमते षष्ठ्यर्थसम्बन्धेन नदीपदार्थ-साकाङ्क्षतेत्यर्थः, इदमुपलक्षणं घटः कर्मत्वमित्यादावतिप्रसङ्गः[4].

---

(१) महिषश्चरतीत्यत्रेति ख०।

(२) अविनाभूतत्वादिति ख०, ग०।

(३) आदिनेति ख०, ग०।

(४) कर्म्मत्वादौ आधेयतासम्बन्धेन घटादिमत्त्वादिति भावः।

प्रमेयमभिधेयमित्यादावप्रसङ्गस्य अन्वयितावच्छेदकतादात्म्यसम्बन्धे-नाभिधेयत्वावच्छिन्नाभावस्याप्रसिद्धेः, एवं विसम्बादिनि बोधकवाक्ये-ऽव्याप्तिः,[१] योग्यतायाः पृथक् प्रयोजकत्वानुपपत्तिश्चेत्यपि बोध्यं। 'समभिव्याहृतेति समभिव्याहृतपदस्मारितपदार्थे जिज्ञासा समभि-व्याहृतपदस्मारितपदार्थजिज्ञासा इति सप्तमीतत्पुरुषः, 'समभि-व्याहृतेत्यस्य प्रकृतेत्यर्थः, 'पदार्थेत्यस्य च प्रकृतपदस्मारितेत्यर्थः, तथाच प्रकृतपदसमभिव्याहृतपदस्मारिते प्रकृतपदस्मारितस्य जिज्ञा-साकाङ्क्षेत्यर्थः, प्रकृतपदसमभिव्याहृतयत्पदस्मारिते यत्र येन सम्बन्धेन प्रकृतपदस्मारितस्य यस्यान्वयबोधः तत्पदस्मारिते तत्र तेन सम्बन्धेन तत्पदस्मारितस्य तस्य शाब्दबोधेच्छा तत्पदे तत्पदाकाङ्क्षेति[२] तु फलितार्थः, उदासीनपदस्मारितपदार्थजिज्ञासायामतिव्याप्तिवार-णाय 'समभिव्याहृतेति, तच्च सम्भूयैकार्थप्रतिपादकतात्पर्यकत्वं न

---

(१) वह्निना सिञ्चतीत्ययोग्यवाक्ये इत्यर्थः, अव्याप्तिरिति तथाचोक्तस्थले वह्न्या-दिकरणकत्वाभाववति सेकादौ तादात्म्येन सेकादेर्वृत्तेरिति भावः। ननूक्तस्थले लक्ष्यतैव नाद्रियते अन्वयानुभावकत्वन्तु तस्य साकाङ्क्षत्वभ्र-मादेवेति चेत् तस्य निराकाङ्क्षताव्यवहारः स्यात्, स्यादेवेति चेत् अन्वयबोधयोग्यतायाः प्रयोजकत्वविलोपप्रसङ्गः सर्व्वत्रैवायोग्यस्थले निराकाङ्क्षतयैवान्वयाननुभावकत्वस्य सम्भवे योग्यत्वाभावस्य तत्प्रयोज-कत्वकल्पनानौचित्यादित्याशयेनाह, योग्यताया इति।

(२) तथाच प्रकृतपदस्मारिते प्रकृतपदस्मारितस्य जिज्ञासाकाङ्क्षेत्यर्थः, तत्-सम्बन्धेन तत्पदस्मारिते तत्र तत्पदस्मारितस्य तस्यान्वयबोधे तत्सम्ब-न्धेन तत्पदस्मारितस्य तस्य शाब्दबोधेच्छा तत्पदे तत्पदाकाङ्क्षेति तु फलितार्थ इति ख०, ग०।

रितपदार्थजिज्ञासा, अजिज्ञासोरपि वाक्यार्थबोधात् विश्वजिता यजेत द्वारं इत्यत्रापदार्थयोरप्यधिकारिणोऽध्याहृतस्य पिधानस्य चाकाङ्क्षितत्वाच्च, तत्र शब्द-

---

त्वेकानुसन्धानविषयत्वं विमलञ्जलमित्यादावतिप्रसङ्गात्[१]। न च तत्पदस्मारितेतित्यर्थं तत्र तस्यान्वये तत्र तस्य शाब्दबोधेच्छा आकाङ्क्षेत्यस्यैव सम्यक्त्वादिति वाच्यं। प्रकारान्तरेणोपस्थिते[२] घटादौ प्रकारान्तरोपस्थितस्य नीलादेः शाब्देच्छायामपि नीलोघट इत्यादिवाक्यात् घटादौ नीलाद्यन्वयबोधापत्तेराकाङ्क्षासत्त्वात्। न च तत्राकाङ्क्षासत्त्वेऽपि पदजन्यपदार्थोपस्थितेः कारणान्तरस्य विरहान्नान्वयबोध इति वाच्यं। एतादृशाकाङ्क्षावादिना[३] पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वानभ्युपगमात्। स्मारितत्वञ्च वृत्त्या स्मारितत्वं बोध्यं तेन कार्य्यत्व-कारणत्वादिसम्बन्धेन घटादिपदस्मारिताकाशादिजिज्ञासा[४] नाकाङ्क्षेति भावः। 'अजिज्ञासोरपीति शाब्देच्छाशून्यस्यापीत्यर्थः, मीमांसकमतेन दूषणमाह, 'विश्वजितेति, 'अपदार्थयोरपीति पदास्मारितयोरपीत्यर्थः, 'अधिकारिण इति स्वर्गकामस्य कर्त्तुरित्यर्थः, अध्याहृतस्येत्यादिः, 'अकाङ्क्षितत्वाच्च' विध्यर्थ-

---

(१) उदासीनेत्यादिः प्रसङ्गादित्यन्तः पाठः ख० ग० पुस्तकद्वये नास्ति।

(२) उभयत्र प्रकारान्तरेणेत्यस्य चाक्षुषादितः संस्कारवशेनेत्यर्थः।

(३) एतादृशाकाङ्क्षावादिनय इति ख०, ग०।

(४) एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकतया आकाशादिजन्यघटादिपदप्रयोज्यस्मृतिविषयत्वमाकाशादेरिति भावः।

**कल्पनपक्षेऽपि घटः कर्म्मत्वमानयनं कृतिरित्यत्र जिज्ञासितस्यानयनादेराकाङ्क्षितत्वापत्तेः। अथ जिज्ञासायोग्यता[१] सा, जिज्ञासा च विशेषाज्ञाने भवति,**

---

द्वितीयार्थसाकाङ्क्षत्वाच्च, उक्तजिज्ञासाया आकाङ्क्षात्वे तु तन्न स्यात् अध्याहृतस्वर्गकामादेः पदस्मारितत्वाभावेन तज्जिज्ञासाया आकाङ्क्षात्वाभावादिति भावः। स्वमतेन दूषणमाह, 'तत्रेति स्वर्गकामादिशब्दाध्याहारपक्षेऽपीत्यर्थः, 'जिज्ञासितस्येति आधाराधेयभावसंसर्गक[२]कर्मत्वादिपदस्मारितकर्मत्वादिप्रकारकशाब्देच्छाविषयस्य आनयनादिपदस्मारितस्यानयनादेरित्यर्थः, 'आकाङ्क्षितत्वापत्तेः' आधाराधेयभावसम्बन्धेन[३] कर्मत्वपदस्मारितकर्मत्वसाकाङ्क्षत्वापत्तेः। अत्र यत्पदोपस्थापिते यत्पदोपस्थितिप्रयुक्ता यत्पदोपस्थापितान्वयजिज्ञासा तयोराकाङ्क्षा इति लक्षणे नायन्दोषः। यद्यपि घट इत्युक्ते कर्मत्वन्न वेति जिज्ञासानुदयस्तथापि जिज्ञासासामान्यमभिप्रेत्येदं, विशेषजिज्ञासामादाय 'अथ ज्ञाप्य-तदितरेत्यादिलक्षणं वक्ष्यति इति ध्येयं[४]। आचार्य्यीयं लक्षणमाह, 'जिज्ञासेति शाब्दबोधेच्छा योग्यतेत्यर्थः, 'सा' आकाङ्क्षा। ननु योग्यतैव किमित्यत आह, 'जिज्ञासा चेति, 'च:' हेतौ, यस्मादित्यर्थः, 'विशेषाज्ञाने' विशेषाज्ञन एव, शाब्दबोधेऽनुत्पन्न एवेति यावत्, अन्यथा सिद्धेरिच्छाविरहादिति भावः। 'भवतीति, अतइति शेषः, यत्सत्त्वे यत्स-

---

(१) जिज्ञासां प्रति योग्यतेति ख०। (२) निरूपकत्वादिसंसर्गकेति ख०, ग०।

(३) निरूपकतासम्बन्धेनेति ख०, ग०।

(४) अथेत्यादिर्ध्येयमित्यन्तः पाठः ख० ग० पुस्तकद्वये नास्ति।

योग्यता च श्रोतरि तदुच्चारणजन्यसंसर्गावगम-

---

श्राव्यते तस्यैव तद्योग्यतात्वं। न च शाब्दबोधे उत्पन्ने कदापि शाब्देच्छेति, तदभाव एव योग्यतेति भावः। 'श्रोतरीति, घटः कर्मत्वमित्यादावतिव्याप्तेर्वारणाय 'जन्येति, 'तदुच्चारणं' तद्वाक्यज्ञानं, अतो न मौनिश्लोकाव्याप्तिः। तथाच श्रोतृनिष्ठतद्वाक्यज्ञानजन्यतादृशशाब्दबोधप्रागभावस्तद्वाक्यज्ञानेन तादृशशाब्दबोधे जननीये आकाङ्क्षेत्यर्थः, एकस्य पुरुषस्य तादृशशाब्दबोधप्रागभावस्य सत्त्वेऽपि अन्यपुरुषस्य तादृशशाब्दबोधानुत्पादात् सामानाधिकरण्यप्रत्यासत्त्या आकाङ्क्षाया हेतुत्वलाभाय श्रोतृनिष्ठेति प्रागभावविशेषणं, न तु लक्षणान्तर्गतं, घटः कर्मत्वमित्यादौ घटवत्कर्मत्वमित्यादिभेदान्वयबुद्ध्यभावसम्पत्तये तद्वाक्यज्ञानजन्येति। इत्यस्य[१] तत्र तद्वाक्यज्ञानजन्यतादृशशाब्दबोधाप्रसिद्ध्या तत्प्रागभावाभावान्न तादृशान्वयबोधइत्यभिमानः। तदिति वाक्यज्ञानविशेषणं न तु वाक्यविशेषणं प्रयोजनञ्चानुपदं स्फुटीभविष्यति, घटः कर्मत्वमित्यादौ तादात्म्यसंसर्गकघटकर्मत्वाद्यन्वयबोधप्रागभावमादाय घटवत्कर्मत्वमित्यादि-

---

(१) ननु घटः कर्म्मत्वमित्यादौ प्रागभावप्रतियोगिनि ज्ञाने तद्वाक्यज्ञानजन्यत्वविशेषणदानेऽपि न कथं भेदेनान्वयबोधः तद्वाक्यज्ञानस्य पदार्थोपस्थित्यादिरूपसामग्रीसहितत्वात् तादृशप्रागभावाभावस्य च भेदेन तादृशान्वयबोधानुत्पादमात्रनिर्वाह्यत्वादित्याशङ्कां तद्वाक्यज्ञानस्य तादृशान्वयबोधजनकत्वाभावमुक्त्वा निरस्यति, इत्यस्येत्यादिना, तथाच तद्वाक्यज्ञानं भेदान्वयबोधं न जनयतीति भावः।

**प्रागभावः, विमलं जलं नद्याः कच्छे महिष इत्यत्र[1] तात्पर्य्यवशात् कदाचित् नद्याः कच्छे संसर्गावगमात्**

---

भेदान्वयबोधे साकाङ्क्षत्ववारणाय तादृशेति,[2] खण्डवाक्यार्थबोधानन्तरं खण्डवाक्यार्थघटितमहावाक्यार्थबोधोत्पादात् नीलोघट-इत्यादौ वक्तुः क्रमिकशाब्दबोधद्वयेच्छायां धारावाहिकशाब्दबोधद्वयोत्पादाच्च सामान्याभावत्वमपहाय प्रागभावत्वेनोपादनं। न च ज्ञानस्याव्याप्यवृत्तितया तादृशशाब्दबुद्धिसत्त्वेऽपि तादृशशाब्दबुद्धिसामान्याभावसत्त्वान्न खण्डवाक्यार्थबोधाद्यनन्तरं महावाक्यार्थबोधाद्यनुपपत्तिरिति वाच्यं। तथासति तादृशेच्छां विनापि धारावाहिकशाब्दबोधापत्तेरिति भावः। नन्वेवमपि नदी-जलान्वयबुद्धिमात्रतात्पर्य्यके अहोविमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्र नदी-जलयोरन्वयबोधानन्तरं नदी-कच्छयोः कथन्नान्वयबोधः तद्वाक्यस्यैव ज्ञानेन नदी-कच्छयोरन्वयबोधे तात्पर्य्यग्रहदशायां नदी-कच्छयोरप्यन्वयबोधजननात्तद्वाक्यज्ञानजन्यतादृशान्वयबुद्धिप्रागभावसत्त्वात्। न च तात्पर्य्यज्ञानाभावान्न तदानीं तादृशान्वयबोध इति वाच्यं। तदानीमाकाङ्क्षाभावान्नान्वयबोध इति सकलप्राचीनप्रवादविरोधापत्तेरित्यत आह, 'विमलमिति, 'तात्पर्य्यवशात्' तात्पर्य-

---

(१) महिषश्चरतीत्यत्रेति क०।

(२) तथाच तादृशप्रागभावस्य चाकाङ्क्षात्ववादिनये उक्तवाक्यात् भेदान्वयबोध एव नास्तीत्यभिमानः, अन्यथा तादृशपदस्योपादानेऽपि उक्तस्थले साकाङ्क्षत्वापत्तिः तद्वाक्यीयतज्ज्ञानजन्यभेदान्वयबोधप्रागभावसत्त्वादिति भावः।

तत्प्रागभावसत्त्वेऽपि श्रोतरि तदुच्चारणेन तात्पर्य्यवशात् जलान्वितनद्याः कच्छे संसर्गावगमोनेति न तत्प्रागभावः, घटः कर्मत्वमानयनमित्यत्रापि तथेति चेत्। न। निराकाङ्क्षे तदुच्चारणजन्यसंसर्गावगमप्रागभावस्य सिद्ध्यसिद्धिपराहतत्वात्। किञ्च यत्रैकोविमलं जलमि-

---

ज्ञानवशात्, 'तत्प्रागभावेति तद्वाक्यज्ञानजन्यनदी-कच्छान्वयबोधप्रागभावसत्त्वेऽपीत्यर्थः, 'तदुच्चारणेनेति तद्वाक्यविषयकयज्ज्ञानव्यक्त्या नदी-जलयोरन्वयबोधोजनितस्तज्ज्ञानव्यक्त्येत्यर्थः, अस्य च 'संसर्गावगमोनेत्यनेनान्वयः, 'तात्पर्य्यवशादिति तात्पर्य्यवशात् जलान्वितायानद्या इत्यर्थः, 'संसर्गावगमोनेति अन्वयबोधोन जन्यत इत्यर्थः, 'न तत्प्रागभाव इति न तद्वाक्यविषयकतज्ज्ञानव्यक्तिजन्यनदी-कच्छान्वयबुद्धिप्रागभाव इत्यर्थः, तथाच तदिति वाक्यज्ञानविशेषणं न तु वाक्यविशेषणमिति भावः। इदमुपलक्षणं तदित्यस्य वाक्यविशेषणत्वे नीलोघट इत्यादौ वक्तुः क्रमिकशाब्दबोधद्वयेच्छां विनापि नीलोघटः नीलोघट इत्यादिधारावाहिकशाब्दबोधापत्तेः तद्वाक्यस्यैव स्मरणेनान्यदा नीलोघट इति शाब्दबुद्धेर्जननीयत्वान्नीलोघट इति शाब्दबुद्धिदशायामपि तादृशशाब्दबोधप्रागभावसत्त्वादित्यपि बोध्यं। 'तथेति तदुच्चारणजन्यघटवत्कर्मत्वमिति भेदान्वयबुद्धिप्रागभावेनेत्यर्थः। 'निराकाङ्क्ष इति घटः कर्मत्वमित्यादावित्यर्थः, 'तदुच्चारणजन्येति तज्ज्ञानजन्येत्यर्थः, 'संसर्गावगमेति घटवत्कर्मत्वमित्यादिभेदान्वयबुद्धिप्रागभावस्येत्यर्थः, 'सिद्ध्यसिद्धिपराहतत्वादिति तादृश-

त्यश्रुत्वैव तात्पर्य्यभ्रमेण वा नद्याः कच्छान्वयपरत्वम-
वैति, अपरः समस्तमेव श्रुत्वा नद्या जलान्वयपरत्व-
मवधारयति, तत्रोभयोरपि तदुच्चारणजन्यसंसर्गाव-
गमात् नद्या इत्युभयसाकाङ्क्षं[१] स्यात् ।

---

प्रागभावस्य सिद्ध्यसिद्धिभ्यां घटः कर्मत्वमित्यादि वाक्यं घटवत्कर्म-
त्वमित्यादिभेदान्वयबोधे निराकाङ्क्षमिति व्यवहारविलोपप्रसङ्गादि-
त्यर्थः, स्वज्ञानजन्यतादृशान्वयबुद्धिप्रागभावकालीनत्वाभावस्य अत्र-
नये तादृशव्यवहारविषयत्वात्, स्वपदं घटः कर्मत्वमित्याद्यानुपूर्व्वी-
विशेषविशिष्टवाक्यपरमिति भावः । ननु तादृशप्रागभावकालीनं
यद्यत्तद्भिन्नत्वमेव तादृशव्यवहारविषय इति नायन्दोष इत्यरुचे-
राह, 'किञ्चेति, 'यत्रेति, नदी-जलान्वयबोधतात्पर्य्येण विमलं जलं
नद्याः कच्छे महिषश्चरतीति प्रयुक्ते इति शेषः, 'एकः' पुरुषः,
'जलमितीति विमलं जलं इत्येकदेशमश्रुत्वैवेत्यर्थः, 'तात्पर्य्यभ्रमेण
वेति तात्पर्य्यस्य भ्रमोयस्मादिति व्युत्पत्त्या तात्पर्य्यव्याप्यस्य प्रकर-
णादेर्भ्रमेण वेत्यर्थः, यथाश्रुते नद्याः कच्छान्वयपरत्वावगमस्यैव
तात्पर्य्यभ्रमतया तत्रास्य हेतुत्वासङ्गतेः, 'नद्या इति नदी-कच्छा-
न्वयबोधे तात्पर्य्यमवैतीत्यर्थः, 'अपरः' पुरुषः, 'नद्या इति नदी-
जलान्वयबोधे तात्पर्य्यमवधारयतीत्यर्थः, 'उभयोरपीति, जले कच्छे
चेत्यर्थः, 'संसर्गावगमादिति, नद्या अन्वयबोधादित्यर्थः, 'उभयसाका-
ङ्क्षमिति, युगपन्नदीजलान्वयबोध-नदीकच्छान्वयबुद्ध्युभयसाकाङ्क्षता-

---

[१] उभयाकाङ्क्षमिति क०, ख० ।

अपि च प्रागभावाभावस्य कारणान्तराभावव्याप्त-

---

व्यवहारविषयः स्यादित्यर्थः, नद्या इति वाक्यमिदानीं नदीकच्छा-न्वयबुद्धिसाकाङ्क्षं नदीजलान्वयबुद्धिसाकाङ्क्षञ्चेति व्यवहारः स्यादिति समुदितार्थः, युगपत् स्वजन्यनदीकच्छान्वयबोधप्रागभावविशिष्टज्ञान-स्वजन्यनदीजलान्वयबुद्धिप्रागभावविशिष्टज्ञानयोरुभयोरेव विषयता-सम्बन्धेन सत्त्वात् विषयतासम्बन्धेन तथाभूतज्ञानस्यैव भवन्नये तादृश-व्यवहारविषयत्वात् स्वपदद्वयं ज्ञानपरं, वैशिष्ट्यञ्चैककालवृत्तित्वं। न च युगपत् तथा व्यवहारे इष्टापत्तिरिति वाच्यं। यस्मिन्नन्वयबोधे तात्पर्य्यं नास्ति तत्र निराकाङ्क्षत्वव्यवहारस्यैव सर्व्वसिद्धत्वात्[१] इति भावः। ननु व्यवहारोपयोग्याकाङ्क्षालक्षणे वक्तुस्तात्पर्य्यविषयत्वेना-न्वयबोधो विशेषणीयः। न चैवं यत्र यत्र तात्पर्य्यभ्रमाच्छाब्दबोध-स्तत्रैव निराकाङ्क्षत्वव्यवहारापत्तिरिति वाच्यं। तत्र निराकाङ्क्षत्व-व्यवहारस्य सकलप्राचीनसम्मतत्वादित्यरुचेराह, 'अपि चेति।

केचित्तु 'उभयसाकाङ्क्षं स्यादित्यस्य नदीकच्छान्वयबुद्धिसाकाङ्क्षं नदीजलान्वयबुद्धिसाकाङ्क्षञ्च स्यादिति यथाश्रुत एवार्थः। न चेष्टा-पत्तिरुभयत्राकाङ्क्षाविरहे उभयान्वयबोधस्यैवानुपपत्तेरिति वाच्यं। यस्मिन्नन्वयबोधे तात्पर्य्यं नास्ति तत्राकाङ्क्षाभ्रमजन्यताया एव सर्व्व-सिद्धत्वादिति भावः। ननु तदुच्चारणजन्यवक्तुस्तात्पर्य्यविषयतादृशा-न्वयबुद्धिप्रागभावस्तदुच्चारणजन्यतादृशान्वयबोधे आकाङ्क्षेति विवक्ष-णीयं, तथाच तात्पर्य्यांशे भ्रमादेव तत्राकाङ्क्षाभ्रम इत्यरुचेराह,

---

(१) सर्व्वसम्मतत्वादिति ख०।

त्वात् तत एव कार्य्याभाव इति किमाकाङ्क्षया। एवञ्च

---

'अपि चेति, इत्याहुः। तदसत् एतादृशाकाङ्क्षायाः शाब्दधीहेतुत्वे प्रकृते नदीकच्छान्वयबुद्धेरनुपपत्तेः तत्र तात्पर्य्यविरहात्। न चेयं स्वरूपसती न हेतुः किन्तु ज्ञातेति तात्पर्य्यांशे भ्रमात्मकतज्ज्ञानान्नदीकच्छान्वयधीरिति[१] वाच्यं। अस्याः स्वरूपसद्धेतुत्व एव 'अपि चेत्यादिदूषणसङ्गतेरिति दिक्। 'प्रागभावाभावस्येति[२] विमलं जलमित्यादौ नदीजान्वयबोधोत्तरं नदीकच्छान्वयबोधानुत्पत्तिस्थले तदुच्चारणजन्यनदीकच्छान्वयबुद्धिप्रागभावाभावस्येत्यर्थः, 'कारणान्तराभावेति श्रोतृनिष्ठनदीकच्छान्वयबोधतात्पर्य्यज्ञानात्मककारणान्तराभावव्याप्यतयेत्यर्थः। मध्ये तात्पर्य्यभ्रमे जाते नदीजलान्वयबोधानन्तरमपि नदीकच्छान्वयबोधस्य सर्व्वसम्मतत्वादिति भावः। 'कार्य्याभाव इति नदीकच्छान्वयबोधाभाव इत्यर्थः,[३] 'किमाकाङ्क्षयेति किं तदुच्चारणजन्यतादृशान्वयबुद्धिप्रागभावस्वरूपाया आकाङ्क्षायास्तादृूप्येण हेतुतयेत्यर्थः। प्रमाणान्तरासत्त्वे प्राचीनप्रवादान्यथानुपपत्तिमात्रस्य कारणत्वासाधकत्वादिति भावः[४]।

---

(१) नदीकच्छान्वयबोधः स्यादिति क०।

(२) ननु नदीजलान्वयबुद्ध्युत्तरं नदीकच्छान्वयबोधापत्तिवारणायाकाङ्क्षाहेतुत्वं वक्तव्यं तदेव न इत्याशयेनाह, 'प्रागभावेत्यादि।

(३) तथाच तदुच्चारणजन्यतादृशशाब्दधीप्रागभावविरहो न तादृशकार्य्यानुत्पादप्रयोजक इति न तस्य कारणत्वमिति भावः।

(४) कारणत्वासाधकत्वादित्यर्थ इति ख०, ग०।

योग्यतासत्ती अपि न हेतू अयोग्ये अनासन्ने च तदु-
च्चारणजन्यसंसर्गज्ञानाभावेन तत्प्रागभावाभावात्[१]।
न चैवं बाधाभावस्यानुमित्यादावपि हेतुत्वं, प्रागभावा-

---

यथाश्रुतन्तु[२] न सङ्गच्छते उत्पन्नपुनरुत्पादस्थले प्रागभावेतरसकल-
कारणसत्त्वेऽपि प्रागभावविरहेण व्यभिचारात्[३] अन्यथा प्रागभावस्य
हेतुतैव न सिद्ध्येदिति ध्येयं। ननु नदीजलान्वयबोधतात्पर्य्यके अहो
विमलं जलमित्यादौ नदी-जलयोरन्वयबोधानन्तरं नदी-कच्छा-
न्वयबोधवारणाय नोक्ताकाङ्क्षा हेतुरपि तु घटः कर्म्मत्वमित्यादौ
घटवत् कर्म्मत्वमित्यादिभेदान्वयबोधस्य घटमानयेत्यादौ वक्तुः शाब्द-
बोधद्वयेच्छां विनापि धारावाहिकशाब्दबोधस्य च वारणाय सा
हेतुस्तथैव कारणान्तराभावस्य वक्तुमशक्यत्वादतो दोषान्तरमाह,
'एवञ्चेति,[४] 'न हेतू', स्यातामिति शेषः, 'अयोग्ये अनासन्ने चेति'
घटः कर्म्मत्वमित्यादाविवेति शेषः, 'तत्प्रागभावाभावात्' तदुच्चा-
रणजन्यसंसर्गावगमप्रागभावस्यैवाभावात्, शाब्दबोधाभावोपपत्तेरिति
शेषः। ननु अनुमित्यादिस्थले लाघवतो विशिष्टबुद्धिसामान्यं
प्रत्येव तदभावनिश्चयाभावस्य हेतुत्वकल्पनाच्छाब्दबोधेऽपि बाधा-

---

(१) तत्प्रागभावाभावसत्त्वादिति क०।

(२) प्रागभावत्वेन प्रागभावकारणताखण्डनन्त्वित्यर्थः।

(३) कारणसत्त्वे कार्य्यानुत्पादादित्यर्थः।

(४) उक्ताकाङ्क्षाया हेतुत्वे चेत्यर्थः।

भावेनैव कार्य्याभावात् प्रागभावस्य च कार्य्यमात्र-

---

भावरूपयोग्यताया हेतुत्वमित्यत आह, 'न चैवमिति, 'एवं' प्रागभावस्य प्रागभावत्व-तत्तत्प्रागभावत्वातिरिक्तरूपेणापि हेतुत्वे, 'हेतुत्वमिति, सम्भवतीति शेषः। 'प्रागभावाभावेनैवेति तत्तत्परामर्शजन्यानुमितिप्रागभावाभावेनैवेत्यर्थः, 'कार्य्याभावात्' कार्य्याभावसम्भवात्, तदुच्चारणजन्यतादृशशाब्दबुद्धौ तदुच्चारणजन्यतादृशशाब्दधीप्रागभावस्य हेतुत्ववत्तत्तत्परामर्शजन्यानुमितौ तत्तत्परामर्शजन्यानुमितिप्रागभावो हेतुरिति सुवचत्वात्। भवन्मते अनन्तकार्य्य-कारणभावस्य दोषत्वे उक्ताकाङ्क्षाया अपि शाब्दधीहेतुत्वासिद्धेरिति भावः। ननु उक्ताकाङ्क्षाया हेतुत्वेऽपि बाधाभावरूपयोग्यतायाः शाब्दधीहेतुत्वमावश्यकं अन्यथा यत्र प्रथममयोग्यतानिश्चयात्मकवाक्यज्ञानं ततः तात्पर्य्यादिज्ञानात्मकपदार्थस्मृतिः ततोऽयोग्यतानिश्चयनाशः ततोऽन्वयबोधस्तत्रायोग्यतानिश्चयनाशक्षणेऽन्वयबोधापत्तेः तदुच्चारणचतुर्थक्षणे पदार्थोपस्थितिद्वारा शाब्दधीजननात्तदुच्चारणजन्यशाब्दधीप्रागभावस्य सत्त्वात्, एवं पदजन्यपदार्थोपस्थितिरूपासत्तिरपि हेतुरावश्यकी इतरथा तादृशासत्त्यव्यवहितपूर्वोत्पन्नतात्पर्य्यादिविषयकोच्चारणव्यक्तितस्तादृशासत्त्युत्पत्तिक्षणे शाब्दबोधापत्तेस्तत एव उच्चारणात् तृतीयक्षणे शाब्दबोधोत्पादेन तदुच्चारणजन्यशाब्दधीप्रागभावस्य सत्त्वात्, एवमनुमित्यादावपि बाधाभावस्य हेतुत्वमावश्यकम् अन्यथा बाधाव्यवहितोत्तरोत्पन्नपरामर्शादिव्यक्तितो द्वितीयक्षणेऽनुमित्यापत्तेः बाधनाशे तत एव

हेतुत्वात् । शब्दे नासाधारण्यं उत्थितोत्थाप्याकाङ्क्षयो-

परामर्शतृतीयक्षणे(१) अनुमित्युत्पत्तेस्तत्परामर्शजन्यानुमितिप्रागभाव-सत्त्वादित्यरुचेराह, 'प्रागभावस्येति, तदुच्चारणजन्यशाब्दधीप्रागभाव-स्येत्यर्थः, प्रागभावत्वेनेति शेषः । यत्र तादात्म्यसम्बन्धेन कार्य्यं तत्र प्रतियोगितासम्बन्धेन प्रागभाव इति तादात्म्य-प्रतियोगित्वघटित-सामानाधिकरण्यप्रत्यासत्त्या प्रागभावत्वेन कार्य्यत्वेन कार्य्य-कारण-भावादिति भावः । 'शब्दे नासाधारण्यमिति आकाङ्क्षाया न शब्द-जन्यज्ञाननिरूपितकारणतामात्रवत्त्वमित्यर्थः, प्रागभावत्वरूपेणान्य-त्रापि हेतुत्वादिति भावः । न चेष्टापत्तिः, आकाङ्क्षा शाब्द-बुद्धावसाधारणकारणमिति सकलप्रामाणिकप्रवादविरोधापत्तेरिति हृदयं । ननु शाब्दबुद्धिनिरूपितकारणतामात्रवत्त्वं न प्रामाणिक-प्रवादार्थः किन्तु शाब्दबुद्धिमात्रनिरूपितकारणतावत्त्वं तच्च प्रागभा-वत्वेनान्यत्र हेतुत्वेऽपि निरुक्तप्रागभावत्वेन कारणतामादाय सम्भव-तीत्यत आह, 'उत्थितेति ससम्बन्धिकपदनिरूपिताकाङ्क्षा उत्थि-ताकाङ्क्षा, तादृशपदानिरूपिताकाङ्क्षा उत्थाप्याकाङ्क्षा, 'उत्कर्षेति उत्थितोत्थाप्यव्यवहारनियामकौ उत्कर्षापकर्षौ न स्यातामित्यर्थः, यथासङ्ख्येन बोध्यं, 'तदभावादिति उत्कर्षादेरसम्भवादित्यर्थः, उत्क-र्षादेर्जातित्वादिति भावः । इदमप्ययुक्तं ससम्बन्धिकपदार्थतात्पर्य्यक-पदज्ञानघटितत्वाघटितत्वाभ्यामेवोत्थितोत्थाप्यव्यवहारोपपत्तेरतिरि-क्तोत्कर्षादिजातौ मानाभावादन्यथा सिद्धान्तलक्षणेऽप्यगतेः ।

(१) तत्परामर्शात् तृतीयक्षण इति ग० ।

# उत्कर्षापकर्षौ न स्यातां प्रागभावे तदभावात्।

---

नव्यास्तु तदुच्चारणजन्यतादृशशाब्दधीप्रागभावस्याकाङ्क्षात्वे घटः कर्म्मत्वमित्यादौ घटवत्कर्म्मत्वमित्यादिभेदान्वयबोधापत्तिर्दुर्वारा तदुच्चारणजन्यतादृशशाब्दधीप्रागभावस्याप्रसिद्ध्या तदभावेन तत्र तादृशशाब्दबुद्ध्यभावस्य वक्तुमशक्यत्वात् घटमानयेत्याद्युच्चारणान्तरजन्यतादृशशाब्दधीप्रागभावस्य च तत्रापि सत्त्वात्[१] कार्य्याभावस्य कारणाभावाधीनत्वात्। अथ घटवत्कर्म्मत्वमित्यादिभेदान्वयबोधं प्रति घटमित्याद्यानुपूर्व्वीविशेषस्य हेतुत्वात् तदभावादेव तत्र तादृशशाब्दबोधाभावः। न चैवमानुपूर्व्वीविशेष एवाकाङ्क्षास्तु किं निरुक्तप्रागभावरूपाकाङ्क्षायास्तत्त्वेन हेतुतयेति वाच्यं। घटमानयेत्यादौ विनापि वक्तुः शाब्दबोधद्वयेच्छामेकेनैवोच्चारणेन धारावाहिकद्वित्वादिशाब्दबोधवारणाय तेन रूपेण हेतुत्वाभ्युपगमादिति चेत्, न, तद्वारणाय प्राथमिकशाब्दबोधव्यक्तिं प्रति तत्प्रागभावव्यक्तेस्तत्प्रागभावत्वेन हेतुत्वस्यैवोचितत्वात् तदुच्चारणजन्यशाब्दबुद्ध्यन्तरस्याप्रसिद्धतया प्राथमिकतद्व्यक्तिप्रागभावाभावेनैव द्वितीयादिक्षणे तदुच्चारणजन्यतादृशशाब्दबुद्ध्यापत्तिवारणसम्भवात् एकेनोच्चारणेन शाब्दबुद्धिद्वयाजननात् कार्य्यकारणभाववाहुल्यस्य तुल्यत्वात् कारणतावच्छेदक-कार्य्यतावच्छेदकयोर्गौरवस्य पुनस्तवाधिकत्वात्। तादृशशाब्दबुद्धिसामान्यापादनञ्च तवापि दुर्वारं तदुच्चारणान्तरजन्यता-

(१) तथाच तादृशशाब्दधीप्रागभावाभावोऽपि नात्र कार्य्याभावप्रयोजक इति भावः।

दृशशाब्दधीप्रागभावस्य सत्त्वेन विशेषसामग्रीविरहस्य वक्तुमशक्यत्वात् तत्तदुच्चारणाभावेन विशेषसामग्रीविरहस्य ममापि सुवचत्वात्। अथ यत्र शाब्दद्वयेच्छावशात् एकोच्चारणादेव क्रमेण शाब्दबुद्धिद्वयं तत्र चतुर्थादिक्षणे तदुच्चारणजन्यतादृशशाब्दबुद्ध्यन्तरस्य वारणाय तदुच्चारणजन्यतादृशशाब्दबुद्धिप्रागभावस्य तदुच्चारणजन्यतादृशशाब्दधीहेतुत्वमावश्यकं। न च तत्राप्युत्पन्नव्यक्तिद्वयप्रागभावयोर्विरहेणैव तदुच्चारणजन्यतादृशशाब्दबुद्ध्यसम्भवः[१] तदुच्चारणजन्यतादृशशाब्दबुद्ध्यन्तरस्याप्रसिद्धत्वादिति वाच्यं। उत्पन्नव्यक्तिद्वयप्रागभावयोस्तत्तद्व्यक्तित्वावच्छिन्नकारणतया[२] तेन तस्यान्यथासिद्ध्यसम्भवात् तत्तद्व्यक्तित्वावच्छिन्नविशेषकारणेन सामान्यकारणस्यान्यथासिद्धिकरणे जन्यद्रव्यसामान्यं प्रति विलक्षणसंयोगादेरपि सामान्यकारणत्वविलोपापत्तिरिति चेत्, न, तावता तत्र तदुच्चारणजन्यतादृशशाब्दधीप्रागभावस्य हेतुत्वसिद्धावपि अन्यत्र तदुच्चारणजन्यतादृशशाब्दधीप्रागभावस्य तादृप्येण हेतुत्वे मानाभावात्। वस्तुतस्तु तदपि न तदुच्चारणभेदेनानन्तकार्य्यकारणभावप्रसङ्गात् तदुच्चारणजन्यतादृशशाब्दधीप्रागभावविरहेण चतुर्थादिक्षणे तदुच्चारणजन्यतादृशशाब्दबुद्धेरुत्पत्त्यसम्भवेऽपि तादृशशाब्दधीसामान्योत्पत्तिप्रसङ्गाच्च, परन्तु तादृशशाब्दधीसामान्ये तादृशशाब्दबुद्धिसामान्यं प्रतिबन्धकं तथाच तत एव चतुर्थादिक्षणे तदुच्चारणजन्यतादृशशाब्दधीविरहः। न च

(१) तथाच तादृशशाब्दबुद्धिद्वयप्रागभावविरह एव तत्र कार्य्यानुत्पादप्रयोजक इति भावः।

(२) तत्तद्व्यक्तित्वावच्छिन्नविशेषकारणतयेति ख०।

तत्तच्छक्तित्वावच्छिन्नोत्पत्तिनियामिकायास्तत्तच्छक्तेरभावादेव उक्त-
स्थले चतुर्थादिक्षणे सामान्यसामग्रीतस्तादृशशाब्दबुद्ध्यापत्त्यसम्भवः
विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात्
इति वाच्यं । तत्तच्छक्तित्वावच्छिन्नकारणत्वमादायातिप्रसङ्गवारणे
बहुतरसामान्यकारणविलोपापत्तेस्तथैव दर्शितत्वात् तच्च तदुच्चारण-
जन्यतादृशशाब्दधीप्रागभावस्य हेतुत्वासिद्धेश्च । न च तादृशशाब्दबुद्धौ
तादृशशाब्दबुद्धेः प्रतिबन्धकत्वे खण्डवाक्यार्थबोधानन्तरं खण्डवाक्यार्थ-
घटितमहावाक्यार्थबोधो न स्यादिति वाच्यं । महावाक्यार्थबोधस्य
खण्डवाक्यार्थबोधपूर्व्वकत्वानभ्युपगमात् अनन्वितान्वयस्यैव ग्रन्थकार-
सम्मतत्वात् । अस्तु वा महावाक्यार्थबोधसामग्री उत्तेजिका एवं
क्रमिकशाब्दबोधद्वयतात्पर्य्यग्रहोऽप्युत्तेजकः तेन वक्तुः क्रमिकशाब्द-
बोधद्वयेच्छायां क्रमिकशाब्दबोधद्वयं नानुपपन्नं । न चैवं यत्र शुक्लो
घट इति वाक्यप्रयोगानन्तरं पदार्थोपस्थितिः श्वेतः कलस इति
वाक्योपस्थितिश्चेत्येकः कालः ततश्च शुक्लाभिन्नो घट इति शाब्द-
बुद्धिः ततः श्वेतः कलस इति वाक्यजन्यपुनःपदार्थोपस्थितिः तत्र
पुनः शुक्लाभिन्नो घट इति शाब्दबोधो न स्यात् समानाकार-
शाब्दबोधस्य प्रतिबन्धकस्य सत्त्वादिति वाच्यं । तत्र प्राथमिकशाब्द-
बोधनाशे चतुर्थक्षण एव तादृशशाब्दबोधान्तराभ्युपगमात् । अस्तु
वा तद्वाक्यजन्योपस्थितिव्यक्तीनां उत्तेजकत्वं एवं यद्यदुपस्थितिस्थले
समानाकारशाब्दबोधसत्त्वेऽप्यन्वयबोधस्तासामेवोत्तेजकत्वं बोध्यमिति
प्राहुरिति संक्षेपः ।

अथ ज्ञाप्य-तदितरान्वयप्रकारकजिज्ञासानुकूलप-दार्थोपस्थितिजनकत्वे सत्यजनिततात्पर्य्यविषयान्वय-

---

सौन्दडीयं लक्षणमाह, 'अथ ज्ञाप्येति, 'ज्ञाप्य-तदितरयोः' तत्पदार्थोपस्थाप्य-तत्पदार्थोपस्थाप्येतरयोः, योऽन्वयः संसर्गस्तत्प्रकारिका या जिज्ञासा तदनुकूलेत्यर्थः, तदुभयपदार्थयोः तत्संसर्गप्रकारकेत्यादिकं तदुभयपदार्थयोस्तत्संसर्गेणान्वयबोधे आकाङ्क्षा इति पर्य्यवसितार्थः। ज्ञाप्येतरत्वनिवेशे च[१] प्रयोजनाभावात् नीलो घट-इत्यादावभिन्नयोरप्याकाङ्क्षासत्त्वाच्च जिज्ञासानुकूलत्वं तत्स्वरूपयोग्यत्वं तेनाजिज्ञासोरपि अन्वयबोधविकलो न स्यात्[२]। अत्र सत्यन्तेन घटः कर्मत्वमित्यादिस्वरूपायोग्यनिरासः, राज-पुत्रयोरन्वयबोधमात्रतात्पर्य्यकेऽयमित्यादौ राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वयबोधवारणाय विशेष्यदलं। न च तत्र तात्पर्य्यज्ञानाभावादेव न तदानीं राज-पुरुषयोरन्वयबोधः तात्पर्य्यभ्रमे जाते राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वयबोधः सर्व्वसिद्ध एवेति वाच्यं। ग्रन्थकृतैवानुपदमेव तद्दोषस्य वक्ष्यमाणत्वात् राज-पुत्रयोरन्वयबोधमात्रतात्पर्य्यके अयमेतीत्यादौ तात्पर्य्यभ्रमेण राज-पुरुषयोरन्वयबोधानन्तरं तात्पर्य्यप्रमया राज-पुरुषयोरन्वयबोधसम्पादनाय तात्पर्य्यविषयेत्यन्वयबोधविशेषणं। न चैवं खण्डवाक्यार्थबोधानन्तरं खण्डवाक्यार्थघटितमहावाक्यार्थबोधो न स्यात् एवं राज-पुत्रान्वय-

---

(१) तत्पदजन्यज्ञानविषय-तत्पदजन्यज्ञानविषयभिन्नत्वनिवेशे चेत्यर्थः।

(२) अन्वयबोधो व विफल इति ख०, ग०।

बोधत्वमाकाङ्क्षा, घटमानयतीत्यत्र घटमित्युक्ते किमानयति पश्यति वा, आनयतीत्युक्ते किं घटं अन्यद्वेति जिज्ञासा भवति। घटः कर्म्मत्वमानयनं कृतिरित्यत्रा-

---

बोध-राज-पुरुषान्वयबोधोभयतात्पर्य्यकेऽयमेतीत्यादौ तात्पर्य्यग्रह-पौर्व्वापर्य्यक्रमेण राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वय-बोधस्य न स्यादिति वाच्यं। तत्कालीन-तत्पुरुषीयत्वविशिष्ट-स्वज-नितत्वाभाववत्तात्पर्य्यविषयान्वयबोधकत्वस्य विशेष्यदलेन विवक्षित-त्वात्। न चैवं तादृशान्वयबोधद्वयतात्पर्य्यके अयमेतीत्यादौ राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वयबोधसमये राज-पुत्रयो-रपि पुनरन्वयबोधः स्यादिति वाच्यं। खण्डवाक्यार्थबोधानन्तरं खण्डवाक्यार्थघटितमहावाक्यार्थबोधवदिष्टत्वादिति भावः। घटमान-यतीत्यत्र सत्यन्तदलसत्त्वं प्रतिपादयति, 'घटमानयतीति, 'घटमि-त्युक्त इति केवलं घटमित्युक्त इत्यर्थः, 'किमानयतीति, किमानयनं घटकर्मतानिरूपकं दर्शनं वेत्यर्थः, 'आनयतीत्युक्ते' केवलमानयती-त्युक्ते इत्यर्थः, किं घटमिति 'किं घटनिष्ठकर्म्मत्वं आनयननिष्ठनि-रूपकताकमन्यनिष्ठकर्म्मत्वं आनयननिरूपकताकं वेत्यर्थः,[१] 'जिज्ञासा भवति' प्रश्नो भवति, अतो घटकर्म्मत्वानयनयोर्निरूपकतात्मकसम्बन्ध-प्रकारकजिज्ञासास्वरूपयोग्यपदार्थोपस्थितिजनकत्वमिति शेषः[२]। जिज्ञासां विना प्रश्नानुपपत्त्या केवलं घटमित्यादिस्थले घटमित्या-

---

(१) किं घटनिष्ठकर्म्मत्वमानयननिष्ठनिरूपताकमन्यद्वेत्यर्थ इति ख०।

(२) इत्यर्थ इति ख०।

भेदेन नान्वयोऽयोग्यत्वात्, घटस्यानयनमिति तु नान्वयबोधः घट इतिपदात् सम्बन्धित्वेन घटस्यानुपस्थितेः। राज्ञ इति पुत्रेण जनितान्वयबोधत्वात् न पुरुषमाकाङ्क्षतीति चेत्, तर्हि नाम-विभक्ति-धात्वाख्या-

---

कारकवाक्यस्य तादृशपदार्थोपस्थितिजनकत्वसिद्धिरिति भावः। नन्वेवं घटः कर्म्मत्वमानयनं कृतिरित्यत्र घटपदस्य कर्म्मत्वेऽभेदसंसर्गेण घटान्वयबोधे साकाङ्क्षत्वादभेदेन कथं नान्वयधीरित्यत आह, 'घटइति, योग्यताभ्रमे तु भवत्येवान्वयबोध इति भावः। ननु न भवतु घट-कर्म्मत्वयोरभेदान्वयबोधः आधेयतासम्बन्धेन कथं न भवतीत्यत-आह, 'घटस्यानयनमितीति, घटवृत्तिकर्म्मत्ववदानयनमेतादृश-इत्यर्थः, 'तुरप्यर्थे, 'सम्बन्धित्वेन' आधेयत्वरूपसम्बन्धविशेषणत्वेन, घटाधेयतात्वेन घटाधेयत्वस्यानुपस्थितेरिति तु समुदितार्थः, तथाच आधेयत्वरूपसम्बन्धविशेषणत्वेन घटाद्युपस्थितिरेव घट-कर्म्मत्वयोराधेयत्वरूपसम्बन्धप्रकारकजिज्ञासाजनिका घटपदे च तज्जनकत्वाभावेन तादृशाकाङ्क्षाविरहान्न तादृशान्वयबोध इति भावः। कृततोऽजनितेत्यादेर्व्यावृत्तिं दर्शयति, 'राज्ञ इतीति राज-पुत्रयोरन्वयबोधमात्रतात्पर्य्यके अयमेतीत्यादौ राज्ञ इति पदमित्यर्थः, 'पुत्रेणेति, राज्ञ इति शेषः, 'न पुरुषमिति राज-पुत्रयोरन्वयबोधोत्तरं न राज-पुरुषयोरन्वयबोधं जनयतीत्यर्थः, तथाच तत्र राज-पुत्रयोरन्वयबोधोत्तरं राज-पुरुषयोरन्वयबोधवारणायाजनितान्वयबोधकत्वदलं। न चैवं तत्र राज-पुत्रयोरन्वयबोधोत्तरं राज-पुरुषयोरन्वय-

तार्थानां घट-कर्म्मत्वानयन-कृतीनां स्वरूपेणोपस्थि-
तिर्नान्वयप्रकारकजिज्ञासानुकूलेति तत्र नाकाङ्क्षा[१]
स्यात् । घटः कर्म्मत्वमानयनं कृतिरित्यत्र घटमानय-
तीत्यत्रैवान्वयबोधः स्यात्, न हि तत्र पदार्थस्वरूपाणां

---

बोधे तात्पर्य्यभ्रमेऽपि राज-पुरुषयोरन्वयबोधो न स्यात् जनित-
तात्पर्य्यविषयान्वयबोधकत्वादिति वाच्यं । तत्र जनिततात्पर्य्यविषया-
न्वयबोधकत्वेऽपि तात्पर्य्यभ्रमेण स्वजनितत्वाभाववत्तात्पर्य्यविषयान्वय-
बोधकत्वस्यापि भ्रमात् शाब्दबोधोदयात् स्वरूपसत्या आकाङ्क्षाया-
अहेतुत्वादिति भावः । 'इति चेत् तर्हीति आधेयत्वादिसम्बन्धविशे-
षणत्वेन घटाद्युपस्थितेरेव घट-कर्म्मत्वाद्योराधेयत्वादिसम्बन्धप्रकारक-
जिज्ञासाजनकत्वे इत्यर्थः, 'स्वरूपेणोपस्थितिः' आधेयत्वादिसम्बन्धा-
विशेषणत्वेनोपस्थितिः, 'अन्वयप्रकारकेति घट-कर्म्मत्वाद्योराधेयत्वा-
दिसम्बन्धप्रकारकेत्यर्थः, 'तत्र' घटमानयतीत्यत्र, 'नाकाङ्क्षा स्यादिति
आधेयत्वादिसम्बन्धेन घट-कर्म्मत्वाद्योरन्वयबोधे आकाङ्क्षा न तिष्ठे-
दित्यर्थः, घटादिपदात् केवलघटादीनामेवोपस्थितेरिति भावः ।
'घट इति, यदि स्वरूपेणोपस्थितिरेव तदनुकूला तदेत्यादिः । ननु
विलक्षणघटाद्युपस्थितिरेव तादृशजिज्ञासाजनिका घटः कर्म्मत्वमान-
यनं कृतिरित्यत्र घटादिपदजन्यघटाद्युपस्थितिस्तु न तथा विलक्षणे-
त्यत आह, 'न हीति, 'तत्र' घटमानयतीत्यत्र, 'एतद्वैलक्षण्येनेति

---

(१) न तत्राकाङ्क्षेति क०, ख० ।

एतद्वैलक्षण्येनोपस्थितिः, त्रयाणां तुल्यवत् स्मरणे प्र-
थमं यतो राज्ञ इति पुरुषेण नान्वेति किन्तु पुत्रेण तत-
एवाग्रेऽपि व्यर्थमजनितान्वयबोधत्वमिति ।

---

घटः कर्म्मत्वमित्यादिवाक्यस्थघटादिपदजन्यघटाद्युपस्थितिवैलक्षण्येने-
त्यर्थः, तथाच वैलक्षण्यमेवाप्रसिद्धमिति भावः । 'अजनितेत्यादे-
रुक्तप्रयोजनं दूषयति, 'त्रयाणामिति राज-पुत्र-पुरुषाणामित्यर्थः,
'तुल्यवत्' एकदा, 'प्रथमं' अजनितान्वयबोधदशायां, 'यतः' ता-
त्पर्य्यधीविरहतः, 'तत एव' तात्पर्य्यधीविरहादेव, 'अग्रेऽपि' जनि-
तान्वयबोधदशायामपि, 'पुरुषेणान्वेतीत्यनुषज्यते, 'व्यर्थमिति नोक्त-
प्रयोजनकमित्यर्थः । यथाश्रुतन्तु न सङ्गच्छते, घटमानयेत्यादौ
धारावाहिकशाब्दबोधवारणायाजनितान्वयबोधकत्वदलस्यावश्यकतया
वैयर्थ्याभावात् ।

केचित्तु 'व्यर्थमिति यथाश्रुतमेव साधु । न च घटमानयेत्यादौ
धारावाहिकशाब्दबुद्धेर्वारणाय तस्यावश्यकतया कुतो वैयर्थ्यमिति
वाच्यं । अनुमितौ स्वसमानाकारसिद्धेरिव शाब्दबोधेऽपि स्वसमा-
नाकारशाब्दबोधस्य प्रतिबन्धकतयैव धारावाहिकशाब्दबोधाभाव-
सम्भवात् अन्यथा तदुपादानेऽपि तज्ज्ञानस्यैव शाब्दधीहेतुतया
अविनश्यदवस्थतज्ज्ञानमादाय धारावाहिकशाब्दबोधदशयापत्तेर्दुर्व्वा-
रत्वादित्यभिप्राय इत्याहुः ।

नव्यास्तु धारावाहिकप्रत्यक्षस्येव धारावाहिकशाब्दस्याप्यभ्युपग-

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शब्दाकाङ्क्षावादपूर्व्वपक्षः॥

---

मादेयर्थमित्यभिप्रायः, अतएव सिद्धान्तलक्षणे जनिताऽन्वयबोधेऽति-व्याप्तिवारणाय विशेषणं कण्ठतो ग्रन्थकृता नोक्तमिति प्राहुः[१]॥०॥

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाकाङ्क्षावादपूर्व्वपक्षरहस्यं॥



---

(१) नोक्तमिति भाव इति क०।

## अथ शब्दाकाङ्क्षावादसिद्धान्तः।



उच्यते। अभिधानापर्य्यवसानमाकाङ्क्षा यस्य येन विना न स्वार्थान्वयानुभावकत्वं तस्य तदपर्य्यवसानं,

---

## अथ शब्दाकाङ्क्षावादसिद्धान्तरहस्यम्॥

टीकाकारोक्तं लक्षणमेव परिष्कृत्य सिद्धान्तयति, 'अभिधानेति, अभिधानपदं करणव्युत्पत्त्या शब्दोच्चारणमभिधत्ते तस्यापर्य्यवसानं फलानुत्पादः, तथाच तदुच्चारणजन्यतादृशशाब्दबुद्धौ तदुच्चारणजन्यतादृशशाब्दधीप्रागभाव आकाङ्क्षेति फलितं, तच्च पूर्व्वोक्तरूपेण दुष्टं। न चाभिधानपदं भावव्युत्पत्त्या शाब्दबोधपरं तस्यापर्य्यवसानं अभावः तथाच तादृशशाब्दबोधे तादृशशाब्दबोधाभाव आकाङ्क्षेति फलितार्थ इति वाच्यं। घटः कर्म्मत्वमित्यादावतिव्याप्तिरित्यतः पारिभाषिकमभिधानापर्य्यवसानपदार्थमाह, 'यस्येति, यत्पदनिष्ठयत्पदेन विनेत्यर्थः, 'न स्वार्थान्वयानुभावकत्वमिति न तादृशान्वयबोध इत्यर्थः, 'तस्य तदिति तत्पदस्य तत्पदवत्त्वमित्यर्थः, 'अपर्य्यवसानं' तादृशान्वयबोधे अभिधानापर्य्यवसानं, तथाच यत्पदनिष्ठयत्पदव्यतिरेकप्रयुक्तो यादृशान्वयबोधाभावस्तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधे अभिधानापर्य्यवसानं इति फलितार्थः। पदत्वमत्र शब्दत्वं,

प्रयुक्तत्वञ्च कारणाभावात् कार्य्याभाव इति प्रतीतिसाक्षिकः स्वरूप-सम्बन्धविशेषः, तत्प्रतियोगिजन्यप्रतियोगिकत्वं वा तत्प्रयुक्तत्वं, भवति चाव्यवहितपूर्व्ववर्त्तितारूपसमभिव्याहारसम्बन्धेन घटपदनिष्ठस्यानुस्वारपदस्य व्यतिरेकप्रयुक्तो घटवत्कर्म्मत्वमिति भेदान्वयबुद्ध्यभाव-इति तादृशान्वयबोधे घटपदस्यानुस्वारपदवत्त्वमाकाङ्क्षा। एवं विनिगमनाविरहादव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेनानुस्वार-पदनिष्ठस्य घटपदस्य व्यतिरेकप्रयुक्तोऽपि घटवत्कर्म्मत्वमिति भेदा-न्वयबुद्ध्यभाव इत्यनुस्वारपदस्य घटपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा, घटः कर्म्मत्वमित्यादौ अव्यवहितपूर्व्ववर्त्तितारूपसमभि-व्याहारसम्बन्धेन घटपदस्य कर्म्मत्वपदवत्त्वमव्यवहितोत्तरवर्त्तितारूप-समभिव्याहारसम्बन्धेन कर्म्मत्वपदस्य घटपदवत्त्वञ्च न घटवत्कर्म्मत्व-मिति भेदान्वयबोधे आकाङ्क्षा, अव्यवहितपूर्व्ववर्त्तितारूपसमभि-व्याहारसम्बन्धेन घटपदनिष्ठस्य कर्म्मत्वपदस्यावहितोत्तरवर्त्तितारूप-समभिव्याहारसम्बन्धेन कर्म्मत्वपदनिष्ठस्य घटपदवत्त्वस्य च व्यतिरेक-योर्घटवत्कर्म्मत्वमिति भेदान्वयबोधाभावाप्रयोजकत्वात् कारणाभा-वस्यैव कार्य्याभावप्रयोजकत्वात्, अव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घट-पदनिष्ठस्य कर्म्मत्वपदस्याव्यवहितोत्तरवर्त्तितासम्बन्धेन कर्म्मत्वपदनिष्ठस्य घटपदवत्त्वस्य वा तादृशभेदान्वयबुद्धावहेतुत्वात्। न च घटपदेऽनु-स्वारपदवत्त्वस्यानुस्वारपदे घटपदवत्त्वस्य च घटवत्कर्म्मत्वमिति भेदा-न्वयबुद्धावाकाङ्क्षात्वे जलं घटइत्यादावपि तादृशान्वयबुद्ध्यापत्तिः अव्यवहितोत्तरवर्त्तितासम्बन्धेन घटपदेऽनुस्वारपदवत्त्वस्याव्यवहित-पूर्व्ववर्त्तितासम्बन्धेनानुस्वारपदे घटपदवत्त्वस्य च तत्र सत्त्वादिति

वाच्यं। यादृशसमभिव्याहारसम्बन्धेन यत्पदनिष्ठस्य यत्पदस्य व्यतिरेक-प्रयुक्तो यादृशान्वयबुद्ध्यभावस्तादृशसमभिव्याहारसम्बन्धेन तत्पदस्य तत्पदवत्त्वं तादृशान्वयबोधे आकाङ्क्षेति विवक्षितत्वादित्यस्य अव्यवहितपूर्व्ववर्त्तितारूपसमभिव्याहारसम्बन्धेन घटपदे अनुस्वारपदवत्त्वमव्यवहितोत्तरवर्त्तितारूपसमभिव्याहारसम्बन्धेनानुस्वारपदे घटपदवत्त्वमेव वा तादृशभेदान्वयबोधे आकाङ्क्षा। न च यादृशसमभिव्याहारसम्बन्धेन यत्पदनिष्ठस्य यत्पदस्य जन्यो यादृशान्वयबोध इति भावगर्भमेव लक्षणमस्तु लाघवादिति वाच्यं। न ह्यन्वयबोधाभावान्तस्य ज्ञानं कारणं येन गौरवं दूषणावहं स्यात्, अपि तु तत्तत्सम्बन्धेन तत्तत्पदस्य तत्तत्पदवत्त्वमेवाकाङ्क्षा, तज्ज्ञानमेव शाब्दधीहेतुस्तत्परिचायकश्चान्वयबोधाभावान्तं। न च तत्र गौरवं दोषमावहति, परिचायकशब्दलाघव-गौरवयोरकिञ्चित्करत्वादिति भावः। इदञ्च ज्ञायमानशब्दकरणतामते, शब्दज्ञानकरणतापक्षे तु यादृशसमभिव्याहारसम्बन्धेन यत्पदविशेष्यक-यत्पदप्रकारकोपस्थितिव्यतिरेकप्रयुक्तो यादृशान्वयबुद्ध्यभाव इति पूर्व्वदलं विवक्षणीयं, उत्तरदलन्तु तुल्यमेवान्यथा असम्भवापत्तेः, पदज्ञानस्यैव कारणतया घटवत्कर्म्मत्वमिति भेदान्वयबुद्ध्यभावादौ घटपदनिष्ठस्यानुस्वारपदादेर्व्यतिरेकस्याप्रयोजकत्वात् कारणाभावस्यैव कार्य्याभावप्रयोजकत्वात्। न चैवं घटः कर्म्मत्वमित्यादावव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटपदे कर्म्मत्वपदवत्त्वस्याव्यवहितोत्तरवर्त्तितासम्बन्धेन कर्म्मत्वपदे घटपदवत्त्वस्य च घटवत्कर्म्मत्वमिति भेदान्वयबोधे आकाङ्क्षात्वापत्तिः तादृशभेदान्वयबुद्ध्यभावस्याव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटपदविशेष्यक-कर्म्मत्व-

पदप्रकारकोपस्थितेः अव्यवहितोत्तरवर्त्तितासम्बन्धेन कर्म्मत्वपदविशे-ष्यक-घटपदप्रकारकोपस्थितेश्च व्यतिरेकेणापि प्रयुक्तत्वात् अव्यवहित-पूर्व्ववर्त्तितासम्बन्धेनानुस्वारत्वरूपेण कर्म्मत्वपदप्रकारकघटपदविशेष्यक-भ्रमस्याव्यवहितोत्तरवर्त्तितासम्बन्धेनानुस्वारत्वरूपेण कर्म्मत्वपदविशे-ष्यक-घटपदप्रकारकभ्रमस्य च तादृशान्वयबोधजनकत्वादिति वाच्यं। यत्संसर्गक-यत्पदत्वधर्म्मितावच्छेदकक-यत्पदत्वविशेषणतावच्छेदकक-निश्चयव्यतिरेकप्रयुक्तो यादृशान्वयबुद्ध्यभावस्तत्सम्बन्धेन तत्पदत्वविशिष्टे तत्पदत्वविशिष्टवत्त्वं तादृशान्वयबोधे आकाङ्क्षेति विवक्षितत्वात् । न च तथापि अव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटपदत्वावच्छिन्ननिष्ठ-कर्म्मत्वपदत्वावच्छिन्नवत्त्वादावतिव्याप्तिः घटः कर्म्मत्वं घटमिति समू-हालम्बनस्य घटवत्कर्म्मत्वमिति भेदान्वयबोधजनकतया घटपदत्व-धर्म्मितावच्छेदककाव्यवहितपूर्व्ववर्त्तितासंसर्गक-कर्म्मत्वपदत्वावच्छिन्नप्र-कारकनिश्चयादिव्यतिरेकेणापि प्रयुक्तत्वात् तादृशान्वयबुद्ध्यभावस्येति वाच्यं। तथाविधनिश्चयत्वावच्छिन्नव्यतिरेकप्रयुक्तत्वस्य विवक्षितत्वात् घटपदत्वधर्म्मितावच्छेककाव्यवहितपूर्व्ववर्त्तितासंसर्गककर्म्मत्वपदत्वविशेष-णतावच्छेदककनिश्चयत्वाद्यवच्छिन्नाभावप्रयुक्तस्य न घटवत्कर्म्मत्वमिति भेदान्वयबोधाभावः कारणतावच्छेदकावच्छिन्नाभावेनैव प्रयुक्तत्वात् कार्य्याभावस्य, तत्प्रतियोगिजन्यप्रतियोगिकत्वं तत्प्रयुक्तत्वमिति पक्षे जन्यत्वमेव तादृशं विवक्षणीयमिति न कश्चिद्दोषः। एवं यादृश-शाब्दाभावोऽपि यादृशशाब्दत्वघटितधर्म्मावच्छिन्नाभावो विवक्षितस्तेन तादृशसमूहालम्बनेन घटाभिन्नं कर्म्मत्वं घटवृत्तिकर्म्मत्वमिति समू-हालम्बनशाब्दधीजननात्तादृशसमूहालम्बनात्मकघटवृत्तिकर्म्मत्वमिति-

भेदान्वयबोधाभावस्य घटपदत्व धर्म्मितावच्छेदककाव्यवहितपूर्व्ववर्त्तिता-संसर्गक-कर्म्मत्वपदत्वविशेषणतावच्छेदककनिश्चयत्वावच्छिन्नाभावप्रयुक्तत्वेऽपि न क्षतिः कार्य्यतावच्छेदकावच्छिन्नाभावस्यैव कारणतावच्छेदकावच्छिन्नाभावप्रयुक्तत्वेन घटवृत्तिकर्म्मत्वमिति भेदान्वयबुद्धित्वघटितधर्म्मावच्छिन्नाभावस्य निरुक्तनिश्चयत्वावच्छिन्नाभावाप्रयुक्तत्वात् तादृशभेदान्वयबुद्धित्वघटितधर्म्मस्य तत्कार्य्यतानवच्छेदकत्वादिति नातिव्याप्तिशङ्कापि, इत्थञ्च कर्म्मत्व-कर्तृत्व-करणत्वादिविशेष्यकाधेयतासंसर्गक-घट-पटादिप्रकारकशाब्दबोधेऽव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घट-पटादिपदेऽनुस्वारादिमत्त्वमव्यवहितोत्तरवर्त्तितासम्बन्धेनानुस्वारादिपदे घटपदादिमत्त्वञ्चाकाङ्क्षा तेन घटं पटं घटेन पटेन इत्यादावेव तादृशान्वयबोधो न तु घटः कर्म्मत्वं पटः कर्म्मत्वं घटः कर्तृत्वं पटः कर्तृत्वं घटः करणत्वं पटः करणत्वमित्यादौ तथान्वयबोधः, एवं कृति-व्यापाराश्रयत्वादिविशेष्यकानुकूलत्व-विषयित्व-निरूपितत्वादिसंसर्गकानयन-गमन-दर्शनादिप्रकारकशाब्दबोधं प्रति अव्यवहितपूर्व्ववर्त्तितासम्बन्धेन आनय-गच्छ-पश्यपदादौ त्यादिपदवत्त्वमव्यवहितोत्तरवर्त्तितासम्बन्धेन त्यादिपदे आनय-गच्छ-पश्यपदादिमत्त्वञ्चाकाङ्क्षा तेनानयति गच्छति पश्यतीत्यादावेव तादृशान्वयबोधो न तु आनयनं कृतिः गमनं व्यापारः दर्शनमाश्रयत्वं इत्यादौ तथान्वयबोध इति निर्व्यूढं। न चैतेषां ज्ञानस्य हेतुत्वे मानाभावः कर्म्मत्वादिविशेष्यकाधेयतासंसर्गकघटादिप्रकारकशाब्दबोधे विभक्तिजन्यकर्म्मत्वाद्युपस्थितेर्हेतुत्वाभ्युपगमादेव घटः कर्म्मत्वमित्यादौ तादृशान्वयबोधाभावसम्भवादेवं कृत्यादिविशेष्यकानुकूल-

त्वादिसंसर्गकानयनादिप्रकारकशाब्दबोधे त्यादिप्रत्ययजन्यकृत्याद्युप-स्थितेर्हेतुत्वाभ्युपगमेनैवानयनं कृतिः गमनं व्यापार इत्यादौ तथा-न्वयबोधाभावसम्भवादिति वाच्यं। अम्‌घट घटाम् टा-घट घट-टा इत्यादौ घटोऽस्ति चैत्रेण पच्यते घटोऽस्ति पटश्चानयेत्यादौ च तथान्वयबोधापत्तेः अमादिविभक्तिजन्यकर्म्मत्वाद्युपस्थितिसत्त्वात्, एवं तिरानयनं आनयनं तिरित्यादौ आनयनमस्ति पचति चेत्यादौ च तथान्वयबोधापत्तेश्च त्यादिप्रत्ययजन्यकृत्याद्युपस्थितिसत्त्वात्। न चैतादृशाकाङ्क्षाज्ञानस्य हेतुत्वे विपरीतव्युत्पन्नस्य चैत्रः कर्त्तृत्वं घटः कर्म्मत्वमित्यादौ चैत्रनिष्ठकर्त्तृत्वं घटवृत्ति कर्म्मत्वमित्याद्यन्वयबोधः कथं स्यादिति वाच्यं। विपरीतव्युत्पन्नस्य कर्म्मत्वादिपदेऽनुस्वार-त्वादिभ्रमादेव तत्र तादृशशाब्दबोधोदयात्। न हि वस्तुगत्या घटपदादौ अनुस्वारादिमत्त्वस्य अनुस्वारादौ घटपदादिसत्त्वस्य वा ज्ञानमेव तादृशशाब्दबोधे हेतुः, अपि तु घटपदत्वादिधर्म्मितावच्छेदककानुस्वारत्वादिविशेषणतावच्छेदककं अनुस्वारपदत्वधर्म्मितावच्छेदककं घटपदत्वादिविशेषणतावच्छेदककं वा भ्रम-प्रमासाधारणं ज्ञानमेव तादृशशाब्दबुद्धौ हेतुः, यस्य पुंसः कर्म्मत्वपदादौ नानु-स्वारत्वभ्रमः तस्य तु घट-कर्म्मत्वादिपदात् घट-कर्म्मत्वाद्योरुपस्थित्या मानसोऽन्वयबोधः शब्दप्रयोज्यत्वनिबन्धनश्च शाब्दत्वानुभवः। न चैवं घटवृत्तिकर्म्मत्वमित्याद्यन्वयबोधे घटमित्याद्यानुपूर्व्वीविशेष आकाङ्क्षा आनयनानुकूलकृतिरित्याद्यन्वयबोधे च आनयतीत्याद्यानुपूर्व्वीविशेष-आकाङ्क्षेति फलितं तथाच घटमानयतीत्यादौ धारावाहिकशाब्द-बोधापत्तिः तादृशानुपूर्व्वीविशेषज्ञानस्य स्वप्रयोज्यतत्तत्पदार्थोप-

स्थितिद्वारैव हेतुतया अन्वयबोधे जातेऽपि तादृशपदार्थोपस्थिति-द्वारा तत्सत्त्वादिति वाच्यं। असति विषयान्तरसञ्चारादौ धारा-वाहिकप्रत्यक्षवत् धारावाहिकशाब्दबोधोऽपीष्यत एव। अस्तु वा अनुमितौ समानाकारसिद्धिरिव शाब्दबोधेऽपि उक्तक्रमेण समा-नाकारशाब्दधीर्विरोधिनीति मणिकृतो निगर्व्वः।

ननु तथापि कर्म्मताविशेष्यकाधेयतासंसर्गकघटप्रकारकान्वय-बोधेऽव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटपदेऽनुस्वारवत्त्वज्ञानस्य अव्यव-हितोत्तरवर्त्तितासम्बन्धेनानुस्वारे घटपदवत्ताज्ञानस्य चोभयोर्हेतुत्वे परस्परं व्यभिचारः प्रत्येकज्ञानमात्रादपि तादृशशाब्दबोधोदयात् दण्ड-चक्रवत्समुच्चयेन कारणत्वस्यासम्भवात्। किञ्च घटं घटौ घटान् कलसं कलसौ कलसान् कुम्भं कुम्भौ कुम्भानित्यादौ घटस्यानयनं कलसस्यानयनं कुम्भस्यानयनमित्यादौ च तादृशान्वयबोधे व्यभिचारः। न च तत्र घटमित्यानुपूर्व्वीस्मरणादेव तादृशान्वयबोध इति वाच्यं। विनिगमनाविरहात् घटादिपदे औकारादिमत्त्वं कलसादिपदे-ऽनुस्वारादिमत्त्वमेव वा तादृशान्वयबोधे आकाङ्क्षा घटमित्यत्र च तत्स्मरणादेवान्वयबोध इत्यस्य सुवचत्वात् एवङ्कृतिविशेष्यकानुकूल-त्वादिसंसर्गकानयनप्रकारकशाब्दबोधेऽव्यवहितपूर्व्ववर्त्तितासम्बन्धेनान-यपदे तिपदवत्त्वज्ञानस्य अव्यवहितोत्तरवर्त्तितासम्बन्धेन तिपदे आनयपदवत्त्वज्ञानस्य चोभयोर्हेतुत्वे परस्परं व्यभिचारः, आनयति आनयतः आनयन्ति प्रापयति प्रापयतः प्रापयन्ति इत्यादावपि तादृशान्वयबोधात् व्यभिचारश्च। अथाव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटोपस्थापकनामपदे कर्म्मत्वोपस्थापकविभक्तिमत्त्वस्य अव्यवहितो-

त्तरवर्त्तितासम्बन्धेन कर्म्मत्वोपस्थापकविभक्तौ घटोपस्थापकनामपद-वत्त्वस्य च द्वयोराकाङ्क्षात्वं, इत्यञ्च घटं घटौ घटान् कलसं कलसौ कलसान् कुम्भं कुम्भौ कुम्भानित्यादौ घटस्यानयनमित्यादौ च न क्वापि व्यभिचारः घटोपस्थापकनामपदत्वेन कर्म्मत्वोपस्थापकविभक्ति-त्वेन च सर्व्वेषामनुगमात्। नापि यत्र घटमित्यादौ घटादिपदस्य पटे लक्षणया पटवृत्ति कर्म्मत्वमिति बोधस्तत्रापि न व्यभिचारः। न च तथाप्युक्तयोर्द्वयोरेव परस्परं व्यभिचार इति वाच्यं। विनि-गमनाविरहेण उभयोर्ज्ञानस्यैव हेतुत्वसिद्धौ सर्व्वत्रोभयोर्ज्ञानादेव तादृशशाब्दधीर्न तु प्रत्येकमात्रज्ञानादित्यनायत्याभ्युपगमात्, एव-ङ्कृतिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकशाब्दबोधेऽव्यवहि-तपूर्व्ववर्त्तितासंसर्गेण आनयनोपस्थापकधातौ कृत्युपस्थापकाख्यातव-त्त्वस्य अव्यवहितोत्तरवर्त्तितासंसर्गेण कृत्युपस्थापकाख्याते आनयनो-पस्थापकधातुमत्त्वस्य च द्वयोराकाङ्क्षात्वं एवञ्चानयति आनयतः आनयन्ति प्रापयति प्रापयतः प्रापयन्ति इत्यादौ न क्वापि व्यभि-चारः आनयनोपस्थापकधातुत्वेन कृत्युपस्थापकाख्यातत्वेन च सर्व्वेषा-मनुगमात्, नापि यत्र पचतीत्यादौ पचादिधातोरानयने लक्षणया आनयनानुकूला कृतिरित्यन्वयबोधस्तत्रापि व्यभिचारः। न चैवं घटमित्यादवमादिविभक्तिविरहात् कथमन्वयबोध इति वाच्यं। तत्रानुस्वारत्वादिना अमादिस्मृत्या अन्वयबोध इति सर्व्वसिद्धत्वात् अन्यथा अनुस्वारादेः कर्म्मत्वे शक्तिविरहात् ततः कर्म्मत्वादिशाब्द-बोधानुपपत्तिः वृत्त्या पदजन्यपदार्थोपस्थितेः शाब्दधीहेतुत्वादिति चेत्, न, घटाम् घटशस् इत्यादावपि घटवृत्तिकर्म्मत्वमित्याद्यन्वय-

बोधापत्तेः घटोपस्थापकनामपदे अम्-शसादिविभक्तिमत्त्वस्य सत्त्वात्, नामत्व-विभक्तित्वयोर्धातुत्वाख्यातत्वयोश्च सर्व्वसाधारणयोरनुगतयो-रभावात् तादृप्येणानुगमासम्भवाच्च। अपिच घटाद्युपस्थापकनामा-दिपदे कर्म्मत्वाद्युपस्थापकविभक्त्यादिमत्त्वस्य येन केनापि रूपेण ज्ञानं हेतुः तादृशनामत्व-विभक्तित्वादिना वा घटपदत्वाम्पदत्वादिना वा, नाद्यः प्रमेयत्वादिरूपेण ज्ञानादपि शाब्दज्ञानापत्तेः, न द्वितीयः घटमित्यादौ घटादिपदस्य नामत्वादिकममादिपदस्य विभक्तित्वा-दिकमविदुषोऽपि शाब्दबोधोदयात्, नान्त्यः अननुगमतादवस्थ्यात् इति अत्राहुः अव्यवहितपूर्व्ववर्त्तितासंसर्गक घटपदत्वधर्म्मितावच्छेदक-कानुस्वारत्वादिविशेषणतावच्छेदककनिश्चयत्वेन कारणता तादृश-निश्चयविशिष्टकर्म्मत्वविशेष्यताकाधेयतासंसर्गक-घटप्रकारकशाब्दबुद्धि-त्वेन कार्य्यता, एवमव्यवहितोत्तरवर्त्तितासंसर्गकानुस्वारत्वधर्म्मिताव-च्छेदकक-घटपदत्वविशेषणतावच्छेदककनिश्चयत्वेन कारणता तादृश-निश्चयविशिष्टकर्म्मत्वविशेष्यकाधेयत्वसंसर्गक-घटप्रकारकशाब्दबुद्धित्वेन कार्य्यता, वैशिष्ट्यञ्च स्वाधिकरणावच्छेदेन स्वाव्यवहितोत्तरक्षण-वर्त्तित्वं, तच्च संसर्गविधया प्रविष्टमिति तदननुगमो न दोषाय स्वरूपसम्बन्धस्थले सम्बन्धाननुगमस्यादोषतायाः स्वीकृतत्वात् अन्यत-मत्वादिना यथाकथञ्चिदनुगमसम्भवाच्च। एवं घटं घटौ घटान् कलसं कलसौ कलसान् कुम्भं कुम्भौ कुम्भानित्यादौ यद्यदानुपूर्व्वीतः कर्म्मत्वविशेष्यकाधेयतासंसर्गक-घटप्रकारकान्वयबोधोऽनुभवसिद्धः तत्त-दानुपूर्व्वीनिश्चयविशिष्टत्वमेव स्वाधिकरणावच्छिन्नस्वाव्यवहितोत्तर-वर्त्तितासम्बन्धेन कार्य्यतावच्छेदके प्रवेश्य तत्तदानुपूर्व्वीविशेषा-

काङ्क्षानिश्चय-कर्म्मत्वविशेष्यकाधेयतासंसर्गक-घटप्रकारकशाब्दबोधयोः कार्य्य-कारणभावः कल्पनीयः[१] प्रत्यानुपूर्व्वीघटकपदयोर्विशेष्य-विशेषणभावभेदात् उक्तक्रमेण कार्य्य-कारणभावद्वयमिति न परस्परं व्यभिचारः, एवमेव कर्तृत्व-करणत्वादिविशेष्यक-घटप्रकारकान्वय-बोधेऽपि घटेन घटाभ्यां घटैः कलसेन कलसाभ्यां कलसैरित्याद्यानु-पूर्व्वीविशेषात्मकाकाङ्क्षानिश्चयानां कर्म्मत्वादिविशेष्यक-पटादिप्रकार-कान्वयबोधे च पटं पटौ पटान् वस्त्रं वस्त्रे वस्त्रानीत्याद्यानुपूर्व्वी-विशेषात्मकाकाङ्क्षानिश्चयानां कार्य्य-कारणभावः। न च तथापि पदार्थोपस्थित्यादिना तत्तदानुपूर्व्वीविशेषात्मकाकाङ्क्षानिश्चयनाशे-ऽपि शाब्दबोधोदयाद्व्यभिचार इति वाच्यं। स्वप्रयोज्यतत्तत्पदार्थोप-स्थितिसम्बन्धेनैव तस्य हेतुतया तन्नाशेऽपि तेन सम्बन्धेन तत्सत्त्वात्। एतेन तत्प्रमेयमित्यादौ तदादिपदेनापि घटादिनिष्ठकर्म्मत्वाद्युप-स्थितिद्वारा कर्म्मत्वादिविशेष्यकाधेयतासंसर्गक-घटादिप्रकारकान्वय-बोधजननात् तत्र घटमित्याद्यानुपूर्व्वीविशेषात्मकाकाङ्क्षाज्ञानस्य व्यभिचारः, एवं घटः प्रमेय इत्यादौ केवलघटादिपदेनापि घट-निष्ठकर्म्मत्वादौ लक्षणादिना कर्म्मत्वादिविशेष्यकाधेयतासंसर्गक-घटा-दिप्रकारकान्वयबुद्धिजननात् तत्र घटमित्याद्यानुपूर्व्वीविशेषात्म-काकाङ्क्षाज्ञानस्य इत्यपि निरस्तं। स्वाधिकरणावच्छिन्नस्वाव्यवहि-तोत्तरवर्त्तितासम्बन्धेन तत्तदानुपूर्व्वीनिश्चयविशिष्टतादृशशाब्दबोधं प्रत्येव तत्तदानुपूर्व्वीनिश्चयानां हेतुत्वात् तदादिपदजन्यतादृशशाब्द-बुद्धेश्चातथात्वात्।

---

(१) तत्तदानुपूर्व्वीत्यादिः कल्पनीय इत्यन्तः पाठः ग० घ० पुस्तके नास्ति।

कश्चित्तु[१] कर्म्मत्वोद्देश्यक-घटविधेयकशाब्दबुद्धित्वस्य घटमित्याद्यानुपूर्व्वीविशेषात्मकाकाङ्क्षानिश्चयकार्य्यतावच्छेदकतया तदादिपदजन्यकर्मत्वविशेष्यक-घटप्रकारकशाब्दबोधे न व्यभिचारः विशिष्टस्य पदार्थत्वेन तादृशोद्देश्य-विधेयभावापन्नत्वाभावात्[२] घटमित्यादौ च कर्मत्वत्वावच्छेदेन घटसंशयविरोधिविषयिताव्याप्यतादृशविषयिताया अनुभवबलेनाभ्युपेयत्वात् इत्याह[३]। तदसत्। तथापि घटं घटौ घटान् कलसं कलसौ कलसान् इत्याद्यानुपूर्व्वीविशेषाणां परस्परव्यभिचारवारणायोक्तक्रमस्यावश्यमनुसरणीयत्वात्।

न चैवंरूपेण हेतु-हेतुमद्भावे घटः कर्मत्वमित्यादावपि कर्मत्वविशेष्यकाधेयत्वसंसर्गक-घटप्रकारकशाब्दबोधापत्तिः[४] घटं कलसमित्याद्यानुपूर्व्वीविशेषात्मकाङ्क्षाज्ञानानां तादृशज्ञानाव्यवहितोत्तरवर्त्तितादृशशाब्दबोधं प्रत्येव हेतुत्वादिति वाच्यं। घटं कलसमित्याद्यानुपूर्व्वीविशेषज्ञानाव्यवहितोत्तरवर्त्त्यतिरिक्ततादृशशाब्दबोधस्याप्रसिद्धतया तत्तदानुपूर्व्वीविशेषज्ञानात्मकविशेषसामग्रीविरहादेव तत्र तादृशशाब्दबोधानुदयात् विशेषसामग्रीसहिताया एव सामान्यसामग्र्याः फलोपधायकत्वात्। न च घटं कलसं इत्याद्यानुपूर्व्वीज्ञानाव्यवहितोत्तरवर्त्त्यतिरिक्तस्तादृशशाब्दबोधः तत्पदादिजन्यतादृशशाब्दबोध एव प्रसिद्धस्तस्यैव घटः कर्म्मत्वमित्यादौ उत्पत्तिप्रसङ्गः

---

(१) केचित्त्विति ख०, ग०।

(२) एकपदोपस्थाप्यपदार्थानां उद्देश्य-विधेयभावास्वीकारादिति भावः।

(३) इत्याहुरिति ख०, ग०।

(४) योग्यताज्ञानबलादेवेत्यादिः।

नाम-विभक्ति-धात्वाख्यात-क्रिया-कारकपदानां पर-

---

इति वाच्यं। तत्पदादिजन्यतादृशशाब्दबोधे स्वजन्यघटनिष्ठकर्म्मत्वाद्यात्मकविशिष्टोपस्थितिद्वारा तत्पदादिज्ञानस्य हेतुतया तदभावादेव तस्यासम्भवात्। तादृशोपस्थितिद्वारा तत्पदादिज्ञानस्य कार्य्यतावच्छेदकञ्च तत्पदादिज्ञानविशिष्टतादृशशाब्दबुद्धित्वं वैशिष्ट्यञ्च स्वाधिकरणावच्छेदेन स्वजन्यघटनिष्ठकर्मत्वविषयकतत्तदुपस्थित्यव्यवहितोत्तरवर्त्तित्वं, इत्यञ्च कृत्यादिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकशाब्दबोधेऽपि अव्यवहितपूर्व्ववर्त्तितासंसर्गकानयनपदत्वधर्मितावच्छेदकक-तिपदत्वविशेषणतावच्छेदककनिश्चयत्वेन कारणता तादृशनिश्चयविशिष्टकृत्यादिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकशाब्दबुद्धित्वेन कार्य्यता, एवमव्यवहितोत्तरवर्त्तितासंसर्गकतिपदत्वधर्मितावच्छेदककानयपदत्वविशेषणतावच्छेदककनिश्चयत्वेन कारणता तादृशनिश्चयविशिष्टकृत्यादिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकशाब्दबुद्धित्वेन कार्य्यता इत्यादिक्रमेण आनयति आनयतः आनयन्ति प्रापयति प्रापयतः प्रापयन्तीत्यादियद्यदानुपूर्व्वीतः शक्त्या लक्षणया वा कृत्यादिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकान्वयबोधोऽनुभवसिद्धः तत्तदानुपूर्व्वीनिश्चयमेव कार्य्यतावच्छेदके प्रवेश्य प्रत्येकानुपूर्व्वीघटकपदयोर्विशेष्य-विशेषणभावभेदात् कार्य्य-कारणभावद्वयं बोध्यं, आनयनं कृतिरित्यादौ तु विशेषसामग्रीविरहादेव न तादृशशाब्दबोधोदय इति समासः।

लक्ष्येषु लक्षणं सङ्गमयति, 'नाम-विभक्तीति घटादिपदानुस्वारा-

स्परं विना न परस्परस्य स्वार्थान्वयानुभवजनकत्वं।

---

दिपदेत्यर्थः, 'धात्वाख्यातेति आनयादिपद-त्यादिपदेत्यर्थः, 'क्रिया-कारकपदेति त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपद-घटादिपदाव्यवहितोत्तरवर्त्त्यनुस्वारादिपदेत्यर्थः, 'परस्परं विना परस्परस्येति परस्परस्य परस्परं विनेति योजना, अव्यवहितपूर्ववर्त्तित्वादिसंसर्गेण परस्परविशेष्यक-परस्परप्रकारकोपस्थितिं विनेत्यर्थः, 'न स्वार्थान्वयानुभवजनकत्वमिति न तादात्म्यातिरिक्तसम्बन्धेन कर्म्मत्वादिविशेष्यक-घटादिप्रकारक-कृत्यादिविशेष्यकानयनादिप्रकारकानयनादिविशेष्यक-घटकर्म्मत्वादिप्रकारकशाब्दबोधजनकत्वमित्यर्थः, अतः कर्म्मत्वादिविशेष्यक-घटादिप्रकारकभेदान्वयबोधेऽव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटादिपदेऽनुस्वारादिमत्त्वं अव्यवहितोत्तरवर्त्तितासम्बन्धेनानुस्वारादिपदे घटादिपदवत्त्वं वा आकाङ्क्षा, कृत्यादिविशेष्यकानयनादिप्रकारकभेदान्वयबोधेऽव्यवहितपूर्व्ववर्त्तितासम्बन्धेनानयादिपदे त्यादिपदवत्त्वं अव्यवहितोत्तरवर्त्तितासम्बन्धेन त्यादिपदे आनयादिपदवत्त्वं वा आकाङ्क्षा, आनयनादिविशेष्यक-घटकर्म्मत्वादिप्रकारकभेदान्वयबोधे घटादिपदाव्यवहितोत्तरवर्त्त्यनुस्वारादिपदे त्यादिपदाद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदवत्त्वं त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदे घटादिपदाद्यव्यवहितोत्तरवर्त्त्यनुस्वारादिपदवत्त्वं वा आकाङ्क्षेति शेषः। यद्यपि आनयनादिविशेष्यक-घटकर्म्मत्वादिप्रकारकभेदान्वयबोधे अव्यवहितपूर्व्ववर्त्तितासम्बन्धेन घटादिपदाव्यवहितोत्तरवर्त्त्यनुस्वारादिपदे त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदवत्त्वस्य अव्यवहि-

तोत्तरवर्त्तितासम्बन्धेन त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदे घटादिपदाव्यवहितोत्तरवर्त्त्यनुस्वारादिमत्त्वस्य वा कथमाकाङ्क्षात्वं घटं पटं कुड्यञ्चानयतीत्यादौ व्यवधानेऽपि आनयनादिविशेष्यक-घटकर्म्मत्वादिप्रकारकभेदान्वयबोधात् । न चाव्यवधानांशो न सम्बन्धकोटौ निवेशनीयः किन्तु पूर्व्ववर्त्तित्वोत्तरवर्त्तित्वमात्रं सम्बन्ध इति वाच्यम् । एवमपि आनयति घटमित्यादौ व्युत्क्रमेऽपि तादृशभेदान्वयबुद्धा तत्र तदुभयोराकाङ्क्षात्वासम्भवात्, तथापि तादृशान्वयबोधे[१] पूर्व्ववर्त्तित्वोत्तरवर्त्तित्वान्यतरसम्बन्धेनानुस्वाराद्यव्यवहितपूर्व्ववर्त्तिघटादिपदे त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदवत्त्वस्य पूर्व्ववर्त्तित्वोत्तरवर्त्तित्वान्यतरसम्बन्धेन त्याद्यव्यवहितपूर्व्ववर्त्त्यानयादिपदेऽनुस्वाराद्यव्यवहितपूर्व्ववर्त्तिघटादिपदवत्त्वस्य वा आकाङ्क्षात्वं, तेनानयति घटं घटमानयतीत्यादेरुभयस्यैव सङ्ग्रहः, परन्तु अन्यतरत्वस्य सम्बन्धतावच्छेदकत्वाभ्युपगमे[२] कार्य्य-कारणभावद्वयं, इतरथा तु कार्य्य-कारणभावचतुष्टयं, कारकपदेत्यस्य चानुस्वाराद्यव्यवहितपूर्व्ववर्त्तिघटादिपदेत्यर्थः, घट-पटकुड्यान्यानयतीत्यादौ घटपदाव्यवहितोत्तरवर्त्तिपटादिपदाव्यवहितोत्तरवर्त्तिकुड्यादिपदोत्तरत्वसम्बन्धेन त्याद्यन्तानयादिपदे घटादिपदवत्त्वमेवाकाङ्क्षा इत्यादिक्रमेण बोध्यं[३] इत्यभिप्रायः।

ननु नीलोघटश्चैत्रोधनं घटोरूपमित्यादौ संयोग-स्वत्वाधेयत्वादिसम्बन्धेन घट-धन-रूपादिविशेष्यकः नील-चैत्र-घटप्रकारकः

---

(१) आनयनादिविशेष्यक-घटकर्म्मत्वादिप्रकारकभेदान्वयबोधे इत्यर्थः ।

(२) अन्यतरत्वेन सम्बन्धत्वाभ्युपगम इति क० ।

(३) वाच्यमिति ग० ।

कुतो न शाब्दबोधः, एवं चैत्रः पच्यते तण्डुलं पचतीत्यादौ कर्तृत्व-कर्मत्वादिसम्बन्धेन पाकादिविशेष्यकः चैत्र-तण्डुलादिप्रकारकः कुतो न शाब्दबोधः, एवं पचति गच्छति चेत्यादौ उत्तरवर्त्तित्वादि-सम्बन्धेन गमनादिविशेष्यकः पाकादिप्रकारकः कुतो न शाब्दबोधः। न च नामार्थयोर्नामार्थ-धात्वर्थयोर्धात्वर्थयोश्च भेदेन परस्परम-न्वयबोधस्य[१] अव्युत्पन्नत्वान्न तत्र तथा शाब्दबोध इति वाच्यम्। निराकाङ्क्षत्वमन्तरेणाव्युत्पत्तेर्निर्वक्तुमशक्यत्वात् आकाङ्क्षायाश्च एता-दृशशाब्दबुद्धावनिर्व्वचनात्। अथ तत्प्रमेयमित्यादावेव तादृशशा-ब्दबोधः प्रसिद्धः तदादिपदेन तादृशविशिष्टोपस्थितिद्वारा तादृ-शशाब्दबोधजननात् तथाच तादृशशाब्दबोधं प्रति स्वजन्यतादृश-विशिष्टोपस्थितिसम्बन्धेन तदादिपदज्ञानस्य हेतुतया तदभावादेव नोक्तस्थलेषु तादृशशाब्दबोधः। न च तथापि संयोगादिसम्बन्धेन घटाद्युद्देश्यको नीलादिविधेयकः कुतो न शाब्दबोधः तादृशोद्देश्य-विधेयभावापन्नज्ञानं प्रति तदादिपदज्ञानस्याहेतुत्वात् विशिष्टस्य पदार्थत्वे तु तादृशविषयिताविरहादिति वाच्यम्। यत्र हि त-त्संयुक्तादिघट-तदीयधन-तद्वृत्तिरूप-तत्कर्तृक-तत्कर्म्मकपाकाद्यात्मक-सम्बन्ध एव घटत्व-धनत्वादिरूपेण शक्त्या लक्षणया वा षष्ठ्यादिवि-भक्त्यर्थो यथा नीलस्य गृहं चैत्रस्य वाटी पटस्य रूपत्वं तण्डुलस्य कृतिः चैत्रस्यौदनं इत्यादौ तत्रैव तादृशोद्देश्य-विधेयभावापन्ना शाब्दबुद्धिः प्रसिद्धा, सम्प्रदायमते तु नीलस्य घटः चैत्रस्य धनं घटस्य रूपं तण्डुलं पचति चैत्रेण पच्यते इत्यादावपि तादृशशा-

(१) परस्परभेदान्वयबोधस्येति ख०, ग०,।

द्वबुद्धिः प्रसिद्धा तन्मते च तत्र षष्ठ्याद्यर्थस्य संयोग-स्वत्वादेः संसर्गतया प्रकारतया च भानाभ्युपगमात्, एवञ्च घटवृत्ति कर्म्मत्वमित्याद्यन्वयबोधे घटादिपदे द्वितीयादिविभक्तिमत्त्वादिकमिव नीलादिपदे षष्ठ्यादिविभक्तिमत्त्वमेव तादृशान्वयबोधे आकाङ्क्षा, स्वप्रयोज्यवृत्तिज्ञानजन्यनील-घटाद्युभयोपस्थितिसम्बन्धेन च तन्निश्चयस्य तादृशान्वयबोधे हेतुत्वं तेन तादृशविभक्तिमत्त्वज्ञानेऽपि ततो नील-घटाद्यनुपस्थितौ न तथान्वयबोधः, सम्प्रदायमते च पूर्व्ववर्त्तित्वोत्तरवर्त्तित्वान्यतरसमभिव्याहारसम्बन्धेन षष्ठ्याद्यन्तनीलादिपदे घटादिपदवत्त्वमपि तादृशान्वयबोधे आकाङ्क्षा, स्वप्रयोज्यवृत्तिज्ञानजन्यविशेष्य-विशेषणसंसर्गोपस्थितिसम्बन्धेन च तन्निश्चयस्य हेतुत्वं, तेन नीलस्य घटः चैत्रस्य धनं इत्यादौ षष्ठ्यादिना संयोग-स्वत्वादेरुपस्थितिदशायां समानकालीनत्वादिसम्बन्धेन नील-चैत्रादेर्घट-धनादौ नान्वयः समानकालीनत्वादिसंसर्गस्य षष्ठ्याद्यनुपस्थापितत्वात्, इत्यञ्च यथा घटः कर्म्मत्वमित्यादौ घटमित्याद्यानुपूर्व्वीविशेषाकाङ्क्षानिश्चयरूपविशेषसामग्रीविरहाद्घटवृत्ति कर्म्मत्वमित्याद्यन्वयबोधाभावस्तथा नीलोघट इत्यादावपि तत्तदानुपूर्व्वीविशेषात्मकाकाङ्क्षानिश्चयरूपविशेषसामग्रीविरहादेव नोद्देश्य-विधेयभावापन्नतादृशान्वयबोध इति चेत्, तर्हि नीलो घटोऽस्ति नीलं घटमानयेत्यादौ तादात्म्यसम्बन्धेन नीलादेर्घटादावन्वयो न स्यात्[१] घटाद्युद्देश्यक-नीलादिविधेयकशाब्दबोधे नीलादिपदे षष्ठ्यादिविभक्तिमत्त्वस्य स्वप्रयोज्यनील-घटाद्युभयोपस्थितिसम्बन्धेन हेतुतया तदभावात् प्रकृते घटादेर्नी-

---

[१] घटादावन्वयः कथं स्यादिति ग० ।

**परमते नीलोघटोऽस्ति नीलं घटमानयेत्यादौ नामार्थानां कारकाणाञ्च न परस्परमन्वयबोधः विशेषणा-**

---

त्वादिपदोत्तरविभक्त्यनुपस्थापितत्वात्। सम्प्रदायमते तु उक्तान्यतरसम्बन्धेन षष्ठ्याद्यन्तनीलादिपदे घटादिपदवत्त्वस्य स्वप्रयुक्तनीलघटतादात्म्योपस्थितिसम्बन्धेनासत्त्वाच्च तादात्म्यसंसर्गस्य नीलादिपदोत्तरविभक्त्यनुपस्थापितत्वात् इत्यत आह, 'परमत इति, 'नामार्थानां' प्रथमाविभक्तिसमभिव्याहृतनामार्थानां, यथा नीलोघटोऽस्तीत्यादौ, 'कारकाणां' कारकविभक्त्यन्तनामार्थानां, यथा नीलं घटमानयेत्यादौ, तन्मते कुतो नान्वयस्तदाह, 'विशेषणान्वितेति विशेषणवाचकनीलादिपदोत्तरप्रथमा-द्वितीयादिविभक्त्यर्थस्य संख्याकर्मत्वादेरित्यर्थः, 'अनन्वयादिति प्रकृत्यर्थतावच्छेदकनीलत्वाद्यवच्छिन्नेन सममनन्वयप्रसङ्गादित्यर्थः, सुवर्थसंख्यायाः स्वसमानपदोपात्तेतरसम्बन्धेन स्वसमानपदोपात्तेतरविशेषणं यत्तदनन्वितत्वनियमेन प्रथमाद्यर्थसंख्यायाः तादात्म्यसम्बन्धेन घटादिविशेषणतयान्वितस्य नीलादेर्विशेषणतया अन्वयासम्भवात्, संख्या-कालाद्यतिरिक्तविभक्त्यर्थस्य स्वेतरसम्बन्धेन स्वेतरविशेषणं यत्तदनन्वितत्वनियमेन च द्वितीयाद्यर्थकर्मत्वादेस्तादात्म्यसम्बन्धेन घटादिविशेषणतयान्वितस्य नीलादेर्विशेषणतया अन्वयासम्भवादिति भावः। सम्प्रदायमते घटमानयेत्यादौ कर्मत्वादेः संसर्गतया प्रकारतया च उभयथा भानाभ्युपगमात् ग्रन्थकृतापि 'यद्देत्यादिना विभक्त्यर्थस्य प्रकारतया संसर्गतया उभयथा भानस्य वक्ष्यमाणत्वात् स्वसमानपदोपात्तेतरसम्बन्ध-स्वेत-

न्वितविभक्त्यर्थानन्वयादिति न विशिष्टवैशिष्ट्येनान्वयः किन्त्वार्थः समाजः। अस्माकन्तु नील-घटयोरभेदानुभवबलादभेद एव संसर्गः विशेषणविभक्तिः साधुत्वार्था।

---

रसम्बन्धयोर्नियमे प्रवेशः। ननु नील-घटयोः परस्परमनन्वये कर्म्मत्वादौ नीलविशिष्टघटविशिष्टप्रत्ययः कथं स्यादित्यत आह, 'इतीति, 'न विशिष्टवैशिष्ट्येनेति, अतएव एतन्मते विशिष्टवैशिष्ट्येनान्वय एव न इत्यर्थः, 'किन्त्वार्थः समाज इति किन्त्वर्थयोर्नीलकर्म्मत्वयोर्घट-कर्म्मत्वयोः समाजः एकस्यामेवानयनादिक्रियायामन्वय-इत्यर्थः, अर्थयोरयं इत्यर्थे तद्धितप्रत्ययात्, एवञ्च नीलं घटमानयेत्यादौ नीलकर्म्मक-घटकर्म्मकानयनानुकूलकृतिमानित्याकारकोऽन्वयबोधः, नीलो घटोऽस्ति इत्यादौ च एकनीलोऽस्ति एकघटोऽस्ति इत्यन्वयबोध इति भावः। तत् किमिह्यैव निर्भरो मादृशामित्यत-आह, 'अस्माकन्त्विति, 'अभेदानुभवबलात्' अभेदसंसर्गकान्वयबोधस्यानुभवसिद्धत्वात्, 'अभेद एव संसर्ग इति अभेदो नील-घटयोः संसर्गमर्य्यादया भासत एवेत्यर्थः, अभेदातिरिक्तसम्बन्धेन घटाद्युद्देश्यक-नीलादिविधेयकशाब्दबुद्धिं प्रत्येव तादृशानुपूर्व्वीविशेषात्मकाकाङ्क्षा-निश्चयानां निरुक्तोपस्थितिसम्बन्धेन हेतुत्वात् अन्यथा नीलघट-मानय नीलोत्पलमित्यादिसमासस्थले नीलादेरन्वयाबोधप्रसङ्गा-दिति भावः। नन्वेवं प्रथमा-द्वितीयादिविभक्त्यर्थस्य संख्या-कर्म्म-त्वादेः प्रकृत्यर्थतावच्छेदकनीलत्वावच्छिन्नेन सममन्वयबोधः कथं स्यादित्यत आह, 'विशेषणेति, 'साधुत्वार्थमिति सावधारणं अभेदा-

न्वयबोधे आकाङ्क्षासम्पत्त्यर्थमेवेत्यर्थः, न तु तदर्थस्य नीलत्वाद्यवच्छि-न्नेन सममन्वयबोध इति भावः। यद्यपि विशेषणविभक्तेरभेदान्वय-बोधे कथमाकाङ्क्षासम्पादकत्वं। न च नीलेन घटमानयेत्यादौ अभेदान्वयबोधे आकाङ्क्षाभावाद्विशेषण-विशेष्यवाचकपदयोः समान-विभक्तिसमभिव्याहारस्याभेदेनान्वयबोधे आकाङ्क्षात्वात्तस्य आकाङ्क्षा-सम्पादकत्वमिति वाच्यम्। नीलघटः नीलोत्पलमित्यादिसमा-सस्थले सुन्दरं दधि दधीदमित्यादावसमासस्थले चाभेदान्वयबोधा-नुपपत्तेः[१]। न च तत्र लुप्तविभक्तिस्मरणादेवान्वयबोध इति वाच्यम्। तदस्मरणेऽपि अभेदान्वयबोधात् राजपुरुष इत्यादिषष्ठीतत्पुरुषादौ लुप्तविभक्तिस्मरणेनापि समानविभक्तिकत्वानुपपत्तेश्च तत्र षष्ठ्या एव लुप्तत्वात् न तु प्रथमायाः, एवं नीलोत्पलस्येत्यादिकर्मधारयादावपि लुप्तविभक्तिस्मरणेन समानविभक्तिकत्वासम्भवः तत्र तत्र प्रथमाया एव लुप्तत्वात् न तु षष्ठ्याः। न च प्रथमादेर्लुप्तत्वेऽपि तत्स्मरणादेव तत्रान्वयबोध इति वाच्यम्। स्फुटतरानुभवविरोधात्। अतएव विरुद्धविभक्तिराहित्यमभेदान्वयबोधे तन्त्रमित्यपि निरस्तं। विरुद्ध-विभक्तिराहित्यं हि विशेषणवाचकपदे विशेष्यवाचकपदोत्तरवि-भक्तिभिन्नविभक्तिराहित्यं, विशेष्यवाचकपदे विशेषणवाचकपदो-त्तरविभक्तिभिन्नविभक्तिराहित्यं वा, नाद्यः सुन्दरं दधीत्यादाव-प्रसिद्धेः प्रतियोगिकोटौ विभक्त्यप्रवेशे प्रसिद्धिसम्भवेऽपि तद्राहि-त्याभावात् स्तोकं पचतीत्यादावभावाच्च। न द्वितीयः, दधीदं नीलोत्पलमित्यादौ अप्रसिद्धेः प्रतियोगिकोटौ विभक्त्यप्रवेशे प्र-

(१) अभेदान्वयबोधाभावापत्तेरिति ग०।

यद्वा समानविभक्तिकयोरभेदानुभवबलात् विशेष-

---

सिद्धिसम्भवेऽपि तद्राहित्याभावात् स्तोकं पचतीत्यादावभावाच्च। अत एव विशेषणवाचकपदे विशेष्यवाचकपदोत्तरानुसन्धीयमानविभक्तिभिन्नविभक्तिराहित्यं, विशेष्यवाचकपदे विशेषणवाचकपदोत्तरानुसन्धीयमानविभक्तिभिन्नविभक्तिराहित्यं वा तदित्यपि न, स्तोकं पचतीत्यादावभावात् सुन्दरं दधि दधीदं नीलोत्पलमित्यादौ लुप्तविभक्तिमस्मरतोऽप्यभेदान्वयबोधाच्च, द्वितीये राजपुरुष इत्यादिषष्ठीतत्पुरुषादौ नीलोत्पलस्येत्यादिकर्म्मधारये च लुप्तविभक्तिस्मरणेनाप्यनुपपत्तेश्चेति। तथापि यादृश-यादृशविशेषण-विशेष्यवाचकनीलघटादिपदसमभिव्याहारात् नील-घटाद्योरभेदान्वयबोधोऽनुभवसिद्धस्तादृश-तादृशनील-घटादिसमभिव्याहार एव नील-घटाद्योरभेदान्वयबोधे आकाङ्क्षा, समभिव्याहारश्च क्वचिदव्यवहितपूर्व्ववर्त्तित्वं, क्वचिदव्यवहितोत्तरवर्त्तित्वं, क्वचित्पूर्व्ववर्त्तितत्तत्पदपूर्व्ववर्त्तित्वादिकं, क्वचिदुत्तरवर्त्तितत्तत्पदोत्तरवर्त्तित्वादिकं इति क्रमेण बोध्यं, तत्तन्निश्चयस्य च स्वविशिष्टनीलघटाद्यभेदान्वयबुद्धित्वावच्छिन्नं प्रति हेतुत्वमिति न परस्परं व्यभिचारः, तादृशसमभिव्याहारमध्ये च समानविभक्तिकयोः समभिव्याहारोऽपि प्रविष्ट इति विशेषणविभक्तेराकाङ्क्षासम्पादकत्वं युक्तमिति ध्येयं।

प्रकृत्यर्थतावच्छेदकावच्छिन्नान्वितत्वार्थबोधकत्वे सम्भवति तत्परित्यागस्यानौचित्यादाह, 'यद्वेति, 'अभेदानुभवबलादिति, अभेदस्य संसर्गतया प्रकारतया चोभयथानुभवस्वीकारात् इत्यर्थः, 'विशेषणा-

णान्वितविभक्तेरभेदार्थकत्वं अतो विशेषण-विशेष्यभावानुभावकत्वं तत्पदयोः, न परस्परं विना। द्वारमित्यत्राध्याहारं विना प्रतियोग्यलाभात् न स्वार्था-

---

न्वितेति, विशेष्य-विशेषणवाचकपदोत्तरप्रथमा-द्वितीयादेरित्यर्थः, 'विशेषण-विशेष्यभावेति परस्परं विशेष्य-विशेषणभावेन स्वार्थतावच्छेदकावच्छिन्नानुभवजनकत्वमित्यर्थः, 'तत्पदयोरित्यनन्तरं छेदः विशेषणवाचकपद-तदुत्तरविभक्त्योरित्यर्थः, 'न परस्परं विनेति न स्वार्थतावच्छेदकावच्छिन्नयोः परस्परं विशेष्य-विशेषणभावं विनानुभवजनकत्वमित्यर्थः, इत्थञ्च नीलघट इत्यादावेकत्ववन्नीलवान् तादृशनीलाभेदवांश्च[१] एको घट इत्यन्वयबोध इति भावः। ननु कृत्यादिविशेष्यकानुकूलत्वादिसंसर्गकानयनादिप्रकारकशाब्दबोधं प्रत्यानयनादिपदे त्यादिपदवत्त्वस्यैवाकाङ्क्षात्वे केवलं द्वारमित्युक्तावपि आनयनकृत्यादिरूपार्थाध्याहारात् द्वारकर्म्मकानयनानुकूलकृतिमान् इत्यन्वयबोधः कथं स्याद्घटः कर्म्मत्वमित्यादाविव याऽवद्विशेषणसामग्रीविरहादित्यत आह, 'द्वारमित्यत्रेति, 'अध्याहारं विनेति आनयतीत्यादिपदाध्याहारं विना, 'न स्वार्थेति न द्वारकर्म्मकानयनानुकूलकृतिमान् इत्यन्वयबोधजनकत्वमित्यर्थः, अत्र हेतुमाह, 'प्रतियोग्यलाभादिति, कारणीभूतान्वयप्रतियोग्युपस्थितेरभावादित्यर्थः, वृत्त्या पदजन्यपदार्थोपस्थितेः शाब्दबुद्धौ हेतुत्वादिति भावः। ननु स्वर्गकामो यजेतेत्यादौ स्वर्गकामस्य कार्य्योयाग-

---

(१) एकत्ववन्नीलाभेदवांश्चेति ख०।

न्वयानुभावकत्वं, विश्वजिता यजेतेत्यत्र ममेदं कार्य्यमिति प्रवर्त्तकतात्पर्य्यविषयज्ञानं नाधिकारिणं विनेति तदाकाङ्क्षा।

यद्वा कर्त्तुरिवाधिकारिणोऽपि आक्षेपादेव लाभ-

---

इति प्रतीतेः स्वर्गकामस्य यजेतेत्यादौ च तदप्रतीतेश्च विध्युपस्थाप्यकार्य्यत्वेन सह स्वर्गकामान्वये स्वर्गकामादिपदे स्यादिपदवत्त्वमेव आकाङ्क्षा वाच्या तथाच विश्वजिता यजेतेत्यादौ स्वर्गकामरूपार्थाध्याहारात् कथं तादृशान्वयबोधः आकाङ्क्षाविरहादित्यत आह, 'विश्वजितेति, 'ममेदमिति स्वर्गकामस्येदं कृतिसाध्यमित्याकारकमित्यर्थः, 'प्रवर्त्तकेति, प्रवर्त्तकतात्पर्य्यविषयीभूतं ज्ञानमित्यर्थः, 'नाधिकारिणं विनेति, प्रथमान्तस्वर्गकामपदाध्याहारं विनेत्यर्थः, 'तदाकाङ्क्षेति, तत्राकाङ्क्षाज्ञानमित्यर्थः, अस्त्वेवेति शेषः। 'कर्त्तुरिवेति यत्र पचतीतिपदमात्रं प्रयुक्तं न तु चैत्र इत्यादि तत्र यथा पाक-कृत्योरन्वयबोधानन्तरमनुमानाच्चैत्रादिकर्तृविशेष्यकान्वयबोधस्तथेत्यर्थः, 'अधिकारिणोऽपि' विश्वजितेत्यादौ स्वर्गकामस्यापि, 'आक्षेपादेव' अनुमानादेव, अनुमानं व्याप्तिज्ञानं, तेन 'किन्त्वानुमानिक इति ग्रन्थस्य न पौनरुक्त्यं, 'लाभः' विध्यर्थकार्य्यत्वेऽन्वयबोधः, 'तदन्वयः' विध्यर्थकार्य्यत्वे तदन्वयः, 'आनुमानिकः' अनुमितिरूपः, यद्वा 'लाभः' उपस्थिति.। ननु स्वर्गकामस्यानुमानत उपस्थितावपि कार्य्यत्वेन सह तदन्वयः शब्दप्रतिपाद्य एवेति स दोषस्तदवस्थ-

इति तदन्वयो न शाब्दः किन्त्वानुमानिकः, गौण-लाक्षणिकयोरननुभावकत्वपक्षे तदुपस्थापितस्याध्या-

---

इत्यत आह, 'इति तदन्वय इति स्वर्गकामस्याक्षेपाल्लाभेऽपि पद-जन्यपदार्थोपस्थितेरभावान्न तदन्वयः शाब्द इत्यर्थः, तथाच तत्रा-काङ्क्षाविरहेऽपि न क्षतिः इति भावः। ननु चन्द्रे तिलकं गङ्गायां घोष इत्यादौ सप्तम्यर्थाधेयत्वविशेष्यक-निरूपितत्वसंसर्गक-मुख-तीरादिगौण-लाक्षणिकार्थप्रकारकान्वयबोधं प्रति चन्द्र-गङ्गादिपदे सप्तम्यादिविभक्तिमत्त्वमाकाङ्क्षा तच्चोक्तलक्षणमव्याप्तं गौण-लाक्षणिक-पदविषयकज्ञानयोर्गौण-लाक्षणिकपदोपस्थापितार्थविषयकशाब्दानु-भवं प्रत्यजनकत्वेन सप्तम्यादिविभक्तिप्रकारक-चन्द्र-गङ्गादिपदविशे-ष्यकज्ञानाभावस्य तादृशान्वयबुद्ध्यभावाप्रयोजकत्वात् कारणाभावस्यैव कार्य्याभावप्रयोजकत्वादित्यत आह, 'गौण-लाक्षणिकयोरिति, गौण-लाक्षणिकपदज्ञानयोरित्यर्थः, सादृश्यात्मकशक्यसम्बन्धो गौणी वृत्तिः तदितरसम्बन्धो लक्षणा, 'अननुभावकत्वपक्षे' अनुभावक-त्वाभावपक्षेऽपि, 'तदुपस्थापितस्य नानुभावकत्वं' तदुपस्थापितस्यानु-भवविषयत्वाभावः, तदुपस्थापितविषयकानुभवाभाव इति यावत्, 'इतरपदं विनेति चन्द्र-गङ्गादिगौण-लाक्षणिकपदविशेष्यक-सप्तम्या-दिरूपेतरपदप्रकारकोपस्थितिव्यतिरेकप्रयुक्त इत्यर्थः, गौण-लाक्ष-णिकयोरननुभावकत्ववादिनापि मुख-तीरादिगौण-लाक्षणिकार्थ-प्रकारक-निरूपितत्वादिसंसर्गकाधेयत्वविशेष्यकशाब्दानुभवं प्रति चन्द्र-गङ्गादिपदे सप्तम्यादिविभक्तिमत्त्वरूपानुपूर्व्वीविशेषज्ञानस्य हेतुत्वा-

हृतस्यैवेतरपदं विना[1] नानुभावकत्वं। घटः कर्मत्वं

भ्युपगमात् चन्द्रनिष्ठत्वं गङ्गानिष्ठत्वं इत्यादौ तादृशान्वयबोधाभावात्। न चैवं गौण-लाक्षणिकयोर्नानुभावकत्वमित्यस्य कोऽर्थ इति वाच्यं। शाब्दानुभवं प्रति पदज्ञानस्य कार्य्य-कारणभावो न तावद्वृत्तिसम्बन्धेन तत्प्रकारकपदज्ञानत्वेन तच्छाब्दबुद्धित्वेन, वृत्तेः शक्ति-लक्षणान्यतररूपतया तेन रूपेण हेतुत्वे गौरवादपि तु लक्षणामपेक्ष्य शक्तेर्लघुतया शक्तिसम्बन्धेन तदन्वयप्रतियोगिप्रकारकपदज्ञानत्वेन कारणता तच्छाब्दबुद्धित्वेन कार्य्यता गङ्गायां घोष इत्यादावपि शक्तिसम्बन्धेन तीरान्वयप्रतियोगिप्रकारकपदज्ञानमस्त्येव आधेयत्वस्य तीरान्वयप्रतियोगितया शक्तिसम्बन्धेनाधेयत्वप्रकारकसप्तमीविभक्तिज्ञानस्यैव तथात्वादतो गौणी लक्षणावृत्तिर्न पदज्ञाननिष्ठशाब्दबोधकारणतायाः सांसर्गिकविषयतासम्बन्धेनावच्छेदिकेत्येव तदर्थत्वात्, न तु गौण-लाक्षणिकपदविषयकज्ञानस्य न केनापि रूपेण शाब्दानुभवहेतुत्वमिति तदर्थः, तीरादिशक्तिमत्त्वेन भ्रमात्मक-गङ्गादिपदज्ञानस्य तेनापि हेतुत्वाभ्युपगमादिति भावः। अत्र[2] समुचितं दृष्टान्तमाह, 'अध्याहृतस्यैवेति, शक्त्युपस्थापितस्य प्रवाहादेरिवेत्यर्थः, यथा शक्त्युपस्थापितप्रवाहादिविषयकानुभवाभावो गङ्गादिपदविशेष्यकसप्तम्यादिरूपेतरपदप्रकारकज्ञानव्यतिरेकप्रयुक्तस्तथा लक्षणोपस्थापिततीरादिविषयकानुभवाभावोऽपीत्यर्थः। ननु कर्म्म-

---

(१) तदुपस्थापितस्यार्थस्याध्याहृतस्यैवेतरपदं विनेति ख०। तदुपस्थापितस्याध्याहृतपदस्यैवेतरपदं विनेति क०। (२) अत्रापीति ख०।

**आनयनं कृतिरित्यादौ अभेदेन नान्वयबोधोऽयोग्य-त्वात् तत्तत्पदेभ्यस्तात्पर्य्यविषयतत्तत्पदार्थस्वरूपज्ञानञ्च पदान्तरं विनैव। घटमानयतीत्यत्रैव भ्रमेण तथा-न्वयतात्पर्य्येऽपि क्रिया-कारकभावेन नान्वयः, नाम-**

---

त्वादिविशेष्यकाधेयत्वादिभेदसंसर्गक-घटादिप्रकारकान्वयबुद्धिं प्रत्येव घटमित्याद्यानुपूर्व्वीविशेषस्याकाङ्क्षात्वात् घटः कर्म्मत्वमित्यादौ तादृ-शशाब्दबुद्धिर्माऽस्तु अभेदसंसर्गेण च कुतो नान्वयबोध इत्यत आह, 'घटः कर्म्मत्वमिति, 'अयोग्यत्वात्' योग्यताज्ञानविरहात्, योग्यता-भ्रमदशायान्तु भवत्येवेति भावः। ननु यदि तत्र न योग्यता तदा तत्पदार्थोपस्थितिरेव कुत इत्यत आह, 'तत्तदिति, 'पदान्तरं विनैवेति, का तु कथा योग्यताया इत्यर्थः[१]। ननु आधेयत्वादि-संसर्गक-कर्म्मत्वादिविशेष्यक-घटादिप्रकारकशाब्दबोधे घटमित्याद्या-नुपूर्व्वीविशेषस्यैवाकाङ्क्षात्वे घटः कर्म्मत्वमित्यादावपि कदाचित्ता-दृशान्वयबोधे तात्पर्य्यदशायां तादृशान्वयबोधो दृश्यते स कथं स्यादित्यत आह, 'घटमिति, 'भ्रमेणेति अयथार्थेनेत्यर्थः, अभेदे तृतीया, तथाचायथार्थतथान्वयतात्पर्य्येऽपीत्यर्थः, तद्वाक्यात् तथा-न्वयबोधानुत्पत्त्या तदिच्छाया अयथार्थत्वमिति भावः। 'क्रियेति घटकर्म्मकानयनानुकूलकृतिमानित्यन्वयबोधस्य कदापि नेत्यर्थः, अत्र हेतुमाह, 'नामेति, यत इत्यादिः, 'अन्वयबोधे' अभेदातिरिक्त-

---

(१) घटादिपदे अनुस्वारादिपदं विनैवेत्यर्थः, योग्यतायाः का कथा योग्य-ताद्यसत्त्वे पदार्थोपस्थितिः सुतरां भविष्यतीति भावः।

**विभक्ति-धात्वाख्यात-क्रिया-कारकपदानां अन्वयबोधे तान्येव पदानि समर्थानि न तु तदर्थकानि पदान्तराणि । अग्निः करणत्वं ओदनः कर्म्मता पाकः कृतिः इष्टसाधनता इत्यादिपदेभ्यः अग्निनौदनं पचेतेत्यन्वेव अन्वयाबोधात्, अग्निकरणकौदनकर्म्मकपाकविषयक-कृतिरिष्टसाधनं इति तु वाक्यं न पदं, अतएव दार-**

---

सम्बन्धेन स्वार्थान्वयबोधे, 'तान्येव पदानि' नामादिपदसमभिव्याहृत-विभक्त्यादिरूपाण्येव पदानि, 'समर्थानि' स्वरूपयोग्यानि । नन्वत्र किं प्रमाणं इत्यत आह, 'अग्निरिति, 'कृतिरिष्टसाधनतेति, कृतीष्ट-साधनत्वं विध्यर्थः इत्येकदेशिमताभिप्रायेणेदं । ननु नाम-विभक्त्या-द्यर्थानामभेदातिरिक्तसम्बन्धेनान्वयबोधे नामादिपदसमभिव्याहृत-विभक्त्यादेरेव स्वरूपयोग्यत्वेऽग्निकरणकौदनकर्म्मकेत्यादावग्निनौदनं पचेत्यन्वेवान्वयबोधः कथं स्यादित्यत आह, 'अग्निकरणकेति, 'इति तु वाक्यमिति इति च वाक्यमित्यर्थः, 'न पदं' न तादृशार्थप्रत्या-यकं, अग्निनौदनं पचेदित्यत्र हि अग्निनिष्ठतासम्बन्धेन विशेषणतया तृतीयार्थकरणत्वेऽन्वेति, करणत्वञ्च निरूपकतासम्बन्धेन विशेषणतया पाके, कार्य्यत्वस्य[१] तृतीयार्थत्वे अग्निनिरूपितत्वसम्बन्धेन विशेषणतया तृतीयार्थकार्य्यत्वे,[२] तच्चाश्रयतासम्बन्धेन विशेषणतया पाके, एवमोदनं निष्ठतासम्बन्धेन विशेषणतया द्वितीयार्थे कर्म्मत्वे, कर्म्मत्वञ्च निरू-

---

(१) जन्यत्वस्येति ख० । (२) तृतीयार्थजन्यत्व इति ख० ।

मित्यत्र विधेरिष्टपदाध्याहारः, क्रियापदार्थस्यान्यत उप-

पकतासम्बन्धेन विशेषणतया पाके, पाकस्य विषयितासम्बन्धेन विशे-
षणतया विध्यर्थकृतौ, तादृशपाकविषयककृतौ च विधेरर्थान्तरमि-
ष्टसाधनत्वमाश्रयतासम्बन्धेन विशेषणतयाऽन्वेति, अग्निकरणकेत्यादौ
च अग्निपदस्याग्निनिष्ठे लक्षणा, करणपदस्य करणतानिरूपके लक्षणा,
तदेकदेशे करणतायाञ्चाग्निनिष्ठस्याभेदेनान्वयः, तादृशकरणता-
निरूपकस्य तु लक्षणया पाकपदार्थस्य पाकनिरूपितस्यैकदेशे पाके-
ऽभेदेनान्वयः, एवमोदनपदं ओदननिष्ठपरं, कर्म्मपदं कर्म्मतानिरूपके
लाक्षणिकं, तदेकदेशे कर्म्मतायाञ्च ओदननिष्ठस्याभेदेनान्वयः, तादृ-
शकर्म्मतानिरूपकस्य लक्षणया पाकपदार्थस्य पाकनिरूपितस्य एकदेशे
पाकेऽभेदेनान्वयः, तादृशनिरूपितस्य(१) तु लक्षणया विषयपदार्थस्य
विषयिताश्रयस्यैकदेशे विषयितायामभेदेनान्वयः, विषयिताश्रयस्य तु
कृतावभेदेनान्वयः, इष्टपदञ्च इष्टनिरूपितपरं तस्य च साधनपदार्थैक-
देशे साधनतायामभेदेनान्वयः, साधनस्य कृत्यादावभेदेनान्वयः, अभे-
दसम्बन्धेन एकदेशान्वयासहिष्णुतायाञ्च विषयपदस्यैवाग्निनिष्ठकर-
णतानिरूपकौदननिष्ठकर्म्मतानिरूपकपाकविषयिणि लक्षणा, अन्यत्
सर्व्वं तात्पर्य्यग्राहकं, तादृशविषयिणि कृतेरभेदेनान्वयः, इष्टपदमपि
तात्पर्य्यग्राहकं, साधनपदञ्चेष्टसाधनपरं, तस्य च कृतावभेदेनान्वयः
इति भावः। 'अतएवेति यतो नाम-धात्वाख्यातादिभिर्यादृशान्वय-
बोधो जन्यते तादृशान्वयबोधे तान्येव पदानि समर्थानि न तु
पदान्तराणीत्यर्थः, 'क्रियापदार्थस्येति धात्वर्थस्यापिधानस्येत्यर्थः,

(१) पाकपदार्थस्य पाकनिरूपितस्येति ख० ।

**स्थितौ अपि कारकानन्वयात् असामर्थ्यञ्च स्वभावात्। अनासन्नमपि आसन्नतादशायां आसन्नत्वभ्रमेण वा अन्वयबोधसमर्थमेव। वह्निना सिञ्चतीत्यत्र क्रिया-कारकपदयोरन्वयबोधे सामर्थ्येऽपि अयोग्यताज्ञानं**

---

'अन्यत.' धातुं विना, 'कारकेति कर्मत्वान्वयासम्भवादित्यर्थः। ननु पदत्वाविशेषेऽपि किञ्चिदेव स्वरूपयोग्यं किञ्चिन्नेत्यत्र किं नियामकमित्यत आह, 'असामर्थ्यञ्चेति, स्वरूपायोग्यत्वञ्चेत्यर्थः, 'स्वभावात्' तदानुपूर्व्वीविशेषरूपाकाङ्क्षात्मकस्वरूपयोग्यतावच्छेदकधर्म्मविरहात्। नन्वेवमनासन्नस्यापि स्वरूपायोग्यत्वादेव शाब्दबोधाजनकत्वोपपत्तेः किमासत्तेः पृथक्हेतुत्वेनेत्यत आह, 'अनासन्नमपीति व्यवहितोच्चरितमपीत्यर्थः, 'आसन्नतादशायां' अव्यवधानेनान्वयप्रतियोग्युपस्थितिदशायां, इदञ्चान्वयप्रतियोग्युपस्थित्यव्यवधानस्य स्वरूपसतोहेतुत्वपक्षे, तज्ज्ञानस्य हेतुत्वपक्षे त्वाह, 'आसन्नत्वभ्रमेण वेति, 'अन्वयबोधसमर्थमेवेति अन्वयबोधोपधायकमेवेत्यर्थः, तथाच तस्य स्वरूपायोग्यत्वे ततः कदापि फलोपधानं न स्यादिति भावः। ननु नाम-विभक्ति-धात्वाख्यात-क्रिया-कारकपदार्थानामभेदातिरिक्तसम्बन्धेनान्वयबोधे नामादिसमभिव्याहृतविभक्त्यादीनां स्वरूपयोग्यत्वे वह्निना सिञ्चतीत्यत्र कुतो न तादृशान्वयबोध-इत्यत आह, 'वह्निनेति, 'सामर्थ्येऽपि' स्वरूपयोग्यत्वेऽपि, 'अयोग्यताज्ञानं' अयोग्यतानिश्चयः, 'अतएव' अयोग्येऽपि स्वरूपयोग्यत्वसत्त्वादेव। ननु योग्यताभ्रमदशायां स्वरूपयोग्यताभ्रमादेवान्वय-

प्रतिबन्धकं दाहे समर्थस्याप्यग्नेर्मणिरिव। अतएव योग्यताभ्रमात् प्रतिबन्धकाभावे ततोऽप्यन्वयबोधः। नहि स्वभावतोऽसमर्थं आरोपितसामर्थ्यं वा दहति पचति वेति, प्रकृते तु पदार्थस्वरूपज्ञानं न त्वन्वयभ्रमोऽपि। पुरुषपदं विनापि राज्ञ इत्यस्य पुत्रेण समं स्वार्थान्वयानुभावकत्वं इति न तदाकाङ्क्षा।

---

बोध इत्यत आह, 'न हीति, 'स्वभावतोऽसमर्थं' वस्तुगत्या अजनकं, 'आरोपितसामर्थ्यं' आरोपितजनकताकं। ननु घटः कर्मत्वमित्यादेः स्वरूपयोग्यत्वे तत्र शाब्दप्रमानुत्पादेऽपि क्वचिच्छाब्दभ्रमो जायत एव स कथं स्यादित्यत आह, 'प्रकृते त्विति, घटः कर्मत्वमित्यादावित्यर्थः। नन्वेवमजनितान्वयबोधजनकत्वस्य आकाङ्क्षात्वविरहादयमेतीत्यादौ राज-पुत्रयोरन्वयबोधानन्तरं द्वितीयक्षणे राज-पुरुषयोरन्वयबोधापत्तिराकाङ्क्षासत्त्वात् पुरुषविशेष्यक-राजप्रकारकान्वयबोधस्याजनितत्वादनुमितौ सिद्धेरिव समानाकारकशाब्दबोधस्य प्रतिबन्धकताया अपि तत्र वक्तुमशक्यत्वा[illegible] आह, 'पुरुषपदं विनापीति पुरुषविशेष्यकराजप्रकारकान्वय[illegible]जनकत्वेऽपीत्यर्थः, 'स्वार्थान्वयानुभावकत्वं' जनितस्वार्थानुभावकत्वं, 'न तदाकाङ्क्षेति न तत्राकाङ्क्षेत्यर्थः, राज पुरुषयोरन्वयबोधजनिकेति शेषः। तत्पदजन्यशाब्दबोधे तत्पदजन्यशाब्दबोधसामान्यस्यैव प्रतिबन्धकत्वादिति भावः।

यद्वा त्रयाणां स्मरणेऽजनितान्वयबोधदशायां पुरुषान्वये तात्पर्य्याभावात् नान्वयबोध इत्यग्रेऽपि तथा। न च पुत्रस्योत्थिताकाङ्क्षत्वात् तेनैवान्वयबोध इति वाच्यं। तात्पर्य्यवशात् पुरुषेणैव[१] प्रथममन्वयबोधात्। अतएवान्वयबोधसमर्थत्वे सति अजनिततात्पर्य्यविष-

नन्वेवं राज-पुत्रयोरन्वयबोधोत्तरं तात्पर्य्यभ्रमेऽपि राज-पुरुषयोरन्वयबोधो न स्यात् प्रतिबन्धकसत्त्वादित्यरुचेराह, 'यद्वेति, 'त्रयाणां' राज-पुत्र-पुरुषैतत्त्रयाणां, 'अजनितेति पुत्रेण सममजनितान्वयबोधदशायामित्यर्थः, 'तात्पर्य्याभावात्' तात्पर्य्यनिश्चयाभावादेव, 'अग्रेऽपि' पुत्रेण सममन्वयबोधे जनितेऽपि, 'तथा' पुरुषान्वये तात्पर्य्यनिश्चयाभावादेव नान्वयबोधः, तात्पर्य्यनिश्चयसत्त्वे भवत्येवेति भावः। ननु पुत्रेण सममजनितान्वयबोधदशायां प्रथमं पुरुषेण सममन्वयधीर्न भवति किन्तु पुत्रेणैव तत्र पुत्रस्योत्थिताकाङ्क्षत्वमेव वीजं न तु तात्पर्य्यज्ञान-तद्विरहौ निवन्धने इत्याशङ्कते, 'न चेति, 'उत्थिताकाङ्क्षत्वात्' ससम्बन्धिकत्वात्, ससम्बन्धिकत्वञ्च सम्बन्ध्युपस्थितिनियतोपस्थितिकत्वं, भवति हि स्वजन्यपुंस्त्वादिरूपं पुत्रत्वादिकं राजादिघटितमिति भावः[२]। 'तात्पर्य्यवशात्' तात्पर्य्यज्ञानवशात्, 'पुरुषेणैवेति' क्वचिदित्यादिः, क्वचित्तथैव पाठः, तथाचोत्थिताकाङ्क्षा व्यभिचारिणीति भावः। 'अत एवेति चतुर्थ्यन्तात्तसिः, अयमेतीत्यादौ राज-पुत्रयोरन्वयबोधानन्तरं राज-

(१) क्वचित् पुरुषेणैवेति क० । (२) राजादिघटितमित्यर्थः।

यान्वयबोधत्वमाकाङ्क्षेति केचित्। प्रकृति-प्रत्ययाभ्या-

---

पुरुषयोरन्वयबोधवारणायैवेत्यर्थः, अन्वयबोधसमर्थत्वे सतीति तद्विशेष्यक-तत्प्रकारक-तत्संसर्गकान्वयबुद्धिजनकत्वे सतीत्यर्थः, 'आकाङ्क्षा' तद्विशेष्यक-तत्प्रकारक-तत्संसर्गकान्वयबोधे आकाङ्क्षा, अत्र सत्यन्तेन घटः कर्मत्वमित्यादिनिरासः, जनकतावच्छेदकन्तु तत्तदानुपूर्वीविशेषविशिष्टत्वमेव, 'अजनितेत्यादिना राजपुत्रान्वयबुद्धिमात्रतात्पर्य्यकेऽयमेतीत्यादौ राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वयबोधनिरासः, राजपुत्रान्वयबोधमात्रतात्पर्य्यके अयमेतीत्यादौ तात्पर्य्यभ्रमेण राज-पुरुषयोरन्वयबोधे जातेऽपि राज-पुत्रयोरन्वयबोधे आकाङ्क्षासम्पादनाय तात्पर्य्यविषयेत्यन्वयबोधविशेषणं। न चैवमस्माद्राज-पुत्रयोरन्वयबुद्धिः राज-पुरुषयोरन्वयबुद्धिश्च भवत्वितीच्छयोच्चरितेऽयमेतीत्यादौ तात्पर्य्यग्रहपौर्व्वापर्य्यक्रमेण राज-पुत्रयोरन्वयबोधानन्तरं राज-पुरुषयोरन्वयबोधेऽपि आकाङ्क्षा न स्यात्, एवं घटमानयेत्यादौ वक्तुः क्रमिकशाब्दबोधद्वयेच्छायामपि शाब्दबोधद्वये आकाङ्क्षा न स्यादिति वाच्यं। 'अजनितेत्यादिना तत्कालीन-तत्पुरुषीय-स्वजनितापर्य्याप्तयत्किञ्चित्तात्पर्य्यविषयतावच्छेदकत्वस्य विवक्षितत्वात् तत्कालीनत्व-तत्पुरुषीयत्वयोः स्वजनितत्वविशेषणत्वात्कालान्तरे पुरुषान्तरे वा तादृशशाब्दबोधजननेऽपि न क्षतिः, तत्कालपदं फलीभूतशाब्दबोधाव्यवहितपूर्वक्षणपरं। न चैवं तादृशसमूहालम्बनतात्पर्य्यकेऽयमेतीत्यादौ राज-पुत्रयोरन्वयबोधोत्तरं राज-पुरुषयोरन्वयबोधसमये राज-पुत्रयोरपि पुनरन्वय-

बोधापत्तिरिति वाच्यं। खण्डवाक्यार्थबोधोत्तरं खण्डवाक्यार्थ-घटितमहावाक्यार्थबोधवदिष्टत्वात्, तात्पर्य्यविषयत्वञ्च वक्तृ-तदितर-साधारणप्रकृतपदजन्यत्वप्रकारकेच्छाविषयत्वं तेन शुकादिवाक्यस्थले भगवत्तात्पर्य्यमादायाकाङ्क्षासौलभ्यं। न चैवं राजपुत्रान्वयबुद्धि-मात्रतात्पर्य्यकेऽयमेतीत्यादौ राज-पुत्रयोरन्वयबोधानन्तरमपि राज-पुरुषयोरन्वयबोधे आकाङ्क्षापत्तिः भगवत्तात्पर्य्यस्य राज-पुरुषान्वय-बोधेऽपि सत्त्वादिति वाच्यं। तद्वाक्येन राज-पुरुषयोरन्वयबो-धाजननात्तद्वाक्यजन्यत्वप्रकारकभगवदिच्छाया राजपुरुषान्वयबोधे विरहात् भगवदिच्छाया अयथार्थत्वाभावनियमात्। न च तेनैव वाक्येन पुरुषान्तरस्य कालान्तरे तस्यैव वा पुरुषस्य राजपुरुषा-न्वयबोधजननात् तद्वाक्यजन्यत्वप्रकारकभगवदिच्छाया अपि राज-पुरुषान्वयबोधे सम्भव इति वाच्यं। यत्र तस्मादेव वाक्यात् पुरुषा-न्तरस्य कालान्तरे तस्यैव वा पुरुषस्य राज-पुरुषयोरन्वयबोधस्तत्र राज-पुत्रयोरन्वयबोधोत्तरमपि राज-पुरुषान्वयबोधे आकाङ्क्षा-सत्त्वस्य इष्टत्वात्, राज-पुरुषयोरन्वयबोधाभावस्य सतोऽपि राज-पुरुषान्वयबोधे भगवत्तात्पर्य्यस्य तदानीं ज्ञानाभावेन तात्पर्य्यघटि-ताकाङ्क्षाज्ञानविरहादथ वा तस्माद्वाक्यादिदानीमेतस्य पुरुषस्य तद्विशेष्यक-एतत्प्रकारकान्वयबुद्धिर्भवत्वित्याकारकं तत्कालीनत्व-तत्पुरुषीयत्वप्रकारकं तात्पर्य्यमत्र घटकमिति नोक्तदोषः। न च तथापि यत्र वक्तुः राजपुत्रान्वयबुद्धिमात्रे तात्पर्य्यं श्रोतुरुदासीन-पुरुषान्तरस्य वा, राजपुरुषान्वयबोधेऽपि तात्पर्य्यं तत्र राजपुत्रा-न्वयबोधानन्तरमपि राजपुरुषान्वयबोधे आकाङ्क्षापत्तिरिति वाच्यं।

कर्म्मत्वं आनयनं कृतिरित्येवम्बिधपदाजन्यपदार्थोप-
स्थितिर्व्वा आसत्तिरन्वयबोधाङ्गमित्यासत्त्यभावादेव-
म्बिधशब्दान्नान्वयबोधः त्वयाप्येवम्बिधपदार्थोपस्थिते-

---

मित्यपि बोध्यं(१)। 'पदविशेषेति घटमानयेत्याद्यानुपूर्व्वीविशेषघट-
कीभूततत्तद्घटपदाम्पदादिजन्यघट-कर्मत्वाद्युपस्थितिरित्यर्थः। नन्वे-
वमप्यननुगमवाहुल्यं कारणतावच्छेदकगौरवं पुनरधिकं लाघवाद्-
घटमानयेत्याद्यानुपूर्व्वीविशेषज्ञानस्यैव हेतुत्वौचित्यात्। न च तत्पद-
जन्यपदार्थोपस्थितेः पृथक्कारणत्वस्यावश्यकत्वाद्गौरवमिति वाच्यं।
घटं कलसमित्यादिप्रत्येकानुपूर्व्वीघटकतत्तत्पदव्यक्तिभेदेन कार्य-का-
रणभाववाहुल्यं कारणतावच्छेदकगौरवञ्चापेक्ष्य घटादिशाब्दबोधमात्रं
प्रति वृत्त्या शब्दजन्यघटाद्युपस्थितित्वेन कार्य-कारणभावैक्यकल्पनाया-
एव लघुत्वादित्यस्वरसादाह, 'घटः कर्मत्वमित्यादि, 'पदार्थोपस्थितिः'
घट-कर्मत्वाद्युपस्थितिः, इत्थञ्च भेदकूटस्य कारणतावच्छेदत्वाद्घटं
कलसमित्यादिसकलानुपूर्व्वीसाधारण एक एव कार्य-कारणभाव-
इति भावः। अत्र वृत्त्या शब्दजन्यत्वेन पदार्थोपस्थितिर्विशेषणीया
तेन यथाकथञ्चित्पदार्थोपस्थितिमादाय नातिप्रसङ्गः। अर्थाध्या-
हारवादिनये तु यथाश्रुतमेव साधु। 'अन्वयबोधाङ्गमिति कर्मत्वा-
दिविशेष्यक-घटादिप्रकारकान्वयबोधाङ्गमित्यर्थः। न चैवं द्वितीया-
पद-कर्मत्वपदोभयगोचरसमूहालम्बनेन यत्र कर्मत्वोपस्थितिस्तत्राप्य-
न्वयबोधो न स्यादिति वाच्यं। तादृशविभक्तिज्ञानाजन्या या कर्म-

---

(१) इत्यादि ध्येयमिति क०।

राकाङ्क्षाहेतुत्वेनावश्यमभ्युपेयत्वात्, जनितान्वयबोधात् नान्वयान्तरबोधः तात्पर्य्याभावादित्याकाङ्क्षायाः कारणत्वमेव नास्ति, किन्तु स्वजनकोपस्थितेः परिचायकत्वमात्रमिति ।

---

त्वादिपदजन्योपस्थितिः तदन्योपस्थितित्वेन हेतुत्वस्य विवक्षितत्वात्, 'एवम्विधशब्दादिति घटः कर्मत्वमित्यादिस्वरूपायोग्यशब्दादित्यर्थः, 'आकाङ्क्षाहेतुत्वेनेति आकाङ्क्षानिश्चयसहकारित्वेनेत्यर्थः, अन्यथाऽगृहीतामादिपदशक्तिकस्य घटमित्यादिनिश्चयवतो घटः कर्मत्वमित्यादेर्घट-कर्मत्वाद्युपस्थितौ तथान्वयबोधस्य दुर्व्वारत्वापत्तेरिति भावः । 'जनितान्वयबोधादिति अयमेतीत्यादौ पुत्रेण जनितान्वयबोधाद्राजपदादित्यर्थः, 'नान्वयान्तरबोध इति न पुरुषेणान्वयबोध इत्यर्थः, भवन्मत एवेतिशेषः, 'तात्पर्य्याभावादिति तात्पर्य्यज्ञानाभावादित्यर्थः, एवं धारावाहिकसमानाकारशाब्दबुद्धावपि भवदुक्तैव गतिरिति भावः । 'आकाङ्क्षायाः' आकाङ्क्षाज्ञानस्य, 'स्वजनकोपस्थितेः' शाब्दबोधजनकोपस्थितेः' । अत्र 'नव्या इत्यस्वरसोद्भावनं, तद्बीजन्तु भेदकूटानां विशेष्य-विशेषणभावे विनिगमकाभावात् गुरुतरानन्तकार्य्य-कारणभावप्रसङ्गः, अन्यथा घटादिपदवदनुस्वारपदादिनिश्चयत्वरहितं यद्यत् तदन्यत्वेनैव लाघवात् हेतुत्वौचित्यात् वृत्त्या घट-कर्मत्वाद्युपस्थितेर्व्यापारत्वाच्च नातिप्रसङ्गशङ्कापीति दिक् ।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शब्दाकाङ्क्षावादसिद्धान्तः ।
समाप्तोऽयमाकाङ्क्षावादः ॥

---

इति श्रीमथुरानाथतर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये शब्दाकाङ्क्षावादरहस्यम् ॥
समाप्तमाकाङ्क्षावादरहस्यम् ॥

## अथ योग्यतावादः ।



**ननु का योग्यता,**(१) **न तावत् सजातीयेऽन्वयदर्शनं,**

---

## अथ योग्यतावादरहस्यं ।

आकाङ्क्षां निरूप्य योग्यतां निरूपयितुं पृच्छति, 'ननु केति,(२) आकाङ्क्षादिकं सहकारीति यत् पूर्व्वमुक्तं तत्रादिपदग्राह्या योग्यता केत्यर्थः, अत्र शाब्दबोधलक्षणैककार्य्यानुकूलत्वमेव सङ्गतिरिति भावः । 'सजातीयेति, तत्सजातीये तत्सजातीयस्यान्वयदर्शनं संसर्ग-निश्चयस्तत्र तच्छाब्दबुद्धौ योग्यतेत्यर्थः, अस्ति च पयसा सिञ्चती-त्यादौ प्रकृतसेकसजातीये पयोऽन्तरकरणकसेके प्रकृतपयःकरणकत्व-सजातीयस्य पयोऽन्तरकरणकत्वस्य संसर्गनिश्चयः, वह्निना सिञ्चती-त्यादौ तु सेकसजातीये क्वापि सेके वह्निकरणकत्वसजातीयस्य कस्यापि वह्निकरणकत्वस्य संसर्गनिश्चयो नास्ति बाधितत्वात् । न च तत्र तत्संसर्गनिश्चयस्तत्र तच्छाब्दबोधे योग्यता इत्येव सम्यक् किं सजातीयत्वपर्य्यन्तनिवेशेनेति वाच्यं । गेहवृत्तिघटो नील इत्यादौ गेहवृत्तिघटव्यक्तौ तन्नीलव्यक्तेः शाब्दबोधानुपपत्तेः शाब्दबोधपूर्व्वं तद्घटव्यक्तौ तन्नीलव्यक्तेः संसर्गनिश्चयाभावात्, सजातीयत्वोपादाने तु तद्घटसजातीये व्यक्त्यन्तरे तन्नीलव्यक्तिसजातीयस्य नीलव्यक्त्यन्तरस्य

---

(१) ननु केयं योग्यतेति ख० ।  (२) ननु केयमिति क०, ख० ।

यथाकथञ्चित् साजात्यस्याव्यावर्त्तकत्वात्। पदार्थता-

संसर्गनिश्चयो वर्त्तत एवेति न काप्यनुपपत्तिरिति भावः। अत्र येन केनापि धर्म्मेण साजात्यं विवक्षणीयं[१] अन्वयितावच्छेदकधर्म्मेण वा,[२] आद्ये तन्निष्ठधर्म्मावच्छिन्ने तन्निष्ठधर्म्मावच्छिन्नस्य संसर्गनिश्चयस्तत्र तच्छाब्दबोधे योग्यतेति फलितार्थः, द्वितीये अन्वयितावच्छेदत्वं यादृशधर्म्मविशिष्टस्य तस्य फलीभूतशाब्दबोधविषयत्वं तादृशधर्म्मत्वं, तथा च तद्धर्म्मविशिष्टतद्विशेष्यक-तद्धर्म्मविशिष्टतद्विशेषणकशाब्दबोधे तद्धर्मरूपेण यत्र कुत्रचित् तद्धर्मरूपेण यस्य कस्यचित् संसर्गनिश्चयो योग्यतेति पर्य्यवसितार्थः। तत्र न प्रथमइत्याह, 'यथेति, 'अव्यावर्त्तकत्वादिति वह्निना सिञ्चतीत्यादौ सेको न वह्निकरणक इति बाधनिश्चयदशायां शाब्दबुद्धेरव्यावर्त्तकत्वादित्यर्थः, तादृशबाधनिश्चयसत्त्वेऽपि क्रिया वह्निकरणिका प्रमेयं वह्निकरणकं सेको द्रव्यकरणकः सेकः प्रमेयकरणकः सेकः प्रमेयवान् इत्याकारकस्य सेकनिष्ठधर्म्मावच्छिन्ने वह्निकरणत्वनिष्ठधर्म्मावच्छिन्नसंसर्गनिश्चयस्य सम्भवात्। न च तदानीं तादृशनिश्चयसम्भवेऽपि बाधनिश्चयस्य प्रतिबन्धकत्वादेव नान्वयबोध इति वाच्यं। तथा सत्यावश्यकत्वात्तदभाव एव हेतुरस्तु किमेतस्या हेतु-

(१) विवक्षितमिति ख०, ग०।

(२) अद्यजातत्वस्य वाक्यार्थत्वात् पदार्थतावच्छेदकत्वाभावेन पदार्थतावच्छेदकधर्म्मणोऽयुपेक्ष्यान्वयितावच्छेदकधर्म्मपर्य्यन्तानुधावनं।

वच्छेदकेन साजात्यस्याद्यजातः पयः पिबतीत्यादावभा-
वात् वाक्यार्थस्यापूर्व्वत्वाच्च। नापि समभिव्याहृत-

त्वेनेति भावः[१]। नान्य इत्याह, 'पदार्थतावच्छेदकेनेति, अन्वयि-
तावच्छेदकधर्मरूपेण तत्सजातीयेऽन्वयितावच्छेदकधर्मरूपेण तत्स-
जातीयसंसर्गनिश्चयस्येत्यर्थः, 'अभावादिति, तत्र शाब्दबोधात् पू-
र्व्वमद्यजातत्वरूपेण क्वाप्यद्यजाते पयःपानकर्तृत्वत्वरूपेण पयःपान-
कर्तृत्वसंसर्गनिश्चयाभावादिति भावः। 'पदार्थतावच्छेदकेनेति यथा-
श्रुतस्तु न सङ्गच्छते पदार्थतावच्छेदकत्वस्य प्रकृतपदार्थतावच्छेदक-
त्वस्य च केवलान्वयितया तेन रूपेण साजात्यविरहेऽपि वह्निना
सिञ्चतीत्यादौ क्रिया वह्निकरणिका प्रमेयं वह्निकरणकं सेको
द्रव्यकरणक इत्यादिनिश्चयमादाय सेकः सकरणक इत्यादिनि-
श्चयमादाय चातिप्रसङ्गतादवस्थ्यात् सन्दर्भविरोधापत्तेः अद्यजाते-
त्यादिप्रकृतदूषणासङ्गत्यापत्तेश्च प्रमेयत्व-मनुष्यत्वाद्याश्रयनिष्ठस्य नि-
ष्ठाप्रत्ययार्थतावच्छेदकाश्रयत्वादेः[२] पदार्थतावच्छेदकत्वात्[३] तेन
रूपेणाद्यजातसजातीये पयःपानकर्तृत्वसंसर्गनिश्चयस्य तत्रापि सत्त्वा-
दिति ध्येयं। दूषणान्तरमाह, 'वाक्यार्थस्येति, पयसा सिञ्चती-

(१) तथाच शाब्दबुद्धौ बाधबुद्धेर्न प्रतिबन्धकत्वं किन्तु तत्कृत्वे बाधाभाव-
रूपयोग्यताविरहान्न शाब्दबोध इति भावः।

(२) प्रमेयत्व-मनुष्यत्वादेर्निष्ठाप्रत्ययार्थतावच्छेदकाश्रयत्वादेश्चेति ख०।
प्रमेयत्व-मनुष्यत्व-निष्ठाप्रत्ययार्थतावच्छेदकाश्रयत्वादेरिति ग०।

(३) प्रमेयत्व-मनुष्यत्वाश्रयत्वादेः जनधातूत्तरक्तप्रत्ययार्थतावच्छेदकत्वादित्यर्थः।

त्यादावपीत्यादिः, पयसा सिञ्चतीत्यादावपि वाक्यार्थस्य सेकत्वा-द्यवच्छिन्ने पयःकरणकत्वाद्यवच्छिन्नसंसर्गनिश्चयस्यापूर्व्वत्वाच्च सर्व्वत्र शाब्दबोधात् पूर्व्वमभावाच्चेत्यर्थः, तथाच पयसा सिञ्चतीत्यादावपि यदा तादृशनिश्चयो नास्ति तदापि शाब्दबोधस्यानुभवसिद्धत्वा-द्व्यभिचार इति भावः। दूषणद्वयमिदं दर्शनपदस्य निश्चयपरत्व-मभिप्रेत्य, संशय-निश्चयसाधारणज्ञानमात्रपरत्वे तु नैतद्दोषद्वयाव-काशः, अद्यजातेत्यादावप्यद्यजातत्वावच्छिन्ने पयःपानकर्तृत्वस्य संश-यात्मकसंसर्गज्ञानसम्भवात्, एवं पयसा सिञ्चतीत्यादावपि सेकः पयःकरणकत्वसंसर्गवानिति निश्चयविरहदशायां सेकः पयःकरणक-त्वसंसर्गवान्न वेति संशयात्मकसंसर्गज्ञानसम्भवात्। न च यदा तादृशसंशयोऽपि नास्ति तदापि तादृशशाब्दबोधाद्व्यभिचार इति वाच्यं। तदानीं शाब्दबोधासिद्धेः, अन्यथा तद्धर्मावच्छिन्ने तद्ध-र्म्मावच्छिन्नवत्त्वरूपनिष्कृष्टयोग्यतापक्षेऽपि व्यभिचारस्य दुर्व्वारत्वात्। वस्तुतस्तु करकाभिप्रायप्रयुक्ते[1] पयसा सिञ्चतीत्यादौ सेको न जलत्वाश्रयैतद्व्यक्तिकरणक इति सेके करकाकरणकत्वबाधनिश्चय-दशायामपि सेकत्वावच्छिन्ने जलकरणकत्वत्वप्रकारेण करकाकर-णकत्वान्वयबोधापत्तिः, तादृशबाधनिश्चयदशायामपि सेकत्वरूपेण सेके जलकरणकत्वत्वरूपेण जलकरणकत्वस्य संसर्गनिश्चयाभावात्। न चेष्टापत्तिः, साम्प्रदायिकैस्तदानीं तादृशान्वयबोधस्यानभ्युपगमा-दित्येव दूषणं, नव्यमते तु वक्ष्यमाणनिष्कृष्टयोग्यत्वापेक्षया गौरव-मेवात्र दूषणमित्यवधेयं।

---

(१) जलत्वरूपेण करकाबोधेच्छयोच्चरित इत्यर्थः।

केचित्तु अस्य योग्यतात्वे वह्निना सिञ्चतीत्यादौ सेको न वह्निकरणक इति बाधनिश्चयदशायां सेकत्वावच्छिन्ने वह्निकरणकत्वत्वरूपान्वयितावच्छेदकावच्छिन्नसंसर्गज्ञानासम्भवात् सेकत्वावच्छिन्ने वह्निकरणकत्वत्वरूपविशिष्टधर्म्मान्वयितावच्छेदककशाब्दबोधासम्भवेऽपि विशेष्ये विशेषणमिति न्यायेन सेको वह्निकरणक इति शाब्दबोधो दुर्व्वारः, तत्र वह्नित्व-करणत्वत्वादेः प्रत्येकधर्म्मस्यैवान्वयितावच्छेदकतया यथोक्तबाधनिश्चयसत्त्वेऽपि सेकत्वावच्छिन्ने करणत्वत्वावच्छिन्नस्य करणत्वत्वावच्छिन्ने वह्नित्वावच्छिन्नस्य च संसर्गनिश्चयसम्भवादित्याहुः । तदसत्, अन्वयितावच्छेदकत्वरूपेण लक्षणे न प्रवेशः परन्तु सेकत्वावच्छिन्ने करणत्वत्वरूपेण करणत्वं प्रकारः करणत्वत्वावच्छिन्ने वह्नित्वेन वह्निः प्रकारः इत्याकारकशाब्दबुद्धिं प्रति सेकत्वावच्छिन्ने वह्निकरणकत्वत्वरूपविशिष्टधर्म्मावच्छिन्नसंसर्गज्ञानं योग्यतेत्यादिक्रमेण लक्षणं विवक्षितं, अतो विशेष्ये विशेषणमिति न्यायेन विशिष्टस्यैव वैशिष्ट्यमिति न्यायेन च सेको वह्निकरणक इति शाब्दबोधस्य यथोक्तबाधनिश्चयसत्त्वेऽसम्भवात् उभयसाधारण-वह्निकरणकत्वत्वावच्छिन्नप्रकारताया एवोक्तक्रमेण लक्ष्यतावच्छेदके प्रवेशात् । न चोभयसाधारणविशिष्टप्रकारतायां मानाभाव इति वाच्यं । तथा सति रक्तदण्डवान् पुरुष इत्यादिविशिष्टबुद्धौ पुरुषो न रक्तदण्डवानित्यादिबाधबुद्धेः प्रतिबध्यप्रतिबन्धकभावद्वयापत्तेः वक्ष्यमाणनिष्कृष्टयोग्यतापक्षेऽप्युक्तदोषस्य दुर्व्वारत्वापत्तेश्चेति दिक् ।

'समभिव्याहृतेति प्रकृतेत्यर्थः, तदीयतत्संसर्गव्याप्यधर्म्मवत्त्वं तत्त्वं

पदार्थसंसर्गव्याप्यधर्म्मवत्त्वं, वाक्यार्थस्यानुमेयत्वापत्तेः। न च वस्तुगत्या संसर्गव्याप्यो यो धर्म्मस्तद्वत्त्वं तच्च न ज्ञातमुपयुज्यते इति नानुमेयः संसर्ग इति वाच्यम्। योग्यताभ्रमाच्छाब्दभ्रमानुपपत्तेः। अतएवानन्वयनि-

---

सर्गेण तद्योग्यतेति फलितार्थः, 'वाक्यार्थस्येति एतत्संशयविरह-स्थलीयशाब्दबोधमात्रस्यैव पूर्व्वमेकपदार्थेऽपरपदार्थसंसर्गस्यानुमाना-पत्तेरित्यर्थः, एतत्संशयविरहस्थले यत्र यत्र शाब्दबोधस्तत्र तत्रैव शाब्दबोधात् पूर्व्वं एतन्निश्चयस्य त्वयाभ्युपगमात् व्याप्यवत्तानिश्चय-सत्त्वेनानुमितिसामग्रीसत्त्वादिति भावः। 'संसर्गव्याप्येति, तदीय-तत्संसर्गव्याप्येत्यर्थः, 'तद्वत्त्वमिति, तत्संसर्गेण तद्योग्यतेति शेषः। 'योग्यताभ्रमादिति, इदञ्च शाब्दभ्रमानुपपत्तौ हेतुः,[१] वह्निना सिञ्चतीत्यादौ यतो निरुक्तयोग्यताया भ्रमो न तु स्वरूपसती सा अतः शाब्दभ्रमानुपपत्तेरित्यर्थः। न चेयं शाब्दप्रमायां हेतुरिति वाच्यं। बाधनिश्चयदशायां शाब्दप्रमापत्तेः विनष्टचैत्रे विनष्टरूप-वत्तादात्म्यप्रतिपादकचैत्रइत्यादिवाक्यजप्रमायामव्याप्तेश्चेति भावः।

---

(१) योग्यताभ्रमादित्यत्र पञ्चम्यर्थः प्रयोज्यत्वं, अन्वयश्चास्य शाब्दभ्रमानु-पपत्तौ तथाच योग्यताभ्रमप्रयुक्ता या शाब्दभ्रमानुपपत्तिस्तत इत्यर्थः, प्रयुक्तत्वञ्च तद्विषययोग्यत्वाभावप्रयोज्यत्वं, भवति चायोग्यस्थले निरुक्त-योग्यतायाः स्वरूपसत्याः कारणत्ववादिनस्तव मते योग्यताविरहप्रयु-क्तश्च शाब्दभ्रमाभावः, सिद्धान्तिमते तु तद्भ्रमादेव शाब्दभ्रमः इति भावः।

श्चयविरह एव योग्यता स्वरूपसती हेतुः तत्त्व तद्धर्म्मा-

केचित्तु निरुक्तयोग्यताया भ्रमादयः शाब्दभ्रमः तदनुपपत्ते-रित्यर्थ इत्याहुः। तदसत्, निरुक्तयोग्यताभ्रमादित्यत्र हि पञ्च-म्यर्थो जन्यत्वमुत्तरत्वं वा, नाद्यः शाब्दभ्रमे निरुक्तयोग्यताभ्रम-जन्यत्वस्यैवासिद्धेः योग्यताभ्रमजन्यत्वस्य प्रकृतानुपयोगितया तद-भिधानस्य व्यर्थत्वापत्तेः। अत एव न द्वितीयोऽपि तदभिधानस्य व्यर्थत्वादिति ध्येयं[१]।

'अत एवेति वह्निना सिञ्चतीत्यादौ शाब्दभ्रमानुपपत्तेरेवे-त्यर्थः, तत्र[२] अन्ततो भगवत एवानन्वयनिश्चयस्य सर्व्वदा सत्त्वा-दिति भावः। इदमुपलक्षणं पयसा सिञ्चतीत्यादावेकस्य पुरुषस्या-नन्वयभ्रमसत्त्वे पुरुषान्तरस्यापि शाब्दप्रमानुत्पत्त्यापत्तेश्चेत्यपि बोध्यं। 'अनन्वयनिश्चयेति, तद्धर्म्मोऽन्वयितावच्छेदकसम्बन्धावच्छिन्न-तद्धर्म्मावच्छिन्नप्रतियोगिताकाभावप्रकारकनिश्चयसामान्यस्य विशे-

(१) तथाचायोग्यस्थले एतन्मते योग्यताविरहादेव शाब्दानुपपत्तेरित्य-स्यैव वक्तुमुचितत्वात् तत्स्थलीयशाब्दबुद्धेर्योग्यताभ्रमस्य जन्यताया-उत्तरवर्त्तितायाश्च प्रदर्शनानर्थक्यादिति भावः। वस्तुतस्तु शाब्दभ्रमो न जायत एव तत्रेत्याशङ्कामपनेतुं योग्यताभ्रमजन्यतया तस्य प्रसिद्धि-र्दर्शितेत्येवात्र ध्यानवीजं मन्तव्यं।

(२) यत्र सेको न वह्निकरणक इति निश्चयस्तत्र मास्तु वह्निना सिञ्च-तीति शाब्दभ्रमः यत्र तु स नास्ति तत्रैव तादृशशाब्दभ्रमस्य निष्प्रति-पक्षिकत्वेन क्व शाब्दभ्रमानुपपत्तिः अन्वयाभावनिर्णयाभावस्यैव योग्य-तात्वस्य वक्तव्यत्वादित्याशयेन यदुक्तं अनन्वयेत्यादि तदपि न, ईश्वरीय-तादृशनिर्णयस्य सर्वदैव सत्त्वादित्याह तत्रेत्यादिना।

भावनिश्चये तत्प्रकारकशाब्दज्ञानानुदयात् इति परास्तम्[१] । नापि समभिव्याहृतपदार्थसंसर्गाभाव-

---

ष्यतावच्छेदकतासम्बन्धेनाभावः,[२] तादृशनिश्चयसामान्यस्य विशेष्यतावच्छेदकत्वाभावो वा तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नस्य योग्यतेत्यर्थः, वह्निना सिञ्चतीत्यादौ सेकत्वेऽपि घटादिनिष्ठस्य वह्निकरणत्वाभावप्रकारकनिश्चयस्याभावसत्त्वादतिव्याप्तिवारणाय सामान्यपदं, 'स्वरूपसती हेतुरिति, यत्र विशेष्यतावच्छेदकतासम्बन्धेन तद्धर्म्मावच्छिन्नप्रकारकशाब्दबोधः, तत्र विशेषणताविशेषसम्बन्धेन निरुक्तोऽभाव इति सामानाधिकरण्यप्रत्यासत्त्या स्वरूपसती हेतुरित्यर्थः, स्वरूपसद्धेतुत्वे व्यतिरेकसहचारं प्रमाणयति, 'तत्रेति, तद्धर्म्मावच्छिन्न इत्यर्थः. 'तद्धर्म्माभावनिश्चय इति स्वस्य तद्धर्म्मावच्छिन्नाभावप्रकारकनिश्चय इत्यर्थः, 'तत्प्रकारकेति स्वस्य तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नप्रकारकशाब्दबोधानुदयादित्यर्थः, 'परास्तमिति । न च तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नाभावप्रकारकतत्पुरुषीयनिश्चयसामान्याभावस्तद्धर्म्मावच्छिन्ने तत्पुरुषीयतद्धर्म्मावच्छिन्नप्रकारकान्वयबोधे योग्यतेति विवक्षणीयं अतो नोक्तदोष इति वाच्यं । स्वीयानन्वयनिश्चयविरहदशायामयोग्येऽतिव्याप्त्यापत्तेः केवलान्वयिन्यव्याप्त्यापत्तेर्दुर्व्वारत्वाच्चेति भावः। 'समभिव्याहृतेति प्रकृतेत्यर्थः, तदीयतत्-

---

(१) इत्यपास्तमिति क०, ख० ।

(२) तद्धर्म्मावच्छिन्ने तादृशनिश्चयस्य सत्त्व एव तद्धर्म्मेऽपि अवच्छेदकतासम्बन्धेन तन्निश्चयसत्त्वादिति भावः ।

व्याप्यधर्म्मशून्यत्वम्, प्रमेयमभिधेयमित्यादौ संसर्गाभावस्याप्रसिद्धा तदनिरूपणात् गेहनिष्ठघटाभावे प्र-

---

संसर्गाभावव्याप्यधर्म्मशून्यत्वं तेन संसर्गेण तद्योग्यतेति फलितार्थः। इदञ्च ज्ञातमुपयुज्यते इति न शाब्दभ्रमानुपपत्तिः शाब्दभ्रमस्थले वस्तुगत्यैतस्यासत्त्वेऽप्येतद्भ्रमादेव शाब्दभ्रमोपपत्तेरिति भावः। 'अप्रसिद्धेति, प्रमेयादितादात्म्यस्य केवलान्वयित्वादिति भावः। 'तदनिरूपणात्' उक्तयोग्यताज्ञानासम्भवात्। नन्वेकपदार्थान्वयितावच्छेदकसंसर्गेऽपरपदार्थनिष्ठत्वाभावव्याप्यधर्म्मशून्यत्वं सेति नोक्तदोषः(१) इत्यरुचेराह, 'गेहनिष्ठेति गेहे घटाभावनिश्चय इत्यर्थः, 'तन्निश्चयेऽपि' उक्तयोग्यतानिश्चयेऽपि, 'घटोऽस्तीति वाक्यात्' गेहे घटोऽस्तीति वाक्यात्, 'अन्वयज्ञानानुदयादिति योजना, तथाचैतस्य योग्यतात्वे गेहे घटोऽस्तीत्यादौ बाधनिश्चयसत्त्वेऽपि एतन्निश्चयसत्त्वे शाब्दबोधापत्तिः। न च बाधनिश्चयस्य विशिष्टबुद्धिमात्रे प्रतिबन्धकत्वात् तत्सत्त्वादेव न तदानीं शाब्दबोध इति वाच्यं। तर्हि आवश्यकत्वात्तदभाव एव हेतरस्तु किमेतज्ज्ञानस्य हेतुत्वेन तदभावसत्त्वे एतज्-

---

(१) प्रमेयमभिधेयमित्यादौ न ह्येवं कोऽपि अभिधेयादिवृत्तित्वाभावो यः प्रमेयतादात्म्यत्वं व्याप्नोति, व्याप्नोति च गगनत्वं, तच्छून्यत्वन्तु वर्त्तत एव प्रमेयतादात्म्यस्य इति नोक्तदोष इत्यर्थः, जगद्वृत्तित्वात् प्रमेयतादात्म्यस्य गगणादेस्तु अतथात्वादिति भावः। वह्निना सिञ्चतीत्यादौ लक्षणासत्त्वञ्च वह्निकरणत्वीयस्वरूपसम्बन्धत्वस्य सेकनिष्ठत्वाभावव्याप्यत्वात् वह्निकरणत्वीयस्वरूपसम्बन्धस्य सेकावृत्तित्वादिति भावः।

मिते घटोऽस्तीतिवाक्यात्तन्निश्चयेऽप्यन्वयज्ञानानुदयाच्च। नापि बाधकप्रमाणाभावः, अन्यत्र यद्बाधकं तदभावस्यायोग्येऽपि सत्त्वात्। नापि प्रकृतसंसर्गबाधकस्याभावः, प्रतियोगिसिद्ध्यसिद्धिव्याघातात्। न च

---

ज्ञानस्य व्यतिरेके एतदभावज्ञाने वा शाब्दबोधाभावस्य अनुभवसिद्धत्वाभावादिति भावः[१]। 'बाधकप्रमाणेति तत्र तत्संसर्गाभावप्रमाविशेष्यत्वाभावस्तत्र तद्योग्यतेत्यर्थः, एतस्या ज्ञानं शाब्दधीहेतुरिति न शाब्दभ्रमानुपपत्तिः, बाधनिश्चयदशायाञ्च नैतज्ज्ञानसम्भव इति बाधनिश्चयदशायां न शाब्दबोधातिप्रसङ्ग इत्यभिमानः। केवलान्वयिन्यप्रसिद्धितादवस्थ्यञ्च स्वयमेव वक्ष्यत इति न सन्दर्भविरोधः विशेषाभावाभिप्रायेण दोषमाह, 'अन्यत्रेति, 'अन्यत्र यद्बाधकं' अन्यनिष्ठं यद्वह्निकरणत्वादिसंसर्गाभावप्रमाविशेष्यत्वं तदभावस्य सेकादावपि सत्त्वादित्यर्थः, तथाचातिप्रसङ्ग इति भावः। 'नापि प्रकृतेति तन्निष्ठं यत्तत्संसर्गाभावप्रमाविशेष्यत्वं तस्य तत्राभावस्तत्र तद्योग्यतेत्यर्थः, एवञ्च वह्निना सिञ्चतीत्यादौ सेकादिनिष्ठं यद्वह्निकरणत्वादिसंसर्गाभावप्रमाविशेष्यत्वं तदभावस्य सेकादावसत्त्वान्नातिप्रसङ्ग इति भावः। 'व्याघातादिति[२] पयसा

---

(१) तथाच नान्वय-व्यतिरेक इति भावः।

(२) पयःकरणकत्वसंसर्गाभावप्रकारकप्रमाविशेष्यत्वं यदि च सेकादिनिष्ठं तदा न तदभावः, यदि च तत्र नास्त्येव तादृशविशेष्यत्वं तदा सेकादिनिष्ठतादृशविशेष्यत्वस्यालीकतया तदभावस्याप्यसिद्धिरतो व्याघातादित्यर्थः।

**प्रकृतसंसर्गे अन्यत्र सिद्धस्य बाधकप्रमाणस्याभावः, प्रकृतसंसर्गस्य प्रथममप्रतीतेः अयोग्येऽपि तत्स-**

---

सिद्धतीत्यादौ योग्यव्यवहारव्याघातादित्यर्थः । सामान्याभावस्तु[१] 'नापीतरेत्यादिना अग्रे निराकार्य्य इति नासङ्गतिः । 'प्रकृतसंसर्ग इति तदीयप्रकृतसंसर्गेऽन्यत्र प्रसिद्धायास्तद्वत्तित्वाभावप्रमाया अभावस्तत्र तद्योग्यतेत्यर्थः, 'प्रकृतसंसर्गस्येति, तदीयप्रकृतसंसर्गस्य तदीयप्रकृतसंसर्गत्वरूपेण शाब्दबोधात्प्रागप्रतीतेरित्यर्थः, तदीयप्रकृतसंसर्गत्वं हि तन्निष्ठतदीयसंसर्गत्वं शाब्दबोधात्पूर्व्वञ्च एकपदार्थनिष्ठतया नापरपदार्थसंसर्गस्य ज्ञानमिति भावः । ननु प्रकृतत्वमन्वयितावच्छेदकत्वमतो नायं दोष इत्यत आह, 'अयोग्येऽपीति अन्यनिष्ठतादृशप्रमाव्यक्तेरभावमादायायोग्येऽपि तत्सत्त्वाच्चेत्यर्थः, एतच्च विशेषाभावाभिप्रायेण, सामान्याभावस्तु 'अपि चेत्यादिना अग्रे निराकरणीयः ।

---

(१) ननु प्रमाविशेष्यत्वीयविशेषाभावात्मकयोग्यताभिप्रायनिराकरणप्रस्तावे प्रस्तुतस्यापि सामान्याभावस्य निराकरणानभिधानं, अभिधानञ्च प्रकारान्तराभावनिराकरणस्य इत्यसङ्गतिरित्येव न यतस्तस्यापि वक्तव्यत्वादित्याह, 'सामान्याभावस्त्विति । न चास्य वक्तव्यत्वात् तत्राभिधानमत्र तु न कुत इति वाच्यं । तत्र तदुक्तेः सन्दर्भविशेषायातत्वात् स्वतन्त्रेच्छाधीनत्वाच्च । वस्तुतोऽत्र तादृशविशेष्यतायाः सामान्याभावो विवक्षणीयस्तत्रायोग्ये योग्ये च न कोऽपि दोषः कथमत्रान्यथाभिधाय तत्र व्याघातदोषकथनमित्यसङ्गतिरिति चेत्, न, सामान्याभावस्यापि निराकरणीयत्वादित्याह सामान्याभावस्त्विति ।

त्वाच्च। तत्र बाधकमप्यस्तीति चेत्, तर्हि प्रकृतसंसर्ग-बाधकस्याभावः तच्चाप्रसिद्धम्। अतएव तत्र बाधक-स्याप्यनिरूपणम्। नापीतरपदार्थसंसर्गाभावप्रमा-

---

शङ्कते, 'तत्रेति अयोग्य इत्यर्थः, 'बाधकमप्यस्तीति वह्निकरणत्वा-द्यन्वयितावच्छेदकसम्बन्धे सेकादिवृत्तित्वाभावप्रमैवास्तीत्यर्थः, तथाच तदीयान्वयितावच्छेदकसम्बन्धे तदीयान्वयितावच्छेदकसम्बन्धनिष्ठा-यास्तद्वृत्तित्वाभावप्रमाया अभावस्तत्र तद्योग्यतेति भावः। भावार्थ-मनूद्य दूषयति, 'तर्हि प्रकृतेति तदीयान्वयितावच्छेदकसम्बन्धे त-दीयान्वयितावच्छेदकसम्बन्धनिष्ठायास्तद्वृत्तित्वाभावप्रमाया अभाव-इत्यर्थः, तच्च तद्योग्यत्वमिति शेषः। 'तच्च' तद्रूपं योग्यत्वञ्च, 'अप्रसिद्धं' योग्यस्थले प्रतियोग्यप्रसिद्धा अप्रसिद्धं। ननु पयसा सिञ्चतीत्यादौ पयःकरणकत्वसंसर्गे यदि पयःकरणत्वसंसर्गनिष्ठसेकवृत्तित्वाभावप्रमा-या अभावोऽप्रसिद्धस्तदा तादृशप्रमावत्त्वाज्ञानं कुतो न भवतीत्यत-आह, 'अत एवेति अप्रसिद्धत्वादेवेत्यर्थः, 'तत्र' योग्यस्थले, 'बाधक-स्याप्यनिरूपणमिति पयःकरणत्वाद्यन्वयितावच्छेदकसम्बन्धे पयःकर-णत्वाद्यन्वयितावच्छेदकसम्बन्धनिष्ठसेकादिवृत्तित्वाभावप्रमावत्त्वस्याप्य-ज्ञानमित्यर्थः, प्रथमे सामान्याभावमाशङ्कते,[१] 'नापीतरेति तत्र

---

[१] प्रथमे बाधकप्रमाणाभाव इति लक्षणस्य तत्र तत्संसर्गाभावप्रका-रकप्रमाविशेष्यत्वाभावरूपोऽर्थः। तत्र सप्तम्यर्थो घटकत्वं सामान्या-भावमित्यत्रान्वेति तथाच तादृशविशेष्यत्वाभावघटको योऽभावः स सामान्यभाव एव विवक्षित इत्याशङ्का।

विषयत्वाभावोऽपरपदार्थे, केवलान्वयिन्यप्रसिद्धेः । ए-तेन यत्रासम्बन्धग्राहकं प्रमाणं नास्ति तदयोग्यमिति निरस्तम् । नापि बोधनीयसंसर्गाभावप्रमाविरहः, प्रतियोग्यप्रसिद्धेः, बोधनीयसंसर्गस्य प्रागप्रतीतेः यो-ग्यता च न स्वरूपसत्युपयुज्यते इत्युक्तम्, अयोग्ये तत्-

---

तदीयसंसर्गाभावप्रमाविशेष्यत्वसामान्याभावस्तच्च तद्योग्यतेत्यर्थः, 'के-वलान्वयिनीति, प्रमेयादितादात्म्यसंसर्गस्य केवलान्वयित्वादिति भावः । 'एतेन' केवलान्वयिन्यप्रसिद्धत्वेन, 'असम्बन्धग्राहकेति, यत्र यदीयान्वयितावच्छेदकसम्बन्धाभावप्रमाकरणं नास्तीत्यर्थः, 'तद्योग्य-मिति तत्र तद्योग्यमित्यर्थः,[१] पूर्व्वत्र तत्तत्संसर्गाभावप्रमाविशे-ष्यत्वाभावः, अत्र च स्वजन्यतत्तत्संसर्गाभावप्रमाविशेष्यत्वसम्बन्धेन[२] तत्करणाभाव इति भेदः । 'बोधनीयसंसर्गेति बोधनीययोर्द्वयोर्यो-ऽन्वयितावच्छेदकसम्बन्धस्तन्निष्ठतदन्वयितावच्छेदकसम्बन्ध इति यावत्, तदभावप्रमायास्तत्राभावस्तच्च तद्योग्यतेत्यर्थः, 'प्रतियोग्यप्रसिद्धेरिति प्रमेयमभिधेयमित्यादौ केवलान्वयिनि प्रतियोग्यप्रसिद्धेरित्यर्थः, प्रमेयनिष्ठाभिधेयतादात्म्यसंसर्गस्याभावाप्रसिद्धेरिति भावः । दूषणा-न्तरमाह, 'बोधनीयेति, बोधनीयैकपदार्थनिष्ठतया बोधनीयापर-पदार्थसंसर्गस्य शाब्दबोधात् प्रागप्रतीतेरित्यर्थः । नन्वियं स्वरूपसती हेतुरिति नायं दोष इत्यत आह, 'योग्यता चेति, उक्तयोग्यता

---

(१) तत्तद्योग्यमित्यर्थ इति क०, ख० ।

(२) अत्र स्वपदं तादृशप्रमाकरणपरं ।

सत्त्वस्यानिरूपणाच्च। अपि च स्वीयबाधकप्रमावि-

---

चेत्यर्थः, 'इत्युक्तमिति इत्यत्र युक्तिः[१] पूर्व्वमेवोक्तेत्यर्थः, तथा सति वह्निना सिञ्चतीत्यादौ शाब्दभ्रमानुपपत्तिरिति भावः। दूषणान्तरमाह, 'अयोग्य इति, 'तत्सत्त्वस्येति सेकादिनिष्ठस्य वह्निकरणत्वादिसंसर्गस्याप्रसिद्ध्या सेकादौ सेकादिनिष्ठस्य वह्निकरणत्वादिसंसर्गस्य याऽभावप्रमा तत्सत्त्वस्य ज्ञानासम्भवाच्चेत्यर्थः,[२] तथाच तत्रायोग्यत्वव्यवहारानुपपत्तिरिति भावः,[३]। इदमुपलक्षणं तन्निष्ठ-तत्संसर्गस्तत्र तद्योग्यतेत्यस्यैव सम्यक्त्वेन शेषांशस्यानतिप्रयोजनकत्वाच्चेत्यपि बोध्यं[४]। ननु तदीयान्वयितावच्छेदकसम्बन्धे तद्वृत्तित्वाभावप्रमासामान्याभावस्तत्र तदन्वयबोधे योग्यतेति विवक्षणीयमतो विशेषाभावमादाय न पूर्व्वोक्तातिप्रसङ्ग इत्यरुचेराह, 'अपि चेति, तादृशप्रमासामान्याभावपदेन तत्तत्पुरुषीय-तादृश-

---

(१) वह्निना सिञ्चतीत्यादौ योग्यताभ्रमाच्छाब्दभ्रमानुपपत्तिरूपयुक्तिरित्यर्थः।

(२) तथाच प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धिस्तदप्रसिद्ध्या तज्ज्ञानस्याप्यलीकत्वमिति भावः।

(३) व्यवहर्त्तव्यस्य तादृशप्रमारूपायोग्यत्वस्य ज्ञानासम्भवादिति भावः।

(४) न च योग्येऽपि शाब्दबोधात् पूर्व्वं योग्यत्वव्यवहारानुपपत्तिरप्यत्र दोष एव सेकादौ सेकादिनिष्ठपयःकरणकत्वादिसंसर्गाभावप्रमाभावज्ञानाभावात् व्यवहारौपयिकतादृशाभावरूपयोग्यत्वात्मकव्यवहर्त्तव्यतावच्छेदकज्ञानस्य तत्पूर्वमपेक्षणीयत्वात् इति वाच्यं। शाब्दधीप्राक् तादृशव्यवहारस्य निष्प्रयोजनकतया तस्य शाब्दात् परत एव स्वीकारात्।

रहस्यायोग्येऽपि सत्त्वात् बाधकप्रमामात्रविरहस्य यो-
ग्येऽपि ज्ञातुमशक्यत्वात् परप्रमाया अयोग्यत्वात्। न

---

प्रमात्वावच्छिन्नाभावो विवक्षितः तादृशप्रमात्वावच्छिन्नाभावो वा, आद्ये तस्यान्वयितावच्छेदकसम्बन्धे तत्तत्पुरुषीय-तद्वृत्तित्वाभाव-प्रमात्वावच्छिन्नाभावस्तत्र तत्तत्पुरुषीयतदन्वयबोधे योग्यतेति लक्षणं फलितं तच्चायोग्येऽतिव्याप्तं वह्निना सिञ्चतीत्यादावपि यस्य पुरुषस्य शाब्दभ्रमः वह्निकरणत्वादिसंसर्गे तत्पुरुषीयसेकादिवृत्तित्वाभावप्रमासामान्याभावस्य सत्त्वादित्याह, 'स्वीयेति यस्य पुरुषस्य[१] शाब्दभ्रमस्तत्पुरुषीयसेकादिवृत्तित्वाभावप्रमात्वावच्छिन्नाभावस्येत्यर्थः, 'अयोग्येऽपि' वह्निकरणत्वादिसंसर्गेऽपि। न च तत्तत्पुरुषीय-तदन्वयबोधे योग्यतापि तत्रास्तीति वाच्यं। सकलपुरुष-सकलकालसाधारणायोग्यताया एव तत्राभ्युपगमादिति भावः। द्वितीये आह, 'बाधकप्रमामात्रेति तद्वृत्तित्वाभावप्रमात्वावच्छिन्नाभावस्येत्यर्थः, 'ज्ञातुं' प्रत्यक्षतो ज्ञातुं, 'अयोग्यत्वादिति तादृशप्रमात्वावच्छिन्नाभावस्याप्ययोग्यत्वादित्यर्थः, अयोग्यप्रतियोगिकत्वादिति भावः।

---

(१) वह्निना सिञ्चतीत्यादौ यस्य वह्निकरणत्वीयनिरूपकत्वसम्बन्धे कदापि सेकादिवृत्तित्वाभावप्रमा न जाता तस्यैव तादृशप्रमाभावमादायात्र दोषः। अन्यथा यस्य वह्निकरणकत्वसम्बन्धे कदाचित् सेकादिवृत्तित्वाभावप्रमा जायते कदाचित् तादृशस्थले शाब्दभ्रमोऽपि जायते तस्य तादृशसम्बन्धे तादृशप्रमासामान्याभावविरहात् तादृशस्थले दोषाभाव इति ध्येयम्।

**च स्वरूपसन्नेवायं हेतुः, स्वीयबाधकप्रमाविरहदशायां योग्यताभ्रमेण शाब्दभ्रमानुपपत्तेः, अन्वयप्रयोजकरूपवत्त्वेन बाधकप्रमामात्रविरहोऽनुमेय इति चेत्। न। सेकानन्विततोये द्रवद्रव्यत्वे सत्यपि बाधकसत्त्वेन व्यभिचारात् उपजीव्यत्वेन तस्यैव योग्यतात्वापत्तेश्च। न चैवमेवेति वाच्यम्। आकाङ्क्षासत्त्यन्वयप्रयोजक-**

---

'स्वीयबाधकप्रमेति वह्निकरणकत्वादिसंसर्गे स्वीयसेकादिवृत्तित्वाभावप्रमाविरहदशायामित्यर्थः, 'योग्यताभ्रमेणेति उक्तयोग्यताभ्रमस्यैव सत्त्वेनेत्यर्थः, एवकारादस्मदुक्तयोग्यताव्यवच्छेदः, 'अन्वयप्रयोजकेति, अन्वयस्वरूपयोग्यतावच्छेदकधर्म्मवत्सम्बन्धत्वेनेत्यर्थः, जलसंसर्गः सेककरणत्ववृत्तित्वाभावप्रमामात्रविरहवान् द्रवद्रव्यसम्बन्धत्वादित्यनुमानप्रकार इति भावः। 'सेकानन्वितेति, सेकाकरणीभूततोये इत्यर्थः,(१) 'बाधकसत्त्वेन' तत्सम्बन्धे सेककरणत्ववृत्तित्वाभावप्रमासत्त्वेन, इदमुपलक्षणं सेककरणीभूततोयस्यापि सेककरणत्ववृत्तिसम्बन्धे(२) व्यभिचारो बोध्यः। 'उपजीव्यत्वेन' भवदुक्तयोग्यताज्ञानोपजीव्यज्ञानविषयत्वेन, 'तस्यैव' अन्वयप्रयोजकरूपवत्त्वस्यैव।

---

(१) सेककरणत्वावृत्तितोयसम्बन्ध इति यावत्। 'द्रवद्रव्यत्वे' द्रवद्रव्यसम्बन्धत्वे इत्यधिकः पाठः ग०पुस्तके वर्त्तते।

(२) सेककरणीभूततोयस्य स्वीयरूपादिवृत्तिसमवायादौ सेककरणत्ववृत्तित्वाभावप्रमासत्त्वादिति भावः।

रूपवत्त्वे सत्यप्यनाप्तवाक्ये[१] बाधकप्रमायामन्वयाबोधात्, बाधकप्रमाविरहो हेतुरिति चेत्तर्ह्यावश्यकत्वात् सैव योग्यता।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे योग्यतावादपूर्व्वपक्षः॥

---

'अन्वयप्रयोजकरूपवत्त्वेऽपि' तज्ज्ञानसत्त्वेऽपि, 'अनाप्तवाक्ये' स्थूलजलाभिप्रायप्रयुक्ते पयसा सिञ्चतीत्यादिवाक्ये, 'बाधकप्रमायामिति सेको न जलकरणक इत्यनुभव इत्यर्थः, 'बाधकप्रमाविरह इति बाधनिश्चयाभावोऽपि स्वरूपसद्धेतुरित्यर्थः, 'सैव' बाधनिश्चयशून्यतैव, 'योग्यता' शाब्दधीजनिका, अस्त्विति शेषः। किमेतज्ज्ञानस्य हेतुत्वेनेति भावः। इदमापाततः तादृशप्रमात्वसामान्यलक्षणप्रत्यासत्तिजन्यतादृशप्रमासामान्यज्ञानाभावत्वसामान्यलक्षणप्रत्यासत्तिजन्यतदभावज्ञान-तदसंसर्गाग्रहसहकृतेन तज्जन्यविशिष्टानुभवजन्यस्मृतिसहकृतेन वा मनसैवोपनीतभानात्मकस्य तन्निश्चयस्य क्वचित् संशयस्य च सम्भवात् आप्तवाक्यादिना व्यभिचारादेरग्रहदशायां व्यभिचारिणा लिङ्गेन च तज्ज्ञानस्य सम्भवाच्च। वस्तुतस्तु वृत्तित्वस्याधिकस्य प्रवेशाद्दत्प्रमाणापेक्षया गौरवमेवात्र दूषणमवसेयमिति दिक्।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये योग्यतावादपूर्व्वपक्षरहस्यं॥

---

(१) अनाप्तोक्ते वाक्य इति ख०।

## अथ योग्यतावादसिद्धान्तः ।

उच्यते बाधकप्रमाविरहो योग्यता, सा चेतर-पदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभावप्रतियोगित्वप्र-

---

### अथ योग्यतावादसिद्धान्तरहस्यं ।

ननु तद्धर्मावच्छिन्नेऽन्वयितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताक-तद्धर्मावच्छिन्नाभावप्रमाविशेष्यत्वसामान्याभावो बाधकप्रमाविरहः स च प्रमेयं वाच्यमित्यादावप्रसिद्धः तादात्म्यसम्बन्धेन वाच्यत्वावच्छिन्नाभावाप्रसिद्धेः, एवं प्रमेयस्य घट इत्यादौ यत्र प्रमेयत्वादिलक्षणाभेदसम्बन्ध एव षष्ठ्यर्थस्तस्य च विशेषणताविशेषसम्बन्धेन घटादावन्वयस्तत्र, यत्र वा स रूपवानित्यादौ तदादिपदं विशेषणताविशेषसम्बन्धेन प्रमेयत्वादिरूपेण प्रमेयघटादिपरं तत्र चाव्याप्तिः विशेषणताविशेष्यसम्बन्धेन प्रमेयत्वाद्यभावाप्रसिद्धेः, एवं भगवता ज्ञायते[१] घट इत्यादावपीत्यत आह, 'सा चेति बाधकप्रमाविरहरूपा योग्यता चेत्यर्थः, 'इतरपदार्थेति, अत्र इतरत्वमपरत्वञ्चाविवक्षितं तद्बुद्धेरहेतुत्वात् अयं घट इत्यादौ[२] विशेषण-

---

(१) अत्र तृतीयार्थः कर्तृत्वं तच्चाधेयत्वरूपं भाक्तं, धात्वर्थो ज्ञानं, विषयत्वमाख्यातार्थः, तदन्वयश्च स्वरूपसम्बन्धेन घटे, तथाच भगवदाधेयज्ञानविषयतावान् घट इत्येव बोधस्तत्र स तु न सम्भवति तत्र स्वरूपसम्बन्धेन तादृशविषयत्वाभावाप्रसिद्ध्या निरुक्तयोग्यताविरहादिति भावः ।

(२) तत्र इदन्त्वावच्छिन्नस्यैव घटतया घटस्यैव इदन्त्वावच्छिन्नतया इतरत्वादेरप्रसिद्धिरिति भावः ।

माविशेष्यत्वाभावः। प्रमेयं वाच्यमित्यत्र प्रमेयनि-

विशेष्ययोरभेदस्थले योग्यत्वानुपपत्तेश्च। परन्तु तदीयान्वयितावच्छेदकसम्बन्धे तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वसामान्याभावस्तत्र तद्योग्यतेत्येव विवक्षितं, वह्निना सिञ्चतीत्यादौ वह्निनिष्ठकरणताया निरूपकत्वरूपान्वयितावच्छेदकसम्बन्धे सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वस्यैव सत्त्वान्नातिव्याप्तिः। वह्निनिष्ठकरणताया निरूपकत्वरूपसंसर्गेऽपि सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वस्य घटादिनिष्ठस्याभावसत्त्वादतिव्याप्तिवारणाय सामान्यपदोपादानं। न च श्रोतुर्यदा वह्निनिष्ठकरणताया निरूपकत्वरूपसंसर्गे सेकनिष्ठात्यन्ताभावप्रतियोगित्वप्रमा नास्ति तदाऽतिव्याप्तिरिति वाच्यं। स्व-परसाधारणप्रमामात्रविशेष्यत्वाभावस्य प्रवेशादनादौ संसारे तदानीमप्यवश्यं कस्यचित् पुरुषस्य तत्र तादृशप्रतियोगित्वप्रमासत्त्वादन्ततो भगवत्प्रमासत्त्वाच्च। पयसा सिञ्चतीत्यादौ पयोनिष्ठकरणताया निरूपकतारूपान्वयितावच्छेदकसम्बन्धेऽपि सेकनिष्ठात्यन्ताभावप्रतियोगित्वभ्रमविशेष्यत्वसत्त्वादसम्भववारणाय प्रमेति। न च सर्व्वदा तादृशभ्रमविरहाद् यदाकदाचित् तादृशज्ञानविशेष्यत्वाभावमादायैव तत्र लक्षणसङ्गतिरिति वाच्यं। अनादौ संसारे सर्व्वदैवावश्यं कस्यचित् पयोनिष्ठकरणतानिरूपकत्वत्व-प्रमेयत्वादिना येन केनापि रूपेण वा तत्र तादृशप्रतियोगित्वभ्रमसत्त्वात्, प्रमात्वञ्च भ्रमभिन्नत्वं तेन पयोनिष्ठकरणतासंसर्गांकाशौ सेकनिष्ठात्यन्ताभावप्रतियोगिनावित्यांशिकसमूहालम्बनप्रमाविशेष्यत्वमादाय नासम्भवः। न च तथापि पयोनि-

ष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वं गोत्वे प्रसिद्धं ष्ठकरणतासंसर्गः सेकनिष्ठात्यन्ताभावप्रतियोगिधर्म्मवानित्यादिप्रमा-
विशेष्यतया असम्भव इति वाच्यं। तादृशप्रतियोगित्वप्रकारत्वाव-
च्छिन्नायाः प्रमाविशेष्यताया अभावस्य विवक्षितत्वात्, प्रकारत्वञ्च
विशेषणताविशेषसम्बन्धावच्छिन्नं ग्राह्यं तेन एककालीनत्वादिसम्बन्धेन
तादृशप्रतियोगित्वप्रकारकप्रमामादाय नासम्भवः। अथैवं विषयता-
त्वमपहाय विशेष्यतात्वेन कथमुपादानं। न च पयःकरणत्वसंसर्गत्वं
सेकनिष्ठात्यन्ताभावप्रतियोगीति प्रमाविषयत्वं पयःकरणत्वसंसर्गत्वत्व-
घटकतया पयःकरणत्वसंसर्गेऽप्यस्तीत्यसम्भववारणाय(१) तेन रूपे-
णोपादानमिति वाच्यं। तादृशप्रतियोगित्वप्रकारकत्वावच्छिन्नवि-
षयताविवक्षयैव तन्निराससम्भवादिति चेत्, न, विषयतात्वविशे-
ष्यतात्वयोः(२) समशरीरतया लाघव-गौरवाभावेनाशोकवनिकान्या-

(१) तादृशसंसर्गत्वत्वेऽप्येतादृशसंसर्गस्यापि निपातात् तादृशसंसर्गत्व-
निष्ठतादृशप्रतीतिविशेष्यतायास्तादृशसंसर्गेऽवच्छेदकत्वाख्यविषयत्वम-
स्त्येवेत्यर्थः।

(२) विषयतायां तादृशप्रतियोगित्वप्रकारकत्वावच्छिन्नत्वं तादृशप्रतियो-
गित्वानतिरिक्तवृत्तित्वं अन्यथा तादृशप्रकारकत्वस्य ज्ञानवृत्तित्वेन
ज्ञानवृत्तिज्ञानविषयकज्ञानीयविषयताया एव तादृशावच्छिन्नत्वसम्भ-
वादसङ्गतेः इति न युक्तं तथा सति अनतिरिक्तत्वप्रवेशे गौरवात्
प्रमापदवैयर्थ्याभावाच्च भ्रमविषयतायाः पयःकरणकत्वादिनिरूपकत्वे
सत्त्वेऽपि न तस्याः सेकादिवृत्त्यभावप्रतियोगित्वानतिरिक्तवृत्तित्वमिति
तामादायासम्भवानवकाशात् किन्तु प्रतियोगित्वनिष्ठप्रकारतानिरू-
पितत्वमिति।

यात्, प्रतियोगित्वस्यान्वयितावच्छेदकसम्बन्धतानियामकसम्बन्धावच्छिन्नत्वेन विशेषणीयं, तेन व्यधिकरणसम्बन्धावच्छिन्न-तादृश-प्रतियोगित्वमादाय नासम्भवः। न च तादृशप्रतियोगित्वसामान्याभाव एव सम्यक् किं प्रमाविशेष्यत्वप्रवेशेनेति वाच्यं। अखण्डाभावतया वैयर्थ्याभावात्। ननु तत्र तन्निष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वसामान्याभावस्तत्र तद्योग्यतेत्येवास्तु किमन्वयितावच्छेदकसम्बन्धस्य अनुयोगिकुक्षिनिक्षेपेण, प्रतियोगित्वस्यान्वयितावच्छेदकसम्बन्धावच्छिन्नत्वेन विशेषणीयं नातो व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगित्वमादायासम्भवः तथापि सम्बन्धविशेषावच्छिन्नत्वप्रवेशस्यावश्यकत्वादिति चेत्, न, अयं घट इत्यादावभेदान्वयबोधस्थलेऽन्वयितावच्छेदकतादात्म्यसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगित्वाप्रसिद्ध्याऽव्याप्त्यापत्तेः। न चात्यन्ताभावत्वेन नोपादेयं किन्त्वभावत्वेनेति नायं दोष इति वाच्यं। तथापि पचति, घटो नास्तीत्यादावन्वयितावच्छेदकानुकूलत्व-प्रतियोगित्वादिवृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताया अप्रसिद्धत्वेनाव्याप्त्यापत्तेः। अत्यन्ताभावश्च प्रतियोगिव्यधिकरणत्वेन विशेषणीयः, अन्यथा नीलो घट इत्यादावव्याप्त्यापत्तेः तत्राव्याप्यवृत्तिनो नीलरूपस्यैव नीलरूपविशिष्टतादात्म्यत्वेनान्वयितावच्छेदकसम्बन्धत्वात्[१] तस्य च उत्पत्तिकालाव-

---

(१) सर्वत्रैवान्वयितावच्छेदकसम्बन्धीयसम्बन्धानां सम्बन्धत्वं अन्वयितावच्छेदकसम्बन्धविशिष्टतत्तत्सम्बन्धत्वेन अन्यथा अयोग्यमात्रेऽतिव्याप्तिः सेकादिवृत्त्यभावप्रतियोगित्वप्रमाविशेष्यत्वाभावस्य वह्निकरणकत्वीयनिरूपकत्वरूपसम्बन्धेऽसत्त्वेऽपि निरूपकत्वत्वेन निरूपकत्वे सत्त्वस्य निष्प्रत्यूहत्वात् सेके पयःकरणकत्वीयनिरूपकत्वस्यैव सत्त्वादिति भावः।

च्छेदेन रक्ततादात्म्यायाश्च घटेऽत्यन्ताभावसत्त्वात्, एवं काष्ठं पचतीत्यादौ यत्र तिङोऽनुकूलव्यापारे वह्नौ लक्षणा संयोगेन च तदन्वयः कर्त्तरि काष्ठादौ तत्र संयोगस्यैवान्वयितावच्छेदकसम्बन्धतया तस्य च किञ्चिदवच्छेदेन काष्ठादावत्यन्ताभावादव्याप्त्यापत्तेः। एतेन वैशिष्ट्य-व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगित्वमादायापि नासम्भवः तस्य च प्रतियोगिव्यधिकरणत्वाभावात्। न च तथापि यत्रान्वयितावच्छेदकसम्बन्धो नाना तत्र चालनीन्यायेनाभावमादायाव्याप्तिरिति वाच्यं। तद्व्यक्तिनिरूपितान्वयितावच्छेदकसम्बन्धे तद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावस्तद्व्यक्तौ तद्व्यक्तेर्योग्यतेति क्रमेण सहस्राह्निकतया तत्तद्व्यक्तेरेव लक्षणघटकतया चालनीन्यायेनाभावमादायाव्याप्तिविरहात् अन्यथा पदार्थतावच्छेदकरूपेण पदार्थयोः सम्बन्धतावच्छेदकरूपेण अन्वयितावच्छेदकसम्बन्धस्य च लक्षणघटकत्वे नीलो घट इत्यादावव्याप्त्यापत्तेः नीलतादात्म्यस्य रक्तघटादिनिष्ठाभावप्रतियोगित्वेन घटनिष्ठात्यन्ताभावप्रतियोगित्वप्रमाविशेष्यत्वाभावविरहात्। न चैवं यद्यद्व्यक्तिद्वयोः परस्परमन्वयस्तत्तद्व्यक्तिद्वयोरेव प्रातिस्विकरूपेण परस्परयोग्यत्वज्ञानं हेतुरिति फलितं तच्च[१] युगसहस्रेणाप्यशक्यमिति वाच्यं। योग्यतायाः संशयसाधारणज्ञानस्यैव हेतुतया प्रातिस्विकसकलव्यक्तीनां परस्परयोग्यतानिश्चयविरहेऽपि क्षतिविरहात्[२]। न च प्रातिस्विकनिखिलव्यक्तीनां परस्परयोग्यतासंशयोऽपि सर्व्वत्र दुःसम्भव इति वाच्यं। यद्यद्व्यक्ति-

(१) योग्यत्वज्ञानञ्च।

(२) तत्र योग्यतासंशयादेव शाब्दबोध इति भावः।

द्वयोः परस्परं योग्यताज्ञानं तयोरेव परस्परमन्वयोऽस्तु यद्यो-ऽस्तु संशयात्मकं निश्चयात्मकं वा न तज्ज्ञानं तयोः शाब्दबोध-विषयत्वेऽपि मानाभाव इत्यभिप्रायात्। न चैवं तत्तद्व्यक्तित्वरूपेणा-योग्यताज्ञानस्य हेतुत्वे सामान्यतः पदार्थतावच्छेदकरूपेणायोग्यता-निश्चयेऽपि शाब्दबोधापत्तिरिति वाच्यं। अन्वयितावच्छेदकाश्रयत्व-विशिष्टतत्तद्व्यक्तित्वरूपेण योग्यताज्ञानस्य हेतुत्वाभ्युपगमात्। न च तथापि स स्पर्शवानित्यादौ यत्र तदादिपदं समवायसम्बन्धेन रूप-प्रकारेण रूपवद्वायुपरं तत्रापि योग्यत्वापत्तिः वायौ रूपव्यक्ति-निरूपितत्वविशिष्टसमवायाभावसत्त्वेपि तदभावस्य समवायात्मकप्रति-योगिसमानाधिकरणत्वादिति वाच्यं। तद्व्यक्तिनिरूपितान्वयिताव-च्छेदकसम्बन्धपदेनान्वयितावच्छेदकसम्बन्धावच्छिन्नतद्व्यक्तिनिरूपितध-र्म्म-धर्म्मिभावस्य विवक्षितत्वात्, धर्म्म-धर्म्मिभावश्च वृत्तिनियामकानि-यामकसम्बन्धेन तत्तन्मात्रसाधारणः स्वरूपसम्बन्धविशेषः, न त्वाधा-राधेयभावमात्रं, तेन वृत्त्यनियामकानुकूलत्वादिसम्बन्धस्थलेऽपि नाप्र-सिद्धिः। अतएव धर्म्म-धर्म्मिभावविषयकैकज्ञानत्वं विशिष्टज्ञानत्वमिति मीमांसकाः। इत्यश्च प्रतियोगित्वप्रमेत्यत्र प्रतियोगित्वं विशेषण-ताविशेषसम्बन्धावच्छिन्नत्वेनैव सर्वत्र विशेषणीयं। न च तथापि स प्रमेय इत्यादौ यत्र तदादिपदं समवायसम्बन्धेन गुणाद्यन्यत्ववि-शिष्टसत्तावद्गुणपरं तत्रापि योग्यत्वापत्तिः विशिष्टसत्तायाः सत्ता-नतिरिक्ततया सत्ताव्यक्तिनिरूपितसमवायसम्बन्धावच्छिन्नधर्म्मित्वस्य गुणनिष्ठाभावप्रतियोगित्वविरहादिति वाच्यं। तत्र योग्यत्वस्येष्ट-त्वात्, यदा तु विशिष्टनिरूपिताधारत्वसम्बन्धेन विशिष्टसत्त्ववद्-

गुणपरं तदैवायोग्यत्वस्याभ्युपगमात् । वस्तुतस्तु वृत्त्यनियामकसम्बन्धस्याप्यभावप्रतियोगितावच्छेदकत्वात् तद्व्यक्तौ तद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगित्वप्रकारकप्रमाविशेष्यत्वाभावस्तद्व्यक्तौ तद्व्यक्तेर्योग्यतेत्येव लक्षणार्थः । संसर्गपदञ्च प्रतियोगित्वस्यान्वयितावच्छेदकसम्बन्धावच्छिन्नत्वलाभाय अन्यथा व्यधिकरणसम्बन्धावच्छिन्नाभावप्रतियोगित्वमादायासम्भवापत्तेः, अत्यन्ताभावत्वञ्च प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणाभावत्वं,[१] न तु यदातनसंसर्गाभावत्वं, नातस्तादात्म्यसंसर्गकान्वयबोधस्थलेऽन्वयितावच्छेदकतादात्म्यसम्बन्धावच्छिन्नात्यन्ताभावप्रतियोगित्वाप्रसिद्धा अव्याप्तिः, घटस्य गृहमित्यादौ यत्र संयोगादिरेव षष्ठ्यर्थस्तस्य समवायेन गृहेऽन्वयस्तत्र, यत्र वा चैत्रोगच्छतीत्यादौ तिङोऽनुकूलव्यापारे संयोगादौ लक्षणा तस्य च समवायेन चैत्रेऽन्वयस्तत्र च संयोगादेरव्याप्यवृत्तितया गृहचैत्रादिनिष्ठाभावप्रतियोगित्वादव्याप्तिवारणाय प्रतियोगिव्यधिकरणत्वमभावविशेषणं । स स्पर्शवानित्यादौ यत्र तदादिपदं समवायसम्बन्धेन रूपप्रकारेण रूपवद्वायुपरं तत्रापि वायौ समवायसम्बन्धावच्छिन्नरूपव्यक्त्यभावस्य समवायेन रूपात्मकप्रतियोगिव्यधिकरणतया नातिव्याप्तिरित्येव रमणीयं[२]। केवलान्वयिनि पूर्वोक्ता-

---

(१) तथाच प्रतियोग्यनधिकरणतद्व्यक्तिनिष्ठाभावप्रतियोगित्वप्रमाविशेष्यत्वाभावस्तद्व्यक्तौ तद्व्यक्तेर्योग्यतेति भावः ।

(२) तथाच रूपसमवायस्य समवायानतिरिक्ततया पूर्व्वकल्पेऽतिव्याप्तिरिति भावः ।

## वाच्यत्वसंसर्गे तदभावः।

मव्याप्तिमुद्धरति, 'प्रमेयमिति, 'प्रमेयनिष्ठात्यन्ताभावेति प्रमेयत्वा-श्रयादिनिष्ठप्रतियोगिव्यधिकरणाभावेत्यर्थः, 'गोत्वे' गोत्वाधिक-रणत्वे, अन्यथा विशेषणताविशेषसम्बन्धावच्छिन्नाभावस्यैव लक्षणघ-टकतया तदवच्छिन्नगोत्वाभावस्य प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरणत्वाभावात् गोत्वे प्रसिद्ध्यसम्भवात् विशेषणताविशे-षसम्बन्धेन गोत्वस्य प्रतियोगिनोऽधिकरणाप्रसिद्धेः। व्याप्यवृत्तिस्थले प्रतियोगिव्यधिकरणत्वस्यानुपादेयत्वमते वस्तुतस्तुकल्पे च यथाश्रुत-मेव साधु। 'वाच्यत्वसंसर्गे' वाच्यत्वरूपतादात्म्यसंसर्गावच्छिन्नधर्म्म-धर्म्मिभावे,[१] वस्तुतस्तुकल्पे च 'वाच्यत्वसंसर्गे' वाच्यत्वसंसृष्टेऽश्वादौ।

केचित्तु तत्तद्व्यक्तित्वेनैव लक्षणघटकत्वेऽपूर्वव्यक्तिविशेषलाभः शाब्द-बोधे क्वापि न स्यात् एवं स प्रमेय इत्यादौ यत्र तदादिपरं समवाय-सम्बन्धेन गुणाद्यन्यत्वविशिष्टसत्तात्वप्रकारेण तादृशसत्त्ववद्गुणपरं तत्राप्ययोग्यत्वं सर्वसिद्धमतस्तद्धर्म्मावच्छिन्ननिरूपितत्वविशिष्टान्वयि-तावच्छेदकसम्बन्धे तद्धर्म्मावच्छिन्ननिष्ठात्यन्ताभावप्रतियोगित्वप्रकार-कप्रमाविशेष्यत्वाभावस्तद्धर्म्मावच्छिन्ने तद्धर्म्मावच्छिन्नस्यान्वयबोधे यो-ग्यतेत्येव लक्षणार्थः[२]। न चैवं शिंशपा वृक्षः नीलोघट इत्यादाव-

---

(१) धर्म्मतानिरूपितधर्म्मित्व इत्यर्थः।

(२) तथाच विशिष्टसत्तानिरूपितत्वविशिष्टसमवायाधिकरणता न गुणा-दाविति भावः।

व्याप्तिः शिंशपा-नीलादितादात्म्यस्य वृक्ष-घटत्वाद्यवच्छिन्ननिष्ठात्यन्ताभावप्रतियोगित्वादिति वाच्यं। तद्धर्मावच्छिन्ननिष्ठात्यन्ताभावपदेन तद्धर्मावच्छिन्नत्वव्यापकात्यन्ताभावस्य विवक्षितत्वात्। न चैवं प्रमेयं वाच्यमित्यत्र गोत्वे गोत्वाधिकरणत्वे वा प्रसिद्ध्यभिधानमसङ्गतं गोत्व-तदधिकरणत्वयोः प्रमेयत्वव्यापकात्यन्ताभावप्रतियोगित्वविरहादिति वाच्यं। विशेषणताविशेषावच्छिन्नगोत्वाभावस्य केवलान्वयित्वेन प्रमेयत्वव्यापकतया गोत्वे प्रसिद्धिसम्भवात् प्रमेयं वाच्यमित्यत्र विशेषणताविशेषस्यैव लक्षणघटकत्वात्[१]। न च विशेषणताविशेषसम्बन्धावच्छिन्नगोत्वाभावो न प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगिव्यधिकरण इति वाच्यं। व्याप्यवृत्तिस्थले तस्यानुपादेयत्वात् अव्याप्यवृत्तावव्याप्तिवारणाय व्याप्यवृत्तित्वस्यैवाभावविशेषणत्वाच्च व्याप्यवृत्तित्वं निरवच्छिन्नवृत्तित्वं। न चैवं वैशिष्ट्य-व्यासज्यवृत्तिधर्मावच्छिन्नाभावमादायासम्भव इति वाच्यं। तद्धर्मावच्छिन्ननिरूपितत्वविशिष्टान्वयितावच्छेदकसम्बन्धतावच्छेदके तद्धर्मावच्छिन्नत्वव्यापकात्यन्ताभावप्रतियोगितावच्छेदकत्वप्रमाविशेष्यत्वाभावस्य विवक्षितत्वात्[२]। न चैवं वह्निना सिञ्चतीत्यादौ अतिप्रसङ्गः वह्नित्वावच्छिन्नाधेयत्वत्वे करणत्वव्यापकात्यन्ताभावप्रतियोगिता-

---

(१) अन्वयितावच्छेदकसम्बन्धतानियामकसम्बन्धेनाभावस्य लक्षणे निवेशनीयतया वाच्यतादात्म्यस्य वाच्यत्वरूपतया तन्नियामकसम्बन्धो विशेषणताविशेष एवेति भावः।

(२) प्रमानिरूपितावच्छेदकत्वनिष्ठप्रकारता च पर्य्याप्तिसम्बन्धावच्छिन्ना ग्राह्या अतः पुनर्नोक्त दोष इति भावः।

**वस्तुतस्त्वितरपदार्थसंसर्गेऽपरपदार्थनिष्ठात्यन्ताभाव-**

---

वच्छेदकत्वाभावस्य एवं करणत्वावच्छिन्ननिरूपकत्वे सेकत्वव्याप-कात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य च सत्त्वादिति वाच्यं। वह्नित्वावच्छिन्न-करणत्वावच्छिन्नयोः सेकत्वावच्छिन्न-करणत्वाव-च्छिन्नयोश्च प्रत्येकान्वये तत्रापि योग्यता अस्त्येव वह्निकरणत्वरूप-विशिष्टधर्मावच्छिन्न-सेकत्वावच्छिन्नयोरन्वये परं योग्यता नास्ती-त्युपगमादिति न कोपि दोषः। एवमग्रिमलक्षणमपि बोध्यमि-त्याहुः, तदसत्, निष्ठपदस्य व्यापकत्वपरत्वे उदचरत्वापत्तेः करका-भिप्रायप्रयुक्तपयसा सिञ्चतीत्यादावपि जलकरणकत्वप्रकारेण कर-काकरणत्वबोधने योग्यतापत्तेश्च जलकरणत्वरूपविशिष्टधर्मावच्छि-न्ननिरूपितत्वविशिष्टान्वयितावच्छेदकसम्बन्धतावच्छेदके सेकत्वव्याप-काभावप्रतियोगितावच्छेदकत्वाभावसत्त्वात्, न चेष्टापत्तिः, जलकर-णत्वरूपेण करकाकरणत्वबोधनेऽपि साम्प्रदायिकैस्तत्र योग्यत्वान-भ्युपगमादिति दिक्।

अत्र प्रमाविशेष्यत्वघटितत्वेन गौरवं तादृशप्रतियोगित्वप्रमात्वेन तादृशप्रतियोगित्वप्रमानुपस्थितिदशायां दुर्ज्ञेयत्वञ्च न हि सर्वत्र शाब्दबोधात् पूर्वं तादृशप्रतियोगित्वप्रमात्वावच्छिन्नोपस्थितिनियम-इत्यतस्तदंशपरित्यागेन लक्षणमाह, 'वस्तुतस्त्विति, अत्रापीतरत्वम-परत्वञ्चाविवक्षितं,[१] तथाच तत्तच्छक्तीयान्वयितावच्छेदकसम्बन्धे तत्त-

---

(१) अयं घट इत्यादौ विशेषण-विशेष्ययोरभेदस्थले योग्यत्वानुपपत्तेरिति शेषः।

प्रतियोगितावच्छेदकधर्म्मशून्यत्वं योग्यता लाघवात् शक्यज्ञानत्वाच्च ।

---

शक्तौ वा तत्तच्छक्तिनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकधर्म्मशून्यत्वं तत्तच्छक्तौ तत्तच्छक्तेर्योग्यतेत्यर्थः, पदार्थतावच्छेदकरूपेण पदार्थयोः प्रवेशे शिंशपा वृक्षः नीलोघट इत्यादावुक्तक्रमेणाव्याप्तिरिति तत्त-च्छक्तित्वेन प्रवेशः । अत्यन्ताभावत्वञ्च व्याप्यवृत्त्यभावत्वं, पूर्वोक्ताव्याप्य-वृत्तिस्थलेऽव्याप्तिवारणाय व्याप्यवृत्तीति, व्याप्यवृत्तित्वं निरवच्छिन्न-वृत्तित्वं, वैशिष्ट्य-व्यासज्यवृत्तिधर्म्मावच्छिन्नाभावस्यापि व्याप्यवृत्तित्वा-त्तत्प्रतियोगितामादायासम्भववारणायावच्छेदकानुसरणं । न च तथाप्यसम्भवः तादृशप्रतियोगितावच्छेदकस्य वैशिष्ट्यस्य व्यासज्यवृ-त्तिधर्म्मस्य च सर्व्वत्र सत्त्वादिति वाच्यं । 'इतरपदार्थसंसर्ग इत्यस्य तच्छक्तीयत्वविशिष्टान्वयितावच्छेदकसम्बन्धतावच्छेदक इत्यर्थः, इतर-पदार्थे इतरपदार्थतावच्छेदकाश्रये संसर्गोयस्येति व्युत्पत्त्या पदार्थता-वच्छेदकाश्रयनिष्ठतच्छक्तित्वे इति वार्थः, 'प्रतियोगितावच्छेदकधर्म्म-शून्यत्वमित्यस्य च प्रतियोगितावच्छेदकस्य धर्म्मः प्रतियोगिताव-च्छेदकत्वं तच्छून्यत्वमित्यर्थः, तथाच तत्तच्छक्तीयत्वविशिष्टान्वयि-तावच्छेदकसम्बन्धतावच्छेदके तच्छक्तित्वे वा तच्छक्तिनिष्ठव्याप्यवृत्त्यभा-वप्रतियोगितावच्छेदकत्वशून्यत्वं तच्छक्तौ तच्छक्तेर्योग्यतेत्यर्थस्य फलि-ततया वैशिष्ट्यादिरूपावच्छेदकमादायासम्भवविरहात् शेषं दर्शितदि-शावसेयं । 'लाघवादिति प्रमाविशेष्यत्वाप्रवेशेन लाघवादित्यर्थः, 'शक्यज्ञानत्वाच्चेति तादृशप्रतियोगित्वप्रमात्वेनानुपस्थितिदशायामपि शक्यज्ञानत्वाच्चेत्यर्थः ।

अत्र नव्याः अन्वयितावच्छेदकसम्बन्धेन तद्व्यक्तौ तद्व्यक्तिमत्त्वमेव तद्व्यक्तौ तद्व्यक्तेर्योग्यताऽतिलाघवात्, घटत्वाश्रयैतद्व्यक्तिर्नीलत्वाश्रयै-तद्व्यक्तिमतीत्यादिक्रमेण च संशय-निश्चयसाधारणं तज्ज्ञानं हेतुः तेन सामान्यतः पदार्थतावच्छेदकरूपेणायोग्यतानिश्चयेऽपि न शाब्द-बोधः न वा शाब्दबोधात्पूर्वं सर्वत्र तादृशनिश्चयविरहेऽपि कापि क्षतिः । वस्तुतस्तु अन्वयितावच्छेदकसंसर्गेण तद्धर्मावच्छिन्ने तद्ध-र्मावच्छिन्नवत्त्वमेव तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नान्वयबोधे योग्यता तेन प्रातिस्विकरूपेण सर्वत्र शाब्दबोधात्पूर्वं निखिलतत्तद्व्यक्तिषु तत्त-द्व्यक्तिमत्त्वग्रहाभावेऽपि न क्षतिः । न चैवं वह्निना सिञ्चतीत्यादा-वतिप्रसङ्गः करणत्वावच्छिन्ने वह्नित्वावच्छिन्नस्य सेकत्वावच्छिन्ने करणत्वावच्छिन्नस्य च सत्त्वादिति वाच्यं । वह्नित्वावच्छिन्न-करण-त्वावच्छिन्नयोः सेकत्वावच्छिन्न-करणत्वावच्छिन्नयोश्च प्रत्येकान्वये तत्रापि योग्यतास्त्येव वह्निकरणत्वावच्छिन्न-सेकत्वावच्छिन्नयोर्वि-शिष्टान्वये परं योग्यता नास्ति सेकत्वावच्छिन्ने वह्निकरणत्वरूप-विशिष्टधर्मावच्छिन्नवत्त्वविरहादित्यभ्युपगमात् । नन्वेवं सेकोन वह्नि-करणक इत्ययोग्यतानिश्चयदशायां विशिष्टस्य वैशिष्ट्यमितिन्यायेन सेकत्वावच्छिन्ने वह्निकरणत्वरूपविशिष्टधर्मावच्छिन्नस्यान्वयो मास्तु तादृशान्वये सेकत्वावच्छिन्ने वह्निकरणत्वरूपविशिष्टधर्मावच्छिन्न-वत्त्वस्य योग्यतात्वात् उक्तायोग्यतानिश्चयसत्त्वे च तज्ज्ञानासम्भवात्, विशेष्ये विशेषणमिति न्यायेन सेकोवह्निकरणक इत्यन्वयस्तु स्यात् करणत्वावच्छिन्ने वह्नित्वावच्छिन्नवत्त्वस्य सेकत्वावच्छिन्ने करणत्व-त्वावच्छिन्नवत्त्वस्य च उक्तायोग्यतानिश्चयसत्त्वेऽपि ग्रहसम्भवादिति

न च नरशिरःशौचानुमानबाधात् तदशौचबोधकशब्दात्[१] अन्वयाबोध इति वाच्यम्। उपजीव्यजाती-

---

चेत्। न। सेकत्वावच्छिन्ने करणत्वत्वरूपेण करणत्वं प्रकारः करणत्वावच्छिन्ने वह्नित्वरूपेण वह्निः प्रकार इत्याकारकशाब्दबुद्धिं प्रत्येव सेकत्वावच्छिन्ने वह्निकरणत्वत्वरूपविशिष्टधर्म्मावच्छिन्नवत्त्वस्य योग्यतात्वादिशिष्टस्य वैशिष्ट्यमिति न्यायेन विशेष्ये विशेषणमिति न्यायेन च उभयथैव शाब्दबोधस्य तादृशायोग्यतानिश्चयदशायामसम्भवात् उक्तक्रमेणोभयसाधारणविशिष्टप्रकारताया एव तज्ज्ञानस्य कार्य्यतावच्छेदकत्वात्। न चैवं करकाभिप्रायप्रयुक्तपयसासिञ्चतीत्यादावपि योग्यत्वापत्तिः सेकत्वावच्छिन्ने पयःकरणकत्वत्वरूपविशिष्टधर्म्मावच्छिन्नवत्त्वसत्त्वादिति वाच्यं। तत्रापि सेकत्वावच्छिन्ने जलत्वप्रकारेण करकाकरणत्वबोधने योग्यत्वस्येष्टत्वात् करकात्वरूपेण करकाकरणकत्वबोधने पुनरयोग्यत्वाभ्युपगमात् साम्प्रदायिकप्रवादस्य च नियुक्तिकत्वेनाश्रद्धेयत्वादिति[२] प्राञ्चः।

'न चेति नरशिरःकपालं शुचि प्राण्यङ्गत्वात् शङ्खवदित्यनुमित्यात्मकबाधबुद्धिसत्त्वादित्यर्थः, 'शब्दात्' वेदात्, 'अन्वयाबोधः' अन्वयबोधासम्भवः, प्रतिबन्धकसत्त्वेन उक्तयोग्यताज्ञानाभावादिति भावः। 'उपजीव्येति भवदुक्तशौचानुमानस्य उपजीव्योयो दृष्टान्तः

---

(१) नरशिरःशौचानुमानबाधितत्वादशौचबोधकशब्दादिति ख०।

(२) निर्युक्तिकत्वेनानादेयत्वदितीति ख०, ग०।

यत्वेन शब्दस्य बलवत्त्वात् तेनैव तदनुमानबाधात् । नन्वाकाङ्क्षासत्तिमत्त्वेन शब्दस्य प्रमाणता न तु योग्यतापि तन्निवेशिनी बाधाभावस्य प्रमामात्रहेतुत्वादिति चेत् । न । बाधे हि प्रमाणदोषोऽवश्यं वक्तव्यः,

---

शङ्के शुचिताद्रूपसाध्यनिश्चायकोवेदस्तस्य निश्चितप्रामाण्यकतया तज्जातीयत्वेनेत्यर्थः, 'शब्दस्य' अशौचबोधकवेदस्य, 'बलवत्त्वात्' निश्चितप्रामाण्यकत्वात्, 'तेनैव' तद्वेदज्ञानेनैव, 'तदनुमानबाधादिति शौचानुमानस्याप्रामाण्यज्ञापनादित्यर्थः । न च वेदाच्छाब्दबोधानन्तरमेवानुमानेऽप्रमात्वज्ञानं स एव च प्रथमं कुत इति वाच्यं । फलबलेन तद्वेदज्ञानस्यैव उद्बोधकविधया अप्रामाण्योपस्थापकत्वकल्पनात् तज्जन्याप्रामाण्योपस्थितिसहकृतमनसैव विनापि शाब्दबोधमप्रमात्वज्ञानसम्भवात् फलानुरोधित्वात् कल्पनाया इति भावः । 'आकाङ्क्षासत्तिमत्त्वेन' आकाङ्क्षासत्तिज्ञानसहकारेणैव, 'प्रमाणता' शाब्दबोधजनकता, 'योग्यतापि' योग्यताधीरपि । न च स्वतन्त्रान्वय-व्यतिरेकानुविधानाद्योग्यताज्ञानस्यापि हेतुत्वमिति वाच्यं । तस्यैवासिद्धेरिति भावः । नन्वेवं वह्निना सिञ्चतीत्यादौ बाधनिश्चये सति कुतो नान्वयबोध इत्यत आह, 'बाधेति बाधबुद्ध्यभावस्येत्यर्थः, 'प्रमामात्रेति विशिष्टबुद्धिमात्रेत्यर्थः, तथाच सामान्यसामग्र्यभावादेव न तदानीं शाब्दबोध इति भावः । 'बाधे हीति वह्निना सिञ्चतीत्यादिषु बाधबुद्धावित्यर्थः, 'प्रमाणेति शाब्दबुद्धिकारणीभूतज्ञानस्य प्रतिबन्धो भवतीत्यवश्यं वाच्यमित्यर्थः,

अन्यथा प्रमाणविषये बाधासम्भवात् यथानुमाने बाधादुपाधिकल्पनद्वारा व्याप्तिविघातः, निरुपाधौ बाधानवकाशात् ।

'अन्यथेति, 'प्रमाणविषये' बाधबुद्धावपि शाब्दबुद्धिकारणीभूतयावज्ज्ञानसत्त्वे, 'बाधासम्भवादिति बाधबुद्धेः शाब्दबुद्धिप्रतिबन्धकत्वासम्भवादित्यर्थः, कारणीभूतज्ञानं विघटयत एव ज्ञानस्य परोक्षानुभवप्रतिबन्धकत्वादिति भावः। तत्र दृष्टान्तमाह, 'यथेति, 'अनुमाने' अनुमितिस्थले, 'बाधादिति बाधबुद्ध्या इत्यर्थः, 'उपाधिकल्पनेति उपधिज्ञानेत्यर्थः, 'व्याप्तिविघातः' अनुमितिकारणीभूतव्याप्तिज्ञानप्रतिबन्धः, एतच्च यत्र बाधितसाधनवान्पक्षस्तत्र बोध्यं, अन्यत्र तु पक्षधर्मताज्ञानप्रतिबन्धो बोध्यः। ननु बाधबुद्धौ कथमुपाधिज्ञानमित्यत आह, 'निरुपाधाविति पक्षधर्महेतौ निरुपाधौ सतीत्यर्थः, 'बाधानवकाशात्' बाधासत्त्वात्, तथाच व्याप्येन व्यापकानुमानमिति भावः। बाधोऽत्र साध्यवद्भिन्नपक्षकत्वं तेन गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादौ बाधित्वादवच्छेदेऽपि न क्षतिरिति बोध्यं(१)। इदमापाततः कारणीभूतज्ञानं विघटयत एव ज्ञानस्य परोक्षानुभवप्रतिबन्धकत्वमिति व्याप्तेरप्रयोजकत्वात् उपमितिस्थले व्यभिचारात् बाधज्ञानस्य सादृश्यादिज्ञानप्रतिबन्धकत्वे मानाभावात् गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान्

(१) इति भाव इति ग०।

पृथिवीत्वादित्याद्यनुमितिप्रतिबन्धके गन्धप्रागभावकालविशेष्यक-गन्धाभावनिश्चये व्यभिचाराच्च । वस्तुतस्तु शाब्दधीसाधारणविशिष्ट-बुद्धिसामान्यं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकत्वे मुखं चन्द्र-इत्यादिमुख-चन्द्राद्यभेदान्वयबोधकरूपकादौ प्रहसनादौ च बाध-निश्चयसत्त्वेऽपि अनुभवसिद्धस्य शाब्दबोधस्यापलापापत्तिः कलहादौ मिथ्याभिशापवचनाच्छाब्दबोधानुपपत्तिश्च तत्र शाब्दबोधं विना क्रोधाद्यनुपपत्तेः, अत एवोक्तं "अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि । बाधात्तु न प्रमा तत्र अतः प्रामाण्यनिश्चयः" ॥ इति बाधितत्वेन निश्चितेऽप्यर्थे शब्दो ज्ञानं जनयति किन्तु तदानीं तज्ज्ञाने प्रामाण्याभावज्ञानमात्रं जायते अतः प्रामाण्यनिश्चयो निष्कम्पप्र-वृत्तिप्रयोजकः, अन्यथा तत्रापि प्रवृत्त्यापत्तेरिति तदर्थात्, तथाच शाब्दान्यविशिष्टबुद्धिं प्रत्येव बाधनिश्चयस्य प्रतिबन्धकतया वह्निना सिञ्चतीत्यादौ बाधनिश्चयसत्त्वे शाब्दबोधवारणाय योग्यताधीः शा-ब्दधीहेतुरावश्यकी । न च योग्यताज्ञानस्य हेतुत्व एव बाधितार्थक-रूपकादौ कथं शाब्दधीः बाधनिश्चयसत्त्वेन तद्धर्मावच्छिन्ने तद्ध-र्मावच्छिन्नवत्त्वरूपयोग्यताज्ञानस्यैवासम्भवात् अन्यथा वह्निना सिञ्च-तीत्यादावपि बाधनिश्चयसत्त्वे शाब्दबोधस्य दुर्वारत्वादिति वाच्यं । बाधनिश्चयसत्त्वेऽप्याहार्य्ययोग्यताज्ञानादेव तत्र शाब्दबोधसम्भवात्, वह्निना सिञ्चतीत्यादावपि बाधनिश्चयसत्त्वेऽप्याहार्य्ययोग्यताज्ञानात् कदाचित्[१] शब्दबोधस्येष्टत्वात् । न चैवं शङ्खो न पीत इत्यादिबाध-

(१) कस्यचिदिति क०

निश्चयसत्त्वेऽपि शङ्खः पीत इति दोषविशेषजन्ययोग्यताभ्रमेण शङ्खः पीत इति शब्दबोधप्रसङ्गः बाधनिश्चयविरहदशायां शङ्खः पीत-इति दोषविशेषजन्ययोग्यताभ्रमाच्छङ्खः पीत इति शाब्दबोधोदयात् दोषविशेषजन्ययोग्यताज्ञानस्यापि हेतुत्वेनाभ्युपेयत्वादिति वाच्यं। असत्यप्रामाण्यनिश्चये इष्टत्वात् आहार्य्ययोग्यताज्ञानतुल्यत्वात् एवं यदैकेन्द्रियजन्यबाधनिश्चयसत्त्वेऽप्यन्येन्द्रियजन्ययोग्यताज्ञानमानुमानि-कादिबाधनिश्चयसत्त्वेऽपि लौकिकप्रत्यक्षात्मकयोग्यताज्ञानञ्च तदा तत्रापि शाब्दबोधे इष्टापत्तिः आहार्य्ययोग्यताज्ञानतुल्यत्वात् अबा-धितार्थकरूपकादौ शाब्दबोध एवाहार्य्यात्मकोऽभ्युपेयतां तथाचा-हार्य्यप्रत्यक्षेतरत्ववदाहार्य्यशाब्देतरत्वस्यापि बाधनिश्चयप्रतिबध्यताव-च्छेदके प्रवेशादेव बाधितार्थकरूपकादौ बाधनिश्चयसत्त्वे शाब्दबोधस्य वह्निना सिञ्चतीत्यादौ बाधनिश्चयसत्त्वे शाब्दबोधाभावस्य च सम्भवे-ऽपि किं पृथग्योग्यताधीहेतुत्वेन, तत्रापि शाब्देतरत्वस्य प्रतिबध्यता-वच्छेदके प्रवेशस्यावश्यकत्वात्। न च मम शाब्देतरत्वं शाब्दत्वाव-च्छिन्नप्रतियोगिताकोऽखण्डो भेदस्तव चाहार्य्यशाब्देतरत्वं अहार्य्य-त्वस्यानुगतस्याभावात्तत्तच्छाब्दबुद्धिभेदकूटरूपमतः प्रतिबध्यतावच्छे-दकगौरवमिति वाच्यं। अतिरिक्तकार्य्य-कारणभावकल्पनामपेक्ष्य कार्य्यतावच्छेदक-कारणतावच्छेदकयोः शरीरगौरवस्य न्याय्यत्वात् तत्तदप्रामाण्यज्ञानाभावकूटविशिष्टयोग्यताज्ञानस्यैव शाब्दधीहेतु-त्वात् तत्रापि कारणतावच्छेदकशरीरगौरवसत्त्वाच्च कार्य्य-कारण-भावान्तरकल्पनं पुनरधिकमिति चेत्। न। शाब्दबोधस्याहा-र्य्यत्वाभ्युपगमेऽपसिद्धान्तात् प्रत्यक्षेतरज्ञानस्याहार्य्यत्वानभ्युपगमात्।

किञ्चाहार्य्यशाब्देतरत्वस्य प्रतिबध्यतावच्छेदकप्रवेशे शाब्देच्छाविरह-दशायां बाधनिश्चयसत्त्वे आहार्य्यशाब्देतरशाब्दानुत्पादेऽप्याहार्य्य-शाब्दबोधस्य कुतो नोत्पाद इत्याहार्य्यशाब्दबोधं प्रति तत्तच्छाब्दे-च्छानां विशेषतो हेतुत्वस्यावश्यकत्वात् एवं शाब्देच्छासत्त्वे अनाहार्य्य-शाब्दबोधवारणाय अनाहार्य्यशाब्दबोधं प्रति तत्तदिच्छाभावाना-मपि हेतुत्वस्यावश्यकत्वादनन्तकार्य्य-कारणभावकल्पनप्रसङ्गाद्भेदकूट-प्रवेशेन प्रतिबध्यतावच्छेदकगौरवाच्च तदपेक्षया पृथग्योग्यताज्ञान-हेतुतैव लघीयसी । अथ तवाप्रामाण्यज्ञानाभावविशिष्टयोग्यताज्ञानं शाब्दधीहेतुस्तत्र च सामानाधिकरण्यमेव वैशिष्ट्यं अन्यथा विषयता-सम्बन्धावच्छिन्नतत्तत्पुरुषीयाप्रामाण्यज्ञानाभावानां विशेषणताविशेष-सम्बन्धेन योग्यताज्ञानविशेषणत्वे तत्तत्पुरुषीयत्वस्य कार्य्यता-कारण-तावच्छेदके प्रवेशप्रसङ्गाद्गौरवापत्तेः तथाच तत्तदप्रामाण्यज्ञानाभा-वानां सामानाधिकरण्यसम्बन्धेन परस्परं विशेषण-विशेष्यभावे विनिग-मनाभावाद्गुरुतरधर्म्मावच्छिन्नानन्तकार्य्य-कारणभावो दुर्वारः अप्रा-माण्यज्ञानाभावानां विशेषण-विशेष्यभावभेदेन विशिष्टबुद्धि-बाधनि-श्चययोरनन्तप्रतिबध्य-प्रतिबन्धकभावस्यानुमित्यादिस्थलानुरोधेन द्व-योरेव तुल्यः । न च तवाहार्य्यशाब्देतरत्वस्य तत्तच्छाब्दबुद्धिभेदकूट-रूपस्य विशेषण-विशेष्यभावभेदेन प्रतिबध्यतावच्छेदकभेदाद्गुरुतर-धर्म्मावच्छिन्नानन्तप्रतिबध्य-प्रतिबन्धकभावोऽधिकः, मम तु शाब्देत-रत्वमखण्डो भेद इति नानन्तप्रतिबध्य-प्रतिबन्धकभाव इति वाच्यं । मम परस्परासंसृष्टानां तत्तच्छाब्दबुद्धिभेदकूटानां विशिष्टबुद्धित्वस्य चैकत्र द्वयमिति न्यायेन व्यासज्यवृत्तिप्रतिबध्यतावच्छेदकताभ्युपग-

मादेकत्वान्यस्याविशेषणतया विशेषण-विशेष्यभावे विनिगमकाभाव-विरहात् परस्परं विशेषण-विशेष्यभावे सामानाधिकरण्यरूपवैशिष्ट्य-प्रवेशेन गौरवप्रसङ्गस्यैव विनिगमकत्वात् तत्र चाप्रामाण्यज्ञानाभाव-विशिष्टयोग्यताज्ञानस्थले सामानाधिकरण्यरूपवैशिष्ट्यप्रवेशस्यावश्यक-त्वात् विशेषण-विशेष्यभावे विनिगमकाभावात्। न च तत्तच्छा-ब्दबुद्धिभेदकूटानां विशेषणताविशेषसम्बन्धेन विशिष्टबुद्धित्वस्य च समवायसम्बन्धेन ज्ञाननिष्ठतया सम्बन्धभेदेन व्यासज्यवृत्त्यवच्छेदकत्व-स्यैकस्यासम्भव इति वाच्यं। तत्तच्छाब्दबुद्धिभेदकूटानां[(१)] विशिष्ट-बुद्धित्वाधिकरणत्वस्य च विशेषणताविशेषसम्बन्धेन व्यासज्यवृत्त्यव-च्छेदकत्वाभ्युपगमादिति चेत्। न। निश्चिताप्रामाण्यकादपि यो-ग्यताज्ञानाच्छाब्दबोधो जायत एव परन्तु तच्छाब्दबोधेऽपि अ-प्रमाण्यनिश्चयो जायत इत्यभ्युपगमात् अप्रामाण्यज्ञानाभावविशिष्ट-त्वस्य मम कारणतावच्छेदककोटावप्रवेशात् अन्यथा रूपकादिस्थले आहार्य्ययोग्यताज्ञानाच्छाब्दबोधानुपपत्तेः अहार्य्ययोग्यताज्ञाने वि-शेषतोऽप्रमाण्यनिश्चयस्यावश्यकत्वात्[(२)]। किञ्च यदि निश्चिताप्रामा-ण्यकयोग्यताज्ञानान्न शाब्दबोधस्तदा तत्तदप्रामाण्यज्ञानाभावकूट-योग्यताज्ञानयोः द्वयोरेव स्वातन्त्र्येण दण्ड-चक्रवद्धेतुता न तु पर-स्परं विशेषण-विशेष्यभाव इति विशेषण-विशेष्यभावभेदान्नानन्त-कार्य्य-कारणभावः। तत्र चाहार्य्यशाब्दबोधं प्रति तत्तच्छाब्देच्छा-

---

(१) तावद्भेदकूटानामिति ग०।

(२) विशेषदर्शनादप्रमात्वनिश्चयस्यावश्यकत्वादिति ग०।

नामनन्तकार्य्यकारणभावस्यावश्यकत्वात् । न च तत्राप्यनन्तयोग्यता-
ज्ञानव्यक्तिकल्पनमिति वाच्यं । तस्य फलमुखत्वात् पदार्थोपस्थिते-
स्तात्पर्य्यज्ञानस्य वा नियतयोग्यताविषयकत्वाभ्युपगमेनातिरिक्तकल्प-
नाभावाच्च । अथाहार्य्यशाब्देतरत्वं प्रतिबध्यतावच्छेदके न प्रवेशनीयं
अपि तु तत्तच्छाब्देच्छाविरहविशिष्टबाधनिश्चयत्वेन प्रतिबन्धकत्वं
वाच्यं तथाचाहार्य्यशाब्दबोधं प्रति तत्तच्छाब्देच्छानां अनाहार्य्य-
शाब्दं प्रति तत्तच्छाब्देच्छाभावानाञ्च न विशेषतो हेतुत्वमिति
नम नानन्तकार्य्य-कारणभावः । एवमाहार्य्यप्रत्यक्षेतरत्वमपि न
प्रतिबध्यतावच्छेदकं आहार्य्यप्रत्यक्षं प्रति तत्तत्प्रत्यक्षेच्छानामनन्त-
कारणत्वकल्पनापत्तेरपि तु तत्तत्प्रत्यक्षेच्छाविरह उत्तेजक इति
चेत् । न । तथापि तत्तच्छाब्देच्छाविरहाणां विशेषण-विशेष्यभाव-
भेदेनानन्तप्रतिबध्य-प्रतिबन्धकभावस्य दुर्वारत्वात् तत्र च केवलयो-
ग्यताज्ञानस्य दण्ड-चक्रन्यायेन तत्तदसाधारणज्ञानाभावदुष्टयोग्यता-
ज्ञानयोर्द्वयोर्वा हेतुत्वात् । किञ्च तत्तच्छाब्देच्छाविरहाणां तत्त-
त्प्रत्यक्षेच्छाविरहाणाञ्च उत्तेजकत्वेऽनुमित्युपमिति-स्मृतिसाधारणो
नैकः प्रतिबध्य-प्रतिबन्धकभावः तथा सति शाब्दबोधो जाय-
तामित्यादीच्छासत्त्वे बाधनिश्चयसत्त्वेऽप्यनुमित्युपमिति-सत्त्वापत्तेः
शाब्दबोधो जायतामितीच्छासत्त्वेऽपि प्रत्यक्षापत्तेः प्रत्यक्षं जायतामि-
तीच्छासत्त्वे बाधनिश्चयसत्त्वेऽपि शाब्दबोधापत्तेश्च अपि तु प्रत्यक्ष-
शाब्देतरविशिष्टबुद्धित्वेन प्रतिबध्यता अगृहीताप्रामाण्यकबाधनिश्च-
यत्वेन प्रतिबन्धकता इत्येकः स्मृत्यनुमित्युपमितिसाधारणः प्रति-
बध्य-प्रतिबन्धकभावः, प्रत्यक्षं प्रति तु विशिष्टप्रत्यक्षत्वेन प्रतिबध्यता

तत्तत्प्रत्यक्षेच्छाविरहविशिष्टागृहीताप्रामाण्यकबाधनिश्चयत्वेन प्रतिबन्धकता एवं शाब्दबोधं प्रति तत्तच्छाब्दत्वेन तत्तच्छाब्देच्छाविरहविशिष्टागृहीताप्रामाण्यकबाधनिश्चयत्वेन प्रतिबन्धकतेति प्रत्यक्षमात्रसाधारणः प्रतिबध्य-प्रतिबन्धकभावः[१]। तथाच शाब्दबोधं प्रति तत्तच्छाब्देच्छाविरहविशिष्टागृहीताप्रामाण्यकबाधनिश्चयाभावत्वेन कारणत्वमपेक्ष्य लाघवात्तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नवत्त्वरूपयोग्यताज्ञानत्वेनैव हेतुतौचिता। न च तथापि निश्चिताप्रामाण्यकयोग्यताज्ञानत्वेनैव हेतुतया तदपेक्षया यथोक्तबाधनिश्चयाभावत्वमेव लघु अप्रामाण्यनिश्चयत्वस्य गुरुतरानेकपदार्थघटितत्वादिति वाच्यं। निश्चिताप्रामाण्यकादपि योग्यताज्ञानाच्छाब्दबोधाभ्युपगमात् अनिश्चिताप्रामाण्यकत्वं न कारणतावच्छेदककोटौ प्रवेशनीयमित्युक्तत्वात्, अनिश्चिताप्रामाण्यकत्वस्य तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकतत्तदप्रामाण्यनिश्चयव्यक्त्यभावकूटविशिष्टत्वरूपत्वेनानिश्चिताप्रामाण्यकत्वस्य कारणतावच्छेदककोटिप्रवेशेऽप्यप्रामाण्यनिश्चयत्वस्याप्रवेशाच्च। न चैवं तत्तद्व्यक्त्यभावकूटप्रवेशे गौरवमिति वाच्यं। तवापि तत्तच्छाब्देच्छाव्यक्त्यभावकूटस्य प्रवेशात् अभावद्वयप्रवेशस्य निश्चयत्वप्रवेशस्य चाधिकत्वात् बाधनिश्चयविशेषणीभूतस्यागृहीताप्रामाण्यकत्वस्य तत्तदप्रामाण्यज्ञानाभावकूटरूपतया तेषां परस्परं विशेषण-विशेष्यभावभेदेन तवानन्तकार्य्य-कारणभावप्रसङ्गाच्च मम तु केवलयोग्यताज्ञानस्य दण्ड-चक्रन्यायेन तत्तदप्रामाण्यनिश्चयव्यक्त्यभावकूट-योग्यताज्ञानयो-

---

(१) प्रतिबन्धकतेति शाब्दबोधसाधारणो नैकः प्रतिबध्य-प्रतिबन्धकभाव-इति ख०।

द्वयोर्वा हेतुत्वेनानन्तकार्य्य-कारणभावविरहात्। न चैवमनुमित्यादावपि योग्यताज्ञानस्य हेतुत्वापत्तिः प्रत्यक्ष-शाब्देतरविशिष्टबुद्धित्वावच्छिन्नं प्रति बाधनिश्चयाभावत्वेन कारणत्वमपेक्ष्य संशय-निश्चयसाधारणविशेष्येविशेषणवत्त्वरूपयोग्यताज्ञानस्य हेतुत्वे लाघवात् बाधनिश्चयदशायां योग्यताज्ञानव्यतिरेकादेवानुमित्यादिव्यतिरेकसम्भवादिति वाच्यं। योग्यताज्ञानं विनापि स्मृतेरनुभवसिद्धतया स्मृतौ व्यभिचारात् पक्षे साध्यसन्देह-तन्निश्चययोरसत्त्वेऽपि अनुमितेरिदन्त्वावच्छिन्ने गवयपदवाच्यत्वादिसन्देह-निश्चययोरसत्त्वेऽपि उपमितेश्चानुभवसिद्धत्वाच्च। किञ्चैवमाहार्य्यसाध्यसन्देहात्मकबाधनिश्चयसत्त्वेऽप्यनुमित्यापत्तिः बाधनिश्चयानन्तरमाहार्य्यसाध्यसन्देहात्मकपरामर्शादनुमित्यापत्तिश्चेति[1] सिद्धान्तानुयायिनः।

उच्छृङ्खलास्तु मुखं चन्द्र इत्यादिबाधितार्थकरूपकादौ बाधनिश्चयदशायां मुखादौ चन्द्रादेरभेदान्वयबोधः किन्तु चन्द्रादिपदस्य चन्द्रसदृशादौ लक्षणया तस्यैव मुखादावभेदान्वयः प्रहसनादौ कलहादिस्थलीयमिथ्याभिशापवचनादौ च न शाब्दबोधोऽपि तु तत्तत्पदेभ्यस्तत्तत्पदार्थोपस्थितौ दोषजन्योमानसोविशिष्टसाक्षात्कारः तथाच शाब्दबुद्धिसाधारणविशिष्टबुद्धिमात्रं प्रति बाधनिश्चयस्य प्रतिबन्धकत्वादेव वह्निना सिञ्चतीत्यादौ बाधनिश्चयदशायां नान्वयबोध-इति योग्यताज्ञानस्य शाब्दधीहेतुत्वे मानाभावः बाधनिश्चयप्रतिबध्यतावच्छेदककोटौ शाब्दान्यत्वं प्रवेश्य बाधनिश्चयस्थले शाब्दबोधवारणायातिरिक्तयोग्यताज्ञानकारणत्वकल्पनायाः प्रक्षालनाद्धीति न्यायेनानुचितत्वादित्याहुः।

सेयं न स्वरूपसती प्रयोजिका शाब्दाभासोच्छेद-

---

केचित्तु मुखं चन्द्र इत्यादिनाधितार्थकरूपकादौ बाधनिश्चय-दशायामपि मुखादौ चन्द्रादेरभेदान्वयबोधस्याप्यनुभवसिद्धत्वा-च्छाब्दबोधे बाधनिश्चयो न प्रतिबन्धक इति सत्यमेव परन्तु योग्य-ताज्ञानमपि न हेतुर्मानाभावात्। न चैवं वह्निना सिञ्चतीत्यादा-वपि बाधनिश्चयदशायां शाब्दबोधापत्तिरिति वाच्यं। तदानीं शाब्दबोधोजायत एव किन्तु तस्मिन् शाब्दबोधे उत्तरकालम-प्रमात्वज्ञानमात्रं जायत इत्यभ्युपगमात् त्वयाप्याहार्य्यादियोग्यता-ज्ञानसत्त्वे तदानीं तत्र शाब्दबोधस्येष्टत्वात्, न हि बाधनिश्चयसत्त्वे आहार्य्ययोग्यताज्ञानं विना न शाब्दबोध इत्यनुभवो लोकानां तथा सति अन्वय-व्यतिरेकवलादेव योग्यताज्ञानहेतुत्वसिद्धेः सम-वादीजान्तरानुसरणप्रयासवैफल्यापत्तेः[१]। न चैवमनुमित्यादा-वपि बाधनिश्चयस्याप्रतिबन्धकत्वापत्तिः बाधनिश्चयदशायामप्यनु-मित्यादिर्जायत एव किन्तु तत्रानुमित्यादिव्यक्तावप्रे अप्रमात्व-ज्ञानमात्रं जायत इत्यस्य सुवचत्वादिति वाच्यं। "अत्यन्तासत्यपि ह्यर्थे इत्यादिना शाब्दबोधस्यैव एव तथानुभवस्य सकलप्राचीनै-र्निर्णीतत्वादिति प्राहुरिति समासः।

शङ्कते, 'सेयमिति, 'प्रयोजिकेति शाब्दबुद्धिसामान्य इत्यादिः, 'शाब्दाभास इति वह्निना सिञ्चतीत्यादावतिस्फुटं स्वरूपयोग्यता-यास्तत्रासत्त्वादिति भावः। 'न भवति' सर्व्वत्र शाब्दबोधात्पूर्व्वं न

---

(१) वक्त्रन्तरानुसरणप्रयासवैकल्यापत्तिरिति ख०।

प्रसङ्गात्। तन्निश्चयश्च न भवत्युपायाभावात् इति चेत् । न। संशय-विपर्य्यय-प्रमासाधारणस्य योग्यताज्ञान-मात्रस्य कारणत्वात् । अयोग्यताज्ञानस्य प्रतिबन्धकस्य सर्व्वत्राभावात् क्वचित्तन्निश्चयोऽपि योग्यानुपलब्ध्या यथेह घटो नास्तीति ।

इति श्रीगङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे योग्यतावादः ॥

---

सम्भवति, 'उपायाभावात्' शब्दबोधात् पूर्व्वं निश्चयसामग्री-विरहात्, 'विपर्य्ययः' निश्चयरूपोऽभ्रमः, 'प्रमा' निश्चयात्मकप्रमा । ननु योग्यतायाः संशय एव कथं स्यात् अयोग्यतानिश्चयस्य प्रतिब-न्धकस्य सत्त्वात् इत्यत आह, 'अयोग्यताज्ञानस्येति अयोग्यतानि-श्चयस्येत्यर्थः, यत्र चायोग्यतानिश्चयो वर्त्तते तत्र शाब्दबोधोऽपि न भवतीति भावः । ननु संशय-निश्चयसाधारणयोग्यताज्ञानस्य तदा हेतुत्वं सम्भवति यदि तन्निश्चयोऽपि क्वचिद्धेतुर्भवति, न चैवं, कुत्रापि तन्निश्चयस्यासम्भवादित्यत आह, 'क्वचिदिति, 'तन्निश्चयोऽपि' निरुक्तप्रतियोगितावच्छेदकशून्यत्वरूपयोग्यतानिश्चयोऽपि, 'यथेति यथा घटाभाववति भूतले योग्यानुपलब्ध्या इह भूतले घटो नास्तीति निश्चयस्तथेत्यर्थः ॥

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये योग्यतावादरहस्यम् ॥

## अथासत्तिवादः ।

आसत्तिश्चाव्यवधानेनान्वयप्रतियोग्युपस्थितिः, सा

---

### अथासत्तिवादरहस्यम् ।

एककार्य्यकारित्वसङ्गत्या योग्यतानिरूपणानन्तरं आसत्तिं निरूपयति, 'आसत्तिश्चेति अन्वयप्रतियोगिनोः पदार्थयोरव्यवधानेनोपस्थितिरासत्तिरित्यर्थः, स्वाव्यवहितत्वसम्बन्धेन तत्तत्पदार्थोपस्थितिमती तत्तत्पदार्थोपस्थितिस्तत्पदार्थे तत्पदार्थस्यासत्तिरिति तु फलितार्थः । न चैवमासन्नानासन्नविभाग एव व्याहतः समूहालम्बनरूपपदार्थोपस्थितेरेव सर्व्वत्र शाब्दबोधोपयोगितया गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादावपि शाब्दानुभवाव्यवहितपूर्व्ववर्त्तिसमूहालम्बनरूपोपस्थितिमादायाव्यवधानेनोपस्थितिसत्त्वात् उपस्थितेरेकत्वेन व्यवधानासम्भवात्[१] इति वाच्यं । भेदगर्भाव्यवधानस्य पूर्व्वोत्तरक्षणसाधारणस्यात्र प्रवेशात्, तच्च स्वध्वंसाधिकरणभिन्नत्वे सति यः स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणक्षणस्तदवच्छेदेन स्व-

---

(१) तावत्पदजन्यसमूहालम्बनैकोपस्थितेर्व्यवधानाभावादिति भावः ।

समवायिदेशोत्पत्तिकत्वे सति स्वभिन्नत्वं, इत्यञ्च प्रथमं या प्रत्येक-पदेभ्यः प्रत्येकपदार्थानां क्रमिकस्मृतिः सैवासत्तिः, न त्वन्वय-बोधाव्यवहितपूर्व्ववर्त्तिसमूहालम्बनरूपोपस्थितिः[१]। अत एवासत्ति-ज्ञानं हेतुः प्रत्येकपदजन्यप्रत्येकपदार्थोपस्थितीनामाशुविनाशिनीनां युगपच्छाब्दबोधपूर्व्वमसम्भवेन स्वरूपसद्धेतुत्वासम्भवात्। न चैवं दण्डी कुण्डली वासस्वी देवदत्त इत्यादावेकविशेष्यक-नानाविशेषणका-न्वयबोधस्थले आसत्त्यभावप्रसङ्गः तत्रैकविशेषणोपस्थितेर्विशेषणान्त-रोपस्थित्या व्यवधानादिति वाच्यं। प्रकृतान्वयबोधाननुगुणो यः स्वध्वंसाधिकरणक्षणस्तद्भिन्नत्वस्य चाव्यवधानघटकीभूतस्यान्तर्दलार्थ-त्वात्, विशेषणान्तरोपस्थितिक्षणश्च न प्रकृतान्वयबुद्धाननुगुणः, अननु-गुणत्वञ्च फलबलकल्प्यं, यादृशयादृशक्षणव्यवधानेऽपि अन्वयबोधो-ऽनुभवसिद्धस्तत्तत्क्षणभिन्नक्षणत्वस्यैवाननुगुणत्वरूपत्वात्। अत एव गिरिर्भुक्तमित्यादौ भुक्तादिपदार्थोपस्थितिक्षणो यत्र वैकपदोच्चार-णानन्तरं चिरतरं विलम्ब्यापरपदमुच्चरितं तत्र व्यवधायकक्षणोऽपि चाननुगुणः तत्रान्वयबोधानुत्पत्तेरिति तदुभयत्र नासत्तिः। न चैवं यत्र पदोपस्थितिर्व्यवधानेन पदार्थोपस्थितिश्चाव्यवधानेन तत्राप्या-सत्त्यापत्तिरिति वाच्यं। तत्पदोपस्थित्यव्यवहिततत्पदोपस्थितिज-न्यायास्तत्पदार्थोपस्थितेरव्यवधानेन तत्पदार्थोपस्थितिः तत्पदद्वय-जन्ये तत्पदार्थयोरन्वयबोधे आसत्तिरिति विवक्षणीयत्वात्। एवञ्च यत्र पदोपस्थितिरव्यवधानेन पदार्थोपस्थितिश्च व्यवधानेन, यत्र वा पदार्थोपस्थितिरव्यवधानेन पदोपस्थितिश्च व्यवधानेन तत्रोभ-

---

[१] समूहालम्बनोपस्थितेरेकतया स्वभिन्नत्वाभावादिति भावः।

तत्रापि नासत्तिः, किन्त्वेकपदोपस्थितिजन्यपदार्थोपस्थितिरपरपदोपस्थितिश्च समूहालम्बनरूपा ततोऽपरपदार्थोपस्थितिः पदान्तरोपस्थितिश्च समूहालम्बनरूपेत्यादिक्रमेण पदार्थोपस्थितिस्तत्रैवासत्तिः, पदोपस्थितेरव्यवधानमपि पूर्व्वोक्तरूपसाधारणप्रकृतान्वयबोधानुगुणरूपघटितं बोध्यं। न चासत्तिभ्रमाच्छाब्दबोध इति सर्व्वैर्गीयते स कुत्रेति वाच्यं। यत्र व्यवहितपदोपस्थितावव्यवहितत्वधीर्व्यवहितायां पदार्थोपस्थितावव्यवहितत्वधीर्वा तत्रैव तत्सम्भवात्। अथैवं आसत्तिज्ञानस्य शाब्दबोधहेतुत्वे स्वरूपसत्याः पदजन्यपदार्थोपस्थितेः पृथक्कारणत्वे किम्मानं। न च विशेषणज्ञानसाध्यं विशिष्टज्ञानमिति विशेषणज्ञानत्वेन तत्कारणमिति वाच्यं। आसत्तिज्ञानस्यैव पदार्थविषयकत्वेन विशेषणज्ञानत्वादिति चेत्, न, तद्विलम्बेनापि शाब्दधीविलम्बात् तस्यापि पृथक्हेतुत्वात्। न च तद्व्यतिरेकस्थले आसत्तिविलम्बादेव शाब्दबोधविलम्ब इति वाच्यं। न ह्यासत्तिः स्वरूपसती हेतुः, किन्तु तज्ज्ञानमेव, तच्च तद्व्यतिरेकस्थलेऽपि सम्भवादिति निर्णयकृतः। तदसत्, एकरूढुपस्थाप्यकृति-वर्त्तमानत्वयोरन्वयबोधस्थलेऽव्याप्तेः[१] यत्र लिप्यादिना एकदैव पदजातमनुमितं स्मृतं वा ततः समूहालम्बनं पदार्थवर्गस्मरणं जातं तत्राव्याप्तेश्च तत्र प्रत्येकपदार्थोपस्थितेरभावात्। न च तत्रापि क्रमिकप्रत्येकपदार्थोपस्थितिः कल्पनीयेति वाच्यं। अनुभवविरोधात् प्रत्येकपदार्थोपस्थितिमन्तरेणापि तत्र शाब्दबोधस्यानुभविकत्वात्। किञ्च एतस्याः स्वरूपसद्धेतुत्वं स्वयमेव निराकृतं क्रमिकप्रत्येकपदा-

---

(१) भेदगर्भाव्यवधानविशिष्टपदजन्यपदार्थोपस्थितेरभावादिति भावः।

र्थोपस्थितेः शाब्दबोधात् पूर्व्वं चिरविनष्टत्वात् । नाप्येतज्ज्ञानं कारणं मानाभावात् । न ह्युपस्थितिज्ञानविलम्बाच्छाब्दबोधविलम्ब-आनुभविकः । न च दैवाददृष्टादिना पदार्थस्मृतौ पदजन्यत्वभ्रमेण शाब्दबोधोदयात् तज्ज्ञानस्यापि हेतुत्वमिति वाच्यं । वृत्त्या पद-जन्यपदार्थोपस्थितेः स्वरूपसत्त्या हेतुत्वात् तद्भ्रमे शाब्दबोधाभावात् अव्यवधानांशवैयर्थ्याच्च । न चैतद्भ्रमानन्तरं शाब्दानुभवदर्शनादेव तज्ज्ञानं हेतुरिति वाच्यं । न हि यत्सत्त्वे यदुत्पत्तिस्तदेव तत्का-रणं, घटाव्यवहितपूर्व्ववर्त्तियावत्पदार्थानामेव घटहेतुत्वापत्तेः । न च पदजन्यपदार्थोपस्थितौ अव्यवहितत्वाव्यवहितपदजन्यत्वयोः संशये व्यवहितत्व-व्यवहितपदजन्यत्वनिश्चये च शाब्दबोधानुत्पत्तेस्तन्निश्चयो हेतुः तयोः प्रतिबन्धकत्वकल्पने गौरवादिति वाच्यं । तात्पर्य्या-दिज्ञानसत्त्वे व्यवहितपदजन्यत्वग्रहेऽपि शाब्दधीदर्शनादनुत्पत्तेरेवा-सिद्धेः । न चैवं व्यवहितपदकदम्बात्मकश्लोकादौ योजनया कवि-तायामेवान्वयबोधो न त्वन्यथेत्यत्र किं वीजमिति वाच्यं । योजनायास्तात्पर्य्यग्राहकत्वात्, अतएव यस्य योजनां विनैव तात्पर्य्य-ग्रहस्तस्य न योजनापेक्षा एतेन[१] अन्वयप्रतियोगिपदं तदुपस्था-पकपदपरं तथाच तदुपस्थापकपदोपस्थित्यव्यवधानेन तदुपस्थापक-पदोपस्थितिस्तयोरासत्तिः, न तु पदार्थोपस्थितीनामव्यवधानमपे-क्षितमिति केषाञ्चिन्मतमपास्तं । वक्ष्यमाणान्योन्याश्रयशङ्कानुत्थितेश्च

(१) अव्यवधानेन पदजन्यपदार्थोपस्थितेरासत्तिविधया शाब्दबोधेऽहेतु-त्वेनेत्यर्थः ।

समूहालम्बनपदोपस्थितिमादाय सर्व्वत्राख्या:[१] सत्त्वेनासन्नानासन्न-विभागव्याघातापत्तेश्च। न च भेदगर्भमव्यवधानं विवक्षणीयं, प्रागुक्तदोषानुद्धृतेः[२] एतज्ज्ञानस्य उक्तरूपेण कारणत्वे मानाभावाच्च।

केचित्तु अव्यवधानेनेति विशेषणे तृतीया, अन्वयप्रतियोगिपदञ्च अन्वयप्रतियोगिन उपस्थितिर्यस्मादिति व्युत्पत्त्या अन्वयप्रतियोग्युपस्थापकशब्दपरं, तथाच तत्पदार्थान्विततत्पदार्थशाब्दबुद्धौ तत्पदे तत्पदाव्यवधानमासत्तिः, न तु उपस्थितीनामव्यवधानं विवक्षितं, मौनिश्लोकादौ च लिप्यादिरूपदोषविशेषादव्यवधानभ्रमेणान्वयबोधः। न चैवं श्लोकादौ योजनयाप्यन्वयबोधो न स्यात् वक्त्रा इदं व्यवधानेनोच्चरितमिति विशेषदर्शनेन भ्रमासम्भवादिति वाच्यं। योजनयोपस्थितवाक्यान्तरादेव तत्रान्वयबोधात् न तु श्लोकादितः, अव्यवधानञ्चाननुगुणक्षणेन भेदाभेदसाधारणं स्वपरसाधारणञ्च निर्वाच्यं[३] तेनैकलडाद्युपस्थापितयोः कृति-वर्त्तमानत्वाद्योरन्वयबोधेऽपि न काप्यनुपपत्तिरित्याहुः। तदप्यसत्, वक्ष्यमाणान्योन्याश्रयशङ्कानुत्थितेः तात्पर्य्यादिज्ञानसत्त्वेऽव्यवधानज्ञानाभावेऽपि शाब्दबुद्धेरानुभविकत्वाच्च।

---

(१) आसत्तेः।

(२) एकलडुपस्थाप्यकृति-वर्त्तमानत्वयोरन्वयबोधस्थलेऽव्याप्तेरित्यादिदोषसत्त्वादित्यर्थः।

(३) "शाब्दबोधाननुगुणः स्वध्वंसाधिकरणान्यत्वे सति स्वप्रागभावाधिकरणासमयप्रागभावानधिकरणो यः क्षणस्तदवच्छेदेनोत्पत्तिकत्वं न तु भेदगर्भमिति।

च स्मृतिर्नानुभवोऽतोनान्योन्याश्रयः। अथ नानावि-

नव्यास्तु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिः, इयञ्च स्वरूप-सत्येव हेतुः। अतएव चिन्तामणौ "आसत्तिस्तु यद्यपि स्वरूपसत्येव प्रयोजिकेत्यादि प्राभाकरोपाध्यायेनोक्तं। न चैतस्या अपि कारणत्वे मानाभाव इति वाच्यं। तथा सति आनयेतिवाक्यमाकर्णयतः प्रत्यक्षेण घटं पश्यतो घटस्य शाब्दबोधापत्तेः घटमानयेति वाक्यमाकर्णयतः कारणतया घटपदादाकाशस्मरणवत आकाशस्य शाब्दबोधापत्तेश्च। मूलार्थस्तु 'अव्यवधानेन' वृत्तिसंसर्गकपदप्रकारक-ज्ञानाव्यवधानेन, तादृशपदप्रकारकज्ञानजन्येति यावत्, 'अन्वय-प्रतियोग्युपस्थितिः' पदार्थोपस्थितिरिति। अतएव वक्ष्यति 'अत्र वदन्ति सन्निधिर्न पदजन्यैवान्वयबोधे हेतुरिति, अन्यथा तदनु-स्थितेः। न चैवं गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यादितो गिरिर-ग्निमान् भुक्तं देवदत्तेनेत्याद्यन्वयबोधापत्तिरिति वाच्यं। तथा तात्प-र्य्यादिग्रहसत्त्वे इष्टापत्तेः कदाचित्तत्र तथान्वयबोधस्य सर्व्वैरेवेष्ट-त्वात्। न चैवं क्वचित् योजनायाः कथमपेक्षेति वाच्यं। तात्प-र्य्यग्रहार्थं तदुपयोग इत्युक्तत्वादिति[१] प्राहुः।

नन्वव्यवधानेनान्वयप्रतियोग्युपस्थितिरासत्तिरुक्ता सा च शाब्द-बुद्धिरूपैव, तथाच शाब्दबुद्धौ जातायां तज्ज्ञानं तज्ज्ञाने च शाब्दबुद्धिः आसत्तिज्ञानस्य शाब्दधीहेतुत्वादित्यन्योन्याश्रय इत्यत-आह, 'सा चेति, 'नानुभवः' न शाब्दानुभवः।

[१] तदपेक्षेतीति ग०।

शेषणक-कर्म-कर्त्तृ-करणाधिकरण-क्रियादिक्रमिकपदज्ञानजन्यक्रमिकपदार्थस्मृतीनां न यौगपद्यं सम्भवति आशुतरविनाशिनां क्रमिकाणां मेलकानुपपत्तेरिति कथं तावत्पदार्थान्वयबोधः विशेषणज्ञानसाध्यत्वाद्वि-

---

नव्यास्तु ननु वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरुक्ता सा च शाब्दधीरेव तथाच तस्यामप्यासत्तिः कारणं सापि शाब्दबोधरूपैव तस्याञ्च यदि अपरासत्तिः कारणमुच्यते तदा अनवस्था फलीभूता चेत्तदान्योन्याश्रय इत्यत आह, 'सा चेतीत्याहुः ।

प्रसङ्गात् अन्वयबोधनिर्व्वाहकपदजन्यपदार्थोपस्थितिपरिपाटीं प्रदर्शयितुमाशङ्कते, 'अथेति ।

नव्यास्तु वृत्त्या पदधीजन्यपदार्थोपस्थितिश्चेदासत्तिस्तदा नानाविशेषणकस्थले(१) कथमन्वयबोधः पदार्थोपस्थितीनामेकदाभावादित्याशङ्कते, 'अथेतीत्याहुः ।

'मेलकं' मिलनं । न च सकलपदगोचरैकस्मरणाभावेऽपि प्रत्येकपदानुभवजनितप्रत्येकपदार्थस्मरणाहितसंस्कारेभ्य एव सकलपदार्थगोचरमेकस्मरणं सम्भवति तथाच सकलपदगोचरैकस्मरणपर्य्यन्तानुधावनं विफलमिति वाच्यं । प्रकारान्तरेण पदार्थोपस्थितेः शाब्दबोधाहेतुत्वात् पदज्ञानजन्यत्वोपपत्तये तथानुधावनात् । 'विशेषणज्ञानसाध्यत्वादिति 'विशेषणं' पदार्थः, तदुपस्थितिसाध्यत्वादि-

---

(१) दण्डी कुण्डली वाससी चैत्र इत्यादिस्थले ।

शिष्टज्ञानस्येति चेत्, श्रौत्रप्रत्येकपदानुभवजन्यसंस्कारमेलकादेकदैव तावत्पदस्मृतिः तत एकदैव तावत्पदार्थस्मृतौ सत्यां वाक्यार्थानुभवः । न चान्यविषयक-

---

त्यर्थः, वृत्त्या पदधीजन्येत्यादिः, 'विशिष्टज्ञानस्य' शाब्दानुभवस्य, 'मेलकात्' समूहात्, 'एकदैव तावत्पदस्मृतिरिति सकलपदगोचरस्मृतिरित्यर्थः । ननु श्रोत्रेण प्रत्येकपदानुभवोऽपि न सम्भवति तथा हि घोत्पत्तिः, ततो द्वितीयक्षणे घत्वनिर्व्विकल्पकमकारोत्पत्तिश्च, अथ तृतीयक्षणेऽकार-तत्त्वनिर्व्विकल्पकं घत्वविशिष्टधीः टोत्पत्तिर्घकारनाशश्च, चतुर्थक्षणे अत्वविशिष्टधीः ट-टत्वनिर्व्विकल्पकमकारनाशश्चरमाकारोत्पत्तिश्च तदानीञ्च घकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्यापि हेतुत्वात्, ततः पञ्चमक्षणे टत्वविशिष्टज्ञानमकार-तत्त्वनिर्व्विकल्पकं टकारनाशः तदानीं प्राथमिकाकारभानं न सम्भवति प्रत्यक्षं प्रति विषयस्यापि हेतुत्वात् । ततः षष्ठक्षणे अत्वविशिष्टबुद्धि-अकारनाशौ, तदानीं टकारभानं न सम्भवति तदभावात् । तथाच कथं वर्णसमूहात्मकपदगोचरश्रौत्रानुभवः । न च पूर्व्वपूर्व्ववर्णोपनयसहितान्त्यवर्णसन्निकर्षात्पदगोचरश्रौत्रानुभव इति वाच्यं । वहिरिन्द्रियजप्रत्यक्षे उपनीतं विशेषणतयैव भासत इति नियमेन प्रत्येकवर्णसमूहमुख्यविशेष्यकपदप्रत्यक्षस्योपनयमर्य्यादया श्रावणत्वासम्भवात् पदप्रत्यक्षे प्रत्येकं सर्व्वस्यैव वर्णस्य मुख्यविशेष्यत्वात् । न च पूर्व्ववर्णोऽन्त्यवर्णे विशेषणतया तत्र भासत इति वाच्यं । पूर्व्ववर्णेऽन्त्यवर्णविशेषणत्वनियामकस्य तत्सम्बन्धस्याभावादिति । मैवं ।

संस्कारेण नान्यत्र स्मरणमिति वाच्यं । वाक्यार्था-
नुपपत्त्या फलबलेन संस्काराणां परस्परसहकारेण

---

घादिसमुदायमात्रं न घटादिपदं ट-घादेरपि घटपदत्वापत्तेः अपि तु अव्यवहितोत्तरत्वसम्बन्धेन पूर्व्वपूर्व्ववर्णवदुत्तरोत्तरवर्ण एव पदं तच्च श्रवणान्न दुर्ग्रहं पूर्व्वपूर्व्ववर्णोपनयसहकारेणाव्यवहितोत्तरत्व-सम्बन्धेनोत्तरोत्तरवर्णे विशेषणतया पूर्व्वपूर्व्ववर्णग्रहसम्भवात् ।

यत्तु घसमानकालीनप्रागभावप्रतियोगिटत्वं समानकालीनत्वस-म्बन्धेन घध्वंसवत्टत्वं वा घटपदत्वमिति । तन्न । घपट इत्यस्यापि घटपदत्वापत्तेरित्यलं विस्तरेण।

'अन्यविषयकसंस्कारेण'· अन्यमात्रविषयकसंस्कारेण, 'नान्यत्र स्मरणं' नान्यविषयकस्मरणं, तदविषयकसंस्कारो न तत्स्मरणजनक-इति यावत्, यथाश्रुतन्तु न सङ्गच्छते घटत्वविषयकसंस्कारेण घट-त्वान्यघटविषयकस्मरणजननात् दण्डी पुरुष इतिविशिष्टसंस्कारेण तादृशविशिष्टस्मरणजननाच्च व्यभिचारापत्तेः[१] घट-पटविषयक-प्रत्येकसंस्काराभ्याञ्च न घट-पटयोः समूहालम्बनस्मरणमित्यभिमानः। तथाच सर्व्वत्र कथं समूहालम्बनरूपतावत्पदार्थस्मृतिः नाना-पदार्थगोचरसमूहालम्बनसंस्कारस्थले तत्सम्भवेऽपि[२] प्रत्येकपदार्थ-मात्रविषयकनानासंस्कारस्थले तदसम्भवात् इति भावः। 'फलबले-

---

(१) तादृशसंस्कारस्य पुरुषान्यदण्डविषयकत्वादिति भावः ।

(२) तन्मात्रविषयकसंस्कारेणैव तदन्यविषयकस्मृत्यजननात्समूहालम्बन-संस्कारात् समूहालम्बनस्मृत्युत्पत्तौ बाधकाभावादिति भावः ।

**तत्रैकस्मरणकल्पनात् । प्रत्येकवर्णसंस्काराणामिवा-**

---

नेति सर्व्वत्र सकलपदार्थगोचरैकस्मरणरूपस्य फलस्य प्रमाणसिद्ध-त्वेनेत्यर्थः, तदन्यथानुपपत्त्यैवेति शेषः। क्वचित्तु 'फलकल्पन इति पाठः तत्र सर्व्वत्र सकलपदार्थगोचरैकस्मरणे प्रमाणसिद्धे इत्यर्थः, 'संस्काराणां' प्रत्येकपदार्थमात्रगोचरसंस्काराणामपि, 'तत्र' सकल-पदार्थेषु, 'एकस्मरणकल्पनात्' एकस्मरणजनकताकल्पनात्, इदञ्च परच्छन्दानुरञ्जनमात्रं। वस्तुतस्तु घट-पटेन्द्रियसन्निकर्षाभ्यां आर्थ-समाजग्रस्तघट-पटसमूहालम्बनप्रत्यक्षवत् सर्वेषामेव संस्काराणामेकदै-वोद्बोधकत्वाभादार्थसमाजग्रस्ता एकदैव तावत्पदार्थस्मृतिरित्यत्रापि न किमपि बाधकं। 'प्रत्येकवर्णेति, 'वर्णपदं पदपरं, 'पदस्मरणे' तावत्पदस्मरणे, यथाश्रुते प्रत्येकवर्णसंस्कारेभ्य आनुपूर्वीविशेषविशि-ष्टात्मकस्य पदस्य स्मरणानुपपत्तेः। ननु घटपदस्मरणानन्तरं घट-पदार्थाम्पदयोः समूहालम्बनोपस्थितिस्ततः कर्म्मत्व-आनीपदयोः समू-हालम्बनोपस्थितिस्ततोऽनुभवसामग्र्या बलवत्त्वाद्घट-कर्म्मत्वयोरन्वय-बोधः तत आनीपदोपस्थितिजन्यानयनोपस्थितिराख्यातोपस्थितिश्च समूहालम्बनरूपा, ततोऽनुभवसामग्र्या बलवत्त्वाद्घटविशिष्टकर्म्मत्व-स्यानयनेऽन्वयबोधः वृत्त्या पदजन्यपदार्थोपस्थितिमात्रस्य स्मृत्यनुभ-वसाधारणस्य शाब्दधीहेतुत्वेन घट-कर्म्मत्वयोः स्मरणस्य नाशेऽपि शाब्दबोधात्मकविनश्यदवस्थतादृशोपस्थितिसत्त्वेनानयने तदन्वयबोधे बाधकाभावात् तत आख्यातार्थकृत्युपस्थितिस्ततो घटवत्कर्म्मत्वविशि-ष्टानयनस्य कृतावन्वयबोध इत्याद्याकारेण अवान्तरवाक्यार्थान्व-

नन्यगतिकतया पदस्मरणे। अथ "यद्यदाकाङ्क्षितं योग्यं सन्निधानं प्रपद्यते। तेन तेनान्वितः स्वार्थः पदैरेवावगम्यते"। न चैवमन्वयान्तराभिधानं न स्यात् विरम्य व्यापाराभावादिति वाच्यं। एवमपि प्रथम-मनन्वये हेत्वनुपन्यासात् उत्तरस्य हीदं सामग्री-

---

यबोधपूर्व्वकमेव महावाक्यार्थान्वयबोधसम्भवात् किं पदपदार्थसमूहालम्बनस्मरणेनेत्याशङ्कते, 'अथेति, स्वार्थाकाङ्क्षितं स्वार्थयोग्यं यद्यत् सन्निधानं प्रपद्यते. स्वार्थोपस्थित्यव्यवधानेनोपस्थितिविषयो भवति, तेन तेनैवान्वितः स्वार्थः, 'पदैरेवाभिधीयते' पदैः प्रथममनुभाव्यते,[१] अनन्तरं महावाक्यार्थबोध इत्यन्वयः, तथाच किं पदपदार्थयोः समूहालम्बनस्मरणेनेति भावः। 'न चैवमिति, 'एवं' घटादिपदैरेकवारमवान्तरवाक्यार्थान्वयबुद्धिजनने, 'अन्वयान्तरेति पुनस्तस्मान्महावाक्यार्थज्ञानं न स्यादित्यर्थः, 'विरम्येति, शब्द-बुद्धि-कर्म्मणां[२] 'विरम्य' एकवारं फलं जनयित्वा, 'व्यापाराभावात्' पुनः फलान्तरजनकत्वाभावादित्यर्थः, शब्दस्य जनितान्वयबोधत्वेन निराकाङ्क्षत्वादिति भावः। 'एवमपीति अनन्वये अवान्तरवाक्यार्थबोधानुत्पादे, न हि प्रयोजनक्षतिभिया सामग्री कार्य्यं नार्जयतीति भावः। 'उत्तरस्य हीति, 'उत्तरस्य' महावाक्यार्थबोधस्य,

---

(१) 'पदैरेवावगम्यते' इत्यत्र 'पदैरेवाभिधीयते' इति रहस्यकृत्सम्मतः पाठः।

(२) शब्द-ज्ञान-क्रियेतत्त्रयाणामित्यर्थः।

वैकल्यं न पूर्वस्येति चेत्, अस्तु तावदेवं तथापि चरमं तावत्पदार्थघटितवाक्यार्थानुभवे उक्तैव गतिरनन्य-

'इदं' निराकाङ्क्षत्वं, 'न पूर्वस्य' नावान्तरवाक्यार्थबोधस्येत्यर्थः, तथाच भवन्मतेऽपि सामग्रीसत्त्वेनावान्तरवाक्यार्थबोधस्य दुर्व्वारतया तात्पर्य्यविषयान्वयबोधस्याजननान्न निराकाङ्क्षत्वमित्यवश्यं स्वीकरणीयमिति भावः । 'अस्तु तावदिति, क्वचिदिति शेषः । 'एवमिति विनापि समूहालम्बनस्मरणं खण्डवाक्यार्थबोधद्वारा महावाक्यार्थबोध इत्यर्थः, 'चरममिति चरमोक्तं धात्वर्थमादाय कर्तृ-करणाधिकरणादीनां पदार्थानामन्वयबोध इत्यर्थः, यत्र मिथो विशेषण-विशेष्यभावानापन्नानां कर्तृ-करणाधिकरणादीनां चरमोपस्थितायामेकस्यामेव क्रियायामेकत्र द्वयमिति न्यायेनान्वयबोधस्तत्रेति फलितार्थः, 'उक्तैव गतिरिति समूहालम्बनपदार्थस्मृतिरेव गतिरित्यर्थः, न हि तत्र कर्त्रादीनां परस्परमवान्तरान्वयबोधः सम्भवति, परस्परमयोग्यत्वादिति भावः। यद्वा 'चरमं' खण्डवाक्यार्थबोधोत्तरक्रमिकचरमपदोपस्थिति-चरमपदार्थोपस्थित्योरनन्तरं, 'तावत्पदार्थघटितवाक्यार्थानुभवे' महावाक्यार्थबोधे, यत्र घट-कर्म्मत्वयोरन्वयबोधानन्तरं नीपदार्थस्यैवोपस्थितिर्न्न तु तिपदोपस्थितिरुद्बोधकविरहात्, ततो घटविशिष्टकर्म्मत्वस्य नीधात्वर्थेऽन्वयबोधः तदुत्तरमेव तिपदोपस्थितिः[१] ततः तिपदार्थोपस्थितिः तदनन्तरं महावाक्यार्थबोधस्तत्रेति तु

(१) तिप्पदोपस्थितिरिति ख० ।

फलितार्थः, 'उक्तैव गतिरिति, तत्र खण्डवाक्यार्थानुभवस्य चरम-पदार्थोपस्थितिसमये नाशादिति भावः ।

शाब्दस्तु 'अस्तु तावदेवमिति भवतु सामग्रीवशात्प्रथमं खण्ड-वाक्यार्थबोधस्तथापीत्यर्थः, 'चरमं तावत्पदार्थघटितवाक्यार्थानुभव-इति महावाक्यार्थबोध इत्यर्थः, 'उक्तैव गतिरिति समूहालम्बनपद-पदार्थस्मृतिरेव गतिरित्यर्थः, पदजन्यपदार्थस्मृतेरेव शाब्दधीहेतु-तया खण्डवाक्यार्थानुभवरूपपदार्थोपस्थितौ महावाक्यार्थबोधासम्भ-वात्, अतएव सर्व्वत्र विशेष्ये विशेषणमिति न्यायेनैवान्वयबोधो न तु विशिष्टवैशिष्ट्यविधया, पदजन्यविशेषणतावच्छेदकप्रकारकविशे-षणस्मृतेरभावात्, अतएव च "वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति । तथा हि सर्व्वे युगपत्पदार्थाः परस्परेणान्व-यिनो भवन्ति[१]" इति प्राभाकरा वदन्ति । अथ पदार्थोपस्थिते-र्वृत्त्या पदजन्यपदार्थस्मृतित्वेन न कारणता किन्तु स्मृति-शाब्दानुभव-साधारणपदज्ञानविशिष्टपदार्थोपस्थितित्वेनैव, अस्य व्यापकधर्म्मत्वेऽपि निश्चिताव्यभिचारकत्वात् वैशिष्ट्यञ्च वृत्तिलक्षणसम्बन्धेन पदार्थप्र-कारकपदज्ञानीय-पदार्थस्मृति-शाब्दानुभववृत्तितत्तज्जन्यतात्मकज-न्यताविशेषसम्बन्धेन तेन पदज्ञानजन्यानुमितिरूपपदार्थोपस्थितेः, समवायेन सम्बन्धितया घटादिपदजन्याकाशस्मृतेश्च न शाब्दबोध-हेतुत्वं, तत्तज्जन्यतानामननुगमेऽपि सम्बन्धविधयैव प्रवेशाददोषः ।

---

(१) वृद्धा युवानः शिशवः कपोताः पतन्ति सर्व्वे युगपद्यथा च ।
खले तथामी सहिताः पदार्थाः परस्परेणान्वयिनो भवन्तीति ग० ।

इत्थञ्च खण्डवाक्यार्थबोधात्मकपदार्थोपस्थितितोऽपि महावाक्यार्थबोधे बाधकाभावः, तथा अपि तादृशजन्यतासम्बन्धेन पदज्ञानविशिष्टत्वादिति चेत्, न, शाब्दानुभवनिष्ठजन्यतायाः कारणतावच्छेदकघटकत्वे गौरवात्, स्मृतिनिष्ठजन्यतामात्रसम्बन्धेन पदज्ञानविशिष्टपदार्थस्मृतित्वेन तादृशजन्यतामात्रसम्बन्धेन पदज्ञानविशिष्टपदार्थोपस्थितित्वेन वा लाघवाद्धेतुत्वान्निश्चिताव्यभिचारकरूपस्यागुरुताया-मेव सन्दिग्धव्यभिचाररूपेण कारणत्वकल्पनाभावात्। वस्तुतस्तु पदज्ञानविशिष्टपदार्थस्मृतित्वादिकमपि न प्रवेश्यते परन्तु विलक्षणतत्तदर्थविषयकत्वेनैव तत्तदर्थविषयकशाब्दत्वावच्छिन्नं प्रति हेतुता, वैलक्षण्यञ्च पदजन्यपदार्थस्मृतिनिष्ठशाब्दबुद्धिसामान्यजनकतावच्छेदकतया पदजन्य-तत्तत्पदार्थस्मृतिनिष्ठ-तत्तत्पदार्थशाब्दबुद्धिजनकतावच्छेदकतया वा लाघवात् सिद्धः स्मृतित्वव्याप्यो जातिविशेषः। स्मृति-शाब्दानुभवसाधारणपदार्थोपस्थितिमात्रस्य हेतुत्वे च न वैजात्येन हेतुत्वसम्भवः स्मृतित्व-शाब्दत्वाभ्यां साङ्कर्य्यापत्तेः। न च तवापि वैजात्येन हेतुत्वे यत्र पदजन्यपदार्थस्मृतावुद्बोधकान्तरवशादुच्छृङ्खलपदार्थान्तरस्यापि भानं तत्र तत्पदार्थस्यापि शाब्दबोधापत्तिः जातेरांशिकत्वाभावादिति वाच्यं। शाब्दबोधोपधायकपदजन्यपदार्थस्मृतावुच्छृङ्खलपदार्थान्तरभाने मानाभावादिति प्राञ्चः। तदसत्, अस्तु लाघवात् सर्व्वत्र पदार्थस्मृतेरेव शाब्दधीहेतुत्वं तथापि विशेष्ये विशेषणमिति न्यायेनैव शाब्दबोधो न तु विशिष्टवैशिष्ट्यविधयेत्युक्तमयुक्तमेव, यत्र हि खण्डवाक्यार्थबोधोत्तरं समूहालम्बनपदार्थस्मृतिः तत्रार्थसमाजग्रस्तस्य विशिष्ट-

गतिकत्वात्। अत्र वदन्ति, सन्निधिर्न पदजन्यैवान्वयबोधहेतुः द्वारमित्यादौ अध्याहृतेनापि पिधानादिना अन्वयबोधदर्शनात्। न च पिधेहीति शब्द एवा-

---

वैशिष्ट्यविधया महावाक्यार्थशाब्दबोधस्य दुर्व्वारत्वात् खण्डवाक्यार्थबोधात्मकस्यैव विशेषणतावच्छेदकप्रकारकनिश्चयस्य सत्त्वात्। न हि सामान्यतो विशिष्टवैशिष्ट्यबुद्धित्वावच्छिन्नं प्रति विशेषणतावच्छेदकप्रकारकनिश्चयस्य हेतुतायामपि क्षतित्वं तन्त्रमिति कृतं विस्तरेण। 'अत्र वदन्तीति, प्राभाकरा इति शेषः। 'सन्निधिः' पदार्थोपस्थितिः, तच्छाब्दबुद्धौ पदजन्यैव तदुपस्थितिर्न हेतुरिति फलितार्थः, किन्तु तदुपस्थितिमात्रं तदन्वयप्रतियोग्युपस्थापकयत्किञ्चित्पदज्ञानञ्चेति भावः। अन्यथा[१] पदमात्राश्रवणेऽप्युच्छृङ्खलपदार्थोपस्थितिमादायान्वयबोधापत्तेः, 'अध्याहृतेनापीति पदज्ञानं विना स्मृतेनापीत्यर्थः, 'अन्वयबोधदर्शनादिति, तथाच किं सकलपदगोचरस्मरणेनेति भावः। वस्तुतस्तु तथाच कथं[२] वृत्त्या पदजन्यपदार्थोपस्थितिरासत्तिरिति भावः। अत्र शब्दज्ञानजन्यघटोपस्थितित्वं घटशाब्दबुद्धिजनकतावच्छेदकन्न वेत्यादिविप्रतिपत्तिः। यद्वा घटमुख्यविशेष्यकशाब्दबोधत्वं घटवृत्ततया शब्दज्ञानजन्यत्व-

---

(१) 'अन्यथा' अन्वयप्रतियोग्युपस्थापकयत्किञ्चित्पदज्ञानानपेक्षतदुपस्थितिमात्रस्य हेतुत्वे इत्यर्थः।

(२) तत्र व्यभिचारादित्यादिः।

ध्याह्रियते, अनुपयोगात्। अर्थस्यैवान्वयप्रतियोगित्वेनोपयोगित्वात् आवश्यकत्वाच्च। अर्थापत्तेरुपपादकविषयत्वात्। न च शब्दमात्रमुपपादकं, अपि

---

व्याप्यं न वेत्यादिविप्रतिपत्तिः, तेन न्यायनयेनापि जातिविशेषस्यैव जनकतावच्छेदकतया पदज्ञानजन्यत्वादेर्जनकतावच्छेदककोटावप्रवेशेऽपि न क्षतिः। अत्रापि विधिकोटिर्नैयायिकानां निषेधकोटिरर्थाध्याहारवादिनां प्राभाकराणां, न्यायनयेऽपि घटवृत्तिपदज्ञानं विनापि घटस्य संसर्गविधया भानाद्बाधवारणाय विशेष्यतात्वेनोपादानं, घटनिष्ठवृत्तिज्ञानं विनापि द्रव्यपदादिना लक्षणया घटप्रकारेण घटवतो बोधनान्मुख्येति, यदि च द्रव्यत्वादिरूपेण पटादौ शक्तिग्रहादेव लाघवज्ञानसहकारेण द्रव्यादिपदाद्द्रव्यत्वादिरूपेण घटादेर्ज्ञानमभ्युपगम्यते तदा तु लाघवज्ञानाजन्यत्वेनापि शाब्दबोधो विशेष्य इति दिक्। 'न चेति, तच्चेति शेषः, 'अध्याह्रियते' स्मर्य्यते, 'अनुपयोगात्' अप्रयोजनकत्वात्,(१) तथाच शब्दस्मृतौ मानाभाव इति भावः। 'अन्वयप्रतियोगित्वेन' अन्वयबोधविषयत्वेन, तदुपस्थितेरेवेति शेषः, अर्थोपस्थितिद्वारा तस्याप्युपयोगित्वमस्त्येवेत्यनुशयादाह,(२) 'आवश्यकेति पिधेहिशब्दोपस्थितिं कल्पयित्वापि पिधानरूपपदार्थोपस्थितिकल्पनस्याकत्वाच्चेत्यर्थः। हेत्वन्तरमाह, 'अर्थापत्तेरिति 'अर्थापत्तेः' अनुपपत्तिकरणकार्थापत्तेः, 'उपपादकविषयकत्वात्' साक्षादुपपादकमात्रविषयकत्वात्, तथाचास्य

---

(१) निष्प्रयोजनकत्वादिति ख०, ग०। (२) इत्यस्वरसादाहेति ग०।

तु तदर्थः, अवश्यकल्प्यार्थसाहचर्य्येण दैववशसम्पन्न-शब्दस्मृतेरन्यथासिद्धेः, अन्यथा पदबोधितस्यैवार्थस्या-

---

पुरुषस्य पिधानोपस्थापकपदोपस्थितिं विना द्वारमिति वाक्यात् पिधानशाब्दबुद्धिरनुपपन्नेत्यनुपपत्तिकरणकार्थापत्त्यैव पिधेहिशब्दो-पस्थितिः कल्पनीया, तच्च न सम्भवति अर्थापत्तेः साक्षादुपपादकमात्रविषयकत्वनियमादिति भावः। इदमापाततः, एवं सति दिवाऽभोजिनो देवदत्तस्य पीनत्वान्यथानुपपत्त्या रात्रिभोजित्वमपि न सिद्ध्येत भोजनस्य साक्षात्पीनत्वानुपपादकत्वादिति ध्येयं। 'शब्द-मात्रं' पिधानोपस्थापकशब्दोपस्थितिः, 'उपपादकं' शाक्षादुपपादकं, 'तदर्थः' तदर्थोपस्थितिः। ननु यत्र दैववशेन शब्दस्मरणं तेन चार्थस्मृतिः तत्र यदि पिधानशाब्दबुद्धित्वावच्छिन्नं प्रति शब्द-ज्ञानविशिष्टपिधानोपस्थितित्वेन कारणत्वं क्लृप्तं तदान्यत्रापि तदु-पस्थापकशब्दोपस्थितिरवश्यं कल्पनीयेत्यत आह, 'अवश्यकल्प्येति पिधानशाब्दबुद्धित्वावच्छिन्नं प्रति कारणतावच्छेदकत्वेनावश्यं कल्प-नीयेत्यर्थः,[१] 'अर्थसाहचर्य्येण' अर्थोपस्थितित्वस्य जन्यतासम्बन्धेन सहचरितत्वेनेत्यर्थः, 'अन्यथासिद्धेरिति जन्यतासम्बन्धेनान्यथासिद्धि-निरूपकत्वादित्यर्थः, तथाच तत्रापि शब्दज्ञानविशिष्टपिधानोपस्थि-तित्वेन[२] कारणत्वमिति भावः। 'अन्यथेति अस्यान्यथासिद्ध्य-निरूपकत्वे इत्यर्थः, 'पदबोधितस्यैवेति पदजन्यपिधानाद्युपस्थिति-

---

(१) शब्दज्ञानविशिष्टपिधानोपस्थितित्वेन कारणतावच्छेदकत्वेनावश्य-कल्पनीयस्येत्यर्थ इति ग०।

(२) शब्दज्ञानविशिष्टपदार्थोपस्थितित्वेनेति ग०।

न्वयबोधकत्वमिति नियमशक्तिकल्पनापत्तेः । स्वार्थान्वयपरत्वाच्छब्दानां द्वारमिति न पिधानान्वयबोधक-

---

त्वेनैवान्वयबोधजनकत्वमित्यर्थः, 'नियमेति गुरुधर्म्मेण नियमशक्तेः कारणतायाः कल्पनापत्तेरित्यर्थः, गुरुधर्म्मस्य कारणावच्छेदकत्वकल्पनापत्तेरिति तु फलितार्थः ।

केचित्तु ननु यत्र दैववशेन शब्दार्थयोरुभयोरेवोपस्थितिस्तत्र यदि पिधानशाब्दबुद्धित्वावच्छिन्नं प्रति पिधानोपस्थापकपदोपस्थितेः कारणत्वं क्लृप्तं तदान्यत्रापि तदुपस्थापकशब्दोपस्थितिरवश्यं कल्पनीयेत्यत आह, 'अवश्यकल्प्येति पिधानशाब्दत्वावच्छिन्नं प्रति हेतुत्वेनावश्यकल्प्येत्यर्थः, 'अर्थः' पिधानोपस्थितिः । तथाच तत्रापि पिधानोपस्थापकपदोपस्थितेर्न कारणत्वमिति भावः । 'अन्यथेत्यस्य विवरणं 'पदबोधितस्यैवेति, 'अन्वयबोधकत्वं' अन्वयबोधविषयत्वं, 'इतीति इति स्वीकार इत्यर्थः, 'नियमेति, 'नियमः' विशेषधर्म्मः, पदजन्यपदार्थोपस्थितित्वमिति यावत्, तेन शक्तेः कारणतायाः कल्पनापत्तेरित्यर्थः । न चेष्टापत्तिः, गौरवादिति भाव इत्याहुः । तदसत्, 'अवश्यकल्प्येत्यादेर्नन्वित्यादिना वच्यमाणेन पौनरुक्त्यापत्तेः । शङ्कते, 'स्वार्थेति, 'स्वार्थान्वयपरत्वात्' शक्त्युपस्थापितार्थमात्रान्वयबोधजनकत्वात्[१] स्वानुपस्थापितार्थशक्तपदज्ञानं विना स्वानुपस्थापितार्थबुद्ध्यजनकत्वादिति यावत्, तच्छक्तपदज्ञानस्य तच्छाब्दबुद्धौ हेतुत्वादिति भावः । 'न पिधानेति पिधानशक्तपदज्ञानं विना न

---

(१) शक्त्योपस्थापितमुख्यार्थमात्रान्वयबोधजनकत्वादिति ख० ।

मिति तदन्वयबोधार्थमवश्यं शब्दकल्पनमिति चेत्। न। लक्षणायां व्यभिचारात् तत्राप्याक्षिप्तेन कर्त्रान्वयबोधाच्च। अथ द्वारपदसहभावमात्रं पिधेहिशब्दस्य कल्प्यते लाघवात्। न च पिधानाभिधायकानेक-

पिधानान्वयबोधकमित्यर्थः, 'शब्दकल्पनं' पिधेहिशब्दोपस्थितिकल्पनं, 'लक्षणायामिति लक्षणास्थले व्यभिचारादित्यर्थः, घोषादिपदस्य तीरशक्तपदज्ञानं विनापि तीरान्वयबुद्धिजनकत्वादिति भावः। ननु तद्वृत्तपदज्ञानत्वेन हेतुत्वमतो न व्यभिचार[१] इत्यरुचेराह, 'तत्रेति, 'तत्र' नैयायिकस्य मतेऽपि, पचतीत्युक्ते 'आक्षिप्तेन' अनुमितेन, 'कर्त्रा' चैत्रादिना, अन्वयबोधाच्चेत्यर्थः, इदञ्च प्राचीननैयायिकमतानुसारेण नव्यमते तत्रापि प्रथमान्तचैत्रादिपदाध्याहारादेवान्वयबोधादिति बोध्यं। 'द्वारपदसहभावमात्रं' द्वारपदोपस्थितिसामानाधिकरण्यमात्रं, 'पिधेहिशब्दस्य' पिधेहिशब्दोपस्थितेः, द्वारपदोपस्थित्यधिकरणे पिधेहिशब्दोपस्थितिमात्रं कल्प्यते न तु उच्छृङ्खलपिधानोपस्थितिरित्यर्थः, 'लाघवादिति, अर्थाध्याहारपक्षे यत्र पिधेहिशब्दमात्रं प्रयुक्तं तत्रापि पिधेहिशब्दज्ञानस्यैव पिधानान्वयबुद्धिजनकत्वं कल्पनीयं द्वारमित्येतावन्मात्रोक्तौ द्वारपदज्ञानस्यैव तज्जनकत्वं कल्पनीयमिति कारणताद्वयकल्पनायां गौरवमित्यभिमानः। ननु पिधानोपस्थापकानेकशब्दो वर्त्तते विनिग-

(१) तथाच स्वानुपस्थापिततीरलक्ष्यगङ्गादिपदज्ञानं तत्रास्तीति भावः।

शब्दोपस्थितौ विनिगमकविरहः, संस्कारतारतम्यात् पदविशेषस्मृतेरिति चेत् । न । आकाङ्क्षादिमत्प्रतियोग्यन्वितस्वार्थपरत्वस्य क्लृप्तत्वात् लाघवेनार्थाध्याहारात् । न च श्रुतपदानि लब्धप्रयोजनानीति कथम-

---

मनाविरहेण कस्योपस्थितिर्भविष्यतीत्याशङ्क्य निराचष्टे, 'न चेत्यादिना, 'संस्कारेति यद्विषयकसंस्कारश्चोद्बुद्धस्तच्च तस्यैव स्मृतेरित्यर्थः, क्वचिदनेकस्मृतावप्यस्मृतेरित्यपि द्रष्टव्यं । तदिदं न क्लृप्तमित्याह, 'आकाङ्क्षादिमदिति आकाङ्क्षादिमत्पिधानादिरूपप्रतियोग्यन्वितेत्यर्थः, 'आकाङ्क्षादिमदिति तु स्वरूपकथनं, 'स्वार्थपरत्वस्य' स्वार्थान्वयबोधजनकत्वस्य, 'क्लृप्तत्वात्' भवतापि द्वारमित्यादौ द्वारपदज्ञानस्य द्वारकर्म्मकपिधानानुकूलकृतिमानित्येतादृशान्वयबोधजनकत्वाङ्गीकारादित्यर्थः(१) ।

केचित्तु द्वारमानयेत्यादौ पिधानलाक्षणिकस्थले पिधानान्वितस्वार्थान्वयबोधजनकत्वस्य द्वारपदे क्लृप्तत्वादित्यर्थः, लाक्षणिकपदस्याननुभावकत्वादिति भाव इत्याहुः ।

'लाघवेनार्थाध्याहारादिति लाघवेनार्थाध्याहारकल्पनादित्यर्थः, पिधेहिशब्दोपस्थितिं कल्पयित्वापि तदर्थोपस्थितिरवश्यं कल्पनीयेत्युभयकल्पनायां गौरवादिति भावः । 'न चेति, 'लब्धप्रयोजनानि' जनितशाब्दबोधानीत्यर्थः, 'अध्याहृते' अर्थे, 'तात्पर्य्यं' आकाङ्क्षा,

---

(१) इत्येतादृशान्वयबोधजनकत्वाङ्गीकारादिति भाव इति क०, ख० ।

प्यध्याहृते तेषां तात्पर्य्यमिति वाच्यं। श्रुतार्था-न्वयानुपपत्त्या अध्याहृते तात्पर्य्यात्। कथं तर्ह्योदनं पचतीत्यत्र समभिव्याहृतमात्रान्वयः कलायादेरपि स्मृतत्वात् इति चेत्। न। तात्पर्य्यनियमादित्यवेहि यत्परः शब्दः स हि शब्दार्थः, अन्यथा तवापि दैव-वशस्मृतकलायपदोपस्थापितेनान्वयबोधः[१] स्यात् अयं देवदत्त ओदनमित्यादिवाक्ये क्रियापदाध्याहाराभा-वेन कर्त्तुरनभिधानात् तृतीया स्यात् इति चेत्। न।

---

जनितान्वयबोधत्वेन निराकाङ्क्षत्वात्, अस्मन्मते तु श्रुतपदे आकाङ्क्षा-दिविरहेऽपि न क्षतिः अध्याहृतपदे एवाकाङ्क्षासत्त्वादिति भावः। 'श्रुतार्थान्वयानुपपत्त्येति तात्पर्य्यविषयीभूतान्वयबोधानुपपत्त्येत्यर्थः, 'तात्पर्य्यात्' आकाङ्क्षासत्त्वात्। 'कथं तर्हीति यद्युच्छृङ्खलपदार्थो-पस्थितिरपि हेतुरित्यर्थः, 'समभिव्याहृतेति उच्छृङ्खलकलायाद्यु-पस्थितिदशायामपि समभिव्याहृतमात्रान्वय इत्यर्थः, 'तात्पर्य्यनिय-मात्' तात्पर्य्यज्ञानस्य नियामकत्वात्, 'यत्परः' यत्तात्पर्य्यकः, 'शब्दार्थः' शब्दजन्यज्ञानविषयः, 'अन्यथा' तात्पर्य्यज्ञानस्यानियाम-कत्वे, 'तवापीति, ओदनं पचतीत्यत्रेति शेषः, 'दैववशसम्पन्नेति दैववशस्मृतेत्यर्थः, क्वचित् तथैव पाठः, 'उपस्थापितेन' कलायेन, 'अनभिधानादिति आख्यातादिना अबोधनादित्यर्थः, 'तृतीयेति,

---

(१) दैववशसम्पन्नकलायपदोस्थापितेनान्वयबोध इति ख०।

अध्याहृतपचतिपदेनापि कर्त्तुरनभिधानात्, कर्त्तृ-संख्याभिहितेति चेत्। न। देवदत्तस्य पाक इत्यत्रापि तृतीयापत्तेः, तात्पर्य्यतस्तत्र व्यवस्थेति चेत्, तुल्यं। ननु

---

कृदाख्याताभ्यामनभिहिते[१] कर्त्तरि तृतीयाभिधानादिति भावः। 'अध्याहृतेति आख्यातस्य कृतावेव शक्तेरिति भावः। 'कर्त्तृसङ्ख्येति, तथाचानभिहिते कर्त्तरीत्यधिकारसूत्रस्य कृदाख्याताभ्यां कर्त्तृ-तद्गतसङ्ख्यान्यतरानभिधाने कर्त्तरि तृतीयेति निष्कृष्टोऽर्थ इति भावः। अन्यतरत्वेनोपादानादेव देवदत्तः पाचक इत्यादौ वुण्प्रत्ययादिना कर्त्तृगतसङ्ख्याभिधानेऽपि न तृतीया कर्त्तुरेवाभिधानादिति ध्येयं[२]। 'देवदत्तस्येति, अत्र घञा कर्त्तुस्तद्गतसङ्ख्यायाश्चानभिधानादिति भावः। ननु अनभिहिताधिकारीयतृतीयाविधायिका स्मृतिरेतद्-तिरिक्तस्थलपरा घञादिकृद्योगे षष्ठ्यास्तृतीयापवादकत्वात्। न च तथापि देवदत्तस्य पाक इत्यर्थे बोधनीये यत्र देवदत्तस्येतिमात्र-मुच्चरितं तत्र तृतीयापवादककृद्योगाभावादाख्यात-कृद्भ्यां कर्त्तृ-तद्गत-सङ्ख्यानभिधानाच्च तृतीयापत्तिरिति वाच्यं। तत्रापि घञन्तपाका-दिपदस्य वक्तुरभिप्रायविषयतया तदतिरिक्तस्थलस्यैव तृतीयावि-धायकसूत्रविषयत्वादित्यत आह, 'तात्पर्य्यत इति तृतीयाविधायक-सूत्रतात्पर्य्यत इत्यर्थः, 'तुल्यमिति देवदत्तस्य पाक इत्याद्यतिरि-

---

(१) कृदाख्याताद्यन्यतमेनानभिहित इति क०।

(२) इति भाव इति क०।

द्वारं पिधेहीत्यादौ पिधानशब्दानुभवे पिधानोपस्थापकपदत्वेन जनकत्वमिति चेत्। न। अन्वयप्रतियोग्युपस्थापकपदत्वेन जनकत्वात् न तु तदुपस्थापकयावत्पदत्वेन गौरवात्। एवं पिधानान्वयबोधेऽपि।

---

क्तस्थले यत्र कर्त्तृ-तद्गतसङ्ख्यान्यतराभिधायकक्तदाख्यातान्तक्रियापदं वक्तुरभिप्रेतं तत्र न तृतीया यत्र तु न तदभिधायकक्तदाख्यातान्तक्रियापदं वक्तुरभिप्रेतं तत्र तृतीयेति वैयाकरणस्ततेस्तात्पर्य्यादेव देवदत्त ओदनमित्यादौ न तृतीया तत्र पचतिपदस्य वक्तुरभिप्रेतत्वात्। न चैवं शब्दाध्याहारः सिद्धोत एवेति वाच्यं। पदस्य वक्तुरभिप्रेतत्वेऽपि श्रोत्रा तदनध्याहारादिति भावः। 'अन्वयप्रतियोगीति पिधानान्वयप्रतियोगीत्यर्थः, तटस्थशङ्कां निराकरोति, 'न त्विति, 'तदुपस्थापकेति पिधानान्वयप्रतियोग्युपस्थापकेत्यर्थः, 'गौरवादित्युपलक्षणं, यावत्पदस्य कुत्राप्यसम्भवाच्चेत्यपि द्रष्टव्यं। 'एवं' तादृशपदं, पिधानान्वयप्रतियोग्युपस्थापकपदमिति यावत्, 'पिधानान्वयबोधेऽपीति अध्याहृतपिधानान्वयबोधस्थलेऽपीत्यर्थः, तत्रापि पिधानान्वयप्रतियोग्युपस्थापकपदस्य द्वारमित्यस्यैव सत्त्वादिति भावः। ननु लाघवात् तदुपस्थापकपदत्वेन तच्छाब्दबुद्धित्वेन हेतु-हेतुमद्भावो न तु तदन्वयप्रतियोग्युपस्थापकपदत्वेन गौरवादित्यत आह, 'अन्यथेति तदन्वयबोधं प्रति तदुपस्थापकपदत्वेनैव कारणत्वे इत्यर्थः, 'गौणेति गौण-लाक्षणिकस्थले अन्वयबोधाभावापत्तेरित्यर्थः, 'तयोः' गौण-लाक्षणिकपदयोः, 'अननुभावकत्वात्' पदार्थानुपस्थापकत्वात्,

**अन्यथा गौण-लाक्षणिकयोरन्वयबोधो न स्यात् तयो-रननुभावकत्वादिति ॥**

---

प्रवाहादिरूपशक्योपस्थितिरेव लक्ष्यस्मारिका न तु लाक्षणिकपदो-पस्थितिरिति प्राचीनसिद्धान्तादिति भावः। तदयमर्थाध्याहार-पूर्व्वपक्षनिष्कर्षः, तच्छाब्दबुद्धौ पदजन्यैव तदुपस्थितिर्हेतुरिति न नियमः तच्छाब्दबुद्धौ पदज्ञानविशिष्टतदुपस्थितित्वेन विजातीय-तद्विषयकत्वेन वा हेतुत्वकल्पनामपेक्ष्य लाघवेन तदुपस्थितित्वेन हेतुत्वौचित्यात् पदज्ञानविशिष्टत्वाप्रवेशादतिरिक्तजातिकल्पनाविर-हाच्च द्वारमित्यादौ अध्याहृतेनापि पिधानादिना अन्वयबोधदर्श-नेन तथा कार्य्य-कारणभावे व्यभिचाराच्च। न च तत्रापि पिधेहि-शब्द एवाध्याह्रियत इति वाच्यं। गौरवान्मानाभावाच्च। न च पिधानशाब्दबुद्धिं प्रति शक्ति-लक्षणान्यतरसम्बन्धेन[१] पिधान-प्रकारकवृत्तितावच्छेदकधर्म्मावच्छिन्नशब्दविशेष्यकज्ञानत्वेन हेतुतया पिधेहिशब्दस्मृतिरावश्यकीति वाच्यं। तादृशकार्य्य-कारणभावे मा-नाभावात्। न चैवमोदनं पचतीत्युक्ते कारणतया स्मारितस्य आ-काशस्य प्रत्यक्षादिनोपस्थितस्य कलायादेश्चान्वयबोधापत्तिरिति वाच्यं। सति तात्पर्य्यग्रहे इष्टापत्तेः, अन्यथा तवापि ओदनं पचती-त्युक्ते दैववशस्मृतकलायपदोपस्थितेन कलायेनान्वयबोधस्य दुर्व्वार-त्वादिति दिक्।

---

(१) वृत्तिलक्षणासम्बन्धेनेति ख०, ग०।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ
शब्दाख्यतुरीयखण्डे आसत्तिवादपूर्व्वपक्षः ॥०॥

---

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये
आसत्तिवादपूर्व्वपक्षरहस्यम् ॥०॥

## अथासत्तिवादसिद्धान्तः ।

उच्यते, क्रियापदोपस्थापिता क्रिया, कारकपदोपस्थापितञ्च कारकं परस्परमाकाङ्क्षति न तूपस्थितिमात्रं अन्यथा द्वारं कर्म्मता पिधेहि, द्वारं पिधानं कृतिरित्यत्रापि क्रिया-कर्म्माध्याहार इवान्वयबोधप्रसङ्गः

---

### अथासत्तिवादसिद्धान्तरहस्यम् ।

'क्रियापदेति धातुपदेत्यर्थः, 'क्रिया' पिधानादि, 'कारकपदेति अमादिपदेत्यर्थः, 'कारकं' कर्म्मत्वादि, 'आकाङ्क्षतीति परस्परं शाब्देच्छाविषयो भवतीत्यर्थः, 'अन्यथेति यथाकथञ्चिदुपस्थितक्रियादिमात्रस्यैव परस्परं शाब्देच्छाविषयत्वे इत्यर्थः, 'क्रिया-कर्म्माध्याहार-इवेति क्रिया-कर्म्मत्वरूपार्थाध्याहार इवेत्यर्थः,[१] इदञ्च पदस्मारितपदार्थजिज्ञासा आकाङ्क्षेत्याचार्य्यमतेन, नव्यनये तु कर्म्मत्वादिविशेष्यकाधेयतासंसर्गकद्वारप्रकारकशाब्दबोधे द्वारमित्यानुपूर्व्वीविशेषस्य कृतिविशेष्यकानुकूलत्वसंसर्गकपिधानप्रकारकशाब्दबोधे च पिधेहीत्यानुपूर्व्वीविशेषस्य आकाङ्क्षात्वमावश्यकम्, अन्यथा द्वारं कर्म्मत्वं पिधेहि द्वारं पिधानं कृतिरित्यत्रापि तादृशान्वयबोधापत्ते-

---

(१) क्रिया-कर्म्मरूपाध्याहार इवेत्यर्थ इति ख० ।

क्रियायाः कर्म्मणश्चोपस्थितेस्तुल्यत्वात्। एवंविधपदोपस्थापिते परस्परमाकाङ्क्षा नास्तीति चेत्, तर्ह्याकाङ्क्षायां पदविशेषोपस्थापितत्वं तन्त्रं न तूपस्थितिमात्रं, अर्थविशेषेऽसाधुत्वान्नात्रान्वयबोध इति चेत्, न, पिधेहीति पदं विना द्वारमित्यस्याप्यसाधुत्वात् तदर्थयोगे साधुत्वस्य तुल्यत्वात् साधुत्वज्ञानस्यान्वयबोधे-

---

रिति केवलं पिधेहीत्युक्तौ द्वारमित्यस्य केवलं द्वारमित्युक्तौ पिधेहिपदस्याध्याहार आवश्यक इति ध्येयं। 'एवंविधेति द्वारं कर्म्मेत्यादिपदेत्यर्थः, 'आकाङ्क्षा' शाब्दबोधेच्छा, 'आकाङ्क्षायां' परस्परं शाब्दबोधेच्छायां। ननु द्वारं कर्म्मत्वमित्यादौ भेदान्वयबोधे असाधुत्वज्ञानमेव प्रतिबन्धकमित्याशङ्कते, 'अर्थविशेषे असाधुत्वादिति द्वारं कर्म्मत्वमित्यादौ भेदान्वयबोधे असाधुत्वादित्यर्थः, तत्रासाधुत्वञ्च तदजनकतया पाणिन्याद्यभिप्रेतत्वं, 'असाधुत्वादिति क्रिया-कर्म्मभावेनान्वयबुद्ध्यजनकतया पाणिन्याद्यभिप्रेतत्वादित्यर्थः। ननु साधुत्वस्य[१] फलोन्नेयतया यत्रान्वयबोधो न दृश्यते तत्रैवासाधुत्वं कल्प्यते, न हि द्वारमित्यत्र पिधेहिपदं विना नान्वयबोध इत्युभयसिद्धमित्यरुचेराह,[२] 'साधुत्वज्ञानस्येति निरुक्तासाधुत्वाभावज्ञानस्येत्यर्थः, तथाच जनकीभूतं ज्ञानं विघटयत एव ज्ञानस्य प्रतिबन्धकतया नासाधुत्व-

---

(१) असाधुत्वस्येति ग०।

(२) इत्यनुभवसिद्धमित्यरुचेराहेति ग०।

ऽप्रयोजकत्वाच्च गौरवादपभ्रंशादप्यन्वयबोधाच्च । न चाचासंसर्गाग्रहः, बाधकाभावात् । तस्मात् क्रिया-

---

ज्ञानं प्रतिबन्धकमिति भावः[१] । गौरवेणान्यथासिद्धिमुक्ता व्यभिचारमप्याह, 'अपभ्रंशादपीति साधुत्वेनाज्ञायमानादपीत्यर्थः, 'अत्र' अपभ्रंशस्थले, 'बाधकाभावादिति संसर्गग्रहे बाधकाभावादित्यर्थः, साधुत्वज्ञानस्य[२] हेतुत्वासिद्धेरिति भावः । ननु द्वारं कर्म्मत्वं पिधेहि द्वारं पिधानं कृतिरित्यादावेकदेशनिराकाङ्क्षस्थले क्रिया-कर्म्मभावेनान्वयबोधे इष्टापत्तिः सत्येकदेशसाकाङ्क्षत्वे अन्वयप्रति-योग्यन्तरस्य यथाकथञ्चिदुपस्थितेरेव शाब्दधीहेतुत्वाभ्युपगमेन प्रत्यक्षानुमानादिना तदुपस्थितिवन्निराकाङ्क्षपदजन्योपस्थितेरपि शाब्दबोधे बाधकाभावात् । न चानुभवविरोध इति वाच्यं । तथा सति पदजन्यपदार्थोपस्थितिं विना नान्वयबोध इत्यनुभवादेव शब्दाध्याहारसिद्धा विवादपर्य्याप्तेः । न चैवं कृत्यादिविशेष्यक-पिधानादिप्रकारकान्वयबोधे पिधेहीत्याद्यानुपूर्व्वीविशेषात्मकाका-ङ्क्षाज्ञानस्य हेतुत्वमुपेयते न वा, आद्ये अर्थाध्याहारस्थले एकदेश-निराकाङ्क्षस्थले च व्यभिचारः, अन्त्ये द्वारं कर्म्मत्वं पिधानं कृति-रित्यादिसर्व्वनिराकाङ्क्षस्थलेऽपि द्वारकर्म्मकपिधानानुकूलकृतिमानि-

---

(१) तथाच शाब्दबोधे असाधुत्वज्ञानं न साक्षात् प्रतिबन्धकं अपि तु जनकीभूतज्ञानविघटकतयेति भावः ।

(२) तत्र व्यभिचारादित्यादिः ।

पदस्य कारकपदेन कारकपदस्य क्रियापदेन सहा-
न्वयबोधकत्वं न त्वेकं विनाऽपरस्य। अपि च स-

त्याद्यन्वयबोधापत्तिः अर्थोपस्थितेस्तुल्यत्वादिति वाच्यं। तत्तदा-
नुपूर्व्वीविशेषात्मकाकाङ्क्षानिश्चयस्य स्वाव्यवहितोत्तरवर्त्ति-तादृश-
तादृशान्वयबुद्धिं प्रत्येव हेतुतया व्यभिचाराभावात् अर्थाध्याहारा-
दिस्थलीयान्वयबोधस्य तदव्यवहितोत्तरवर्त्तित्वाभावात्[१]। न चैवं
सर्व्वनिराकाङ्क्षस्थलेऽपि अर्थाध्याहारादिस्थलवत् द्वारकर्म्मकपिधाना-
नुकूलकृतिमानित्यन्वयबोधापत्तिर्दुर्वारैवेति वाच्यं। द्वारकर्म्मकपिधा-
नानुकूलकृतिमानित्यन्वयबोधो हि द्विविधः, द्वारमित्याद्यानुपूर्व्वी-
निश्चयाव्यवहितोत्तरवर्त्तिद्वारप्रकारक-कर्म्मत्वविशेष्यकान्वयबोधत्वाश्र-
यः पिधेहीत्याद्यानुपूर्व्वीनिश्चयाव्यवहितोत्तरवर्त्ति-पिधानप्रकारक-
कृतिविशेष्यकान्वयबोधत्वाश्रयश्च तदतिरिक्तस्त्वालीकः। तथाच अन्य-
तरविशेषसामग्रीविरहादेव सर्व्वनिराकाङ्क्षस्थले न तादृशान्वयबोधः।
एतेन[२] यथाकथञ्चित्पदार्थोपस्थितिमात्रस्य हेतुत्वे प्रतियोग्युपस्था-
पकपदमात्राश्रवणेऽपि यत्किञ्चिद्वर्णज्ञानदशायां उच्छृङ्खलपदार्थोप-
स्थितिमात्राच्छाब्दबोधप्रसङ्गः तथाच भट्टमताविशेषः। न च तद-
न्वयप्रतियोग्युपस्थापकपदत्वेन हेतुतया न तत्रान्वयबोध इति वाच्यं।
साक्षात्परम्परासाधारणस्य तदन्वयप्रतियोगित्वस्यानुगतानतिप्रसक्तस्य

(१) तदनव्यवहितोत्तरवर्त्तित्वादिति ख०, ग०।
(२) उक्तविशेषसामग्रीसहकारविवक्षणेनेत्यर्थः।

कर्म्मकक्रियापदयोगं विना द्वितीयानुपपत्तिः, न हि क्रियापदार्थयोगे द्वितीया, घट आनयनं कृतिरित्यत्रापि द्वितीयापत्तेः, तथा च पुष्पेभ्य इत्यत्र स्पृहयति-

---

दुर्व्वचत्वात् तद्वृत्तपदज्ञानत्वापेक्षया गुरुत्वाच्चेत्यपि निरस्तं। तत्रापि विशेषसामग्रीविरहादेव शाब्दबोधाभावोपपत्तेरित्यस्वरसादाह, 'अपि चेति ।

केचित्तु ननु पदस्मारितपदार्थजिज्ञासा नाकाङ्क्षा अजिज्ञासोरपि शाब्दबोधात्, नाप्यानुपूर्व्वीविशेषः तस्याननुगततया अनन्त-कार्य्य-कारणभावापत्तेः, किन्तु घटः कर्म्मत्वमित्यादिपदविशेषाजन्यपदार्थोपस्थितिरेवाकाङ्क्षा सा चार्थाध्याहारस्थलेऽप्यस्ति नास्ति च सर्व्वनिराकाङ्क्षस्थले एकदेशनिराकाङ्क्षस्थले चेति न तत्रान्वयबोधः किं पदाध्याहारेणेत्यरुचेराह, 'अपि चेतीत्याहुः । तदसत्, भेदकूटानां[१] विशेषण-विशेष्यभावे विनिगमनाविरहेणानन्तकार्य्य-कारणभावापत्तेः अन्वयप्रतियोग्युपस्थापकपदमात्राश्रवणेऽपि पदार्थोपस्थितिमात्राच्छाब्दबोधस्य दुर्वारत्वाच्च तदन्वयप्रतियोग्युपस्थापकपदत्वेन हेतुत्वस्य उक्तक्रमेण वक्तुमशक्यत्वादिति ध्येयम् । 'सकर्म्मकक्रियापदयोगं विनेति सकर्म्मकक्रियापदैकवाक्यताभिप्रायविषयत्वं विनेत्यर्थः, 'द्वितीयानुपपत्तिरिति द्वितीयायाः साधुत्वानुपपत्तिरित्यर्थः,[२] पाणिनि-चान्द्राद्यनुशासनकर्तृभिस्तथैव निर्णीतत्वादि-

(१) पदविशेषाजन्येत्यत्रान्तर्गतभेदकूटानामित्यर्थः ।

(२) एकवाक्यत्वं सकर्म्मकक्रियापदसहकारेण स्वार्थबोधकत्वं ।

पदाध्याहारं विना चतुर्थ्यनुपपत्तिः। यदि स्पृहयतिपदार्थयोगे चतुर्थी तदा पुष्पमिच्छतीत्यत्रापि स्यात् स्पृहयतीच्छतिपदयोरेकार्थत्वात्। अथ साधुत्वार्थं द्वारं पुष्पेभ्य इत्यत्र पिधेहि-स्पृहयतिपदाध्याहारोऽनुमन्यते न त्वन्वयबोधार्थं तस्यान्वयप्रतियोगिविज्ञानादेवोपपत्तेरिति चेत्, तर्हि क्रियापदयोगं विना न कारकविभक्तिः, कारकपदयोगं विना न तदन्वययोग्यं क्रियापदमिति केवलकारकपदे क्रियापदाध्याहारः, केवलक्रियायाञ्च कारकपदाध्याहारः साधुत्वार्थमावश्यक इति तज्जन्योपस्थितिरन्वयबोधौपयिकी तस्मात्

---

ति[१] भावः। साधुत्वञ्च धर्मविशेषजनकत्वं अधर्माजनकत्वं वा, 'क्रियापदार्थयोग इति वस्तुगत्या सकर्मकक्रियापदस्य योऽर्थस्तदन्वितस्वार्थबोधकत्वाभिप्रायविषयत्व एवेत्यर्थः, 'द्वितीयेति, साध्वीति शेषः, 'द्वितीयापत्तेः' द्वितीयायाः साधुत्वापत्तेः, 'चतुर्थ्यनुपपत्तिरिति कर्मत्वपरचतुर्थ्याः साधुत्वानुपपत्तिरित्यर्थः, 'चतुर्थी' कर्मत्वपरचतुर्थी, साध्वीति शेषः। 'साधुत्वार्थमिति द्वितीयादेः साधुत्वार्थमित्यर्थः, 'न कारकविभक्तिरिति साध्वीति शेषः, 'तज्जन्योपस्थितिरिति द्वार-

(१) सकर्मकक्रियापदसहकारेणैव स्वार्थबोधकपदाद्द्वितीयाया उक्तत्वादित्यर्थः।

क्रिया-कारकपदोपस्थापितयोरेव क्रिया-कारकयोः परस्परमन्वय इति शब्दाध्याहार एव। कर्त्राक्षेपे तु वक्ष्यामः ॥

---

मित्यादावध्याहारस्थलेऽपि पदज्ञानजन्यपदार्थोपस्थितिरन्वयबोधौपयिकीत्यर्थः, तथाच नोक्तव्यभिचार इति भावः। 'तस्मादिति व्यभिचाराभावेनेति शेषः। नन्वेवं पचतीत्यादौ कर्त्राक्षेपस्थले अनुमितेन चैत्रादिना कथमन्वयबोधः तव नये पदजन्यपदार्थोपस्थितेरेव शाब्दबोधाङ्गत्वादित्यत आह, 'कर्त्राक्षेप इति, तत्रापि प्रथमान्तचैत्रादिपदाध्याहारादेवान्वयबोधः न त्वनुमितचैत्रादिना, कर्त्तुराक्षेपलभ्यत्वप्रवादस्याप्ययमेवार्थः,[१] न त्वनुमानलभ्यत्वमिति भावः। इदमापाततः गेह इत्यादिपदं विनापि यत्र घटोऽस्तीत्याद्यभिहितं तत्र गेह इत्यादिपदं विनापि साधुतया पदाध्याहाराभावेन व्यभिचारस्य दुर्वारत्वात् सकर्मकक्रियादियोगस्य द्वितीयादेः साधुतानियामकत्वेऽभिप्रायशून्यमूर्खाध्यापकाद्युक्तविष्णुंपूजयेदित्यादिविधिवाक्यस्याप्यसाधुत्वापत्तेः अभिप्रायघटितस्य सकर्मकक्रियायोगस्य तत्राप्यभावात्[२]। किञ्च साधुत्वार्थं वक्तुरेकवाक्यताभिप्रायविषयत्वरूपस्य सकर्मकक्रियापदादियोगस्यावश्यकत्वेऽपि श्रोतुस्तादृशपदाध्याहारस्य कथमावश्यकत्वं। न च हेतुविधया

---

(१) अध्याहृतप्रथमान्तपदोपस्थाप्यत्वमेवार्थ इति ग०।

(२) अभिप्रायघटितक्रियापदयोग्यस्याभावादिति ख०।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे आसत्तिवादः ॥०॥

---

---

सकर्म्मकक्रियापदादियोगस्य साधुत्वज्ञापकतया साधुत्वज्ञानार्थं तज्ज्ञानमावश्यकं तदेव पदाध्याहार इति वाच्यं । साधुत्वज्ञानस्य शाब्दबोधाहेतुतया तदज्ञानेऽपि क्षतिविरहात्, अस्तु वा शब्दाध्याहार आवश्यकस्तथापि तज्जन्यपदार्थोपस्थितित्वेन कुतो हेतुत्वं लाघवात् पदार्थोपस्थितित्वेनैव हेतुत्वस्योचितत्वात्तथाच ओदनं पचतीत्यादौ सति तात्पर्य्यग्रहे यथाकथञ्चिदुपस्थिताकाश-कलाया-देरप्यन्वयबोध एवेत्यध्याहारपक्ष एव सम्यगित्यवधेयं[१] ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये आसत्तिवादरहस्यम् ॥

---

(१) सम्यगिति ध्येयमिति ग० ।

## अथ तात्पर्य्यवादः ।

---

तात्पर्य्याधीनं शब्दप्रामाण्यं तच्च तत्परत्वं न तत्साध्यकत्वं पदार्थ-तत्संसर्गयोः शब्दासाध्यत्वात् । अथ

---

### अथ तात्पर्य्यवादरहस्यम् ।

आसत्तिं निरूप्य तात्पर्य्यं निरूपयितुमाह, 'तात्पर्य्याधीनमिति तात्पर्य्याधीनं तात्पर्य्यज्ञानस्याप्यधीनं, 'शब्दप्रामाण्यं' शब्दस्यानुभवजनकत्वं, तात्पर्य्यस्य ज्ञानमपि शब्दस्य सहकारीति फलितार्थः । एतेनासत्त्या सह शाब्दबोधलक्षणैककार्य्यानुकूलत्वं सङ्गतिरिति सूचितं, यद्यपीतरस्येतरपदेत्यादिना तात्पर्य्यं प्रागेव निरूपितं, तथापि परमतनिराकरणाय पुनरयमारम्भ इति स्मर्त्तव्यं । तत् परं यस्य स तत्परस्तस्य भावस्तात्पर्य्यं, परशब्दश्च कार्य्यवाची, तथाच तत्कार्य्यकत्वमेव तात्पर्य्यं, भवति च घटादिपदं घटादिप्रतीतिकार्य्यकम् अतो घटादिप्रतीतिपरमिति यथाश्रुतशब्दार्थमाशङ्क्य निराकरोति, 'तच्चेति, विषयत्वं सप्तम्यर्थः, अन्वयश्चास्य 'तत्परत्वमित्यनेन, तथाच तद्विषयीभूतं तत्परत्वमित्यर्थः, 'तत्साध्यकत्वं' तत्कार्य्यकत्वं । यद्वा 'तच्च' तात्पर्य्यं, निष्ठत्वं सप्तम्यर्थः, 'तत्परत्वमिति भावप्रधानो निर्देशः, एवं 'तत्साध्यकत्वमित्यपि, तथाच तन्निष्ठं तत्परत्वं न तत्साध्यकत्वमित्यर्थः, 'शब्दासाध्यत्वादिति शब्दाजन्यत्वादित्यर्थः,

तद्गोचरप्रवृत्तिनिवृत्तिसाध्यकत्वं तत्परत्वं, तच्च भाव्यार्थस्य साक्षात् भूतार्थस्य तु प्रशंसा-निन्दावाक्यस्य प्रशस्त-निन्दितार्थप्रतिपादनद्वारा लाक्षणिकस्य लक्षणीयविषयप्रवृत्ति-निवृत्तिजनकत्वं तत्परत्वमिति चेत्, न, तत्परत्वे तज्ज्ञानं जनयित्वा तच्च प्रवर्त्तकत्वं तत्प्रवर्त्तक-

---

तथाच घटादिपदं घट-तत्संसर्गादिपरमिति व्यवहारो न स्यादिति भावः। 'तद्गोचरप्रवृत्तिनिवृत्तीति तद्गोचरप्रयत्नेत्यर्थः, यथाश्रुते एकस्य वाक्यस्योभयासाध्यकत्वादसम्भवापत्तेः प्रत्येकसाध्यकत्वस्य वैकल्पिकलक्षणत्वे तु परस्पराव्याप्त्यापत्तेरिति ध्येयं। 'तच्च' प्रयत्नकार्य्यकत्वञ्च, 'भाव्यार्थस्य' विधिवाक्यस्य, 'साक्षात्' इष्टसाधनत्वादिज्ञानद्वारा, 'भूतार्थस्य त्विति प्रशंसा-निन्दावाक्यस्य विशेषणं, विधिभिन्नस्य प्रशंसा-निन्दावाक्यस्येत्यर्थः, तच्च परिणतिसुरसं आम्रफलं परिणतिविरसं पनसफलमित्यादिवाक्यमिति भावः। 'प्रशस्त-निन्दितेति उत्कृष्टत्वापकृष्टत्वेत्यर्थः, सुशब्द-विशब्दयोरुत्कृष्टापकृष्टवाचित्वादिति भावः। नन्वेवं लाक्षणिकस्य लक्षणीयगोचरप्रयत्नाजनकत्वाल्लक्षणीयार्थपरत्वं न स्यादित्यत आह, 'लाक्षणिकस्येति, लक्षणीयानुभवद्वारेति शेषः, 'तत्परत्वं' लक्षणीयपरत्वं, अत इत्यादिः, 'तत्परत्वे' तत्परत्वज्ञाने, 'तज्ज्ञानं' तच्छाब्दबोधं, 'तच्च प्रवर्त्तकत्वं' तद्गोचरप्रयत्नफलोपधायकत्वं, स्वरूपयोग्यतायाः पूर्व्वमपि सत्त्वेन शाब्दबोधानपेक्षितत्वाद्यथाश्रुतासङ्गतेः, 'तत्प्रवर्त्तकत्वञ्च' तद्गोचरप्र-

त्वञ्च तत्परत्वमिति परस्पराश्रयात् । लाक्षणिकस्यान-
नुभावकत्वेऽपि लक्षणीयपरत्वात् काव्यादेः स्वरूपा-

---

यत्नोपधायकत्वञ्च, 'इति परस्पराश्रयादिति तद्गोचरप्रयत्नफलोपधाने सति तदुपधायकत्वज्ञानात्तच्छाब्दबोधस्तच्छाब्दबोधे जात एव तद्गोचरप्रयत्नोपधानमित्यन्योन्याश्रय इति भावः । न च तद्गोचर-प्रयत्नस्वरूपयोग्यतावच्छेदकपरत्वं तत्परत्वमिति वाच्यं। तदवच्छेद-करूपापरिचयादिति भावः । ननु तद्गोचरप्रयत्नोपधायकत्वस्य लौकिकप्रत्यक्षं न हेतुर्येन तदुपधानं विना तदुपधायकत्वज्ञानं न स्यात् किन्तु तद्गोचरज्ञानमात्रं तथाचायेतनतदुपधायकत्वस्यापि यथाकथञ्चिदुपनयादिवशाज्ज्ञानं भविष्यतीत्यरुचेराह, 'लाक्षणिक-स्येति, 'अननुभावकत्वेऽपीति, अनुभवजनकत्वं विना[१] प्रयत्नाजनक-त्वादिति[२] भावः । शक्ति-लक्षणान्यतरसम्बन्धेन तद्वत्[३]पदज्ञान-त्वपेक्ष्य लाघवाच्छक्तिसम्बन्धेन तदन्वयप्रतियोगिमत्पदज्ञानत्वेनैव हेतुता शक्तिमपेक्ष्य लक्षणायाः शक्यसम्बन्धात्मकत्वेन गुरुत्वात्, गङ्गायां घोष इत्यादौ च घोषादिपदमेव तीराद्यनुभावकं न तु गङ्गादिपदं तस्य तीराद्यन्वयप्रतियोगिशक्तत्वाभावात्, अन्वयप्रति-योगित्वञ्च साक्षात् परम्परया अन्वयनिरूपकत्वं, तच्चाभेदेऽपि, तेन घटादिपदस्य न घटाद्यनुभावकत्वानुपपत्तिः सर्व्वलाक्षणिकस्थले च

---

(१) अनुभावकत्वं विनेति ख० ।

(२) प्रयत्नजनकत्वासम्भवादितीति ख० ।

(३) अन्वयप्रतियोगिमदित्यर्थः ।

ख्यानमात्रपरत्वेनापि पर्य्यवसानाच्च। ननु तद्बुद्धिजन-कत्वं तत्परत्वं प्रशंसा-निन्दावाक्यमपि प्रशस्त-निन्दि-तस्वार्थधीहेतुत्वेन तत्परमेव, तच्च ज्ञानं प्रशस्ते सर्वः प्रवर्त्तते निन्दिताच्च निवर्त्तते इति स्वविषये प्रवृत्ति-

---

शाब्दबोध एव नोत्पद्यते किन्तु पदार्थोपस्थितिमात्रमिति लाक्ष-णिकस्याननुभावकत्ववादिनां प्राचां निगर्भः[१]। ननु गङ्गादिलाक्ष-णिकपदस्यापि तीराद्यनुभवजनकपदार्थोपस्थितिद्वारा तद्गोचरप्रयत्न-जनकत्वमस्त्येव, पदार्थोपस्थितिर्गङ्गादिपदादेव, शाब्दानुभवजनकत्वं पुनर्न तस्य किन्तु तत्समभिव्याहृतशक्तपदस्येत्येव प्राचीनसिद्धान्ता-दित्यस्वरसादाह, 'काव्यादेरिति', 'स्वरूपाख्यानमात्रपरत्वेनापीति[२] तद्गोचरज्ञानमात्रजनकत्वेनापीत्यर्थः, मात्रपदात् प्रयत्नव्यवच्छेदः, 'पर्य्यवसानाच्च' तत्परत्वाच्चेत्यर्थः, इदमुपलक्षणं विध्यादेरपि इष्टसा-धनत्वादिपरत्वं न स्यात् तद्गोचरप्रयत्नाजनकत्वादित्यपि द्रष्टव्यं। नन्वेवं परिणतिसुरसमाम्रफलमित्यादि प्रशंसा-निन्दावाक्यं प्रवृत्ति-निवृत्तिपरमिति व्यवहारो न स्यात् तस्य प्रवृत्ति-निवृत्तिगोचर-ज्ञानाजनकत्वादित्यत आह, 'तच्चेति, 'ज्ञानं' प्रशस्त-निन्दितस्वार्थ-ज्ञानं, 'प्रशस्ते' प्रशस्तत्वेन ज्ञाते, 'निन्दितात्' निन्दितत्वेन ज्ञातात्, 'तत्परमुच्यत इति प्रशंसा-निन्दावाक्यं प्रवृत्तिनिवृत्तिपरमुच्यत-

---

(१) निष्कर्ष इति ख०। निगर्व इति क०।

(२) स्वरूपाख्यानमात्रेतीति ख०।

निवृत्तौ जनयतीति तत्परमुच्यत इति चेत्। न। गौण-लाक्षणिकयोरननुभावकत्वात् तद्‌बुद्धिजनने तत्परत्वमित्यन्योन्याश्रयाच्च। तज्जननयोग्यत्वमिति चेत्, तर्ह्येकचोच्चारणे नानार्थे नानार्थपरत्वं लक्षणायाञ्च मुख्यार्थपरत्वं स्यात् योग्यतायाः सत्त्वात्। नापि तत्-प्रतिपाद्यकत्वं, तात्पर्य्यं विना न तथेत्यन्योन्याश्रयात्।

---

इत्यर्थः, तथाच तत्परत्वव्यवहारोभाक्त इति भावः। 'गौण-लाक्षणिकयोरिति गौण-तदितरलाक्षणिकयोरित्यर्थः, गो-वृषावानयेत्यादाविव सादृश्यसम्बन्धेन लक्षणा गौणीवृत्तिः यथा चन्द्रपदस्य मुखे, 'अननुभावकत्वादिति। यद्यपि तस्याननुभावकत्वेऽपि पदार्थोपस्थितिमादाय लक्षणसाम्राज्यं, तथापि लक्षणे बुद्धिपदमनुभवपरमित्यभिप्रायात्[१]। यद्वा 'अननुभावकत्वात्' संसर्गज्ञानाजनकत्वात्, तथाच तयोः संसर्गपरत्वं न स्यादिति भावः। एवमग्रेऽपि, 'तद्‌बुद्धिजनने' तदनुभवोपधाने, 'तत्परत्वं' तत्परत्वज्ञानं, लक्षणे बुद्धित्वेन प्रवेशे अन्योन्याश्रयोऽपि संसर्गमादाय बोध्यः अन्यथा पदार्थोपस्थितिं प्रति तात्पर्य्यज्ञानस्याहेतुतया तामादायैवान्योन्याश्रयपरीहारादित्यवधेयं, एवमग्रेऽपि सर्व्वत्र बोध्यं। 'एकत्रोच्चारण इति एकमात्रप्रतीतीच्छयोच्चारण इत्यर्थः, 'लक्षणायाञ्चेति वक्तुर्लक्षणीयमात्रप्रतीतीच्छायाञ्चेत्यर्थः, 'तत्प्रतिपाद्यकत्वमिति स्वजन्यप्रतिपत्ति-

---

(१) इति भाव इति ख०।

प्रशंसा-निन्दावाक्यस्य[१] प्रवृत्त्याद्यप्रतिपादकत्वात् ला-क्षणिकस्याप्रतिपादकत्वाच्च। अथ गङ्गापदं स्वार्था-विनाभावि तीरं प्रतिपादयत्तत्परमिति चेत्। न।

---

विषयताकत्वमित्यर्थः, विशेषण-विशेष्यभावभेदाच्च पूर्व्वतो भेदः अन्यत् सर्व्वं पूर्व्ववत्। 'प्रवृत्त्यादीति, तथाच तत्परत्वव्यवहारो न स्यादिति भावः। 'अप्रतिपादकत्वात्' अननुभावकत्वात्, 'स्वार्थावि-नाभावीति स्वार्थाविनाभावसम्बन्धेन तीरं प्रतिपादयदित्यर्थः, इदञ्च तादात्म्यसम्बन्धावच्छिन्नस्वार्थाविनाभावरूपशक्यसम्बन्ध एव लक्षणा न तु सम्बन्धसामान्यमिति प्राचीनमतानुसारेण, तथाच तत्प्रति-पत्त्यनुकूलसम्बन्धवत्त्वं तत्परत्वं, सम्बन्धः शक्तिर्लक्षणा च, पद-पदार्थ-सम्बन्धग्रह एव पदार्थस्मृतिद्वारा संसर्गप्रतिपत्त्यनुकूल इति संसर्ग-मादायापि नाव्याप्तिरिति भावः। 'तेन विनेति स्वार्थाविनाभावेन विनेत्यर्थः। ननु मञ्चसम्बन्धी पुरुषस्तादात्म्येन मञ्चव्याप्य एव एवं पुरुषान्तरमपि तादात्म्येन येन केनचित् सम्बन्धेन मञ्चव्याप्यमेव स्वार्थाविनाभावस्य लक्षणात्वे व्याप्यदिशि तादात्म्यसम्बन्धनियमेऽपि व्यापकदिशि सम्बन्धानियमादित्यरुचेराह, 'गङ्गादिपदमिति गङ्गा-दिपदं मत्स्यादिपरं तीरपरञ्च मुख्ये स्यादिति योजना, 'मुख्ये' मुख्यमात्राभिप्राये मुख्यार्थप्रतीतीच्छयोच्चारणे इति यावत्, 'मत्स्या-दीत्यादिना तीरेतरपरिग्रहः, तीरस्य पृथगुपादानात्, 'अविना-भावस्य' स्वार्थाविनाभावस्य, इदमुपलक्षणं सर्वस्यैव सर्व्वदा सर्व्वपरत्वं

---

(१) प्रशंसादिवाक्यस्येति ख०।

मञ्चाः क्रोशन्तीत्यत्र तेन विनापि पुरुषे तात्पर्य्यात् गङ्गादिपदं मत्स्यादिपरं मुख्ये तीरपरञ्च स्यात् अविनाभावस्य तादवस्थ्यात्। मुख्ये बाधके सतीति चेत्, तर्हि मुख्यार्थपरतैव न स्यात् न स्याच्च गच्छ गच्छसीत्यत्र गमनाभावपरत्वं। उच्यते। तत्प्रयोजनकत्वं तत्परत्वं तदर्थस्य प्रतीतिः प्रवृत्ति-निवृत्ती च,

---

स्याल्लक्षणाया अव्यावर्त्तकत्वादित्यपि बोध्यं। प्रकृतातिव्याप्तिवारक-विशेषणमाशङ्कते, 'मुख्ये बाधके सतीति मुख्याभिप्राये बाधके सतीत्यर्थः, मुख्यार्थप्रतीतीच्छयानुच्चरितत्वे सतीति यावत्. 'तर्हीति, इदमुपलक्षणं तीरप्रतीतीच्छयोच्चारणे मत्स्य-ग्टहादिपरं स्यात् येन केनचित् सम्बन्धेनाविनाभावस्य तत्रापि सम्भवादित्यपि बोध्यं। 'गच्छ गच्छसीत्यत्रेति। गच्छ गच्छसि चेत् कान्त पन्थानः सन्तु ते शिवाः। ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥ इति विदेशगमनोद्यतं भर्त्तारं प्रति उत्कण्ठितायाः प्रियाया वाक्य-इत्यर्थः, 'गमनाभावपरत्वमिति व्यञ्जनया गमनाभावपरत्वमित्यर्थः, मुख्यार्थाभिप्रायाभाववत्त्वविरहादिति भावः। श्लोकार्थस्तु हे कान्त त्वं गच्छसि चेत् गच्छ ते तव पन्थानः शिवाः कल्याणरूपाः सन्तु किन्तु ममापि जन्म तत्रैव भूयाद्यत्र भवान् गत इति गमिष्य-तीत्यर्थे अत्यन्तमुत्कण्ठितत्वात् करणापाटवेन तथाभिधानं तस्मा-द्भवद्देशान्तरगमनानन्तरमेव मम मरणं भविष्यतीति त्वया न गन्तव्यमिति व्यङ्ग्यार्थः। 'तदर्थस्येति 'तत्प्रयोजनकत्वमित्यत्र तच्छ-

प्रयोजनत्वञ्च न साध्यत्वं अन्योन्याश्रयात्। नापि प्रतिपाद्येच्छाविषयत्वं, यस्य यदिच्छाविषयः तं प्रति तत्परत्वापत्तेः। तदर्थसाध्यत्वेन इच्छानियम इति चेत्। न। इह धूम इत्यत्र जन्य-ज्ञाप्यभेदेन साध्यस्य बहु-

---

ब्दार्थस्येत्यर्थः, 'साध्यत्वं' उपधायकत्वं, 'अन्योन्याश्रयात्' उक्तान्योन्याश्रयतादवस्थ्यात्, 'प्रतिपाद्येति तद्गोचरप्रतिपाद्येच्छाविषयत्वं तत्परत्वमित्यर्थः, 'प्रतिपाद्यः' श्रोता, भवति च अस्माच्छब्दादेतत्प्रतीतिर्भवत्विति प्रतीतिगोचरेच्छायाः शब्दोऽपि विषय इति भावः। 'यस्येति, श्रोतुः पुरुषस्येति शेषः, 'यदिच्छाविषयः' यद्यद्वस्तुशब्दगोचरसमूहालम्बनेच्छाविषयः, 'तं प्रति' तत्पुरुषं प्रति, 'तत्परत्वापत्तेरिति तत्तद्वस्तुपरत्वापत्तेरित्यर्थः। 'तदर्थसाध्यत्वेनेति तत्तच्छब्दार्थविशेष्यकस्वसाध्यत्वप्रकारकत्वेनेत्यर्थः, स्वपदं शब्दपरं, तथाच स्वसाध्यत्वप्रकारकतद्गोचरेच्छाविषयत्वं तत्परत्वं, तच्छब्दार्थः 'प्रतीतिः प्रवृत्ति-निवृत्ती चेत्युक्तमेव, भवति चास्माच्छब्दादमुकगोचरप्रतीतिर्भवतु अमुकगोचरप्रवृत्त्यादिर्वा भवत्वितीच्छा प्रतीति-प्रवृत्त्यादौ शब्दसाध्यत्वप्रकारिका साध्यत्वस्य पञ्चम्यर्थत्वादिति भावः। 'इह धूम इतीति इह धूमशब्दो धूम-तत्प्रवृत्तिपर इतिवाक्यस्यैकदेशोत्कीर्त्तनं, तथाच इह धूमशब्दो धूम-तत्प्रवृत्तिपर इत्यत्रेत्यर्थः, 'साध्यस्य' साध्यपदार्थस्य, 'वाक्यभेदेति एकस्यैव परशब्दस्य विभिन्नप्रकारकज्ञानजनकत्वप्रसङ्गादित्यर्थः, धूमपर इत्यनुरोधात् ज्ञाप्यत्वप्रकारकेच्छाया अभिधेयत्वात्

विधतया वाक्यभेदप्रसङ्गात् पुमिच्छाया नियन्तुमशक्यत्वात्, किन्तु प्रतिपादकेच्छाविषयत्वं तत्परत्वं, यः शब्दः वक्त्रा यदिच्छया प्रयुक्तः स तत्परः, सा चेच्छा

---

धूमस्य धूमपदजन्यत्वाभावेन स्वजन्यत्वप्रकारकेच्छायास्तत्र बाधितत्वात् धूमप्रवृत्तिपर इत्यनुरोधाच्च स्वजन्यत्वप्रकारकेच्छाया अभिधेयत्वात् धूमगोचरप्रवृत्तेर्धूमपदज्ञाप्यत्वाभावेन ज्ञाप्यत्वघटितस्य तत्र बाधितत्वादिति भावः। यद्वा 'वाक्यभेदप्रसङ्गात्' परशब्दज्ञानभेदप्रसङ्गात्, परशब्दस्यावृत्तिप्रसङ्गादिति यावत्, सकृदुच्चरितेत्यादिव्युत्पत्तेरिति भावः। नन्वित्थं वाक्यभेदे इष्टापत्तिरेव अन्यथा सिद्धान्तेऽप्यगतिरित्यरुचेर्दोषान्तरमाह, 'पुमिच्छाया इति श्रोतुरिच्छाया इत्यर्थः. तथाच यत्र वक्तुरेकगोचरप्रतीताविच्छा श्रोतुश्च तद्विरुद्धप्रतीतौ तत्र विरुद्धप्रतीतिपरत्वप्रसङ्ग इति भावः। 'प्रतिपादकेति, 'प्रतिपादकः' वक्ता, 'इच्छाविषयत्वं' जनकतासम्बन्धेन तत्प्रकारकेच्छाविशेष्यत्वं जन्यतासम्बन्धेन तद्विशेष्यकेच्छाप्रकारत्वं वा, एतदेव विवृणोति, 'यः शब्द-इति, 'यदिच्छया' जनकतासम्बन्धेन यत्प्रकारकेच्छया जन्यतासम्बन्धेन यद्विशेष्यकेच्छया वा, 'प्रयुक्तः' अनुसंहितः, तथाच जनकतासम्बन्धेन तत्प्रकारकवक्त्रिच्छाविशेष्यत्वं जन्यतासम्बन्धेन तद्विशेष्यकवक्त्रिच्छाप्रकारत्वं वा तत्परत्वं विनिगमकाभावात्, भवति चायं शब्दोऽमुकप्रतीतिमान् भवत्वितीच्छाया जनकतासम्बन्धेन प्रतीतिप्रकारिकायाः[१]

---

(१) अयं शब्दः अमुकप्रतीतिमान् भवत्विति जनकतासम्बन्धेन प्रतीतिप्रकारकेच्छाया इति ख०।

प्रतिपाद्यधी-प्रवृत्ति-निवृत्तिविषयेति तत्परत्वं। नानार्थात् श्लिष्टादनेकपदार्थान्वितैकक्रियापदात् मुख्य-लाक्षणिकपराद्वावृत्त्या क्रमेणानेकपदार्थज्ञानं न त्वे-

---

विशेष्यः शब्दः अमुकगोचरप्रतीतिरेतच्छब्दाज्जवलितीच्छाया जन्यतासम्बन्धेन प्रतीतिविशेष्यिकायाश्च प्रकारः शब्द इति प्रतीतिपरत्वं शब्दस्य, एतेन प्रवृत्त्यादिपरत्वमपि व्याख्यातं, किन्तु प्रतीतिपरत्वमेव च शाब्दबोधोपयोगि न तु प्रवृत्त्यादिपरत्वं अर्थपरत्वव्यवहारस्तु तद्गोचरप्रवृत्तिपरत्वनिबन्धनोभाक्त इति भावः। नन्वेवं वक्तृवाक्यस्य श्रोतुः शाब्दबोधप्रवृत्त्यादिपरत्वं न स्यात् वक्तुरिच्छायाः श्रोतृशाब्दबोधाद्यविषयकत्वादित्यत आह, 'सा चेति वक्तृनिष्ठा चेत्यर्थः, 'प्रतिपाद्यः' श्रोता, 'विषया' विषयापि। नन्वेवं नानार्थादौ एकदा वक्तुरनेकप्रतीतीच्छया अनेकार्थप्रतीतिप्रसङ्ग इत्यत आह, 'नानार्थादिति, 'नानार्थात्' हर्य्यादिपदात्, 'श्लिष्टात्' श्वेतो धावतीत्यादौ श्वेतादिपदात्, 'अनेकेति घटं पटञ्चानयेत्यादिवाक्यादित्यर्थः, 'मुख्येति मुख्य-लाक्षणिकबोधकाद्गङ्गायां घोष-मत्स्यौ स्त इत्यादौ गङ्गादिपदादित्यर्थः, 'आवृत्त्येति तत्स्थानस्थितस्य पदस्य पुनरनुसन्धानमावृत्तिः, नेदीयःस्थलान्तरस्थितस्य पदस्य पुनरनुसन्धानमनुषङ्गः, दवीयःस्थलान्तरस्थितस्य पुनरनुसन्धानमनुवृत्तिः, सा च सिंहगुहावलोकन-मण्डूकप्लुति-गङ्गाश्रोतोवदिति त्रिधा, अश्रुतशब्दानुसन्धानमध्याहार इति बोध्यं[१]। 'सकृदुच्चरित-

---

(१) इति ध्येयमिति क०।

कदैव, सकृदुच्चरितस्य सकृदर्थपरत्वनियमेनैकवोच्चारणे अनेकार्थपरत्वाभावादिति सकलतान्त्रिकैकवाक्यतया[१] वदन्ति।

वयन्तु ब्रूमः[२]। अनेकपदार्थप्रतीतीच्छया एकमुच्चारणं[३] भवत्येव पुमिच्छायानियन्तुमशक्यत्वात्।

स्येति एकपदविषयकैकज्ञानस्येत्यर्थः,'सकृदर्थपरत्वनियमेन' सकृदर्थमात्रानुभवजनकत्वनियमनिश्चयेन, अनेकार्थाननुभावकत्वनियमनिश्चयेनेति यावत्, "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति सिद्धान्तादिति भावः। 'एकवोच्चारणे' एकस्मिन् वाक्ये, 'अनेकार्थपरत्वाभावादिति एकदा अनेकार्थप्रतीतिपरत्वाभावादित्यर्थः, उक्तनियमनिश्चयरूपविशेषदर्शनेन वक्तुरेकदा अनेकार्थप्रतीतीच्छानुत्पत्तेरिति भावः। न चैकदा सूर्य्य-चन्द्रोभयादिप्रतिपादकपुष्पवन्तादिपदज्ञाने कृति-वर्त्तमानत्वैकत्वादिप्रतिपादके लड़ादिपदज्ञाने कृतिसाध्यत्वेष्टसाधनत्वादिप्रतिपादके विध्यादिपदज्ञाने कर्म्मत्वैकत्वादिप्रतिपादके द्वितीयादिपदज्ञाने द्विश्यादिपदज्ञाने चायं नियमोव्यभिचारीति वाच्यं। यद्यत्पदे एकैकपदमात्रविषयकज्ञानस्यापि नानार्थविषयकानुभवजनकत्वमनुभवसिद्धं तदतिरिक्तपदस्थल एव एतन्नियमाभ्युपगमात्, तच्च घटपद-पटपदादिकमेव[४]। न च तथापि घटौ घटा इत्यादौ एक-

(१) सकलतान्त्रिकाणामेकवाक्यतयेति क०।

(२) अत्र ब्रूम इति ख०।

(३) अनेकार्थप्रतीतीच्छया एकोच्चारणमिति क०।

(४) घटपद-पटपदाद्यपदादिकमेवेति क०।

यदि च तदुच्चारणं नानेकार्थपरं तदावृत्तिरपि न स्यात् तात्पर्य्यनिर्वाहार्थमावृत्तिकल्पनात्। अन्यथैकपरेऽपि तदापत्तेः। अतएव तदुच्चारणस्य उभय-

घटपदमात्रविषयकज्ञानेनैव नानाघटप्रत्यायनाद्व्यभिचार इति वाच्यं। अतएव तत्र सरूपैकशेषाभ्युपगमात् तथाच लुप्तघटपदप्रतिसन्धानादेव घटान्तरबोधः सरूपैकशेषं विना घटादिपदाद्द्विवचनादितो नानाघटविषयकबोधस्त्वप्रसिद्ध एवेति प्राचीनमतनिगर्व्वः।

'नियन्तुं' विशेषदर्शनेन निवर्त्तयितुं, तस्येच्छाप्रतिबन्धकत्वे मानाभावादिति भावः। इदमुपलक्षणं विशेषदर्शनस्यासार्व्वत्रिकत्वाच्चेत्यपि बोध्यं। 'तदावृत्तिरपि न स्यादिति तदावृत्तिकल्पनापि न स्यादित्यर्थः, 'तात्पर्य्येति, 'तात्पर्य्यनिर्व्वाहार्थं' तात्पर्य्यविषयान्वयबोधनिर्व्वाहार्थं, 'आवृत्तिकल्पनादिति त्वया आवृत्तिकल्पनादित्यर्थः, 'अन्यथा' तात्पर्य्यविषयान्वयानुपपत्तिं विनाप्यावृत्तिकल्पने, 'एकपरेऽपि' घटोऽस्तीत्यादावपि, 'तदापत्तेः' तदावृत्तिकल्पनापत्तेः,[१] इदमुपलक्षणं अनेकार्थे तात्पर्य्यासत्त्वे आवृत्त्यैवाग्रे कथमन्वयबोधः आवृत्त्या बोधनीये अर्थे वक्तुस्तात्पर्य्याभावात्, किञ्च वक्तुस्तादृशाभिप्रायाभावेऽपि यत्र विशेषादर्शनात् श्रोतुरुभयपरत्वभ्रमस्तत्र युगपदुभयानुभवो दुर्व्वार इत्यपि द्रष्टव्यं। ननु अनेकार्थतात्पर्य्यसत्त्वेऽपि न युगपदनेकार्थानुभवः एकैकमात्रविषयकशाब्दबुद्धित्वस्य शब्दजन्यतावच्छेदकत्वादित्यत आह, 'अतएवेति यत-

(१) तदावृत्तिकल्पनापत्तेरिति ख०।

परतायां नावृत्तिकल्पनं तस्मात्तुल्यवदनेकार्थोपस्थितौ तात्पर्य्यादिज्ञाने युगपदनेकान्वयबोधो भवति सामग्र्यास्तुल्यत्वात् प्रथममेकस्यान्वयबोधो न तदन्यस्येति[१] नियन्तुमशक्यत्वाच्च। अथ विवादाध्यासितमक्षपदोच्चारणं एकपदैकशक्तिविषयमेकमेवानु-

एव न तादृशकार्य्य-कारणभावोऽत एवेत्यर्थः, 'तदुच्चारणस्येति एकैकस्यैव लड़ादिपद-पुष्पवन्तादिपदस्येत्यर्थः, 'उभयपरतायामिति कृति-वर्त्तमानत्व-सूर्य्य-चन्द्रोभयादिपरतायाञ्चे इत्यर्थः, 'तुल्यवदिति युगपदित्यर्थः, 'सामग्र्यास्तुल्यत्वादिति एकदा सर्वेषामेवानुभावकसामग्रीसत्त्वादित्यर्थः। ननु लड़ादिपद-पुष्पवन्तादिपदातिरिक्तस्थले तादृशकार्य्य-कारणभाव इत्यत आह, 'प्रथममिति। 'अथेति एकमात्रानुभवजनकतयोभयवादिसिद्धे अक्षपदोच्चारणेंऽशतः सिद्धसाधनवारणाय 'विवादाध्यासितमिति विवादाध्यासितत्वञ्चानेकार्थतात्पर्य्याकाङ्क्षादिज्ञानसमवहितत्वं,[२] पदज्ञानस्यैवानुभावकतया बाधवारणाय 'उच्चारणमिति, 'उच्चारणं' ज्ञानं, पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाच्चाक्षेणाक्षं पश्यतीत्यादौ समूहालम्बनाक्षपदद्वयानुसन्धाने नांशतो बाधः, 'एकपदेति, सर्व्वस्यैव पदज्ञानस्यान्वयप्रतियोगिपदार्थान्तरविषयकानुभवजनकत्वादप्रसिद्धिवारणाय 'एकशक्तिविषयमिति। यद्यप्येकशक्तिविषयत्वस्य केवलान्वयितया तद्दोष-

(१) प्रथममेकस्यान्वयबोधोऽनन्तरं तदन्यस्येतीति क०।

(२) विवादपदमिति विवादपदत्वञ्चानेकार्थतात्पर्य्याकाङ्क्षादिज्ञानसमवहितत्वमिति ख०, ग०।

तादवस्थ्यं, तथाप्येकशक्तिविषयत्वं स्वविषयाद्यपदनिष्ठशक्तिविषयत्वं, स्वपदं पचीभूतज्ञानपरं, विषयत्वञ्च विशेष्यत्वं, अन्यथा जाति-तत्-संसर्गयोरप्यनुभवजननादप्रसिद्ध्यापत्तेः, सिद्धसाधनवारणाय 'एकमे-वेत्यवधारणं, अन्वयप्रतियोगिपदार्थान्तरं जात्यादिकञ्चादायाप्रसि-द्धितादवस्थ्यात् 'एकमिति, नानार्थविषयकस्मृतिजननाद्बाधः स्यादित्यतोऽनुभवत्वेनोपादानं जनकत्वञ्च फलोपधायकत्वं, स्वरूप-योग्यत्वे साध्ये बाधापत्तेः, तेन स्वविषयाद्यपदनिरूपितशक्तिविशे-ष्यैकमात्रानुभवोपधायकत्वं साध्यं पर्य्यवसितं। यद्यपि तादृशैकमा-त्रानुभवोपधापयकत्वं न तादृशैकभिन्नाननुभावकत्वे सति तादृशै-कानुभावकत्वं, अन्वयप्रतियोगिपदार्थान्तरं जात्यादिकञ्चादायाप्रसि-द्धितादवस्थ्यात्, तथापि तादृशशक्तिविशेष्यद्वयाननुभावकत्वे सति तादृशशक्तिविशेष्यानुभावकत्वं बोध्यं, तच्च स्वविषयाद्यपदनिष्ठशक्ति-विशेष्यं यत्स्वजन्यशाब्दबोधविषयस्तन्निष्ठान्योन्याभावाप्रतियोगिस्वज-न्यशाब्दबोधविषयस्वविषयाद्यपदनिष्ठशक्तिविशेष्यकत्वं, न तु तादृश-शक्तिविशेष्यद्वयविषयकानुभवाजनकत्वे सति तादृशशक्तिविशेष्यानु-भवजनकत्वं, क्रमिकनानाविषयकानुभवजनकत्वमादायार्थान्तरापत्तेः, अन्योन्याभावस्य प्रतियोग्यवृत्तित्वं बोध्यः, तेनोभयान्योन्याभावादिक-मादाय न दोषः(१)। यदि चाकाशादिपदात्काश्रयत्व-खाश्रयत्वा-दिना नानाशक्तिग्रहानन्तरं नैकदोभयप्रकारेणान्वयबोधस्तदा वि-शेष्यपदस्थाने प्रकारपदं निवेश्यापि साध्यान्तरं बोध्यं, अत्रैव सत्यन्त-

(१) साध्याप्रसिद्धिरूपो दोषः।

भावयति एकपदोच्चारणत्वात् घटपदोच्चारणवत् ।

---

पदे वा[१] तस्यापि निवेशः कार्य्य इति । 'एकपदोच्चारणत्वादिति एकाद्यपदविषयकज्ञानत्वादित्यर्थः, अन्यथा साध्ये विशिष्याद्यपदोपादानाद्व्यभिचारापत्तेः, साध्ये हेतौ चाद्यपदस्थले यत्तत्पदं निवेश्य सामान्यतोव्याप्तिरवसेया, तेन घटपदोच्चारणस्य न दृष्टान्तत्वविरोधः । अक्षेणाक्षं पश्यतीत्यादौ समूहालम्बनाद्यपदद्वयानुसन्धाने व्यभिचारवारणाय एकेत्याद्यपदविशेषणं, पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाच्च भागासिद्धिर्न दोषाय । यद्यप्येकाद्यपदविषयकत्वं नाद्यपदद्वयाविषयकत्वे सत्यद्यपदविषयकत्वं,[२] अक्षेण विभीतकं पश्येत्यादौ विभीतकपदाद्यपदगोचरसमूहालम्बने व्यभिचारात्, नाप्यद्यपदसमानशक्यतावच्छेदककपदद्वयाविषयकत्वे सत्यद्यपदविषयकत्वं,[३] यत्र क्रमिकाद्यपद-विभीतकपदज्ञानाभ्यां क्रमिकविभिन्नाद्यपदज्ञानाभ्यां वा समूहालम्बननानार्थविषयकशाब्दबोधस्तत्राद्यपदज्ञाने व्यभिचारापत्तेः । तथापि स्वविषयाद्यपदनिष्ठान्योन्याभावप्रतियोगियदद्यपदसमानशक्यतावच्छेदककं पदं तद्विषयकज्ञानान्यविशिष्टत्वे सत्यद्यपदशक्तिविशेष्यनिष्ठसमभिव्याहृतपदान्तरलक्षणाज्ञानाविशिष्टज्ञानत्वं विवक्षितं, चरमविशिष्टान्तोपादानादक्षेण घटं पश्येत्यादौ घटपदस्याक्षे लक्षणादशायां घटपदाद्यपदगोचरसमूहालम्बने

---

(१) अत्रैव वा सत्यन्तपदेनेति क० ।

(२) अद्यपदविषयकज्ञानत्वमिति ख० ।

(३) अद्यपदविषयकज्ञानत्वमिति ख० ।

न व्यभिचारः, अन्योन्याभावस्य प्रतियोग्यवृत्तित्वं बोध्यः,[१] वैशिष्ट्यञ्च स्वाव्यवहितकालावच्छेदेनैकात्मवृत्तित्वं, स्वाव्यवहितत्वञ्च स्वक्षणपूर्वोत्तरक्षणत्रयसाधारणं,[२] तेन यत्रानुभवसामग्र्यादिप्रतिबन्धकवशेन विनश्यदवस्थाक्षपदस्मरणाद्विभीतकादिपदस्मृत्यात्मिकाक्षपदान्तरस्मृत्यात्मिका वा अक्षपदार्थस्मृतिस्ततोविभीतकादिपदार्थस्मृतिस्ततो मिलित्वा शाब्दबोधोपधानं तत्राक्षपदज्ञाने न व्यभिचारः, स्वभिन्नाक्षपदज्ञानाविशिष्टत्वेनापि विशेषणीयं, तेनैकस्यैवाक्षपदस्य क्रमेणावृत्त्या यत्र नानार्थविषयकः शाब्दबोधस्तत्र न व्यभिचारः। न च तथापि अक्षे अक्षाणीत्यादौ व्यभिचारस्तत्र एकेनैवाक्षपदज्ञानेन नानाक्षबोधादिति वाच्यं। तत्र स्वरूपैकशेषाभ्युपगमेन लुप्ताक्षपदस्मरणादेव नानाक्षबोधात् स्वरूपैकशेषं विना नानाक्षबोधस्यासिद्धेः। न च घटपदोच्चारणस्य दृष्टान्तत्वानुरोधेन यत्तच्छ्यां सामान्यतोव्याप्तिरेवादरणीया तथाच चन्द्र-सूर्य्याद्युभयोपस्थापकपुष्पवन्तादिपदज्ञाने करणत्वैकत्वादिबोधकतृतीयादिविभक्तिज्ञाने च व्यभिचारइति वाच्यं। तत्तत्पदाविषयकत्वे सतीत्यनेनापि ज्ञानविशेषणात्। यदि च घटपदोच्चारणं व्यतिरेकेण दृष्टान्तः अन्वयदृष्टान्तस्य एकमात्रबोधकतयोभयवादिसिद्धमक्षपदज्ञानं तदा तद्विशेषणानुपादानेऽपि न क्षतिः। न च तथापि कारणान्तरविलम्बेन यत्र फलविल-

---

(१) अन्यथा हेत्वप्रसिद्धिरिति भावः।

(२) तथाचात्र अव्यवहितत्वं स्वक्षणध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वप्रागभावाधिकरणसमयप्रागभावानधिकरणत्वं।

**यद्वा एकत्वोच्चारणे नानाशक्त्या नानार्थाननुभावकं**

---

न्वस्तत्र व्यभिचार इति वाच्यं। अक्षपदवाच्यनिष्ठतात्पर्य्याकाङ्क्षादि-
ज्ञानसमवहितत्वेनापि विशेषणादिति भावः। 'घटपदोच्चारणवदिति
एकपरघटपदज्ञानवदित्यर्थः, नानापरघटपदज्ञानस्य पक्षसमत्वात्,
'यद्वेति, अत्राक्षपदमेव पक्षः, साध्ये च 'नानार्थेति स्वरूपकथनं, नाना-
शक्त्याननुभावकत्वमात्रं विवक्षितं, तत्राननुभावकत्वमात्रस्य साध्यत्वे
अनुभावकेऽंशतोबाध-व्यभिचारावतः 'नानाशक्त्येति स्वीयनानाशक्त्ये-
त्यर्थः, अन्यथा सर्वस्यैव पदस्यान्वयप्रतियोगिपदार्थान्तरविषयकानु-
भवजनकत्वेन तद्दोषतादवस्थ्यात्, शक्तिपदं शक्यतावच्छेदकपरं,
तेनेश्वरेच्छारूपायाः शक्तेरेकत्वेऽपि न क्षतिः, प्रकारत्वं तृतीयार्थः.
तथाच स्वीयनानाशक्यतावच्छेदकप्रकारकानुभवजनकत्वाभावः साध्यः,
तथाच यावन्ति अक्षपदशक्यतावच्छेदकानि प्रातिस्विकरूपेणोपादाय
प्रत्येकं स्वशक्यतावच्छेदकीभूततत्प्रकारकानुभवजनकत्वे सति तदित-
रस्वशक्यतावच्छेदकप्रकारकानुभवजनकत्वाभावकूटः साध्यः समूहाल-
म्बनरूपैवानुमितिः, तादृशविशिष्टाभावकूटत्वमेव वा साध्यतावच्छेद-
कमिति तु निष्कर्षः। तादृशानुभवजनकत्वञ्चाक्षेणाक्षं पश्येत्यादौ
अक्षपदद्वयविषयकसमूहालम्बने प्रसिद्धं, एकस्यैवाक्षपदस्यावृत्त्यादि-
क्रमेणानेकार्थबोधकत्वात् ज्ञानकारणतावादिनये पदस्याननुभावक-
त्वाच्च बाध-व्यभिचार-सिद्धसाधनापत्तिरित्यत उक्तं 'एकत्वोच्चारण-
इति स्वमात्रविषयकज्ञानसामान्ये इत्यर्थः,[१] तादृशविशिष्टाभाव-

---

[१] स्वमात्रविषयकज्ञानमादायेत्यर्थ इति ख०, ग०।

नानार्थत्वात् एकपरनानार्थपदवदिति चेत् । न ।
अनेकार्थानुभवसामग्रीसत्त्वेन बाधितत्वात् सामग्री-
विरहस्योपाधित्वाच्च । अतएवाक्षमानयेत्युक्ते भिन्न-

वत्स्वमात्रविषयकज्ञानसामान्यकमिति तु फलितार्थः, सामान्यपदो-
पादानाच्च तादृशयत्किञ्चिदेकज्ञानमादाय नांशतः सिद्धसाधनमर्था-
न्तरं वा, अक्षेणाक्षं पश्यतीत्यादौ समूहालम्बनात्मकपदद्वयानुसन्धा-
नमादाय व्यभिचारवारणाय स्वमात्रविषयकेति, स्वमात्रविषयकत्वन्तु
स्वशक्तिविशेष्ये स्वनिष्ठान्योन्याभावप्रतियोगिपदवृत्तिज्ञानाविशिष्टत्वं,
तेनाक्षेण विभीतकं पश्येत्यादौ विभीतकपदाक्षपदगोचरसमूहाल-
म्बनमादाय न व्यभिचारः न वा अक्षेण घटं पश्येत्यादौ घटपदस्याक्षे
लक्षणादशायां घटपदाक्षपदगोचरसमूहालम्बनमादाय व्यभिचारः,
अन्यत्सर्वं पूर्ववत् । 'नानार्थत्वादिति यावन्ति अक्षपदशक्यतावच्छेद-
कानि प्रातिस्विकरूपेणोपादाय प्रत्येकं तदवच्छिन्नशक्तिकत्वे सति
तदितरधर्म्मावच्छिन्नशक्तिकत्वं हेतुः, समूहालम्बनः परामर्शः, यत्तद्भ्यां
सामान्यतोव्याप्तिः, पुष्पवन्तादिपदान्यत्वेन विशेषणान्न तत्र व्यभिचारः,
एवं यस्य पदस्य विवक्षितं ज्ञानमप्रसिद्धं तदन्यत्वेनापि विशेषणी-
यमिति भावः । 'सामग्रीविरहस्य' नानार्थानुभवसामग्र्यसमवहित-
त्वस्य[१] । 'अतएवेति एकदा एकस्मात्पदादनेकार्थबोधसामग्रीसत्त्वा-

(१) सामग्रीविरहस्येत्यादिः समवहितत्वस्येत्यन्तः पाठः ख०, ग० पुस्तक-
द्वये नास्ति ।

प्रकरणादिना भिन्ने तात्पर्य्यप्रमायां भ्रमे वा प्रति-
पाद्ययोरेकदैवावृत्तिं विनानेकार्थप्रतीतिर्न तु तत्रैको
विलम्बते, एवं घटं पटं वा आनयेत्यत्रानयनस्योभय-
परत्वे एकदैवान्वयबोधो न त्वावृत्तिः वाक्यभेदस्त्वर्थ-
भेदात् न ज्ञानभेदात्। गङ्गायां जलं घोषश्च प्रति-
वसतीत्यत्र(१) गङ्गापदस्य युगपत्प्रवाह-तीरयोस्तात्पर्य्य-
ग्रहे तयोर्द्वयोरप्येकशोपस्थितौ जल-घोषयोरेकदैवा-
न्वयबोधः। न च युगपद्वृत्तिद्वयापत्तिः, इष्टत्वात्,

देवेत्यर्थः, 'प्रतिपाद्ययोः' अर्थयोः, तथा च यथा नानानुभावकस्य एकदा
नानार्थानुभवस्तथा एकस्यापि अन्यथा बाधकात् एकदा नानार्थान-
नुभावकत्वव्युत्पत्त्या नानापुरुषस्यापि स न स्यादिति भावः। 'आन-
यनस्य' आनयनप्रतिपादकपदस्य,(२) 'उभयपरत्वे' उभयव्यक्तिपरत्व-
ग्रहे। नन्वेवं भिन्नवाक्यताव्यवहारो न स्यादित्यत आह, 'वाक्येति
वाक्यभेदव्यवहारस्त्वित्यर्थः, 'अर्थभेदादिति, न तु ज्ञानभेदादिति
भावः। 'वृत्तिद्वयापत्तिः' वृत्तिद्वयज्ञानस्य शाब्दबोधजनकत्वापत्तिः,
'इष्टत्वादिति मुख्यार्थानुभवसामग्री-लक्ष्यार्थानुभवसामग्र्योः सत्प्र-
तिपक्षवत् परस्परविरोधित्वे मानाभावादिति भावः। नन्वेवं यष्टीः
प्रवेशयेत्यादौ मुख्यार्थान्वयानुपपत्तिविरहकाले लक्ष्यार्थशाब्दबुद्धि-

(१) तिष्ठतीत्यत्रेति ख०।

(२) आनयनस्येत्यत्र आनयनपदस्येति पाठः अस्मल्लब्धमूलपुस्तकत्रये वर्त्तते।

तात्पर्य्याद्धि वृत्तिः, न तु वृत्त्यनुरोधात् तात्पर्य्यं, गौण-लाक्षणिकयोरुच्छेदापत्तेः तात्पर्य्यनिर्वाहार्थं वृत्तित्वेन

दशायां नियमतोमुख्यार्थशाब्दबोधापत्तिः लक्षणायाः शक्यसम्बन्धात्मकत्वेन लक्षणा-लक्ष्यार्थयोरुपस्थितिकाले शक्ति-शक्यार्थयोरवश्यमुपस्थितेरित्यत आह, 'तात्पर्य्याद्धीति तात्पर्य्यज्ञानसहकाराद्धीत्यर्थः, 'वृत्तिरिति, शाब्दबोधोपधायिकेति शेषः, तथाच मुख्यार्थे तात्पर्य्यज्ञानाभावदशायामेव लक्ष्यार्थमात्रशाब्दबोध इति भावः। ननु वृत्तिज्ञानार्थमेव तत्पर्य्यज्ञानस्यापेक्षितत्वादन्यतः सिद्धे वृत्तिज्ञाने तात्पर्य्यज्ञानसत्त्वमकिञ्चित्करमित्यत आह, 'न त्विति, 'वृत्त्यनुरोधात्' वृत्तिज्ञानानुरोधात्, 'तात्पर्य्यं' तात्पर्य्यज्ञानं, अपेक्षितमिति शेषः किन्तु शाब्दबोधहेतुतयेति भावः। शाब्दबोधहेतुत्वे युक्तिमाह, 'गौण-लाक्षणिकयोरिति चन्द्रं पश्य यष्टीः प्रवेशयेत्यादौ मुख्यार्थान्वयानुपपत्तिविरहस्थले गौण-लाक्षणिकार्थशाब्दबोधयोरित्यर्थः, मुख्यार्थानुभवसामग्री-लक्ष्यार्थानुभवसामग्र्योः सत्प्रतिपक्षवत् परस्परविरोधित्ववादिनस्तवेति शेषः, 'उच्छेदापत्तेरिति तात्पर्य्यज्ञानस्य शाब्दबोधाहेतुतया मुख्यार्थे तात्पर्य्यासत्त्वेऽप्युभयानुभवसामग्रीसत्त्वादिति भावः। ननु न भवत्येव तत्र लाक्षणिकार्थशाब्दबोधः किन्तु गङ्गायां घोषइत्यादौ यत्र मुख्यार्थान्वयानुपपत्तिज्ञानं तत्रैव लाक्षणिकार्थबोधइत्यत आह, 'तात्पर्य्यनिर्व्वाहार्थमिति मुख्यार्थबाधस्थले तात्पर्य्यविषयलक्ष्यार्थान्वयबोधार्थमित्यर्थः, 'वृत्तित्वेन' शाब्दबोधकारणीभूतज्ञानविषयसम्बन्धत्वेन, 'तयोः,

तयोः कल्पनात् । मुख्य-लाक्षणिकयोरेकैकमात्रपरत्वे तु युगपद्वृत्तिद्वयविरोधः । अनेकान्वयबोधपरत्वे वृत्तिद्वयविरोधस्य दोषत्वे परिभाषापत्तेः, यत्र मुख्यार्थे शीघ्रत्वेन प्रथममन्वयबोधः अनन्तरं लाक्षणिकान्वयबोधः तत्रावृत्तिरेव तस्मात् युगपत्तात्पर्य्यग्रहे सति नावृत्तिः किन्त्वनेकार्थपरत्वे सत्येव यत्र तात्पर्य्यग्रहक्रमादन्वयबोधक्रमः तत्रावृत्तिः प्रथमोच्चारणस्य पर्य्यवसितत्वादिति । एवञ्च लोके कृतत्वात् वेदेऽपीदं तात्पर्य्यमिति तस्य पौरुषेयत्वं ।

---

गौणी-तदितरलक्षणयोः । 'एकैकमात्रपरत्वे तु' एकैकमात्रपरत्वग्रहे तु, 'वृत्तिद्वयविरोधः' वृत्तिद्वयज्ञानस्य शाब्दबोधजनकत्वाभावः, 'परत्वे' परत्वग्रहे, 'वृत्तिद्वयविरोधस्य' विरोधिवृत्तिद्वयज्ञानस्य, 'दोषत्वे' परस्परफलप्रतिबन्धकत्वाभिधाने, 'परिभाषापत्तेरिति तदभिधानस्य स्वशास्त्रमात्रपरिभाषापत्तेरित्यर्थः, 'शीघ्रत्वेन' प्रथमोपस्थितत्वेन, 'तत्रावृत्तिरेवेति, प्राथमिकपदज्ञानस्य नष्टत्वादिति भावः । 'तात्पर्य्यग्रहक्रमादिति शाब्दसामग्र्यन्तरस्याप्युपलक्षणं, 'प्रथमोच्चारणस्य' प्राथमिकपदज्ञानस्य, 'पर्य्यवसितत्वादिति नष्टत्वादित्यर्थः, 'इदं तात्पर्य्यमिति वक्तुरिच्छागर्भतात्पर्य्यमित्यर्थः, शाब्दप्रयोजकमिति शेषः, 'तस्य' वेदस्य, 'पौरुषेयत्वमिति पुरुषप्रणीतत्वमित्यर्थः, तच्च पुरुषकण्ठादिजन्यत्वं पुरुषप्रयत्नजन्यत्वं वेति भावः ।

नन्वस्तु तात्पर्य्यानुरोधाद्वेदस्य पुरुषप्रणीतत्वं तथापि नित्यज्ञा-

अथ मीमांसकाः यथोच्चारणपूर्व्वकत्वात् उच्चारणं वेदे परतन्त्रं तथा तात्पर्य्यमपि तात्पर्य्यपूर्वकमेवेति

---

नादिमत्प्रणीतत्वन्तु[१] कुतः पूर्व्वपूर्व्वाध्यापकपरम्पराप्रणीतत्वेनैव तदुपपत्तेरित्यभिप्रायेण शङ्कते, 'अथेति, 'मीमांसकाः' ईश्वरस्य वेदकर्तृत्वानभ्युपगन्तृमीमांसकाः, 'उच्चारणपूर्व्वकत्वादिति सजातीयोच्चारणसापेक्षत्वादित्यर्थः, साजात्यञ्च समानानुपूर्व्वीकत्वं, उच्चारणं ज्ञानं, तत्सापेक्षत्वञ्च तज्जन्यवाक्यार्थज्ञानस्य साक्षात्परम्परया वा प्रयोज्यत्वं, 'उच्चारणं वेद इति करणापाटवाद्यजन्यं वेदस्योच्चारणमात्रमित्यर्थः, उच्चारणञ्च तदनुकूलकण्ठाद्यभिघातः तदनुकूलप्रयत्नो वा, 'परतन्त्रमिति सजातीयोच्चारणानपेक्षं यत्तदन्यमित्यर्थः, अन्यथा साध्याविशेषापत्तेः, अयञ्च मीमांसकस्य स्वमते दृष्टान्तः, नैयायिकमते ईश्वरीयवेदोच्चारणस्यैव सजातीयोच्चारणसापेक्षत्वाभावादाक्यार्थज्ञानं ततोवाक्यार्थप्रतीतीच्छा ततोवाक्यार्थप्रतीतिरूपेष्टसाधनताज्ञानाद्वाक्येच्छा ततो वाक्यरूपेष्टसाधनताज्ञानात् कण्ठाद्यभिघातादौ प्रयत्नस्ततः कण्ठाद्यभिघात इति क्रमेणेश्वरीयकण्ठाद्यभिघातादेः तत्प्रयत्नस्य वा तज्जन्यवाक्यार्थज्ञानप्रयोज्यत्वाभावात्। न च परमतेऽपि वाक्यार्थस्मरणाधीनवेदोच्चारणस्य शुकीयवेदोच्चारणस्य च न यथोक्तक्रमेण सजातीयोच्चारणजन्यवाक्यार्थज्ञानप्रयोज्यत्वमिति वाच्यं। स्मृतिस्थलेऽपि स्मरणस्यैवावश्यं साक्षात्परम्परया सजातीयोच्चारण-

---

(१) ईश्वरप्रणीतत्वन्त्विति ख०।

परतन्त्रं न तु कस्यापि प्रथमं तात्पर्य्यं अनादित्वात् पूर्वपूर्ववाक्यार्थज्ञानेच्छयोच्चारणमुपजीव्याग्रिमाग्रिमस्य तदिच्छयोच्चारणात् तदिच्छया तदुच्चारणमेव हि तत्-परत्वं लोक-वेदसाधारणं, सा चेच्छा स्वतन्त्रा परतन्त्रा

---

जन्यवाक्यार्थानुभवाधीनत्वेन परम्परया प्रयोज्यत्वसम्भवात् शुकस्या-ध्यानुपूर्वीज्ञानानुपूर्वीगोचरेच्छादिक्रमेण वेदोच्चारणं आनुपूर्वीज्ञान-वत्शिक्षकस्यानुपूर्वीप्रयोगाधीनं, तस्यानुपूर्वीप्रयोगश्चावश्यं साक्षात्प-रम्परया सजातीयोच्चारणजन्यवाक्यार्थज्ञानाधीन इति तत्रापि परम्परया प्रयोज्यत्वसम्भवादिति भावः। 'तात्पर्य्यमपी'ति वेदगोचर-तात्पर्य्यमपीत्यर्थः, 'तात्पर्य्यपूर्व्वक'मिति सजातीयगोचरवक्तृतात्पर्य्य-ज्ञानसापेक्षमित्यर्थः, सापेक्षत्वञ्च पूर्व्ववत्तज्जन्यवाक्यार्थज्ञानस्य साक्षा-त्परम्परया प्रयोज्यत्वं, 'परतन्त्र'मिति सजातीयगोचरवक्तृतात्पर्य्य-ज्ञानानपेक्षं यत्तदन्यदित्यर्थः, 'कस्यापि' वेदवक्तुः, 'प्रथम'मिति सजातीयगोचरवक्तृतात्पर्य्यज्ञाननिरपेक्षमित्यर्थः,। ननु सर्गाद्यकाली-नवेदवक्तृतात्पर्य्यस्य सजातीयगोचरवक्तृतात्पर्य्यज्ञानसापेक्षत्वमनुपपन्न-मित्यत आह, 'अनादित्वा'दिति सर्गविच्छेदरहितत्वादित्यर्थः,[१] 'पूर्व्वपूर्व्वे'ति पूर्व्वपूर्व्वाध्यापकस्येत्यर्थः, 'उपजीव्ये'ति वाक्यार्थज्ञानद्वारा उपजीव्येत्यर्थः। ननु स्वतन्त्रतदिच्छयोच्चारणमेव तत्परत्वं कथम-ध्यापकतात्पर्य्येण निर्वाह्यमित्यत आह, 'तदिच्छये'ति, 'लोक-वेद-

---

(१) सर्गविच्छेदविरहादिति व० ।

वेति न कश्चिद्विशेषः, तदवधारणञ्चानादिमीमांसा-परिशोधितन्यायाद्वेद इत्युभयवादिसिद्धं, अतस्तात्पर्य्यानुरोधेन वेदस्य न पौरुषेयत्वं। नन्वर्थज्ञानं विनोच्चरितवेदात् कथमर्थधीः वाक्यार्थज्ञानं विना तदिच्छयोच्चारणाभावात्, प्रतिपुरुषमुच्चारणभेदादिति चेत्, तर्हि पठ्यमानभारतादपि तथाभूतादर्थधीर्न स्यात् व्यासेन यत्प्रतीतीच्छया उच्चारणं कृतं तज्जातीयत्वात् अर्थज्ञानं विनापि पठ्यमानभारतादर्थधीरिति चेत्, तर्हि वेदेऽपि तुल्यं, तत्तात्पर्य्यकजातीयत्वस्य निया-

---

साधारणमिति, शाब्दप्रमाप्रयोजकमिति शेषः, लाघवादिति भावः। 'स्वतन्त्रेति सजातीयगोचरवक्तृतात्पर्य्यज्ञाननिरपेक्षेत्यर्थः, 'परतन्त्रेति तत्सापेक्षेत्यर्थः, 'अनादिमीमांसा' लाघवादिज्ञानात्मकतर्कः, 'परिशोधितेति सहकृतेत्यर्थः, 'न्यायः' अनुमानं, 'पौरुषेयत्वमिति नित्यज्ञानादिमत्प्रणीतत्वमित्यर्थः। यद्यपि तन्मतेऽप्रसिद्धिस्तथापि वेदवक्तुस्तात्पर्य्यस्य न नित्यत्वमित्यर्थः। 'अर्थज्ञानं विनेति शुकाद्युच्चरितादित्यर्थः, 'अर्थधीरिति विशेषदर्शिनोऽर्थधीरित्यर्थः, 'तदिच्छया' वाक्यार्थज्ञानेच्छया। ननु पुरुषान्तरस्य तद्वाक्यार्थप्रतीतीच्छा वर्त्तत एव तदिच्छयैवोच्चरितोऽयं वेद इत्यत आह, 'प्रतिपुरुषमिति, 'उच्चारणभेदात्' वाक्यभेदात्, 'तथाभूतात्' अर्थज्ञानं विनोच्चरितात्, 'तज्जातीयत्वादिति, साजात्यमानुपूर्व्या विवक्षितं, 'वेदे' तथा-

मकत्वात् अन्यथा पच्यमानवेदात्तवाप्येर्थधीर्न स्यात् ईश्वराप्रणीतत्वात्। अथ वेदः पौरुषेयः वाक्यत्वात् भारतादिवत् इति चेत्, को वेदः, अनुगतधर्माभावेन तस्य शाखासु नानार्थत्वात्, तथाहि न मुख्यवेदपद-प्रयोगविषयोवेदः मुख्यार्थाकथनात्। नापि शाखा-समुदायः, तस्य वेदनिरूप्यत्वात् समुदायस्याप्रति-पादकत्वेन वाक्यत्वासिद्धेश्च। नापि स्वर्गकामादिवाक्यं,

---

भूतवेदे, 'पच्यमानवेदादिति शुक-मूर्खादिपच्यमानवेदादित्यर्थः, 'तव' नैयायिकस्य। ननु मम ईश्वरीयवाक्यार्थप्रतीतीच्छामादाय तत्रोप-पत्तिरित्यत आह, 'ईश्वरेति, प्रतिपुरुषं वाक्यभेदादिति भावः। उच्चारणस्य स्वातन्त्र्ये सिद्धे अर्थसिद्धमेव तात्पर्य्यस्यापि स्वातन्त्र्यं स्वतन्त्रोच्चारणव्यक्तिमूलभूतवाक्यार्थप्रतीतीच्छाव्यक्तेरेव स्वतन्त्रत्वादि-त्यभिप्रेत्योच्चारणस्य स्वातन्त्र्यमेव साधयितुं शङ्कते, 'अथेति. 'कोवेदः' किं वेदत्वं, 'मुख्येति, 'प्रयोगः' वृत्तिः, तथाच मुख्या या वेदपदवृत्तिस्तदाश्रय इत्यर्थः, वेदपदशक्यत्वमिति तु फलितार्थः, शक्यतावच्छेदकज्ञानं विना शक्यशक्तिज्ञानं न सम्भवतीत्यभिप्रायेणाह, 'मुख्यार्थेति अनुगतशक्यतावच्छेदकज्ञानाभावादित्यर्थः,। 'नापीति, सर्व्वत्र 'वेद इत्यनुषज्यते, 'तस्येति, वेदैकदेशस्य शाखात्वादिति भावः। अन्वयानुभवोपधायकत्वं वाक्यत्वमित्यभिप्रायेणाह, 'समुदायस्येति, 'अप्रतिपादकत्वेन' अन्वयानुभवानुपधायकत्वेन, 'असिद्धेश्चेति अनुप-धायकव्यक्तौ भागासिद्धेश्चेत्यर्थः, यद्वा व्यासज्यवृत्त्यधिकरणताकाभाव-

स्मृति-भारतादेरपि तथात्वात् । नापि सन्दिग्धकर्तृक-वाक्यं, वादिनो निश्चयात् । वाद्यनुमानयोस्तुल्यत्वेन मध्य-स्थस्य संशय इति चेत्, तर्ह्यनुमानाभ्यां तस्य संशयो-मध्यस्थसंशयप्रश्नानन्तरञ्चानुमानमित्यन्योन्याश्रयः । नापि विवादाध्यासितं वाक्यं, अनुगतधर्मं विना वि-वादस्याप्यभावात् भारतादावपि तत्सम्भवाच्च । नापि

---

मभ्युपेत्येदं, तथाच स्वरूपासिद्धेश्चेत्येवार्थः । 'स्वर्गकामादीति शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयार्थकवाक्यमित्यर्थः । 'सन्दिग्धेति सन्दिग्धपौरुषेयत्वकेत्यर्थः, 'निश्चयात्' अन्यतरकोटि-निश्चयात्, 'वाद्यनुमानयोरिति पौरुषेयत्वापौरुषेयत्वसाधकवाद्यनु-मानयोरित्यर्थः, 'तुल्यत्वेनेति, अप्रामाण्यसंशयादिति शेषः, 'मध्यस्थस्य संशय इति तज्जन्यकोटिद्वयस्मृत्या मध्यस्थस्य मानसः संशय इत्यर्थः, 'अनुमानाभ्यामिति, कोटिद्वयस्मृत्येति शेषः, 'संशयप्रश्नानन्तरमिति प्रश्नोन्नेयसंशयानन्तरमित्यर्थः, पक्षतावच्छेदकज्ञानं विना अनुमाना-सम्भवादिति भावः । इदमुपलक्षणं भारतादावपि(१) कदाचित् तादृशसंशयसम्भवेनांशतः सिद्धसाधनापत्तिरित्यपि बोध्यं । 'विवा-देति मीमांसकानामपौरुषेयत्वप्रतिपत्तिविशेष्यत्वमित्यर्थः, 'अनुगत-धर्मं विनेति अनुगतधर्मं विशेष्यतावच्छेदकं विनेत्यर्थः, 'विवादस्येति अपौरुषेयत्वप्रतिपत्तिविशेष्यत्वस्यापीत्यर्थः, 'अभावात्' अनुगतत्वा-

(१) तावतापीति ग० ।

महाजनानां वेदाकारानुगतव्यवहारात् वेदत्वं जातिः, देवदत्तीयत्वाद्यनुमापकशब्दवृत्तिजातिभिः सङ्करप्रसङ्गात्। किञ्च पौरुषेयत्वं न तदर्थधीजन्यत्वं तदुच्चारणधीप्रभवत्वं वा, अध्यापक-तदुभयधीजन्यत्वेन सिद्धसाधनात्। नाप्युच्चारणस्य सादित्वं, प्रत्युच्चारणस्य सादित्वात्। नापि स्वतन्त्रपुरुषप्रणीतत्वं, पठ्यमानवेद-

---

भावात्, तत्तच्छक्तित्वस्य विशेष्यतावच्छेदकत्वेऽपि विशेष्यतावच्छेदकधर्म्मभेदेन विशेष्यताभेदादिति भावः। ननु तादृशप्रतिपत्तिविशेष्यतात्वेनानुगम इत्यत आह, 'भारतेति, 'देवदत्तीयत्वाद्येति, इदमापाततः तादृशजातीनां कार्य्यतावच्छेदकतया नानात्वेऽपि क्षतिविरहात्। वस्तुतस्तु वेदत्वं जातिः प्रत्येकवर्णपरिसमाप्ता व्यासज्यवृत्तिर्वा, आद्ये प्रत्येकवर्णग्रहेऽपि तत्प्रत्ययापत्तेः। न च पूर्व्वपूर्व्ववर्णानुभवजसंस्कारसहकृतेन्द्रियवेद्या चरमवर्णवृत्तिरिति वाच्यं। चरमवर्णातिरिक्तसकलवर्णग्रहेऽपि तदग्रहात्कत्वादिना साङ्कर्य्यस्य दुर्व्वारत्वाच्च। न च कत्व-खत्वादिव्याप्यं नानेति वाच्यं। अनुगतत्वानुपपत्तेः। न द्वितीयः, जातेरतथात्वादित्येव तत्त्वं। साध्यं विकल्पयति, 'किञ्चेति, 'तदर्थेति वेदार्थेत्यर्थः, 'तदुच्चारणेति वेदानुपूर्व्वीविशेषेत्यर्थः, 'सादित्वमिति तथाच साद्युच्चारणजन्यत्वं साध्यमित्यर्थः, 'सादित्वं' प्रागभावप्रतियोगित्वं, उच्चारणं कण्ठाद्यभिघातः, 'प्रत्युच्चारणस्येति उच्चारणमात्रस्यैवेत्यर्थः, तथाच सिद्धसाधनमिति भावः। 'स्वतन्त्रेति सजातीयोच्चारणानपेक्षवक्तृप्रयत्नजन्यत्वमित्यर्थः, अतः 'नापीत्यादिना

भारतयोस्तदभावात्। तज्जातीयः स्वतन्त्रपुरुषप्रणीत-इति चेत्, तर्हि पठ्यमानभारतं व्यासस्य न ममेति कथं स्यात्, स्वातन्त्र्यञ्च यद्युच्चारणव्यक्तौ तदा ममा-प्युच्चारणसामान्ये न व्यासस्यापि। किञ्च स्वतन्त्रपु-

---

अग्रेतनेन न पौनरुक्त्यं, 'पठ्यमानेति, तथाचांशतोबाध-व्यभिचारा-विति भावः। 'तज्जातीय इति, तथाच स्वतन्त्रपुरुषप्रणीतजातीयत्वं साध्यमिति भावः। 'तर्हीति पठ्यमानभारतस्य स्वतन्त्रपुरुषप्रणीत-जातीयत्वं वदता तत् स्वतन्त्रपुरुषप्रणीतं न भवतीत्युक्तं भवति, तथाच पठ्यमानभारतं व्यासस्येति व्यवहारो न स्यात् तदीयत्वव्यव-हारं प्रति सजातीयोच्चारणानपेक्षतदीयप्रयत्नजन्यत्वस्य नियामकत्वात् अथ[१] साक्षात्परम्परया तदीयप्रयत्नप्रयोज्यत्वमेव तदीयत्वव्यवहार-नियामकं तदा न ममेति व्यवहारः कथं स्यादित्यर्थः। साजात्यं तत्तद्व्यक्तित्वेन विवक्षितं शब्दत्वेन वेति विकल्प्य दूषणान्तरमाह, 'स्वातन्त्र्यञ्चेति स्वातन्त्र्यघटकसाजात्यनिरूपकत्वञ्चेत्यर्थः, 'उच्चारण-व्यक्ताविति तद्व्यक्तित्वे इत्यर्थः, 'ममापीति ममापि वेदानुकूलयत्नः सजातीयोच्चारणानपेक्ष इत्यर्थः, तथाचास्मदादिप्रयत्नमादाय सिद्ध-साधनमिति भावः। 'उच्चारणसामान्य इति शब्दत्वे इत्यर्थः, 'न व्यासस्यापीति न व्यासस्यापि भारतानुकूलप्रयत्नः सजातीयोच्चारणा-नपेक्षः वेदोच्चारणसापेक्षत्वादित्यर्थः, तथाच व्यभिचार इति भावः। ननु साजात्यमानुपूर्व्या विवक्षितमित्यरुचेराह, 'किञ्चेति, 'स्वतौ

---

(१) अथेत्यस्य यदीत्यर्थः।

रुषप्रणीतजातीयत्वं यदि साध्यते तदाद्यभारते स्मृतौ च वाक्यत्वमनैकान्तिकं, न हि तज्जातीयं स्वतन्त्रपुरुषप्रणीतमस्ति। अथ स्वतन्त्रकृतसजातीयं स्वतन्त्रपुरुषप्रणीतमिति साध्यमनिर्धारितविशेषं[१] जीवो क्वचिदस्तीति वदिति चेत्। न। पठ्यमानभारते व्यभिचारात्। अथार्थं प्रतीत्य तदर्थपरतया प्रतिसन्धीयमानपदत्वं पौरुषेयत्वं तस्य प्रथममावश्यकत्वात्, अत-

चेति आद्यस्मृतौ चेत्यर्थः, 'न हि तज्जातीयमिति, तत्पूर्व्वमिति शेषः, तथाच तज्जातीयत्वस्य भेदघटितत्वात्क्तप्रत्ययस्य चातीतार्थकत्वाद्व्यभिचार इति भावः। ननु वेदजातीयं पक्षः स्वतन्त्रपुरुषप्रणीतत्वं साध्यं पक्षतावच्छेदकसामानाधिकरण्येन च साध्यसिद्धिरुद्देश्या अतः पठ्यमानवेदे नांशतोबाध इत्याशङ्कते, 'अथेति, 'स्वतन्त्रकृतसजातीयमिति वेदसजातीयमित्यर्थः, 'इति साध्यमिति इति पक्षतावच्छेदकसामानाधिकरण्येनानुमेयमित्यर्थः। ननु सर्गाद्यकालीनोवेदः पक्ष इदानीन्तनोवा, आद्ये आश्रयासिद्धिः चरमे बाध इत्यत उक्तं 'अनिर्द्धारितविशेषमिति अविषयीकृतपक्षनिष्ठविशेषमित्यर्थः, वेदत्वेनैव पक्षत्वादिति भावः। अत्र च साधनक्रियाविशेषणत्वात् द्वितीया, 'पठ्यमानेति, अंशतोबाधाभावेऽपि व्यभिचार इति भावः। 'अथेति, 'अर्थं प्रतीत्येति स्वरूपकथनं, 'तदर्थपरतयेति स्वार्थप्रतीतीच्छयेत्यर्थः, 'तस्येति स्वार्थप्रतीतीच्छारूपस्य तत्परत्वस्येत्यर्थः,

(१) इत्यनिर्द्धारितविशेषं साध्यमिति क०, ख०, ग०।

श्वानुच्चारितोऽपि मौनिश्लोकः पौरुषेय इति चेत्। न। अर्थज्ञानवताध्यापकेन सिद्धसाधनात्, अन्यथा पठ्यमानवेद-भारताभ्यां व्यभिचारात्। अतएव वेदत्वं स्वतन्त्रपुरुषप्रणीतवृत्ति वाक्यवृत्तिधर्म्मत्वात् भारतत्ववदिति निरस्तं। स्वतन्त्रप्रणीतत्वं हि वाक्यार्थगोचरयथार्थज्ञानचिख्यापयिषयोच्चारणं तथाच तथाविधाध्यापकेन सिद्धसाधनं। एतेन वक्तृत्वानुवक्तृ-

---

'अतएवेति उच्चरितत्वमुपेत्य प्रतिसन्धीयमानलोपादनादेवेत्यर्थः। ननु सजातीयोच्चारणानपेक्षत्वरूपेण स्वातन्त्र्येण प्रतीतीच्छा विशेषणीयेत्यत आह, 'अन्यथेति स्वातन्त्र्यविशेषणप्रक्षेपे इत्यर्थः, 'पठ्यमानवेदेति, इदञ्च पक्षसमेऽपि व्यभिचारस्य सन्दिग्धानैकान्तिकतया दोषत्वनये, 'अतएव' सिद्धसाधन-व्यभिचाराभ्यामेव, 'वाक्येति योग्यताविशिष्टवाक्येत्यर्थः[१], तेन साध्यस्य यथार्थत्वघटितत्वेऽप्ययोग्यवाक्यवृत्तिधर्म्मे न व्यभिचारः। 'चिख्यापयिषया' जननेच्छया,[२] 'तथाविधेति अर्थज्ञानवतेत्यर्थः, उक्तरूपेण स्वातन्त्र्येणेच्छाविशेषणे तु पठ्यमानवेदादिवृत्तितद्देद्व्यक्तित्वादौ व्यभिचार इति भावः। 'एतेनेति पठ्यमानवेद-भारतयोर्व्यभिचारेणेत्यर्थः, 'वक्तृत्वानुवक्तृत्वयोरिति, सजातीयध्वंसाव्याप्योच्चारणकर्तृत्वं वक्तृत्वं, तद्व्याप्योच्चारणकर्तृत्वमनु-

---

(१) योग्यतादिघटितवाक्येत्यर्थ इति ख०।

(२) वाक्यार्थज्ञानजननेच्छयेति क०।

त्वयोर्भेदस्य लोकसिद्धत्वात् सवक्तृकत्वं साध्यमिति निरस्तं। नापि सजातीयोच्चारणानपेक्षोच्चारणं पौरुषेयत्वं पद्यमानवेदे बाधात् भारते व्यभिचाराच्च। उच्यते, शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणजन्य-

---

वक्तृत्वमिति भावः। 'भेदस्य लोकसिद्धत्वादिति, तथाच नाध्यापकेन सिद्धसाधनं तस्य वक्तृत्वाभावादिति भावः। 'सजातीयेति सजातीयस्य यदुच्चारणं ज्ञानं तदनपेक्षं तदप्रयोज्यं यदुच्चारणं कण्ठाद्यभिघातस्तज्जन्यत्वमित्यर्थः, पूर्व्वं तादृशप्रयत्नजन्यत्वं साध्यमिह च तादृशकण्ठाद्यभिघातजन्यत्वमिति भेदान्न पौनरुक्त्यं, साजात्यमानुपूर्व्या विवक्षितं, प्रयोज्यत्वञ्च स्वजन्यवाक्यार्थज्ञान-तदिच्छादिद्वारा पूर्व्वोक्तक्रमेण बोध्यं, 'पद्यमानवेद इति, पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे च यत्रास्मदादीनां वेदसमानानुपूर्वीकं वाक्यं करणापाटवादिना दैववशसम्पन्नं तत्रांशतः सिद्धसाधनमिति भावः। किं वेदत्वमिति पक्षतावच्छेदकप्रश्ने समाधत्ते, 'शब्देति शब्दातिरिक्तं शब्दोपजीविप्रमाणातिरिक्तञ्च यत्प्रमाणं तज्जन्यप्रमितिविषयार्थकोयस्तदन्यत्वे सति शब्दजन्यवाक्यार्थज्ञानेनाजन्योयः प्रमाणशब्दस्तत्त्वमित्यर्थः, तथाचेदमेव पक्षतावच्छेदकमिति भावः। अत्र व्यासादिचाक्षुषादिप्रत्यक्षजन्ये दृष्टार्थकभारतादौ दृष्टार्थकायुर्वेदादौ चातिव्याप्तिवारणाय सत्यन्तं, इत्यञ्च तदुभयातिरिक्तं प्रमाणं चक्षुरादिरेव तज्जन्यप्रमितिविषयार्थकतया तयोर्नातिव्याप्तिः। न च दृष्टार्थक-

वेदस्य लक्ष्यतया कथं तत्रातिव्याप्तिरिति वाच्यं। परैस्तस्य वेदत्वा-नभ्युपगमेन तस्यालक्ष्यत्वादन्यथा तत्र सत्यन्तप्रतीकाभावेनाव्याप्त्यापत्तेः तस्य वेदत्वाभावेऽपि पुराण-वेदव्याख्यानादेरिवाध्ययननिषेधोवाचनिकः शूद्रादीनां।

यत्तु गेहे घटोऽस्तीत्यादिप्रत्यक्षजन्ये गेहे घटोऽस्तीत्यादिलौकिकवाक्येऽतिव्याप्तिवारणाय सत्यन्तमिति, तन्न, वक्ष्यमाणयुक्त्या अदृष्टजनकाध्ययनविषयत्वे सतीत्यनेनापि विशेषणीयतया तत्रातिव्याप्तिविरहात्।

प्रमित्यविषयार्थकत्वमात्रोक्तावसम्भव इति जन्यान्तं प्रमितिविशेषणं, शब्दोपजीव्यतिरिक्तत्वमात्रस्य प्रमाणविशेषणत्वेऽप्यसम्भवः शब्दोपजीव्यतिरिक्तेन प्रमाणेन वेदाद्यात्मकशब्देन वेदार्थस्य प्रमापणादतः शब्दातिरिक्तत्वमपि प्रमाणविशेषणं, शब्दपदञ्च शब्दज्ञानपरं, अन्यथा शब्द-तदुपजीव्यतिरिक्तप्रमाणेन वेदाद्यात्मकशब्दज्ञानेन वेदार्थस्य प्रमापणादसम्भवतादवस्थ्यात् शब्दस्य चाप्रमाणत्वान्न तमादायासम्भवः, शब्दज्ञानातिरिक्तत्वमात्रोक्तावप्यसम्भवः शब्दज्ञानातिरिक्तप्रमाणेनानुमानेन वेदार्थस्य प्रमापणादतस्तदुभयातिरिक्तत्वमुपात्तं, इत्यञ्चानुमानेन साध्यादिप्रसिद्ध्यर्थं वेदस्यापेक्षणान्नासम्भवः। नन्वत्र शब्दोपजीवित्वं न शब्दजन्यत्वं व्याप्तिज्ञानादेरप्यतथात्वेनासम्भवापत्तेः। नापि तन्मूलकत्वं, तथापि चक्षुरादेर्दानादिप्रवृत्त्यादिमूलकादृष्टद्वारा विधिवाक्यमूलकतया तज्जन्योपनीतभानमादायासम्भवाभावेऽपि श्रवणेन्द्रियजन्योपनीतभानविषयार्थकत्वादव्याप्त्यापत्तेः श्रवणस्य नित्यतया अदृष्टद्वारापि शब्दामूलकत्वात् आत्म-मनःप्रभृतिनित्य-

प्रमाणजन्यानुमित्यादिविषयार्थकतया असम्भवापत्तेश्च। अथ द्वितीय-प्रमाणपदमसाधारणप्रामाणपरं तेनात्म-मनःप्रभृतिप्रमाणमादाय नासम्भवः, प्रमित्यविषयार्थकेत्यत्र प्रमितिश्च उभयवादिसिद्धत्वेन स्वजन्यज्ञानसामानाकारत्वेन च विशेषणीया, स्वपदमन्यत्वप्रतियोगि-वाक्यपरं तेन श्रवणजन्योपनीतभानत्वादाय नाव्याप्तिः, न वा आत्मा इच्छावानात्मत्वादित्याद्यनुमितिविषययत्किञ्चिदर्थके स्वर्गकामोयजेतेत्यादिवेदेऽव्याप्तिः, न वा अभिधेयं प्रमेयवत् अभिधेयत्वादित्यादिसामान्यप्रत्यासत्तिजज्ञानमूलकानुमितिविषयार्थकत्वात्[1] असम्भवः। न च तथासत्यदृष्टस्य जन्यमात्रहेतुतया चक्षुरादेर्जन्यप्रमाण-मात्रस्यैवादृष्टद्वारा विधिवाक्यमूलकत्वेन श्रवणस्यैव शब्दमूलक-प्रमाणातिरिक्तासाधारणप्रमाणत्वात् श्रवणायोग्यार्थकदृष्टार्थकभार-तादावतिव्याप्त्यापत्तिरिति वाच्यं। अदृष्टाद्वारकशब्दमूलकत्वस्य विवक्षितत्वेन चक्षुरादेरपि तादृशप्रमाणातिरिक्तासाधारणप्रमाणतया तज्जन्यप्रमितिविषयार्थकत्वेन तत्रातिव्याप्तिविरहात्, अदृष्टाद्वारक-शब्दमूलकप्रमाणञ्च विशेषणज्ञानादिविधया शब्दजन्यपदार्थोपस्थिति-वाक्यार्थानुभवप्रयोज्यानुमानव्यक्तिरेव प्रसिद्धा। न चैवं भेर्य्यादिकं शब्दजनकमित्यादिदृष्टार्थके भारतादौ तादृशवेदे चातिव्याप्तिः शब्दज्ञानातिरिक्ततादृशशब्दमूलकप्रमाणातिरिक्तासाधारणप्रमाणज-

---

(१) सामान्यलक्षणाजन्यानुमानजन्यानुमितिविषयार्थकत्वादित्यर्थः, शब्द-मूलकत्वव्यावर्त्तनाय सामान्यलक्षणाजन्येति अभिधेयत्वप्रमेयत्वादि-सामान्यलक्षणाजन्येत्यर्थः।

न्यस्वजन्यज्ञानसमानाकारतदर्थविषयकोभयवादिसिद्धप्रमितेरप्रसिद्धेः शब्दस्य च चक्षुराद्ययोग्यत्वाद्भेर्य्यादिस्थ श्रवणायोग्यत्वात् मनःप्रभृतेश्च साधारणत्वात् अनुमानादेर्विशेषणज्ञानविधया शब्दज्ञानजन्यत्वेनादृष्टाद्वारकशब्दमूलकत्वादिति वाच्यं। शब्दमूलकत्वपदेन शब्दवृत्तिज्ञानप्रयोज्यताविशेषस्य विवक्षितत्वात् तथाचानुमानजन्यप्रमितिविषयार्थकत्वादेव न तत्रातिव्याप्तिरिति चेत्। न। तादृशप्रमाणातिरिक्तासाधारणप्रमाणेन वेदनिष्ठाकाङ्क्षादिज्ञानेन वेदार्थस्य शाब्दबोधजननादसम्भवापत्तेः, आकाङ्क्षादिज्ञानस्याकाङ्क्षादिलिङ्गकानुमितिकरणत्वेन विनश्यदवस्थतया धारावाहिकद्वितीयशाब्दबोधकारणत्वेन चासाधारणप्रमाणत्वात्, शाब्दबोधान्यत्वेन प्रमितिविशेषणे शब्दज्ञानातिरिक्तेत्यस्य वैयर्थ्यप्रसङ्गात्। अथ यज्जन्यस्वजन्यज्ञानसमानाकारज्ञानसामान्यं साक्षात्परम्परयातिपरम्परया अदृष्टाद्वारकशब्दज्ञानजन्यज्ञानप्रयोज्यं तत्त्वं शब्दोपजीविप्रमाणत्वं, स्वपदमन्यत्वप्रतियोगिवाक्यपरं, स्वजन्यज्ञानसमानाकारत्वञ्च स्वजन्यज्ञानं यत्र यत्र येन येन रूपेण यद्यद्विषयीकरोति तत्र तत्र तेन तेन रूपेण तत्तदवगाहित्वं, इत्यञ्च मनसोऽपि न वेदस्थले तदतिरिक्तप्रमाणत्वं मनसा वेदार्थगोचरानुभवजननेऽवश्यं साक्षात्परम्परया अतिपरम्परया वा वेदज्ञानजन्यवेदार्थज्ञानापेक्षणात्, एवं वेदनिष्ठाकाङ्क्षादिज्ञानमपि न तदतिरिक्तप्रमाणं तेनापि वेदार्थगोचरशाब्दबोधजननेऽवश्यं शब्दज्ञानजन्यपदार्थोपस्थितेरपेक्षणात् एवं क्रमेणात्ममनोयोगशरीरादेरपि न वेदस्थले तदतिरिक्तप्रमाणत्वं, लौकिकवाक्य-दृष्टार्थकभारतादिस्थले लौकिकवाक्य-भारतादिज्ञानं तज्जन्य-

पदार्थोपस्थितिवाक्यार्थानुभवमूलकानुमानव्यक्तिस्तु तादृशं प्रमाणं[१] प्रसिद्धं, चक्षुरादिना कदाचित् दृष्टार्थकभारतादिजन्यज्ञानसमाना-कारज्ञानजनने विशेषणज्ञानविधया ज्ञानलक्षणप्रत्यासत्तिविधया वा तादृशभारतादिज्ञानजन्यज्ञानापेक्षणात् तादृशभारतादावतिव्याप्ति-रतः सामान्यपदोपादानं,[२] चक्षुरादिजन्यज्ञानसामान्यस्य शब्दज्ञान-प्रयोज्यत्वाभावात् चक्षुरादेरपि तदतिरिक्तप्रमाणतया चक्षुरादि-जन्योपनीतभानसामान्यप्रत्यासत्तिजज्ञानविषयत्वस्य आत्म-मनः-शरी-रादेरपि तथात्वेन तज्जन्यानुमित्यादिविषयत्वस्य च वेदार्थे सत्त्वाद-सम्भव इति स्वजन्यज्ञानसमानाकारत्वं ज्ञानविशेषणं, इत्थञ्च चक्षु-रादिना आत्मादिना वा वेदसमानाकारज्ञानजननेऽवश्यं साक्षात्प-रम्परया वेदज्ञानजन्यवेदार्थज्ञानापेक्षणाद्वेदस्थले तेषामपि तद-तिरिक्तत्वाभावान्नासम्भवः । न च तथापि सार्वज्ञ्यान्यथानुपपत्त्या योगजधर्म्मस्यापि निर्विकल्पकजनकतया योगजधर्म्मजन्यवेदार्थगोचर-ज्ञानात्मकोपनयसहकारेण चक्षुरादिजन्यवेदजज्ञानसमानाकारज्ञानस्य सामान्यान्तर्गतस्य शब्दज्ञानजन्यज्ञानोपयोगित्वाभावेन[३] वेदस्थलेऽपि

(१) शब्द-तदुपजीविप्रमाणमित्यर्थः ।

(२) चक्षुरादिजन्यकादाचित्कज्ञानस्य विशेषणविधया शब्दज्ञानजन्यज्ञान-प्रयोज्यत्वेऽपि विशेषणज्ञानस्य शब्दवृत्तिज्ञानजन्यज्ञानत्वेन प्रयोजक-त्वविरहात् ज्ञानलक्षणप्रत्यासत्तिविधया शब्दज्ञानजन्यज्ञानप्रयोज्य-त्वेऽपि उभयवादिसिद्धज्ञानाप्रयोज्यत्वविरहात् शब्दज्ञानजन्यवाक्या-र्थानुभवरूपज्ञानलक्षणप्रयोज्यत्वेऽपि ज्ञानलक्षणप्रत्यासत्तिलक्षणा-लौकिकसन्निकर्षस्य परैरनभ्युपगमात् सामान्यपदं व्यर्थमिति ध्येयं ।

(३) शब्दज्ञानजन्यज्ञानप्रयोज्यत्वाभावेनेति ख०, ग० ।

चक्षुरादेर्न निरुक्तशब्दोपजीविप्रमाणत्वमिति वाच्यं। उभयवाद्यसिद्ध-ज्ञानाप्रयोज्यत्वेन तादृशज्ञानसामान्यस्य विशेषणीयत्वात्। शब्दा-नुभवजनितस्मृतिपरम्पराधीनानुमितिविषयतया वेदार्थस्यासम्भव-इत्यतः परम्परयातिपरम्परया वेति, अदृष्टस्य कार्य्यमात्रहेतुत्वेन चक्षुरादिना गेहे घटोऽस्तीत्यादौ लौकिकवाक्यार्थविषयकज्ञानजनने-ऽपि नियमतोऽदृष्टद्वारा विधिजन्यज्ञानापेक्षणात् तादृशप्रमाणाति-रिक्तप्रमाणजन्यप्रमितिविषयार्थकस्याप्रसिद्धा असम्भव इत्यतोऽदृष्टा-द्वारेति, शब्दज्ञानप्रयोज्यत्वमात्रोक्तौ भेर्य्यादिकं शब्दजनकमित्या-दिशब्दघटितदृष्टार्थकभारतादौ तादृशवेदे चातिव्याप्तिः प्रमाणमा-त्रेणैव तदर्थगोचरज्ञानजननेऽवश्यं शब्दज्ञानापेक्षणादतः शब्दज्ञान-जन्यज्ञानेति। न चैवमपि तदतिव्याप्तिस्तदवस्था प्रमाणमात्रेणैव तदर्थगोचरज्ञानजनने शब्दज्ञानजन्यस्य शब्द-शब्दत्वविशिष्टज्ञानस्य नियमतोऽपेक्षणादिति वाच्यं। वृत्त्या शब्दज्ञानजन्यज्ञानस्य विव-क्षितत्वात्। न चैवं शब्दातिरिक्तविशेषणत्ववैयर्थ्यं वेदाद्यात्मकशब्देन वेदार्थगोचरज्ञानजनने[१] अवश्यं शब्दज्ञानजन्यपदार्थोपस्थितेरपेक्ष-णात् शब्दोपजीविप्रमाणातिरिक्तत्वविशेषणेनैव तस्यापि वारणात् शब्दज्ञानजन्यवाक्यार्थानुभवप्रयोज्यमित्युक्तौ च वेदगतपदजन्यपदार्थ-स्मृतिजन्यानुमानेन वेदार्थस्य प्रमापणादसम्भवापत्तेरिति वाच्यं। यज्जन्यपदेन शब्दज्ञानाजन्यज्ञानद्वारा यज्जन्यत्वस्य विवक्षितत्वात् वेदार्थगोचरशाब्दबोधस्य शब्दज्ञानाजन्यज्ञानद्वारा न वेदाद्यात्मक-

---

(१) वेदार्थगोचरानुभवजनन इति ख०।

शब्दजन्य इति तदर्थिर्भावः । अखण्डभेदप्रतियोगिघटकतया जन्यत्वविशेषस्य संसर्गत्वपरिचायकतया वा अतिव्याप्त्याद्यवारकत्वेऽपि न शब्दज्ञानाजन्यज्ञानद्वारेत्यस्य वैयर्थ्यं, नोपादेयत्वेन वा शब्दाति-रिक्तत्वं विशेषणं, मूले च शब्द-शब्दोपजीवीत्यत्र द्वितीयशब्द-पदस्य ज्ञानपरतया शब्दज्ञानोपजीवीति समुदायार्थः । न चात्मा शब्दजन्यज्ञानवानित्यादिशब्दे शाब्दबोधघटितदृष्टार्थकभारतादौ तादृशवेदे चातिव्याप्तिः प्रमाणमात्रेणैव तदर्थगोचरज्ञानजननेऽवश्यं शब्दज्ञानजन्यवाक्यार्थज्ञानस्य साक्षात् परम्परया वा अपेक्षणात् ज्ञानज्ञाने[१] साक्षात्परम्परया वा विषयतया ज्ञानस्य प्रयोजक-त्वादिति वाच्यं । यतः प्रमाणान्तरजन्यज्ञाने शब्दजन्यत्वभ्रमात्तथैव सामान्यलक्षणप्रत्यासत्त्या शब्दजन्यज्ञानस्य ज्ञानं ततस्तज्ज्ञानसह-कारेणैवानुमानादात्मनिष्ठशब्दजन्यज्ञानवत्त्वग्रहस्तत्रैव तदनुमान-जन्यतदर्थविषयकज्ञानस्य शब्दज्ञानजन्यज्ञानप्रयोज्यत्वाभावात्तज्जन्य-प्रमितिविषयार्थकत्वेनातिव्याप्तिविरहात् । द्वितीयप्रमाणपदञ्च स्व-रूपकथनं, प्रमितिविषयार्थकेत्यत्र प्रमितिपदं स्वजन्यज्ञानसमा-नाकारानुभवमात्रपरं तादृशज्ञानमात्रपरं वा, प्रमात्वपर्य्यन्तप्रवेशे प्रयोजनविरहात्, स्वजन्यज्ञानसमानाकारेतिविशेषणात् प्रमेयत्वा-भिधेयत्वादिसामान्यलक्षणप्रत्यासत्तिजज्ञानाधीनेन प्रमेयमभिधेयव-दित्यनुमित्यात्मकज्ञानेन सर्व्वस्यैव वेदार्थस्य विषयीकरणेऽपि ना-सम्भव इति । मैवं । आत्मा शब्दवानित्यादिशब्दत्वविशिष्टघटित-

---

(१) ज्ञानजनन इति ख० ।

दृष्टार्थकभारतादौ तादृशवेदे चातिव्याप्तेः प्रमाणमात्रेणैव तदर्थ-
विषयकज्ञानजननेऽवश्यं शाब्दत्वजातेर्ज्ञानमपेक्ष्यते उक्तज्ञाने च[१]
साक्षात्परम्परया वा शाब्दबोधस्य ज्ञानं प्रयोजकं जातिग्रहस्य
व्यक्तिग्रहप्रयोज्यत्वनियमात्, शाब्दबोधविषयकज्ञाने च साक्षात्-
परम्परया वा विषयविधया शाब्दज्ञानं प्रयोजकमिति तत्रापि
निरुक्तशब्दोपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकान्य-
त्वादिति। उच्यते। शाब्दज्ञानं परम्परया अतिपरम्परया वा
शाब्दज्ञानप्रयोज्यस्य यज्ज्ञानं तदतिरिक्तज्ञानविषयार्थकान्यत्वे
सतीति सत्यन्तार्थः, प्रमाण-तज्जन्यत्वादिप्रवेशे प्रयोजनविरहात्,
परम्परया अतिपरम्परया वा शाब्दज्ञानप्रयोज्यातिरिक्तेन वेदात्मक-
शब्दजन्यशाब्दबोधेन वेदार्थस्य विषयीकरणादसम्भववारणाय शाब्द-
ज्ञानातिरिक्तेति ज्ञानविशेषणं, शाब्दज्ञानातिरिक्तज्ञानेनानुमि-
त्यादिना वेदार्थस्य विषयीकरणादसम्भव इति परम्पया अति-
परम्परया वा शब्दज्ञानप्रयोज्यातिरिक्तेति ज्ञानविशेषणं, इत्थञ्चानु-
मित्यादेः साध्यप्रसिद्ध्यादिद्वारा परम्परया वेदज्ञानप्रयोज्यत्वान्ना-
सम्भवः। शब्दज्ञानप्रयोज्येत्यत्र स्वजन्यज्ञानसमानाकारकज्ञानजन-
कत्वेन शब्दोविशेषणीयः स्वपदमनन्यत्वप्रतियोगिवाक्यपरं, तेना-
दृष्टस्य कार्य्यमात्रे हेतुतया ज्ञानमात्रस्यैवादृष्टद्वारा परम्परया
गङ्गास्नानादिबोधकविधिवाक्यज्ञानप्रयोज्यत्वेऽपि न तादृशज्ञानान्य-
ज्ञानाप्रसिद्धिः, गङ्गास्नानादिबोधकविधिवाक्यस्य गेहे घटोऽस्तीति

---

(१) तज्ज्ञाने चेति ख०।

लौकिकवाक्यसमानार्थकत्वाभावात्, न वा आत्मा शाब्दवानित्या-दावतिव्याप्तिः आत्मा शाब्दवानित्यादिमानसलौकिकप्रत्यक्षानुमि-त्यादेरपि स्वसमानार्थकशब्दज्ञानप्रयोज्यातिरिक्ततया शाब्दज्ञाना-तिरिक्ततया च तद्विषयार्थकत्वात् आत्मा शाब्दवानित्यादिमान-सप्रत्यक्षादेः स्वविषयशाब्दबोधजनकीभूतशब्दज्ञानप्रयोज्यत्वेऽपि तस्य शब्दस्यात्मा शाब्दवानिति वाक्यासमानार्थकत्वात्। नापि वेदगत-प्रत्येकपदजन्यप्रत्येकपदार्थोपस्थितिप्रयोज्यानुमितिविषयार्थकतया अ-सम्भवः प्रत्येकपदस्यापि वेदजन्यज्ञानसमानाकारकज्ञानजनकतया पदार्थोपस्थितिमूलकानुमितेरपि तादृशशब्दज्ञानप्रयोज्यत्वात्। अत-एव शब्दघटितदृष्टार्थकभारतादौ[१] तादृशदृष्टार्थकवेदे च नाति-व्याप्तिः तदर्थविषयकज्ञानमात्रस्य शब्दज्ञानप्रयोज्यत्वेऽपि[२] स्वजन्य-ज्ञानसमानाकारज्ञानजनकशब्दज्ञानाप्रयोज्यत्वात्। न च तथापि आत्मा शब्दप्रत्यक्षसमवायीत्यादिरूपशब्दघटितदृष्टार्थकभारतादौ तादृश-दृष्टार्थकवेदे चातिव्याप्तिः आत्मा शब्दप्रत्यक्षसमवायीतिशब्दस्यापि तदर्थान्तर्गतत्वेन[३] तदर्थविषयकज्ञानमात्रस्यैव स्वजन्यज्ञानसमानाका-

---

(१) भेर्य्यादिकं शब्दजनकमित्यादिदृष्टार्थकभारतादावित्यर्थः।

(२) विशेषणज्ञानादिविधया साक्षात्कारणीभूतशब्दज्ञानप्रयोज्यत्वस्य तत्र स्वीकारे व्यापारद्वारा कारणीभूतशब्दज्ञानप्रयोज्यत्वस्य निखिल-वेदार्थविषयकशाब्दबोधे न्याय्यत्वात् चरमव्याख्याने शब्दातिरिक्तपदं व्यर्थमेवेति ध्येयं यदि तत्र न स्वीक्रियते तदा अत्रापि अस्वीकारादत-एवेत्यादिकमसङ्गतमित्यपि ध्येयं।

(३) आत्मेत्यादिवाक्यार्थान्तर्गतत्वेनेत्यर्थः।

रज्ञानजनकशब्दज्ञानप्रयोज्यत्वादिति वाच्यं। शब्दज्ञानप्रयोज्यपदेन शब्दवृत्तिज्ञानप्रयोज्यताविशेषस्य विवक्षितत्वात्। न च तथाप्यात्मा शाब्दवानित्यादावतिव्याप्तिस्तद्वस्था आत्मा शाब्दवानितिवाक्य-जन्यशाब्दबोधस्य आत्मा शाब्दवानितिवाक्यार्थतया तदर्थविषयक-ज्ञानमात्रस्यैव शाब्दबोधद्वारा[१] आत्मा शाब्दवानितिवाक्यवृत्ति-ज्ञानप्रयोज्यत्वादिति वाच्यं। यत्रायं घट इत्यादियत्किञ्चिच्छाब्दे शाब्दत्वं गृहीत्वा तत्रैव सामान्यलक्षणप्रत्यासत्त्या निखिलशाब्दबोधस्य ज्ञानं ततस्तेनैव ज्ञानेनात्मा शाब्दवानिति निखिलशाब्दबोधप्रका-रिकानुमितिस्तत्रैव तदनुमितिव्यक्तेस्तदर्थविषयिकाया आत्मा शाब्दवानितिवाक्यवृत्तिज्ञानाप्रयोज्यत्वात् सामान्यलक्षणाजन्यज्ञाने विषयस्याहेतुत्वात् सामान्यलक्षणाजन्यज्ञानस्योभयवादिसिद्धत्वाभावे-ऽपि तदनुमितिव्यक्तेरुभयवादिसिद्धत्वात् परनये शाब्दत्वप्रकारक-यत्किञ्चिच्छाब्दज्ञानादेव निखिलशाब्दबोधप्रकारकतदनुमितिव्यक्ते-रुत्पत्तेः। न च तथापि शब्दवृत्तिज्ञानाप्रयोज्यया सुखत्वं दुःखा-सम्भिन्नवृत्ति सुखमात्रवृत्तिधर्मत्वादित्यनुमित्या विषयीकृतार्थक-वेदेऽव्याप्तिः किं बहुना प्रमेयत्वाभिधेयत्वादिसामान्यलक्षणप्रत्या-सत्तिजज्ञानाधीनेन प्रमेयमभिधेयवदित्यनुमित्यात्मकज्ञानेन सर्व्व-स्यैव वेदार्थस्य विषयीकरणादसम्भव एवेति वाच्यं। तदन्यज्ञानस्य[२] स्वजन्यज्ञानसमानाकारत्वेन विशेषणीयत्वात्, स्वजन्यज्ञानसमानाकां-

(१) विषयविधया शाब्दबोधद्वारेत्यर्थः।

(२) शब्दवृत्तिज्ञानप्रयोज्यातिरिक्तज्ञानस्येति ख०।

रत्वञ्च स्वजन्यज्ञानविषयिताविलक्षणविषयिताशून्यत्वं, स्वजन्यज्ञानं यत्र यत्र येन येन रूपेण यद्यद्विषयीकरोति तत्र तत्र तेन तेन रूपेण तत्तदवगाहित्वं वा, स्वपदमन्यत्वप्रतियोगिवाक्यपरं, अतएव वेदस्यापि यत्किञ्चिदर्थस्य यागादेरिच्छानुमित्यादिविषयत्वेऽपि नाव्याप्तिः, अतएव च वेदैकदेशो न वेदः यद्विशिष्टभागस्य तादृगज्ञानाविषयार्थकत्वं तस्यैव तत्त्वात्। न च तथापि सार्व्वज्ञ्यान्यथानुपपत्त्या योगजधर्म्मस्यापि निर्व्विकल्पकजनकतया योगजधर्म्मजन्यस्वजन्यज्ञानसमानाकारप्रत्यक्षविषयार्थकत्वाद्वेदस्यासम्भवः मोक्षहेतुश्रवणाप्रयोज्यत्वेन तदन्यज्ञानस्य विशेषणेऽपि सुखत्वसामान्यलक्षणप्रत्यासत्तिजस्वर्गीयसुखज्ञानजन्येन सुखं दुःखासम्भिन्नं सुखत्वादित्यादिकूटलिङ्गकानुमानेन "यन्न दुःखेनेत्यादिवेदार्थस्य विषयीकरणादव्याप्तिः तादृशेश्वरज्ञानविषयार्थकत्वादसम्भवश्चेति वाच्यं। उभयवादिसिद्धत्वेनापि तदन्यज्ञानस्य विशेषणीयत्वात् योगजधर्म्मप्रत्यक्ष-कूटलिङ्गकानुमित्योर्भगवज्ज्ञानस्य च प्राभाकरासिद्धत्वात् न च तथापि वेदार्थस्य योगजधर्म्ममूलकानुमानविषयत्वादसम्भव इति वाच्यं। कारणबाधेन तदनुमितिव्यक्तेः प्राभाकरासिद्धत्वात्, मोक्षहेतुश्रवणप्रयोज्यत्वेन वा तदन्यज्ञानं विशेषणीयं। अथ तथापि प्रमेयत्वादिसामान्यलक्षणप्रत्यासत्त्या वेदगतपदार्थ-वेदगतपदार्थतावच्छेदकानां ज्ञानं ततः प्रमेयत्वादिरूपेण वेदगतपदार्थेषु प्रमेयत्वादिरूपेण वेदगतपदार्थतावच्छेदकानां प्रमेयत्वादिहेतुना अनुमितिस्ततः प्रमेयत्वादिमोषेण केवलपदार्थतावच्छेदकप्रकारेण केवलपदार्थानां स्मरणं ततस्तत्स्मरणसहकारेणानुमानाद्वेदजन्यज्ञानसमा-

नाकारज्ञानमिति क्रमेण वेदार्थस्य तादृशज्ञानविषयत्वादसम्भवः। न च तादृशानुमानजन्यवेदजन्यज्ञानसमानाकारज्ञानं कारणबाधेन न प्राभाकरसिद्धं तेन सामान्यलक्षणानभ्युपगमादिति वाच्यं। तेन सामान्यलक्षणानभ्युपगमेऽपि पक्षतावच्छेदक-साध्यतावच्छेदकादिप्रकारेण यत्किञ्चिद्व्यक्तिज्ञानादेव पक्षतावच्छेदकाश्रये यावति साध्यतावच्छेदकाश्रयाणां यावतामनुमित्यभ्युपगमात् कारणबाधाभावादिति चेत्, न, मोषस्य बहुधा निवारितत्वात् प्राचामसम्मतत्वाच्च। न च तथापि सुखत्वादिसामान्यलक्षणया खण्डशः सुखादेरुपस्थित्या सुखं दुःखासम्भिन्नमित्यादिप्रत्यक्ष-तन्मूलकानुमित्यादिसम्भवेन तद्विषयार्थकत्वादसम्भव इति वाच्यं। तज्ज्ञानातिरिक्तत्वेनापि ज्ञानस्य विशेषणीयत्वादिति सत्यन्तदलनिष्कर्षः।

वह्निना सिञ्चतीत्याद्ययोग्यवाक्यजन्यज्ञानसमानाकारज्ञानस्य भ्रमत्वनियमेन उभयवादिसिद्धतया तत्रातिव्याप्तिः, एवं ह्रंफडित्यादिस्तोत्रेऽप्यतिव्याप्तिः तस्य निरर्थकत्वेन सत्यन्तदलस्य तत्रापि सत्त्वात् मन्त्र-ब्राह्मणयोर्वेदत्वमित्यभियुक्तस्य स्मरणात्तस्यालक्ष्यत्वादतः प्रमाणशब्दत्वमिति, स्तोत्रस्य च निरर्थकतया न प्रमाणशब्दत्वं तस्य वेदत्वाभावेऽप्यध्ययननिषेधो वाचनिक एव शूद्रादीनामिति भावः। प्रमाणशब्दत्वञ्च प्रमितिजनकतया नैयायिकसिद्धशब्दत्वं तेन परनये चितेः सकर्तृकत्वबोधकवेदे[१]नाव्याप्तिः। न चैवं तन्नयेऽप्रमाणीभूतचितिःसकर्तृकेतिवादिवाक्येऽतिव्याप्तिः[२] तस्य शब्दाप्रयोज्यचितिः-

(१) यतो वा इमानि भूतानि जायन्त इत्याद्याकारवेदे इत्यर्थः।

(२) भारतादिवाक्येऽतिव्याप्तिरिति ख०।

स्वकर्तृकेत्याद्यनुमितिविषयार्थकत्वेऽपि तादृशानुमितेरीश्वरविद्वेषि-प्राभाकरासिद्धत्वात् तेनासत्ख्यातेरनङ्गीकारादिति[१] वाच्यं । स्वजन्यान्तदलेनैव[२] तस्य निरसनीयत्वात् तच्चानुपदमेव स्फुटीभविष्यति । स्वर्गसाधनत्वाद्यनुमापकाश्वमेधादौ आत्म-मनःप्रभृतिनित्य-प्रमाणवर्गेषु चातिव्याप्तिवारणाय शब्दत्वोपादानं, मन्वादिस्मृति-भारतादावतिव्याप्तिवारणाय जन्यान्तं, तस्य वेदजन्यवाक्यार्थज्ञान-जन्यत्वात् वेदादर्थं प्रतीत्य स्मृत्यादिप्रणयनात्, शब्दपदं वाक्यार्थ-पदञ्चात्र स्वरूपकथनं, जन्यज्ञानाजन्येत्येव विवक्षितं तयोर्निवेशे प्रयोजनविरहात्, न्यायनये वेदस्यापीश्वरीयज्ञानजन्यत्वादसम्भववार-णाय जन्यपदं, जन्यज्ञानजन्यता च फलोपधानरूपा ग्राह्या तेन वेदज्ञानं प्रत्यपि जन्यज्ञानस्य स्वरूपयोग्यत्वेऽपि नासम्भवः ।

यत्तु शब्दजन्यवाक्यार्थज्ञानेत्यस्य शाब्दज्ञानेत्यर्थः, इति तन्न, भारतार्थस्मरणजन्यभारतेऽतिव्याप्तेः तस्य स्मरणजन्यत्वेन शाब्दज्ञाना-जन्यत्वात्, शाब्दज्ञानाजन्यत्वपदेन शाब्दज्ञानाप्रयोज्यत्वविवक्षणेऽपि भारतगतप्रत्येकपदजन्यप्रत्येकपदार्थस्मृतिसहकारेण मनसा अनुमा-नादिना वा विशिष्टभारतार्थं प्रतीत्य प्रयुक्ते भारतेऽतिव्याप्तेः । न च जन्यज्ञानाजन्येत्युक्तौ सत्यन्तविशेषणं प्रमाणशब्दत्वमित्यत्र प्रमाण-विशेषणञ्च व्यर्थमिति वाच्यं । दृष्टार्थकवेदे अतिव्याप्तिवारणाय सत्यन्तस्य क्लंफड़ित्यादिश्लोके अतिव्याप्तिवारणाय प्रमाणत्वविशेष-णस्योपादानात् ।

---

(१) अन्यथाख्यातेरनङ्गीकारादितीति ख० ।

(२) शब्दजन्यवाक्यार्थज्ञानाजन्यदलेनेत्यर्थः ।

अथ परनये ईश्वरानभ्युपगमात् जन्यज्ञानाजन्यत्वं न क्वापि वेद-इत्यसम्भवः। न च तन्मते वेदस्य नित्यत्वात् नासम्भव इति वाच्यं। तथा सति वर्णानां नित्यत्वं विना तद्घटितवेदानुपूर्व्या नित्यत्वासम्भवेन शब्दमात्रस्यैव नित्यतया भारतादेरपि नित्यत्वाद्भारतादावतिव्याप्तितादवस्थ्यादिति चेत्, न, जन्यज्ञानाजन्यत्वपदेन जन्यज्ञानजन्यत्वेन यन्नैयायिकसिद्धं तदन्यत्वस्य विवक्षितत्वात्। अतएव तन्मतेऽपि जन्यपदानुपादानेऽसम्भव इति जन्यपदं सार्थकं, अखण्डाभावघटकत्वाच्च न स्वमते नैयायिकसिद्धेत्यस्य वैयर्थ्यं, स्वमतमात्रसाधारणलक्षणपक्षे तु तन्न देयमेव, शुकाद्युक्तवेदसमानार्थकस्मृत्यादेरपि तावत्पदविषयकजन्यज्ञानजन्यत्वान्नातिव्याप्तिः, एवं यन्त्रादिस्थले वर्णोत्पत्तिस्वीकर्तृनये यन्त्रोत्थितस्मृत्यादावपि नातिव्याप्तिः तस्यापि वादकजन्यज्ञानजन्यत्वात्, वाय्वाद्यभिघातजस्मृत्यादौ मानाभावः वाय्वाद्यभिघातस्य वर्णोत्पादकत्वे मानाभावात्, तत्-पूर्व्वमवश्यं कस्यचित् जन्यज्ञानसत्त्वेन तस्यैव फलोपधानात्मकजन्यतायास्तत्र सत्त्वाच्च ज्ञानत्वेन वर्णत्वेन कार्य्यत्वेन च कार्य्य-कारणभावात्। न च तथापि भगवदुच्चरितमनुस्मृत्यादावतिव्याप्तिरिति वाच्यं। तस्य भगवदुच्चरितत्वे मानाभावात्, भगवद्गीता च वेद-एव तत्रैव "भगवद्गीतासूपनिषत्स्विति श्रवणादिति न तत्रातिव्याप्तिः, अस्तु वा तदन्यत्वमपि विशेषणं वेदातिरिक्तशब्दोपजीविप्रमाणमात्रगम्यार्थके भगवदुक्तवाक्यान्तरे मानाभावात्।

अथ मास्त्वतिव्याप्तिस्तथाप्याधुनिकोक्तवेदे स्मृति-भारतादेरर्थं प्रतीत्य प्रयुक्ते दैववशसम्पन्ने वेदे चाव्याप्तिः तस्य न्यायनये जन्य-

**प्रमित्यविषयार्थकत्वे सति शब्दजन्यवाक्यार्थज्ञानाजन्य-प्रमाणशब्दत्वं वेदत्वम्, ईश्वरीयप्रमायाः[१] अजन्यत्वात्,**

---

ज्ञानजन्यत्वादिति चेत्, न, प्रमाणशब्दत्वपदेन एतादृशप्रमाणशब्द-जातीयत्वस्य विवक्षितत्वात् साजात्यञ्चानुपूर्व्या तेन नातिप्रसङ्गः, तथा साजात्यलाभायैव च शब्दत्वपदं इत्यञ्चादिवेदमादायैव सर्व्वत्र लक्षणसङ्गतिः नित्यानुमेयवेदस्योभयवाद्यसिद्धतया न लक्ष्यः तेन तत्रानुपूर्व्वी विरहेणोक्तजातीयत्वाभावेऽपि न क्षतिः । न च भगव-दुक्तवेदव्याख्याने वेदैकदेशे चातिव्याप्तिरिति वाच्यं । अदृष्टजन-काध्ययनविषयतावच्छेदकावच्छिन्नत्वे सतीत्यनेनापि विशेषणीयत्वात् वेदव्याख्यादेरध्ययनं हि नादृष्टजनकमिति ।

उत्तानास्तु वेदत्वमखण्डोपाधिः तच्च यावद्वर्णशब्दे वेदव्यवहारः प्रमाणसिद्धस्तावत्सु व्यासज्यवृत्ति तेन प्रत्येकवर्णशब्दे न तत्प्रत्यक्षं, यद्वा शक्तिविशेषसम्बन्धेन पदवत्त्वं तत्त्वं[२] यथा धातुत्वाख्यातत्वादि, विशेषपदोपादानाच्च वेदसंज्ञकशरीरादावतिव्याप्तिः सम्बन्धाननु-गमस्यादोषतया शक्यतावच्छेदकभेदेन शक्तिरूपस्य सम्बन्धस्य नाना-त्वेऽपि न क्षतिः । ग्रन्थस्तु प्रकृतौपयिकपक्षतावच्छेदकमात्रनिर्वचन-पर इति प्राहुरिति संक्षेपः ।

नन्विदं कुतो वेदत्वं वेदानामीश्वरीयवाक्यार्थज्ञानजन्यत्वेनाज-न्यात्तदत्वस्यासम्भवितत्वादित्यत आह, 'ईश्वरीयप्रमाया इति ईश्व-

---

(१) ईश्वरप्रमाया इति क०, ख० ।

(२) वेदपदवत्त्वमेव वेदत्वमिति ख० ।

वेदार्थस्यानुमानादिविषयत्वेऽपि अनुमानादेर्वेदोप-
जीवकत्वात्। स्मृतीनां भारतादिभागस्य च वेद-
समानार्थकत्वेऽपि शब्दजन्यधीजन्यत्वात् वेदार्थं प्रतीत्य
तत्प्रणयनात्। सजातीयोच्चारणानपेक्षोच्चरितजाती-

---

रीयवाक्यार्थज्ञानस्येत्यर्थः, तथाच शब्दजन्यत्वविशेषणेनैव तद्वारण-
मिति भावः। शब्दोपजीव्यतिरिक्तत्वदलस्य व्यावृत्तिं कुर्वतो दर्श-
यति, 'वेदार्थस्येति, 'अनुमानादीति अनुमित्यादीत्यर्थः, आदि-
पदादुपमितिपरिग्रहः "यन्न दुःखेनेत्यादिस्वर्गपदादिशक्तिग्राहक-
वेदार्थस्योपमितिविषयत्वादिति भावः। 'अनुमानादेः' अनुमि-
त्यादेः। अजन्यान्तदलस्य व्यावृत्तिं कुर्वतो दर्शयति, 'स्मृतीनामिति,
'भारतादिभागस्य' भारतादेर्भागविशेषस्य दृष्टार्थकेतरभारताद्येक-
देशस्येति यावत्, 'वेदसमानार्थकत्वेऽपि' तादृशप्रमित्यविषयार्थक-
त्वेऽपि। किञ्च पौरुषेयत्वमिति साध्यप्रश्ने समाधत्ते, 'सजातीयेति
स्वसमानजातीयवाक्यस्य यदुच्चारणं ज्ञानं तदनपेक्षं तदप्रयोज्य-
यदुच्चारणं कण्ठाद्यभिघातः प्रयत्नो वा तज्जन्यजातीयत्वमित्यर्थः,
स्वसमानजातीयत्वं तज्जन्यजातीयत्वञ्चानुपूर्व्या विवक्षितं, इत्यञ्चा-
ध्यापकोच्चारणमादाय न सिद्धसाधनं, पूर्वाध्यापकोच्चरितवेदज्ञाना-
द्वेदार्थज्ञानं ततो वेदार्थप्रतीतिरूपेष्टसाधनताज्ञानादेदे इच्छा ततो
वेदरूपेष्टसाधनताज्ञानात् तत्तदनुकूलकण्ठाद्यभिघातादौ प्रयत्नस्ततः
कण्ठाद्यभिघात इति क्रमेणाध्यापकोच्चारणस्य पूर्व्वाध्यापकोक्तस्वस-
मानानुपूर्वीकवाक्यज्ञानप्रयोज्यत्वनियमादिति भावः। वेदाद्भारतार्थं

# यत्वं पौरुषेयत्वं, आद्यभारतेऽपि तज्जातीयत्वान्न व्यभिचारः। अथवा वेदत्वं सजातीयोच्चारणानपेक्षो-

प्रतीत्यैवाद्यभारतप्रणयनाद्भारते व्यभिचारवारणाय स्वसमानजातीयेति, एवञ्च तस्य विजातीयवेदज्ञानप्रयोज्यत्वेऽपि स्वसमानजातीयभारतज्ञानाप्रयोज्यत्वान्न व्यभिचारः, पद्यमानवेद-भारतयोर्बाध-व्यभिचारवारणाय सजातीयत्वमिति अतएव वेदसमानानुपूर्वीकभारत-स्मृत्याद्योरपि न व्यभिचारः, तत्राप्याद्यवेदमादाय तज्जातीयत्वसत्त्वात् प्रयोज्यत्वपदेन स्वजन्यवाक्यार्थज्ञानद्वारा प्रयोज्यत्वमेव विवक्षितं अन्यथा भारते व्यभिचारापत्तेः आद्यभारतोच्चारणस्यापि भारतनिष्ठभारतार्थप्रतीतिरूपेष्टसाधनताज्ञानात्मकस्य भारतज्ञानस्य प्रयोज्यत्वात्। न चास्मदादीनां वेदसमानानुपूर्वीकं वाक्यं करणापाटवादिना दैववशसम्पन्नं तत्र तद्वेदवाक्ये तादृशतद्वाक्योच्चारणजन्यत्वसत्त्वेन तद्वाक्यमादायांशतः सिद्धसाधनं एवं घुणाक्षरन्यायेनोच्चरितस्मृत्यादितोवाक्यार्थं प्रतीत्य दैववशाद्यत्र वेदसमानानुपूर्व्वीकं वाक्यमुच्चरितं तत्र तादृशोच्चारणजन्यत्वसत्त्वेन तद्वाक्यमादायांशतः सिद्धसाधनं इति वाच्यं। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात्, अतएव निखिलवेदानामेकधर्म्मावच्छेदेन पक्षत्वे ग्रन्थकृतो निगर्व्व इति [1] दिक्। 'तज्जातीयत्वादिति, तज्जातीयत्वस्य भेदाघटितत्वात् निष्ठाप्रत्ययार्थातीतत्वस्य चाविवक्षितत्वादिति भावः। 'सजातीयोच्चारणेति सजातीयोच्चारणानपे-

[1] निर्भर इतीति ख०।

च्चरितवृत्ति प्रमाणतावच्छेदकवाक्यवृत्तिधर्म्मत्वात् स्मृतित्ववत्। यद्वा वेदाः शब्दाजन्यवाक्यार्थगोचरयथार्थज्ञानजन्याः प्रमाणशब्दत्वात् भारतवत्। न च पठ्यमाने वेदे बाधः भारते मन्वादिस्मृतौ च व्यभिचारः तेषां द्विकर्तृकत्वात्, तादृशज्ञानजन्यजातीयत्वं वा साध्यं, तत्राप्येतदभावादेव वेदेऽपौरुषेयत्वव्यवहारः।

---

चोच्चरितजातीयमात्रवृत्तित्वं, तेन दैववशसम्पन्नवेदमादाय न सिद्धसाधनं, द्वितीयमुच्चारणं वा पूर्ववत् अर्थज्ञानविशिष्टत्वेन विशेषणीयं, 'प्रमाणतेति, अत्रेदानीन्तनवेदादिमात्रवृत्तितत्तद्व्यक्तित्वेदानीन्तनवेदत्वादिधर्म्मे व्यभिचारवारणाय 'प्रमाणतावच्छेदकेति, प्रमाणतावच्छेदकत्वं अध्ययनानुष्ठानान्यतरविधिविषयतावच्छेदकत्वं, भवति च "स्वाध्यायोऽध्येतव्यः" "स्मृतिरध्यातव्येत्यादिविधिविषयतावच्छेदकं वेदत्व-स्मृतित्वादि, उच्चरितत्वस्य शब्दधर्मत्वादश्वमेधत्वादौ व्यभिचारवारणाय[१] 'वाक्यवृत्तीति, अश्वमेधत्वादेरपि "अश्वमेधेन यजेतेत्याद्यनुष्ठानविधिविषयतावच्छेदकत्वात्। वस्तुतस्तु प्रमाणतावच्छेदकत्वमध्ययनविधिविषयतावच्छेदकत्वं, 'वाक्यवृत्तीति च स्वरूपकथनमिति ध्येयम्। 'शब्दाजन्येति शब्दज्ञानाप्रयोज्येत्यर्थः, तेन न तादृशस्मृत्यादिजन्यत्वमादायांशतः सिद्धसाधनमर्थान्तरं वा, आनुपूर्वीयथार्थज्ञानजन्यतयांशतः सिद्धसाधनस्यार्थान्तरस्य वार-

---

(१) शब्दधर्म्मत्वादश्वमेधत्वादावर्थवृत्तिधर्म्मे व्यभिचारवारणायेति ग०।

नन्वप्रयोजकमिदं वाक्यार्थगोचरयथार्थज्ञानपूर्व्वकत्व-मेव शब्दप्रामाण्ये तन्त्रं न तु तादृशज्ञानस्य शब्दा-जन्यत्वमपि गौरवात्, अन्यथा वेदेऽपि तव द्विकर्तृक-त्वेन प्रामाण्यं स्यात् लोके तथा दर्शनात्, एवञ्च अनादिमीमांसासिद्धन्यायेनावगततात्पर्य्यात् वेदादर्थं प्रतीत्य पूर्व्वपूर्व्वाध्यापकेन उच्चरिताद्वेदादुत्तरोत्तर-स्याप्यध्ययनतदर्थप्रतीतिरित्यनादितैवातः किं स्वत-न्त्रपुरुषेण तत्प्रयोजनस्य परतन्त्रादेव सिद्धेः। किञ्च

---

णाय 'वाक्यार्थेति स्ववाक्यार्थेत्यर्थ इति द्रष्टव्यं। 'तादृशेति, अत्र स्वसजातीयेति शब्दविशेषणं देयं तेन स्मृतौ भारते च न व्यभि-चारतादवस्थ्यं, 'एतदभावादिति स्वसमानजातीयोच्चारणानपे-चोच्चरितजातीयत्व-शब्दाजन्यवाक्यार्थज्ञानजन्यजातीयत्वयोरभावादि-त्यर्थः, 'अन्यथेति प्रत्यक्षादिना गृहीतार्थकलौकिकवाक्ये तथा दर्शनेन तत्कल्पने इत्यर्थः, 'लोके' लौकिकवाक्ये। 'मीमांसासिद्धेति लाघवादिज्ञानसहकृतेत्यर्थः, 'न्यायः' अनुमानं, 'अध्ययनतदर्थप्रती-तिरिति अध्ययने सति तदर्थप्रतीतिरित्यर्थः, ततो वेदप्रयोग इति शेषः। 'स्वतन्त्रपुरुषेणेति सजातीयोच्चारणानपेक्षवेदोच्चारयितृपुरु-षेणेत्यर्थः, 'परतन्त्रादेवेति तादृशोच्चारणसापेक्षवेदोच्चारयितृपुरु-षादेवेत्यर्थः। ननु सर्गाद्यकालीनवेदप्रयोगस्य वेदजन्यवाक्यार्थज्ञान-प्रयोज्यत्वं न सम्भवति प्रलये वेदोच्छेदादतो भगवत्सिद्धिरित्यत-आह, 'किञ्चेति, 'पूर्वकालं इति हेतुतावच्छेदकावच्छिन्नभिन्नस्यैव

पूर्व्वकालो न वेदशून्यः कालत्वात् वर्त्तमानकालवत्। न चांशे बाधः अंशे चाश्रयासिद्धिः, अंशत्वेनानुपादानात्, पूर्व्वकालो न वेदशून्य इत्युद्देश्यप्रतीतेरसिद्धेः नांशतः सिद्धसाधनं, तथा पूर्व्वकालीनं वेदाध्ययनं गुर्व्वध्ययनपूर्व्वकं अध्ययनत्वात् इदानीन्तनाध्ययनवत्। न च लिप्यनुमितवेदाध्ययनेन व्यभिचारः, लिपेरध्ययनपूर्व्वकत्वात्। न चैवं भारताध्ययनमपि तथा स्यात्, तस्य भारतादावेव व्यासादिकर्तृकत्वेन कथनादिति। उच्यते। वेदप्रामाण्याधीनं तत्प्रामाण्यमित्या-

---

पक्षतावच्छेदकत्वात् पूर्व्वेति एतत्पूर्वकाल इत्यर्थः, 'न वेदशून्य इति, यद्यपि वेदवानित्येव वक्तुमुचितं तथापि पराभिमतवेदशून्यत्वाभावत्वप्रकारकसिद्ध्यर्थमित्थमभिधानं, 'अंशे' प्रलयरूपे, 'अंशे चेति सर्गकाले चेत्यर्थः, 'आश्रयासिद्धिः' सिद्धसाधनात् पक्षत्वाभावः, 'अंशत्वेन' विशिष्य प्रलयत्वादिना, 'उद्देश्यप्रतीतेरिति पक्षतावच्छेदकावच्छेदेन प्रतीतेरित्यर्थः, 'गुर्वध्ययनेति, 'पूर्वकत्वं' प्रयोज्यत्वं, अन्यथा पूर्वसर्गीयाध्ययनपूर्वकत्वेन सिद्धसाधनात्, 'गुर्विति स्वरूपकथनमिति मन्तव्यं, 'अध्ययनत्वात्' वेदाध्ययनत्वात्, अतो न व्यभिचारः। 'लिपेरपीति, साक्षात्परम्परासाधारणप्रयोज्यत्वमात्रस्य प्रवेशादिति भावः। 'न चैवमिति, भारताध्ययनं भारताध्ययनपूर्वकं भारताध्ययनत्वादित्यनुमानसम्भवादिति भावः। 'तस्येति, तथाच बाधान्न

त्माश्रयः। न च पूर्व्ववेदप्रामाण्याधीनमुत्तरवेदप्रामाण्यमिति व्यक्तिभेदमादाय नात्माश्रय इति वाच्यं। एवं तत्पूर्व्वस्यापि तत्पूर्व्वप्रामाण्यात् प्रामाण्यमित्यनवस्थानात्। अनादित्वादयमदोष इति चेत्। न। मूलभूतप्रमाणान्तराभावात् अन्धपरम्परापातात्। स्वतः प्रमाणं वेद एव सर्व्वं च वेदे मूलमिति चेत्। न। सर्व्वेषामेव परवेदापेक्षत्वेन स्वतः प्रमाणत्वाभावात्। अत एव आचारात् स्मृतिः स्मृतेराचार इत्यत्र विश्वासवीजपरानपेक्षमूलभूतप्रमाणाभावादन्धपरम्पराभयेन तत्र

---

सिद्धिरिति भावः। 'आत्माश्रय इति वाक्यार्थयथार्थज्ञानपूर्वकत्वेन वेदप्रामाण्यं तज्ज्ञानप्रामाण्यञ्च प्रमाणीभूतवेदजन्यत्वाधीनमिति परम्परया वेदजन्यप्रामाण्याधीनं वेदप्रामाण्यमित्यात्माश्रय इत्यर्थः, 'मूलभूतेति, वेदजन्यप्रमायामित्यादौ पूरणीयं, 'प्रमाणान्तराभावादिति स्वतः प्रामाण्याभावादित्यर्थः, 'अन्धपरम्परेति प्रमासामान्यस्य स्वतः प्रमाणमूलकत्वव्याप्तिभङ्गप्रसङ्गादित्यर्थः, स्वतस्त्वञ्च स्वेतरप्रामाण्याधीनप्रामाण्यकेतरत्वमित्यर्थः, 'वेदे' वेदजन्यज्ञाने, 'परवेदापेक्षत्वेनेति परवेदप्रामाण्याधीनप्रामाण्यकत्वेनेत्यर्थः, 'विश्वासवीजेति प्रमासामान्यव्यापकेत्यर्थः, 'परानपेक्षेति स्वेतरप्रामाण्याधीनप्रामाण्यकेतरेत्यर्थः, 'अन्धपरम्परेति स्मृतिजन्यज्ञानस्याप्रमात्वप्रसङ्गभयेनेत्यर्थः। ननु वेदप्रामाण्यमप्यपरवेदप्रामाण्याधीनं महाजनपरिग्रहादेव

वेदमूलकत्वकल्पना। अनादिमहाजनपरिग्रहादनादि-
वेदप्रवाहप्रामाण्यावधारणेऽपि तन्निर्वाहकेतरानपेक्ष-
मूलभूतप्रमाणाभावेनानाश्वास एव अन्यथा स्मृत्याचा-
रयोरप्येवं प्रामाण्यावधारणे प्रमाणमूलकत्वकल्पना[१]
न स्यात्। तस्मादाश्वासबीजपरानपेक्षेश्वरप्रत्यक्षमूल-
कत्वादेव वेदस्य प्रामाण्यं महाजनपरिग्रहादवधा-
र्य्यते। एतेनानुमानमपि निरस्तं। मूलभूतप्रत्यक्षं
विना वेदप्रामाण्यानुपपत्त्या साध्याभावसिद्धौ बाधात्।

---

तत्प्रामाण्यावधारणादित्यत आह, 'अनादीति, 'परिग्रहादिति महाजनपरिग्रहादित्यर्थः, 'परिग्रहः' अध्ययनाध्यापन-तदर्थानुष्ठा-नादि, 'तन्निर्वाहकेति महाजनपरिग्रहनिर्वाहकं यन्महाजनानां ज्ञानजनकं प्रमाणं तद्रूपेतरप्रामाण्याधीनप्रामाण्यकेतरमूलभूतप्रमा-णकत्वाभावेनेत्यर्थः, 'अनाश्वास एवेति वेदजन्यप्रमाया अप्रमात्व-प्रसङ्ग एवेत्यर्थः, 'एवमिति महाजनपरिग्रहेणेत्यर्थः, 'प्रमाणमूलक-त्वेति वेदमूलकत्वेत्यर्थः, 'आश्वासबीजेति प्रामाण्यबीजेत्यर्थः, 'परान-पेक्षेति नित्येत्यर्थः, 'ईश्वरप्रत्यक्षेति ईश्वरीयोपादानप्रत्यक्षेत्यर्थः, 'अनुमानमपीति अध्ययनपक्षकानुमानमपीत्यर्थः, 'प्रत्यक्षं विना' नित्यप्रत्यक्षमूलकत्वं विना, 'प्रामाण्यानुपपत्त्या' स्वतः प्रामाण्यानुप-

---

(१) प्रमाणान्तरमूलकल्पनेति ख०, ग०।

ननु वेदो न पौरुषेयः अस्मर्य्यमाणकर्तृकत्वादिति बाधकमस्त्विति चेत् । न । कपिल-कणाद-गौतमैस्त-च्छिष्यैश्चाद्यपर्य्यन्तं वेदे सकर्तृकत्वस्मरणस्य प्रतीयमान-त्वात् । न च मूलभूतानुभवाभावात् स्मरणानुपपत्तिः, पौरुषेयत्वानुमानादेवानुभवात् । अस्मरणमेव तत्र बाधकमिति चेत् । न । एवं सत्यस्मरणाननुभवयोर-

---

पत्त्या । सत्प्रतिपक्षमाशङ्कते, 'नन्विति, वेदत्वं न पौरुषेयवृत्ति अध्ययनविधिविषयतावच्छेदकत्वे सति स्मर्य्यमाणकर्तृकावृत्तित्वात् व्यतिरेकेण भारतत्वं दृष्टान्त इत्यत्र तात्पर्य्यं, यथाश्रुते "मा ते भवत्वित्यादौ व्यभिचारादिति मन्तव्यं, स्मर्य्यमाणकर्तृकत्वं स्मृति-बोधितपौरुषेयत्वकत्वं, तादृशस्मृतेरप्रचरद्रूपत्वेऽपि कपिलादीनां दर्शनकर्तृणां तादृशस्मृतिज्ञानसत्त्वाद्धेतुः स्वरूपासिद्ध इति समा-धत्ते, 'कपिलेति, 'सकर्तृकत्वस्मरणस्येति पौरुषेयत्वबोधकस्मृतेरि-त्यर्थः । 'मूलभूतेति स्मृतिकर्तुर्वेदे पौरुषेयत्वानुभवाभावादित्यर्थः, तद्बोधकमूलभूतश्रुतिविरहादिति भावः । 'स्मरणानुपपत्तिः' स्मृति-प्रणयनानुपपत्तिः, 'अनुभवादिति स्मृतिकर्तुर्वेदे पौरुषेयत्वानुभवा-दित्यर्थः, तथाचानुमानाद्वेदे पौरुषेयत्वमवधार्य्य स्मृतिप्रणयनमिति भावः । 'अस्मरणमेवेति अत्र स्मरणपदं स्मरणार्थकज्ञानपरं, स्मृति-कर्तुर्वेदे पौरुषेयत्वविषयकस्मरणाभाव एवेत्यर्थः, 'तत्र बाधकमिति वेदगोचरपौरुषेयत्वानुभवादिबाधकमित्यर्थः, स्मृतिकर्तुस्तद्गोचर-स्मरणाभावेन तद्गोचरानुभवाभावः साधनीय इति भावः । 'अस्म-

न्योन्याश्रयात्। अग्रे तदर्थस्मरणाभावेऽपि प्रमाणस्यानुभावकत्वात्। न हि भाविस्मरणमपेक्ष्य प्रमाणमनुभावकं। "तस्मात्तपस्तेपानाच्चत्वारो वेदा अजायन्त ऋचः सामानि जज्ञिरे" इति कर्तृश्रवणात् "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इत्यादिकर्तृस्मरणाच्च। पौरुषेयत्वे बाधकं विना अर्थवादमात्रत्वस्य वक्तुमशक्यत्वात्। "स्वयम्भूरेष भगवान् वेदो गीत-

---

रणाननुभवयोरिति अस्मरणाननुभवसिद्ध्योरित्यर्थः। स्मरणाभावेनानुभवाभावसाधने व्यभिचारमप्याह, 'अग्रे इति, उपेक्षात्मकज्ञानस्थले इति शेषः, अप्रयोजकत्वमप्याह, 'न हीति, भगवतो वेदकर्तृत्वे वेदस्य पौरुषेयत्वानुमानं प्रमाणमुक्त्वा श्रुतिं स्मृतिमपि[१] प्रमाणयति, 'तस्मादिति, 'तपस्तेपानात्' परमेश्वरात्, 'ऋक्' वेदभागविशेषः, सामापि तथा, 'कर्तृश्रवणात्' भगवतो वेदकर्तृत्वबोधकत्वश्रुतेः, 'अन्येति विभिन्नानुपूर्वीकेत्यर्थः, इति सम्प्रदायः, विभिन्नव्यक्तिकेति तु परमार्थः, आनुपूर्वीभेदकल्पनायां गौरवात्, 'कर्तृस्मरणादिति भगवतो वेदकर्तृत्वबोधकस्मृतेरित्यर्थः। 'अर्थवादमात्रत्वस्य' स्तुतिमात्रत्वस्य। ननु वेदस्य नित्यत्वबोधकभारताद्येव वेदस्य पौरुषेयत्वे बाधकमिति तटस्थाशङ्कायामाह, 'स्वयम्भूरिति नित्य इत्यर्थः, 'एष-

---

(१) श्रुति-स्मृती अपीति ख०।

स्त्वया पुरा। शिवाद्या ऋषिपर्य्यन्ताः स्मर्त्तारोऽस्य न कारकाः" इति महाभागवतपुराणीयवाक्यस्य श्रुति-विरोधेनान्यत्र तात्पर्य्यात्। न च कार्य्यपरमेव प्रमाणं, कर्तृस्मरणस्य सर्व्वथाविध्यर्थत्वात् सकर्तृकत्वार्थवादस्य स्वर्ग-नरकार्थवादस्येव "ईश्वरमुपासीत" इति विधि-शेषत्वाच्च। साधयिष्यते च सिद्धार्थस्य प्रामाण्यं। न चैवमानन्दोऽपीश्वरे स्यादिति वाच्यं। तत्र मानान्तर-विरोधात्। पुरुषस्य भ्रम-प्रमादादिभूयिष्ठत्वेन वेदे

---

भगवानित्यपि वेदस्य विशेषणं। 'कार्य्यपरमेवेति विधिसमभिव्या-हृतमेवेत्यर्थः, 'तस्मादित्यादिविध्यसमभिव्याहृतत्वात् न प्रमाण-मिति भावः। 'कर्तृस्मरणस्येति कर्तृत्वबोधकस्मृतेरित्यर्थः, 'अविध्य-र्थत्वादिति विध्यसमभिव्याहृतत्वादित्यर्थः, तथाच भारतादेरपि व्यासादिकर्तृकता न स्यादिति भावः। 'सकर्तृकत्वार्थवादस्येति "तस्मादित्यादिविध्यसमभिव्याहृतवाक्यस्येत्यर्थः, 'स्वर्गेति "यन्न दुःखेनेत्याद्यर्थवादस्येत्यर्थः, 'विधिशेषत्वाच्चेति, अर्थवादस्याप्रामाण्य-वादिनापि विधिशेषीभूतार्थवादस्य प्रामाण्याभ्युपगमादिति भावः। 'सिद्धार्थस्येति विध्यसमभिव्याहृतवाक्यस्येत्यर्थः। 'न चैवमिति, "नित्यं विज्ञानमानन्दं ब्रह्मेत्याद्यर्थवादसत्त्वादिति भावः। 'तत्रेति, सुख-त्वावच्छेदेन पुण्यजन्यत्वकल्पनात् तत्रानन्दपदेन दुःखाभावाभिधा-नादिति भावः। 'भूयिष्ठत्वेनेति बहुतरदोषाश्रयत्वेनेत्यर्थः, 'वेदे'

नाश्वास इति चेत्। न। धर्म्मिग्राहकमानेन नित्य-सर्व्वज्ञत्वेन सिद्धे तत्र दोषाभावादिति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे तात्पर्य्यवादः॥

---

क्वचिद्वेदे, 'अनाश्वासः' अप्रामाण्यप्रसङ्गः, कर्त्तुर्भ्रमादिदोषजन्यत्वसम्भवादिति भावः।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये तात्पर्य्यवादरहस्यम्॥

## अथ शब्दानित्यतावादः।

ननु तथाप्यप्रयोजकं पौरुषेयत्वानुमानं नित्य-

---

### अथ शब्दानित्यतावादरहस्यम्।

'नित्येति नित्यत्वेन यन्निर्दोषत्वं तेनैव प्रामाण्योपपत्तेरित्यर्थः। न च निर्दोषत्वं न प्रामाण्यप्रयोजकं तेषां वर्णमात्रस्यैव नित्यतया विसम्वादिवाक्यमात्रेऽपि तत्सत्त्वादिति वाच्यं। निर्दोषत्वपदेन दोषाजन्यानुपूर्वीकत्वस्य विवक्षितत्वात्, आनुपूर्वी च तन्मते शब्दसमवेतपदार्थान्तरं सा च वेदे नित्या अन्यत्र त्वनित्या, अन्यथा वर्णानां सर्व्वत्र नित्यत्वेन नित्यानित्यविभागो न स्यात्। न चैवं नित्यत्वं न निर्दोषत्वप्रयोजकं सदोषवाक्येऽपि तत्सत्त्वादिति वाच्यं। नित्यत्वपदेनापि नित्यानुपूर्व्वीकत्वस्य विवक्षितत्वादिति।

केचित्तु नित्यत्वेन निर्दोषत्वेन चेति प्रयोजकद्वयपरतया[१] व्याचक्षुः[२]। तदसत्। नित्यत्वं यदि यथाश्रुतं तदार्थविसम्वादिवाक्यमात्रेऽतिव्याप्तेः आनुपूर्व्वीविशिष्टानां वर्णानां सर्व्वत्र नित्यत्वात्, यदि च नित्यानुपूर्व्वीविशिष्टत्वं तदा लौकिकवाक्यमात्र एवा-

---

(१) प्रयोजकत्वपरतयेति ख०।

(२) व्याचक्रुरिति ख०।

निर्द्दोषत्वेनैव तत्प्रामाण्योपपत्तेरिति चेत्। न। वर्णानां अनित्यत्वेन तत्समूहस्य सुतरामनित्यत्वात्। न च तदसिद्धं, तथाहि वर्णात्मकः शब्दोऽनित्यः समवेतत्वे सत्युत्पत्तिमत्त्वात् घटवत्। न च हेत्वसिद्धिः, उत्पन्नो

---

व्याप्तिः। एतेन नित्यत्वविशिष्टनिर्द्दोषतयेति विशिष्टप्रयोजकपरतया व्याख्यानमपि परास्तं। नित्यत्व-निर्द्दोषत्वे यदि यथाश्रुते तदा विसम्वादिवाक्यमात्र एवातिव्याप्तिः, नित्यत्वं यदि नित्यानुपूर्व्वीकत्वं तदा लौकिकवाक्यमात्र एवाव्याप्तिः निर्द्दोषत्वांशवैयर्थ्यापत्तिश्च। यदि च नित्यत्वं यथाश्रुतं निर्द्दोषत्वं दोषाजन्यानुपूर्व्वीकत्वं तदा नित्यत्वांशवैयर्थ्यादिति दिक्।

यद्यप्येवमपि निर्द्दोषत्वं न प्रामाण्यप्रयोजकं विसम्वादिशुकादिवाक्येऽतिव्याप्तेः प्रतीतार्थविपरीतप्रत्यायनेच्छाया दोषत्वमते[१] भ्रान्तप्रतारकवाक्येष्वव्याप्तेश्च, तथापि प्रसङ्गाद्वर्णानामनित्यत्वं व्यवस्थापयितुं तद्दोषमुपेक्ष्य वर्णानामनित्यत्वे तद्वृत्त्यानुपूर्व्या अनित्यत्वं साधयति, 'वर्णानामिति, 'तत्समूहस्य' वर्णवृत्त्यानुपूर्व्वीविशेषस्य, 'सुतरामिति, अन्यथा अनेकसमवेतनित्यस्य जातित्वनियमेनानुर्व्याजातित्वापत्तेरिति तद्वर्णानामनित्यत्वं। 'तथा हीति पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वेनांशतः सिद्धसाधनवारणाय 'वर्णात्मक इति वर्णशब्दवाच्य इत्यर्थः, तेन रूपादावर्थान्तरवारणाय 'शब्द इति, ध्वंसे व्यभिचारवारणाय 'समवेतत्वे सतीति, 'व्यञ्जकेति

---

(१) प्रतीतार्थेत्यादिः मत इत्यन्तः पाठः खपुस्तके नास्ति।

गकारः हट्टायामुत्पद्यमानोऽस्ति कोलाहल इति प्रत्ययात्। न च व्यञ्जकाभावात् प्रागनुपलब्धस्योपलब्धिमात्रं तस्य, उत्पन्नो गकार इति प्रत्ययात्। न चायमौपाधिकः, अन्योत्पत्तावगृह्यमाणायामपि तदनुभवात्। न च स्मर्य्यमाणारोपः, बाधकाभावात्। अन्यथा घटोत्पत्तिरपि न सिद्ध्येत्।

यत्तु श्रोत्रानुविधानात् पदं शृणोमीत्यबाधितानुव्यवसायात् श्रोत्रादन्येन ग्रहीतुमशक्यत्वाच्च श्रोत्रग्राह्यैवानुपूर्व्वी सा च घसमानकालीनप्रागभावप्रतियोगित्वं टस्येति प्रागभावप्रतियोगित्वमुत्पत्तिमत्त्वं

---

कण्ठ-ताल्वाद्यभिघातादेरभावादित्यर्थः, अयञ्च प्रागनुपलम्भे हेतुः, 'तस्य' उक्तप्रत्ययस्य, विषय इति शेषः। 'उत्पन्न इति उत्पत्त्यवगाहित्वमनुभवसिद्धमित्यर्थः, 'औपाधिकः' भ्रमरूपः, 'अगृह्यमाणायां' अननुभूयमानायां, अयमुत्पन्नो गकार इत्यादिप्रत्ययाद्वर्णानामुत्पत्तिमत्त्वं साधितं।

अन्ये तु आनुपूर्व्वीप्रत्ययादेव वर्णानामुत्पत्तिमत्त्वं सिध्यतीत्याहुः, तन्मतमुपन्यस्य दूषयति, 'यत्त्विति, 'पदमिति आनुपूर्व्वीविशिष्टवर्णमित्यर्थः, तस्यैव पदत्वात्, 'समानकालीनेति, तद्ध्वंसाधिकरणक्षणानुत्पत्तिकाले सतीति विशेषणीयं, तेन विल-

वर्णस्य प्रत्यक्षमिति, नन्‌, यज्ज्ञानानन्तरज्ञानविषयत्वं टस्यानन्तर्य्यं तयोरानुपूर्व्वी सा च मनसैव गृह्यते घट-पटज्ञानयोरिव। तदुपनीता च श्रोत्रविषयः। ननु स एवायं गकार इति प्रत्यभिज्ञाबाधितमिदमित्येकैका एव गकारादिव्यक्तयः। यद्यपि प्रत्यभिज्ञाया नित्यत्वं न विषयस्तथापि नाशकत्वाभिमतशब्दान्तरादीनां

---

त्मितोच्चरिते नातिप्रसङ्गः, 'प्रत्यक्षमिति आनुपूर्व्वीप्रत्यक्षादेव सिद्धमित्यर्थः[१], 'यज्ज्ञानेति, अन्यथा मौनिश्लोकाव्याप्तेरिति भावः। न चेश्वरोक्तस्थले ज्ञानानन्तर्य्यासम्भवादव्याप्तिरिति वाच्यं। यज्ज्ञानानन्तरमव्यवधानेन टज्ञानं भवत्वित्यभिप्रायविषयत्वे तात्पर्य्यात्, यत्र च शुकादिवाक्ये न तथाभिप्रायसम्भवस्तत्रापीश्वरमादायैव तत्सम्भवः। नन्वेवं सा श्रोत्रग्राह्या न स्यादित्यत आह, 'सा चेति, 'घट-पटज्ञानयोरिवेति घट-पटज्ञानयोरानन्तर्य्यमिवेत्यर्थः, 'तदुपनीता' मानसोपनीता,[२] पदं शृणोमीत्यनुव्यवसाये लौकिकविषयतानुभवो विशेष्यमात्र एवेति हृदयं। 'इदमिति अनित्यत्वानुमानमित्यर्थः, 'एकैकाएवेति एकैका नित्या एवेत्यर्थः, 'शब्दान्तरादीनामिति, 'आदिना तदुत्तरोत्पन्नपदार्थान्तरपरिग्रहः,

---

(१) एतेन टस्योत्पत्तिमत्वं सिद्धं एवं वर्णान्तरस्यापीत्यर्थः।

अन्तरासम्भवेऽपि तावत्कालीनतां गकारस्य गृह्णातीति "तावत्कालं स्थिरञ्चैनं कः पश्चान्नाशयिष्यतीति" पराभिमता ऽऽशुविनाशित्वव्यतिरेकान्नित्यतायामेव पर्य्यवस्यति। न च धर्म्मिणो गकारस्य भेदेऽपि एकजातीयत्वेन प्रत्यभिज्ञा, तथा सति तज्जातीयोपमितिः स्यान्न तु स एवायमिति। अथ तारत्व-मन्दत्व-विरुद्धधर्म्माध्यस्तविषयत्वेन सा न प्रमाणं। न च तारत्वादीनां स्वाभाविकत्वं विरुद्धत्वञ्चासिद्धं, मन्दस्तारो गकारस्तारान्मन्दोऽन्य इत्यनन्यथासिद्धप्रत्यक्षात् तत्सिद्धेः। न ह्यपां शैत्य-द्रवत्वे स्वाभाविके इत्यत्र प्रत्यक्षादन्यत् प्रमाणं। तत् किं यो यद्गतत्वेन भासते

---

'तावत्कालीनतां' चिरकालीनगकाराभिन्नतां, 'आशुविनाशित्वव्यतिरेकादिति, विलम्बविनाशित्वबाधसहकृतादिति शेषः, विलम्बविनाशिताभावस्योभयसम्मतत्वादिति भावः। 'पर्य्यवस्यतीति वर्णः पर्य्यवस्यतीत्यर्थः, तथाच वर्णो नित्यः विलम्बविनाशिताभावे सत्याशुविनाशिताभावादित्यनुमेयमिति भावः। 'सा' अभेदप्रत्यभिज्ञा, 'स्वाभाविकत्वं' वर्णवृत्तित्वं, स्वाभाविकत्वे हेतुमाह, 'मन्द इति मन्दो गकारस्तारो गकार इत्यर्थः, विरुद्धत्वे हेतुमाह, 'तारादिति, मन्दत्वावच्छेदेन तारभेदग्रहादिति भावः। 'तत्सिद्धेरिति तयोः शब्दवृत्तित्व-विरुद्धत्वयोः सिद्धेरित्यर्थः। आशङ्कते, 'तत् किमिति,

स तद्धर्म्म एव तथा सति रक्तः पटः लोहितः स्फटिक-इत्यादावपि तथा स्यादविशेषात्, न, रक्तत्वादीना-मन्यधर्म्मत्वस्थितौ स्फटिकादीनाञ्च तद्विरुद्धधर्म्मत्वे स्थिते जवाकुसुमादेरन्वय-व्यतिरेकानुविधानाद्बाधेन तत्र भ्रान्तत्वात्। न चेह तारत्वादेरन्यधर्म्मत्वेनोप-स्थितिः। नापि गकारादीनां तद्विरुद्धधर्म्मवत्त्वं, नाप्य-न्यस्य तारत्वादिधर्म्मिणोऽनुविधानं। न चावश्यं स्वीकृतवायोरेव धर्म्मास्तारत्वादयोगकारादिगतत्वेन भासन्ते इति वाच्यं। स्पर्शाग्रहे त्वचो व्यापाराभावेन त्वचा तदग्रहात्। न च श्रवणा तद्ग्रहः, अवायवीय-त्वेन वायुमात्रधर्म्माग्राहकत्वाच्चक्षुर्वत्। तारत्वादयो

---

'तथा स्यात्' रक्तत्वादेः स्फटिकादिधर्म्मत्वं स्यात्, 'अन्यधर्म्मत्वेति स्फटिकादीतरधर्म्मत्वव्यवस्थितावित्यर्थः, प्रमाणान्तरमाह, 'स्फटि-केति, हेत्वन्तरमाह, 'जवेति, 'अन्वयेति, स्फटिकादौ रक्तत्वप्रत्यये इत्यादिः, 'बाधेन' रक्तत्वाभावस्य प्रमाणसिद्धत्वेन, 'अनुविधानमिति, तारत्वादिप्रत्यय इति शेषः। 'न चावश्यमिति भवतामपि तार-मन्दशब्दोत्पत्तौ विजातीयवायुसंयोगस्य नियामकत्वादिति भावः। 'स्पर्शाग्रहे' स्पर्शाविषयकसाक्षात्कारे, 'व्यापाराभावेन' जन्यत्वाभावेन, 'अवायवीयत्वेन' अवायवीयवहिरिन्द्रियत्वेन, तेन मनसि न व्यभि-

वा न वायुधर्म्माः श्रावणत्वात् कादिवत्, वायुर्वा न श्रवणमात्रग्राह्यधर्म्मीमूर्त्तत्वात् पटवत्, अतएव न तारत्वादयो वायुधर्म्मध्वनिधर्म्माः वायुधर्म्मस्य ध्वनेर-ग्रहात्। न च ध्वनिरूपः शब्दो नभोवृत्तिरेव तथा सति तद्धर्म्मतारत्वादिग्रहः श्रवसेति वाच्यं। तारोऽयं गकार इत्यत्र ध्वनीनामस्फुरणात् तत्कारणाभावाच्च। न च व्यक्त्या विना जातिस्फुरणं, तस्या व्यक्तिसमा-नसंवित्संवेद्यत्वात्। न च स्मर्य्यमाणतारत्वाद्यारोपः,

---

चारः,[१] मात्रपदं सत्ता-द्रव्यत्ववारणाय, एवमुत्तरत्र सर्व्वत्र यथा-योग्यं मात्रपदमध्याहार्य्यं। 'अतएवेति, वक्ष्यमाणध्वनेरग्रहादिति-दोषादेवेत्यर्थः, 'अग्रहादिति श्रवणमात्रग्रहासम्भवादित्यर्थः, तथाच व्यक्तिग्रहं विना कथं जातिग्रह इति भावः। ननु तारत्वादिनैव ध्वनेः स्फुरणमभ्युपगम्यतामत आह, 'तत्कारणेति गकराद्युत्पत्ति-समये ध्वनिकारणीभूतस्य शङ्खादेरभावादित्यर्थः। ननु तारत्वा-दिकं जातिविशेषस्तस्य शब्दवृत्तित्वेऽपि तन्नियामकतया वायुनिष्ठं वैजात्यमावश्यकं तथाच लाघवात् तदेवास्तु किं शब्दवैजात्यान्तरे-

---

(१) न चाग्रहकत्वं लौकिकप्रत्यक्षाजनकत्वमेव तच्च मनसो व्याहतमिति व्यर्थं विशेषणमिति वाच्यं। ज्ञानमात्रस्यैव मनोजन्यत्वात्, अत्र च लौकिकविषयित्वावच्छिन्नजनकताप्रवेशे व्यभिचारानवकाशादिविशेषण-वैयर्थं बोध्यं।

बाधकाभावात् प्रथमतत्तारत्वाद्यप्रसङ्गाच्चेति। मैवं। तारत्वादयो न गकारादिजातयः गत्वादिना सङ्कर-प्रसङ्गात्। न च नानैव तारत्वं, नानाकारानुगत-प्रत्ययाभावप्रसङ्गात्। न च सजातीयसाक्षात्कारप्रति-बन्धकतावच्छेदकशब्दवृत्तिजातित्वेन नानातारत्वेऽनु-

---

गमेति गौरवमेव बाधकमित्यस्वरसादाह, 'प्रथमत इति सादृश्य-विशिष्टगकारादिबुद्धिं विनेत्यर्थः, सादृश्यविशिष्टधर्म्मिज्ञानस्य स्मर्य्य-माणारोपे हेतुत्वादिति भावः। 'सजातीयेति स्वाश्रयसजातीये-त्यर्थः, 'प्रतिबन्धकतावच्छेदकेति ज्ञानविषयतया प्रतिबन्धकताव-च्छेदकेत्यर्थः, मन्दत्वभुत्वाविरहविशिष्टतारलौकिकसाक्षात्कारत्वेन लौकिकविषयितया तारशब्दवत्त्वेनैव वा कार्य्यसहवर्त्तितया प्रति-बन्धकत्वादिति भावः। तारशब्दस्तु स्वरूपतो न प्रतिबन्धकः[१] देशान्तरे तारशब्दसत्त्वेऽपि मन्दशब्दस्याग्रहापत्तेः यादृशतारत्वा-श्रयग्रहे यादृशमन्दत्वाश्रयग्रहो न जायते तादृशमन्दत्वाश्रयसाक्षात्-कारं प्रति तादृशतारत्वाश्रयसाक्षात्कारत्वेन प्रतिबन्धकत्वं तेन सर्व्वेषामेव शब्दानां किञ्चिदपेक्ष्य तारत्व-मन्दत्वेऽपि च न क्षतिः, प्रतिबन्धकाभावकूटश्च हेतुः तेनैकविधमन्दत्वाश्रयग्रहे नानाविधता-रत्वाश्रयग्रहस्य प्रतिबन्धकत्वेऽपि न क्षतिः। अत्र स्वावच्छिन्नाभाव-साक्षात्कारप्रतिबन्धकतावच्छेदके गत्वादौ मधुरतरशब्देनोत्कट-

---

(१) स्वरूपसन्न प्रतिबन्धक इति ख०।

विषयरूपतया स्पर्शादिग्रहप्रतिबन्धाच्छब्दवृत्तिमधुरतरत्वे व्याप्ति-व्याप्तिवारणाय स्वाश्रयसजातीयेति, साजात्यञ्च गुणत्वव्याप्यजात्या तेन स्पर्शादेर्गुणत्वादिना मधुरतरशब्दसजातीयत्वेऽपि न क्षतिः। न चैवं मधुरतरशब्दस्य स्वसमानजातीयकटुशब्दग्रहं प्रत्यपि प्रति-बन्धकतया सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकं मधुरतर-शब्दत्वं एवं गत्वावच्छिन्नाभावसाक्षात्कारस्यापि गकारविषयक-तया गत्वादिकमपि सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदक-मिति वाच्यं। गुणत्वव्याप्यजात्या स्वाश्रयसजातीयसाक्षात्कारमात्र-वृत्तिधर्मावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताया विवक्षितत्वात् मधुरतरशब्दस्य च स्वाविषयकसाक्षात्कारत्वावच्छेदेनैव[1] प्रतिब-न्धकत्वात् उत्कटमधुररसस्यापि रसान्तरसाक्षात्कारप्रतिबन्धक-तया तज्जातावतिप्रसङ्गवारणाय शब्दवृत्तिपदं, समवायेन शब्दवृ-त्तितालाभाय जातिपदं, तेन मधुररसनिष्ठोत्कर्षस्यापि कालिक-तया शब्दवृत्तित्वेऽपि न तद्दोषतादवस्थ्यं। न चात्र प्रतिबन्धकताव-च्छेदकत्वं यदि तत्पर्य्याप्त्यधिकरणत्वं तदा तारत्वेऽसम्भवः मन्दबुभुत्सा-विरहसहकृततारत्वस्यैव तत्पर्य्याप्त्यधिकरणत्वात्. अथ[2] तत्कोटि-प्रविष्टत्वं तदा मन्दबुभुत्साविरहांशे मन्दत्वस्यापि प्रवेशान्मन्दत्वे-ऽप्यतिप्रसङ्ग इति वाच्यं। प्रतिबन्धकतावच्छेदकत्वपदेन ज्ञानविषय-तया प्रतिबन्धकतावच्छेदकसमवेततया तत्कोटिप्रविष्टत्वस्य विव-

---

(१) एवं गत्वावच्छिन्नसाक्षात्कारप्रतिबध्यतावच्छेदककोटौ स्मृत्यादि-साधारण्याय साक्षात्कारत्वाप्रवेशाच्च नोक्तदोष इति बोध्यं।

(२) अथेत्यस्य यदीत्यर्थः।

चितत्वात्। ननु तथापि तारबुभुत्साविरहविशिष्टमन्दबुभुत्सासह-कृतमन्दशब्दसाक्षात्कारत्वेन तारशब्दग्रहं प्रति प्रतिबन्धकत्वात् मन्दत्वेऽतिप्रसङ्गः। न च मन्दशब्दज्ञानं जायतां मन्दशब्दानुभवो जायतामित्यादिभेदेन तच्छब्दसाक्षात्कारो जायतां तत्पुरुषोक्त-शब्दसाक्षात्कारो जायतामित्यादिभेदेन च मन्दबुभुत्साया अननु-गमात् कथमेकरूपेण हेतुत्वं[१] मन्दशब्दसाक्षात्कारेच्छात्वेनानुगमे प्रमेयं जायतामित्यादेरपि सङ्ग्रहापत्तेरिति वाच्यं। तत्तदिच्छा-न्यमन्दसाक्षात्कारेच्छात्वेनानुगमादिति चेत्, न, तत्तदिच्छान्य-मन्दबुभुत्सावैशिष्ट्यानवच्छिन्नत्वेन प्रतिबन्धकताया विशेषणीयत्वात्।

साम्प्रदायिकास्तु तारबुभुत्साविरहविशिष्टमन्दबुभुत्सात्वेन मन्द-बुभुत्सैव सामानाधिकरण्यप्रत्यासत्त्या तारशब्दग्रहप्रतिबन्धिका न तु मन्दसाक्षात्कारत्वस्यापि तत्र प्रवेश इत्याहुः। तदसत्। मन्द-शब्दासत्त्वेऽपि तादृशेच्छायां तारशब्दाग्रहप्रसङ्गादिष्टापत्तौ चानु-भवविरोधात्।

प्राञ्चस्तु प्रतिबन्धकतावच्छेदकत्वं प्रतिबन्धकतावच्छेदकत्वपर्य्याप्त्य-धिकरणस्वाश्रयसाक्षात्कारत्वकत्वं, मन्दशब्दसाक्षात्कारत्वञ्च न तथा बुभुत्साविरहवैशिष्ट्यादेरपि तत्र प्रवेशात्। न चैवं तारत्वेऽप्यसम्भवः तत्रापि बुभुत्साविरहवैशिष्ट्यस्य प्रवेशादिति वाच्यं। मन्दबुभुत्सा-विरहविशिष्टतारशब्दसाक्षात्कारत्वेन हि न प्रतिबन्धकत्वं किन्तु तारशब्दग्रहकालीनमन्दशब्दग्रहे मन्दबुभुत्सा हेतुः, कार्य्यतावच्छे-

(१) कथमनेन रूपेण हेतुत्वमिति ख०।

गमः, तदप्रतिसन्धानेऽपि तारत्वानुगतप्रत्ययात् । तारत्व-मन्दत्वे च न शब्दवृत्तिजाती सप्रतियोगिकत्वात् ।

---

दकश्च न तारशब्दग्रहकालीनमन्दशब्दसाक्षात्कारत्वं तथा सति तारशब्दासत्त्वेऽपि मन्दबुभुत्सासत्त्वे तारशब्दग्रहकालीनमन्दशब्द-साक्षात्कारापत्तेः किन्तु मन्दबुभुत्सोत्तरमन्दशब्दसाक्षात्कारत्वं,[१] इत्यञ्च तारशब्दग्रहकाले सामान्यसामग्रीमर्य्यादया मन्दसाक्षात्-कारवारणाय तदकालीनमन्दसाक्षात्कारे केवलं तारशब्दसाक्षात्-कारत्वेनैव प्रतिबन्धकत्वमिति तारशब्दसाक्षात्कारत्वस्य तत्पर्य्या-प्त्यधिकरणत्वादित्याहुः । तदसत् । कार्य्य-कारणभावद्वयकल्पने गौरवात् मानाभावाच्च । न च तवापि विशेषण-विशेष्यभावेन विनिगमनाविरहात् कार्य्य-कारणभावद्वयमिति[२] वाच्यं । तथापि तवापि कार्य्य-कारणभावचतुष्टयात्[३] तत्तदिच्छान्यमन्दबुभुत्सोत्तर-त्वस्य कार्य्यतावच्छेदकघटकतया कार्य्यतावच्छेदकगौरवं पुनरधिक-मिति दिक् ।

'तदप्रतिसन्धानेऽपि' तादृशावच्छेदकत्वाप्रतिसन्धानेऽपि, तादृश-प्रत्ययस्य कदाचिदपलापमसम्भवादाह, 'तारत्व-मन्दत्वे चेति, 'न शब्द-

---

(१) मन्दबुभुत्साविशिष्टमन्दशब्दसाक्षात्कारत्वमिति ख० ।

(२) विशेषण-विशेष्यभावभेदेन कार्य्य-कारणभावद्वयमितीति ख० ।

(३) मन्दबुभुत्सोत्तरत्व-मन्दसाक्षात्कारत्वयोस्तारानुत्तरत्व-मन्दसाक्षात्-कारत्वयोश्च विशेषण-विशेष्यभावभेदात् इत्यर्थः । न चोत्तरत्वावच्छिन्नं प्रत्येव हेतुत्वान्न विशेष्यप्रवेश इति वाच्यं । अनुत्तरत्वेऽपि तथा सम्भ-वात् प्रकृतासङ्गतेरिति ध्येयम् ।

नापि तारत्व-मन्दत्वयोर्विरोधः, य एव गकारस्तार-आसीत् स एवेदानीं मन्द इति समयभेदेन वक्तृभेदेन च तयोरेकत्वप्रतीतेः। तारोऽयं न तारतरस्ताराल्मन्दोऽन्य इति भेदप्रतीतिरस्तीति चेत्, न, धर्म्मिणोऽभेदे भासमाने विशिष्टधर्म्मिभेदप्रतीतेर्धर्म्मभेदविषयत्वात्। एकत्र घटे लोहितोऽयं न श्यामइदानीमिति प्रतीतिवत्। न च तीव्रेण गकारेण मन्दगकाराभि-

---

वृत्तीति, तथाच शब्दवृत्तिजातितया नानुगमसम्भव इति भावः। 'शब्दवृत्तीति स्वरूपकथनं तेन तन्मते नाप्रसिद्धिः,[१] 'सप्रतियोगिकत्वादिति सावधिकत्वादित्यर्थः, अयमस्मात्तारः अयमस्मान्मन्द-इत्येव प्रत्ययादिति भावः। रसादिवृत्त्युत्कर्षापकर्षजातेस्तन्मतेऽभावान्न व्यभिचार इति भावः। शब्दवृत्तिजातित्वमभ्युपेत्याह, 'नापीति, 'आसीदिति उपलब्ध इत्यर्थः, अन्यथातीतत्वानन्वयात्। 'वक्तृभेदेन चेति, य एव देवदत्तेन तार उच्चरितः स एव चैत्रेण मन्द-उच्चरित इति वक्तृभेदेन चेत्यर्थः, 'तयोः' तारत्व-मन्दत्वयोः, तारोऽयं न तारतर इति दृष्टान्तार्थं, 'अस्तीति, अधिकरणाभेदप्रत्यभिज्ञा बाधिकेति शेषः। 'भासमान इति प्रमाणसिद्ध इत्यर्थः, 'धर्म्मीति तारत्वादिधर्म्मभेदविषयत्वादित्यर्थः, 'तीव्रेणेति तीव्रगकारसाक्षात्कारेणेत्यर्थः, मन्दबुभुत्साविरहसहकृतेनेति शेषः, 'अभिभवादिति

---

(१) तन्मते गुणगतजात्यनङ्गीकारादिति भावः।

भवात् तयोर्भेदः न हि तदेव तदभिभावकं, तस्यैव तेनैव तदैव ग्रहणाग्रहणयोर्विरोधात् इति वाच्यं। तारत्वव्यञ्जकवायोर्बलवत्त्वेन मन्दत्वव्यञ्जकवाय्वभिभवात् मन्दत्वस्याग्रहणात् । सन्तु वा तार-मन्दरूपाद्योऽभिन्नाएव गकारास्तत्प्रत्यभिज्ञाने बाधकाभावात् । तस्मात् वायुधर्म्मा एव तारत्वादयः शब्दगतत्वेन

---

साक्षात्कारप्रतिबन्धादित्यर्थः, 'अभिभावकमिति साक्षात्कारप्रतिबन्धकसाक्षात्कारविषयतावच्छेदकमित्यर्थः, 'तस्यैव' गकारस्यैव, 'तदैव' तस्मिन्नेव काले, 'तेनैव' पुरुषेणैव । 'बलवत्त्वेन' प्रतिबन्धकत्वेन, 'वाय्वभिभावादिति वायोस्तेन सह सामानाधिकरण्यादित्यर्थः, तथाच तीव्रगकारसाक्षात्कारो न प्रतिबन्धकः किन्तु श्रोत्रावच्छेदेन विजातीयवायुसम्बन्ध एव प्रतिबन्धक इति भावः । 'अभिन्ना एवेति पाठः ताररूपा गकाराः सर्व्वेऽभिन्नाः मन्दरूपा गकाराः सर्व्वेऽभिन्ना इत्यर्थः, न तु तार-मन्दयोरभेद इति भावः । 'प्रत्यभिज्ञान इति स एवायं तारः स एवायं मन्द इति पूर्व्वोत्तरतारयोः पूर्व्वोत्तरमन्दयोश्चाभेदप्रत्यभिज्ञायाः प्रमात्वे बाधकाभावादित्यर्थः, 'नापीत्यादेरभ्युपगमवादेनैव उक्तत्वात् । स्वमतेनोपसंहरति, 'तस्मादिति, 'वायुधर्म्माः' वायुसमवेताखण्डोपाधिरूपाः, शब्दसमवेतत्वे गत्वादिना सङ्करप्रसङ्गात्[१] नानात्वोपगमे गकार-

---

[१] तन्मते साङ्कर्य्यस्यानुगतधर्म्ममात्रबाधकत्वमिति भावः ।

भासन्ते दर्पणधर्म्मा इव मुखादौ तद्ग्रहणाच्च स्पर्शपुर-स्कारेण कर्णशष्कुलीत्वगिन्द्रियेण तार-मन्दजनकवायू-नां त्वयाप्युत्कर्षापकर्षस्योद्भूतस्पर्शस्य च स्वीकारात् श्रोत्रेणैव वा। चक्षुरादिर्यन्न वायुधर्म्मग्रहस्तत्र।योग्यत्व-मुपाधिः, अन्यथा श्रोत्रेण स्वगुणो न गृह्येत इन्द्रिये

---

ककारसाधारणताराकारानुगतप्रत्ययस्यानुपपत्तिप्रसङ्गादिति भावः। न चैवं गत्वादिकमपि वायुधर्म्मोऽस्तु तारत्वादिवत् वर्णस्त्वेक-एवास्तु लाघवादिति वाच्यं। य एव गकारस्तार आसीत् स-एवेदानीं मन्द इतिवत्ककारादौ गकारादित्वेन प्रत्यभिज्ञाविरहात् प्रत्युत ककाराद्गकारोऽन्य इत्यादिप्रतीतेरिति हृदयं। 'स्पर्शपुर-स्कारेणेति स्पर्शं विषयीकृत्यैवेत्यर्थः, 'कर्णेति कर्णशष्कुल्यवच्छेदेन त्वगिन्द्रियसन्निकर्षेणेत्यर्थः, यथा चक्षुर्गोलकावच्छिन्नत्वगिन्द्रियसन्नि-कर्षस्यैव धूमस्पर्शग्राहकत्वं तथा कर्णशष्कुल्यवच्छिन्नत्वगिन्द्रियसन्नि-कर्षस्यैव तादृशस्पर्शग्राहकत्वमिति भावः। अत एवान्यावच्छेदेन त्वगि-न्द्रियसन्निकर्षेण न तद्ग्रहणमिति। 'उत्कर्षेति, अन्यथा कार्य्यवैजात्यं न स्यादिति भावः। 'उद्भूतस्पर्शस्येति, त्वच इवानुद्भूतस्पर्शस्य वायोः शब्दाजनकत्वादिति भावः। नन्वेवं कुष्ठाद्युपहतत्वचा तन्न गृह्येत[१] तारं शृणोमीत्यनुव्यवसायापत्तिश्चेत्यत आह, 'श्रोत्रेणैवेति, 'तद्-ग्रहणमित्यनुषज्यते, 'अन्यथेति सहचारदर्शनमात्रात् कल्पने इत्यर्थः,

---

(१) कर्णावच्छिन्नकुष्ठाद्युपहतत्वचा ग्राह्यत्वं न स्यादिति ख०।

तथा दर्शनात्, चक्षुर्वा न पार्थिवरूपग्राहकं अपार्थिवेन्द्रियत्वात् रसनवत् इत्याद्यपि स्यात्। अथ योग्यो-योग्येन गृह्यते स्वगुणः परगुणो वा, योग्यता च फल-बलेन कल्प्यते, तर्हि श्रोत्रस्यापि वायुधर्म्मग्रहे तुल्यं। न च तारो गकार इत्यत्र वायोरप्रतीतिः, वायुत्वेना-प्रतीतावपि तारत्वादिनैव तत्प्रतीतेः, यथा अग्नित्वे-नाप्रतीतावपि अयोगोलके लोहित इति प्रतीतिः। ननु वायु-शब्दयोस्त्वचा श्रोत्रेण वा ग्रहे केन तारोऽयं गकारइत्यारोप इति चेत्, न, उभयेन्द्रियग्राह्ययोर-संसर्गाग्रहात् संसर्गव्यवहारः। अस्तु वा त्वगिन्द्रियोप-

---

'तथा दर्शनादिति स्वगुणाग्राहकत्वदर्शनादित्यर्थः, 'न पार्थिवरूपेति, रसनादेः पृथिवीसमवेतसत्ताग्राहकतया व्यभिचारवारणाय रूपपदं, तच्च रसेतरगुणपरं, अतएव घ्राणे व्यभिचारवारणाय हेतावपा-र्थिवेति, त्वचः पक्षसमतया[१] व्यभिचारो न दोषाय, त्वगग्राह्यत्वेनापि वा गुणो विशेषणीयः। 'न चेति, त्वक् च वायुग्रहं विना न तद्-वृत्तिजातिग्रहसमर्थेति भावः। त्वचा तारत्वग्रहपक्षे इदं,[२] 'वायु-त्वेनेति, वायुत्वस्य तन्मते त्वचो योग्यत्वेऽपि दोषाद्ग्रहइति भावः। त्वचा तारत्वग्रहपक्षे शङ्कते, 'नन्विति, परमतेनाह, 'अस्तु वेति,

---

(१) प्रतिबन्धिमुद्रया तत्रापि तस्य साध्यत्वमिति भावः।

(२) अन्यथा वायुग्रहापेक्षा न स्यात्।

नीतस्य श्रोत्रेणारोपः श्रोत्रेणैव वा तारत्वग्रहोऽपीत्युक्तं, उत्पत्तिमत्त्वञ्चासिद्धं तत्प्रतीतेः श्रुतपूर्व्वोऽयं गकार-इति प्रत्यभिज्ञानबाधितत्वात्। ननु प्रत्यभिज्ञैव तया बाधिता गत्वजात्यौपाधिकोऽभेदप्रत्ययो गकारे सम्भवतीत्युक्तमिति चेत्, न, गत्वजातेरसिद्धेः भेदे भासमाने ह्यभेदप्रतीतिर्जातिमालम्बते। न च गकारभेदप्रतीतिरस्ति, तारत्व-मन्दत्वे अपि न भेदहेतू य एव तारः स एवेदानीं मन्द इति प्रत्यभिज्ञानात्, गकारानित्यत्वेऽपि तथा सम्भवतीति चेत्, तर्हि नित्यत्वेऽपि कर्ण-

खमतेऽन्यथाख्यातेरभावात्। 'तयेति उत्पत्तिप्रतीत्येत्यर्थः, 'बाधितेति व्यक्त्यभेदविषयत्वेन बाधितेत्यर्थः, न व्यक्त्यभेदविषयेति यावत्, किन्तर्हि तस्या विषय इत्यत आह, 'गत्वेति, 'गत्वजातेरिति गत्वस्यैकत्वेनैकव्यक्तिमात्रवृत्तित्वादिति भावः। ननु जातेरसिद्धावप्यनुगतधर्म्मान्तरमभेदप्रत्यभिज्ञाविषयः स्यात् यद्ग्रहे कोलाहलधीरित्यतो दोषान्तरमाह, 'भेद इति, 'भासमाने' अनुभवसिद्धे, अन्यथा घटादिव्यक्त्यभेदप्रत्यभिज्ञानमपि दत्तजलाञ्जलि[१] स्यादिति भावः। ननु तारत्वादिविरुद्धधर्म्मेण भेदोऽनुमेय इत्यत आह, 'तारत्वेति, 'भेदहेतू' भेदानुमापकौ, क्वचित् तथैव पाठः, 'य एवेति, तथाच विरुद्धत्वाभावान्न भेदलिङ्गत्वमिति भावः। 'गकारानित्यत्वेऽपि' गकारस्योत्पत्तिमत्त्वेऽपि, 'तयेति व्यक्त्यभेदप्रत्यभिज्ञेत्यर्थः,

(१) घटादिव्यक्त्यभेदप्रत्यभिज्ञानेऽपि दत्तजलाञ्जलिरिति ख०।

शष्कुलीत्वगिन्द्रियोपनीतवायुधर्म्मोत्पत्तेरुपाधित्वं सम्भ-
वति । न च वायोरप्रतीतिः, उत्पन्नत्वेनैव तत्प्रतीतेः
लोहितत्वेनेव जवाकुसुमस्य स्फटिके । अस्तु वा प्राग-
नुपलभ्यमानत्वे सति उपलभ्यमानत्वेन उत्पन्नस्य
सादृश्येन स्मृतोत्पत्तिमत्त्वारोपः । न चैवं घटादावपि
नोत्पत्तिः सिद्ध्येदिति वाच्यम् । कुलालव्यापारान-
न्तरमनुभूयमानघटस्य तद्व्यापारात् प्रागनुभूयमानेन
घटेन नाभेदोभासते किन्तु भेद एवेति तत्र प्रागसत्त्वे
सत्त्वं सिध्यति, गकारे तूत्पत्तिप्रतीत्यनन्तरं कण्ठ-
ताल्वादिव्यापारात् पूर्व्वमनुभूयमानगकारेणाभेदप्र-
त्ययात्[१] दीपवत् स व्यञ्जक एव । अथ शब्द उत्पद्यते

आरोपरूपत्वादिति भावः । तर्हि तुल्यन्यायतयोत्पत्तिमत्त्वप्रत्ययस्यापि
भ्रमत्वं सम्भवतीत्याह, 'तर्हीति, 'उपाधित्वमिति आरोप्यत्वमित्यर्थः,
तथाच विनिगमकाभावादुत्पत्तिमत्त्वं सन्दिग्धमिति भावः[२] । अनु-
भूयमानारोपं निषेधति, 'न चेति, 'स्फटिक इति, तादात्म्येनेति
शेषः । ननु तदानीं नियमतो वायोस्तारत्वेनानुभवकल्पने वायु-
त्वानुभवप्रतिबन्धकदोषकल्पने च मानाभावो गौरवञ्चेत्यत आह,
'अस्तु वेति, सादृश्यग्रहं विना तादृशधीरसिद्धैवेति भावः । 'सः'
कण्ठताल्वादिव्यापारः, 'व्यञ्जक एव' शब्दस्य व्यञ्जक एव, 'उत्कर्षेति

(१) अभेदप्रत्यभिज्ञानादिति ख०, ग० ।

(२) सन्दिग्धासिद्धमिति भाव इति ख० ।

उत्कर्षवत्त्वे सति अपकर्षवत्त्वात् माधुर्य्यवत् अतएवा-

परममहत्त्वे व्यभिचारवारणाय विशेष्यं, परमाणुपरिमाणे महत्त्वापे-क्षयापकृष्टे व्यभिचारवारणाय सत्यन्तं। न च तथापि परमाणो-रणुत्वस्य द्व्यणुकाणुत्वापेक्षयोत्कृष्टत्वात्तद्दोषतादवस्थ्यमिति वाच्यं। अपकर्षपदेन स्वाश्रयसजातीयप्रतियोगिकापकर्षस्य विवक्षितत्वात् स्वपदमपकर्षपरं, साजात्यञ्च गुणत्वव्याप्यव्याप्यजात्या[१]। न चैवं सत्यन्तवैयर्थ्यमिति वाच्यम्। अग्निस्पर्शापेक्षयाऽत्यन्तापकृष्टे ग्रीष्मो-ष्माद्यारम्भकपरमाणुगतोष्णस्पर्शे व्यभिचारवारकत्वात्। स्वाश्रय-समानाधिकरणद्रव्यविभाजकोपाधिमद्वृत्तित्वेन सजातीयं विशेष-णीयं तेन शर्करारसाद्यपेक्षयापकृष्टे तण्डुलादिरसाद्यपेक्षया चोत्कृष्टे जलपरमाणुरसादौ न व्यभिचारः जलरसापेक्षया तत्रापकर्षविर-हात्, स्वपदमपकर्षपरं। यदि च परमाणुपरिमाणे द्व्यणुकपरि-माणापेक्षयापि नोत्कर्षोऽस्ति किन्त्वपकर्ष एव तस्यात्यन्तापकृष्टत्वेन सुप्रसिद्धत्वात् अधिकदेशव्यापकत्वेनैव परिमाणस्योत्कृष्टत्वमिति गुणकिरणावल्यामाचार्य्यैरभिहितत्वाच्च, तदा तु सजातीयेत्यनुपा-दाय तादृशोपाधिमद्वृत्तिप्रतियोगिकत्वेनापकर्ष एव विशेषणीयः।

केचित्तु प्रत्यक्षत्वे सतीत्यनेन विशेषणान्न परमाणुपरिमाणादौ व्यभिचारः। न च सत्यन्तवैयर्थ्यं, हेतुद्वये तात्पर्य्यात्, किन्तूत्कर्ष-वत्त्वघटितहेतौ प्रत्यक्षं बहिरिन्द्रियजत्वेन विशेषणीयमत आत्म-परिमाणस्य प्रत्यक्षत्वेन न तत्र व्यभिचार इति प्राहुः।

---

(१) महत्त्वस्य परिमाणत्वेन सजातीयत्वेऽपि तद्व्याप्याणुत्वादिजात्या न तथात्वं तच्च द्व्यणुक एवेति तदपेक्षयापकर्षस्तत्रेति भावः।

नित्यत्वमिति चेत्। न। तारत्व-मन्दत्वयोरुत्कर्षापकर्ष-योर्गकारे पूर्व्वन्यायेनासिद्धेः सिद्धौ वा जातिसङ्करभये-नोत्कर्षापकर्षयोर्जात्योः रसत्व-शब्दत्वव्याप्ययोर्नानात्वेन रसशब्दसाधारण्याभावात्। अतएव सजातीयसा-क्षात्कारप्रतिबन्धकतावच्छेदकसामान्यमुत्कर्षः तत्प्रति-बध्यसाक्षात्कारविषयतावच्छेदकसामान्यमपकर्ष इति साधारणो हेतुरपास्तः। तारत्वादेर्गकारजातित्वा-सिद्धेः। साधनावच्छिन्नसाध्यव्यापकमूर्त्तगुणत्वस्याश्रौ-

---

अनुमितानुमाने गौरवादाह, 'अत एवेति, 'अनित्यत्वमिति, शब्दे साधनीयमिति शेषः। 'साधारण्येति, तथाच शब्दवृत्त्युत्कर्षा-पकर्षघटितव्याप्तिरेवासिद्धेति भावः। 'सजातीयेति, अत्र हेतुद्वये तात्पर्य्यं, गगन-परमाणुपरिमाणवृत्तिजात्योर्निरुक्तप्रतिबन्धकतावच्छे-दकत्व-प्रतिबध्यतावच्छेदकत्वयोरसत्त्वेन व्यभिचाराभावादुभयत्र नवश्य प्रयोजनविरहादिति ध्येयं। अमूर्त्तमात्रवृत्तिद्वित्वादौ[१] साध्या-व्यापकतया 'साधनावच्छिन्नेति, इदञ्च सन्निहितहेतुद्वयापेक्षया अन्यथा सुखादौ कर्मणि च साध्याव्यापकत्वापातात्, 'गुणपदञ्च समवायेन मूर्त्तवृत्तितालाभाय, ध्वनिश्च वायुधर्म्म इति मतेनेद-मिति न ध्वनौ साध्याव्यापकता, 'अश्रौत्रेति श्रोत्राग्राह्यगुणत्वस्ये-त्यर्थः, नातः श्रोत्रसंयोगादौ व्यभिचारः, ध्वनिभिन्नभावत्वावच्छिन्न-

---

(१) अवृत्तिमात्रद्वित्वादाविति ख०।

त्वस्य चोपाधित्वात् अप्रयोजकत्वाच्च। न हि कारणाधीन एव उत्कर्षोऽपकर्षश्च, परममहति परमाणौ च परिमाणे प्रत्येकं सत्त्वात्। न चोभयस्यैकत्र सत्त्वं कारणप्रयोज्यं, एकैकवद्द्वयोरपि प्रत्येकमेकत्वात्। स्यादेतत् श्रोत्रव्यापारानन्तरमिदानीं श्रुतपूर्व्वो गकारो नास्ति विनष्टः कोलाहल इति प्रतीतेः प्रत्यक्षमेव शब्दानित्यत्वं विनाशिभावत्वेनोत्पत्तिमत्त्वानुमानाद्वा, प्रत्यक्षप्रतियोगिकाभावत्वेन हि प्रत्यक्षत्वं ध्वंसस्य घट-

---

साध्यव्यापकत्वं[१] बोध्यं तेन ध्वनि-तद्ध्वंसयोर्न साध्याव्यापकता, अस्मन्मते शब्दत्वादेस्तन्मते ध्वनेः षड़िन्द्रियवेद्यकालस्य च व्यावर्त्तनान्न पक्षेतरत्वं, उत्कर्षवत्त्वे सतीति पूर्व्वोक्तहेतौ दोषान्तरमाह, 'अप्रयोजकत्वाच्चेति। 'सजातीयेत्यादिहेतुपरत्वे 'परममहतीत्याद्यग्रिमग्रन्थविरोधात् अनुकूलतर्कमाशङ्क्य निराकरोति, 'न हीति। 'प्रत्येकमेकत्वादिति, तथाच प्रत्येकसत्तानियामकादेव एकत्रोभयसत्त्वोपपत्तेर्न तत्र सकारणकत्वं प्रयोजकमिति भावः। 'श्रोत्रव्यापारानन्तरमिति श्रोत्र-मनःसंयोगानन्तरमित्यर्थः। ननूत्पत्तिमत्त्वमेवानित्यत्वं तच्च न प्रत्यक्षसिद्धमित्यत आह, 'विनाशिभावत्वेनेति, 'उत्पत्तिमत्त्वानुमानाद्वेति, 'शब्दानित्यत्वमित्यनुषज्यते, 'अभावत्वेन' ध्वंसत्वेन, तेन न मूर्त्तसामान्याभावे व्यभिचारः, 'ध्वंसस्य' शब्द-

---

(१) ध्वनिभिन्नतारत्वावच्छिन्नसाध्यव्यापकत्वमिति ख०।

ध्वंसवत् न तु विनाशग्रहे प्रतियोगिसमवायिप्रत्यक्षत्वं तन्त्रं धर्म्माभावस्य प्रत्यक्षत्वापत्तेः। तदिन्द्रियाग्राह्येऽपि प्रतियोगिसमवायिनि गन्ध-रसाभावयोर्ग्रहणाच्च। नोभयं गौरवात् स्मृतघटसंयोगध्वंसाप्रत्यक्षत्वापाताच्च। न च प्रतियोगियोग्यत्वस्य तन्त्रत्वे वायुस्पर्शध्वंसोऽपि प्रत्यक्षः स्यात् इति वाच्यम्। आश्रयनाशजन्यस्य तस्य

---

ध्वंसस्य, 'विनाशग्रहे' विनाशप्रत्यक्षे, 'धर्म्माभावेति धर्म्मध्वंसेत्यर्थः। ननु स्वग्राहकेन्द्रियग्राह्यप्रतियोगिसमवायिवृत्तिनाशत्वं(१) ध्वंसप्रत्यक्ष-तन्त्रमित्यत आह, 'तदिन्द्रियेति, 'गन्ध-रसाभावयोः' गन्ध-रस-ध्वंसयोः। ननु तदिन्द्रियग्राह्यप्रतियोगिकध्वंसत्वं प्रतियोगिसम-वायिनो लौकिकप्रत्यक्षत्वञ्च द्वयं नाशप्रत्यक्षे तन्त्रमित्यत आह, 'नोभयमिति, 'स्मृतघटेति स्मृतघटयोर्यत्संयोगध्वंसप्रत्यक्षं भूतलादौ तस्याभावप्रसङ्गादित्यर्थः, तदानीं प्रतियोगि-समवायिनो लौकिक-प्रत्यक्षविरहादिति भावः। यदा कदाचित् प्रत्यक्षविषयप्रतियोगि-समवायिकनाशत्वस्य प्रयोजकत्वे च मानाभाव इति हृदयं(२)। 'प्रत्यक्षः स्यादिति वायौ प्रत्यक्षः स्यादित्यर्थः, अन्यथा कालादौ तत्प्रत्यक्षा-भ्युपगमादिष्टापत्तेः सम्भवात्। 'ग्राहकेति, वायुघटितेन्द्रियसन्निकर्ष-विरहादिति भावः। नन्वेतावता शब्दध्वंसप्रत्यक्षसम्भवेऽपीदानीं श्रोत्रे

---

(१) स्वं प्रतियोगि तद्ग्राहकेन्द्रियग्राह्यो यस्तत्समवायी तद्वृत्तीत्यर्थः।

(२) तथाच गौरवादेव तदपि न वाच्यमिति भावः।

**ग्राहकेन्द्रियसन्निकर्षाभावात्। किञ्च यस्य सत्त्वं यत्रानुपलब्धिविरोधि तस्याभावस्तत्र गृह्यते इति योग्या-**

---

श्रुतपूर्व्वा गकारो नास्तीत्यत्यन्ताभावप्रत्यक्षासम्भवः अधिकरणतया तद्वैशिष्ट्यावगाह्यभावप्रत्यक्षे[१] तद्योग्यताविशिष्टप्रतियोगिसत्त्वानुपलब्धिरूपाया योग्यानुपलब्धेर्हेतुत्वात् अन्यथा जलपरमाणौ पृथिवीत्वं नास्तीत्यपि प्रत्यक्षापत्तेः। न च महदुद्भूतरूपवदिन्द्रियसम्बद्धविशेषणताया एव पृथिवीत्वाद्यभावग्राहकत्वात्तदभावादेव न तादृशप्रत्यक्षमिति वाच्यं। तथापि स्थूलजले पृथिवीत्वाभावसन्निकर्षदशायामुपनीतजलपरमाणुप्रकारेण तादृशलौकिकप्रत्यक्षस्य दुर्व्वारत्वात्। न च तदानीं तादृशप्रत्यक्षे इष्टापत्तिरेव "जलपरमाणौ पृथिवीत्वाभावसाक्षात्कारो न भवतीति प्रामाणिकप्रवादस्य च जलपरमाणुघटितसन्निकर्षेण पृथिवीत्वाभावसाक्षात्कारो न भवतीत्यर्थ इति वाच्यं। जलपरमाणुसन्निकर्षदशायां पृथिवीत्वशून्ययोग्यवस्त्वन्तरसन्निकर्षस्यावश्यकतया पृथिवीत्वाभावलौकिकसाक्षात्कारस्यावश्यकत्वेन तत्र जलपरमाणुघटितसन्निकर्षजन्यत्वाभावस्य शपथनिर्णेयत्वापत्तेरित्यतोऽत्यन्ताभावग्रहमप्युपपादयति, 'किञ्चेति, 'यस्य सत्त्वमिति प्रतियोगितावच्छेदकसम्बन्धेन यद्धर्म्मावच्छिन्नस्य सत्त्वमित्यर्थः, 'यत्र' अधिकरणे, 'अनुपलब्धिविरोधि' स्वावच्छिन्नवैशिष्ट्यावगाहिलौकिकप्रत्यक्षाभावाभावापादकं स्वावच्छिन्नवैशिष्ट्यावगाहिलौकिकप्रत्यक्षापादकमितियावत्, 'तस्याभावः' तद्धर्म्मावच्छिन्नात्यन्ताभावः,

---

(१) वहिरिन्द्रियेण स्वायोग्यमुख्यविशेष्यकज्ञानाजननात् सर्व्वसाधारण्यायेदम्।

[पलब्ध्यर्थः । अतएव पृथिवीत्वाभावो जलीयपरमाणौ । प्रत्यक्षः प्रत्यक्षश्च वायौ रूपाभावः[१] । अस्ति च

त्र गृह्यते' आधाराधेयभावसम्बन्धेन तद्विशिष्टतया साक्षात्-क्रियते । अत्र भूतलादौ समवायादिना घटसत्त्वेन समवायादिना घटोपलम्भस्यापादनसम्भवादतीन्द्रियसंयोगादिना घटाभावप्रत्यक्षा-तिवारणाय प्रतियोगितावच्छेदकसम्बन्धेनेत्युक्तं, यद्धर्म्मावच्छिन्नेत्यु-पादानाच्चनसि महत्त्वसमानाधिकरणोद्भूतरूपाभावश्चाक्षुषोनोद्भूत-रूपत्वावच्छिन्नाभाव इत्यवधेयं । 'पृथिवीत्वाभाव इति जलपरमाणौ पृथिवीत्वं नास्तीति न साक्षात्कार इत्यर्थः, जलपरमाणुर्यदि पृथिवीत्ववान् स्यात् पृथिवीत्ववैशिष्ठ्यावगाहिलौकिकचाक्षुषविषयः स्यादित्यापादनस्य जलपरमाण्वादौ व्यभिचारेणासम्भवादिति भावः । 'वायौ रूपाभाव इति वायावुद्भूतरूपाभाव इत्यर्थः,[२] वायुर्यदि महत्त्वे सति चक्षुःसन्निकर्षादिमत्त्वे च सत्युद्भूतरूपवान् स्यात्तदो-द्भूतरूपवैशिष्ठ्यावगाहिलौकिकचाक्षुषविषयः स्यादित्यापादनसम्भवा-दिति भावः । यद्यप्येवं जलपरमाणावपि पृथिवीत्वाभावसाक्षात्कारो दुर्व्वारः जलपरमाणुर्यदि महदुद्भूतरूपवत्त्वे सति चक्षुःसन्निकर्षादि-मत्त्वे च सति पृथिवीत्ववान् स्यात्तदा पृथिवीत्ववत्तयोपलभ्येतेत्या-पादनस्य सुकरत्वात् । न च पश्चाद्वृत्तिधर्म्माविशेषितेन यद्धर्म्मा-वच्छिन्नसत्त्वेनेति विवक्षितमिति वाच्यं । एवमपि जलपरमाणुर्यदि

(१) सङ्गति वायौ रूपाभाव इति क० ।

(२) सङ्गति वायावुद्भूतरूपाभाव इत्यर्थ इति ख० ।

**तथा शब्दे तस्य सत्त्वे समवधाने च प्रतीतिप्रसङ्गात्। निरधिकरणाभावप्रतीतिर्नास्तीति चेत्, न, इहेदानीं**

---

गन्धवद्‌भिन्नत्वे[१] सत्युद्भूतरूपवत्त्वे सति चक्षुःसन्निकर्षादिमत्त्वे च सति पृथिवीत्ववान् स्यात्तदा पृथिवीत्ववत्तयोपलभ्येतेत्यापादनसम्भवेन तत्र पृथिवीत्वाभावचाक्षुषस्य दुर्व्वारत्वात्, तथापि पक्षावृत्तिधर्म्मेण प्रतियोगिग्राहकातिरिक्तेन चाविशेषितेन यद्धर्म्मावच्छिन्नसत्त्वेनेति विवक्षितं गन्धवद्‌भिन्नत्वादिकञ्च[२] प्रतियोगिग्राहकातिरिक्तमेवेति नातिप्रसङ्ग इत्यभिमानः। न चैतस्य योग्यानुपलब्ध्यर्थत्वे[३] घटवति भूतले घटाभावलौकिकप्रत्यक्षभ्रमासम्भवः तत्र वास्तवघटसत्त्वेनापादनासम्भवादिति वाच्यं। अस्या अभावलौकिकप्रत्यक्षप्रमोपयोगित्वादिति दिक्। विस्तरस्तस्मत्कृतानुमानरहस्ये व्यतिरेकिग्रन्थेऽनुसन्धेयः। प्रकृते योजयति, 'अस्ति चेति, 'तस्य सत्त्वे' समवायेन शब्दस्य सत्त्वे, 'समवधाने च' मनःसंयोगे च, 'प्रतीतिप्रसङ्गादिति शब्दप्रत्यक्षापादनसम्भवादित्यर्थः, यदि मनःसंयुक्तत्वे सति शब्दवान् स्यात्तदा शब्दवत्तयोपलभ्येतेत्यापादनस्य निरुपद्रवत्वादिति भावः[४]। 'निरधिकरणेति अधिकरणानवगाहिनीत्यर्थः, अधिकरणस्य प्रकृते भानं न सम्भवति श्रोत्रस्याधिकरणस्य श्रोत्रा-

---

(१) गन्धवद्भिन्नत्व इति ख०।

(२) गन्धवद्भिन्नत्वादिकञ्चेति ख०।

(३) योग्यानुपलम्भपदार्थत्व इति ख०।

(४) यदि मनःसंयुक्तत्वे सति शब्दवत् स्यात् तदा श्रावणसाक्षात्कारविषयः स्यादित्यापादनस्य निरुपद्रवत्वादिति भाव इति ख०।

शब्दो नास्तीति प्रतीतेः । तस्मात् यत्राधिकरणे देशे समये वा प्रतियोग्यत्र वर्त्तते तत्र तदभावो निरूप्यते । अतएव सद्भ्यामभावो निरूप्यते इत्युक्तं, शब्दाभावस्य च स्वतएवेन्द्रियसन्निकृष्टत्वात् नाश्रये सन्निकर्षापेक्षा । इन्द्रियविशेषणतया नाभावग्रहणमिति चेत् । न ।

---

योग्यत्वादित्याशयः, 'इति प्रतीतेरिति इत्युपनीतश्रोत्रादिविषयक-प्रतीतेरित्यर्थः । नन्वेवं योग्यप्रतियोगिकध्वंसस्य कुत्रचिदधिकरणे प्रत्यक्षं भवति कुत्रचिन्नेत्यत्र किं नियामकं अधिकरणयोग्यत्वस्य तत्र नियामकत्वानभ्युपगमादित्यत आह, 'तस्मादिति, 'यत्र' यत्रैव,[१] 'देशे' दिगुपाधौ, 'प्रतियोगी वर्त्तत इति प्रतियोगी प्रतियोगि-सत्त्वोपलम्भमापादयितुं शक्नोतीत्यर्थः, 'तत्र तदभाव इति तत्रैव तदभावो निरूप्यत इत्यर्थः, न तु तस्यापि योग्यत्वं तन्त्रमिति भावः । 'अतएवेति यत एव अधिकरणयोग्यत्वं न शब्दाभाव-प्रत्यक्षे तन्त्रं अतएव, 'सद्भ्यां' प्रामाणिकाभ्यामधिकरण-प्रतियोगिभ्यां अभावो निरूप्यत इत्येवोक्तं न तु योग्याभ्यामधिकरण-प्रतियोगि-भ्यामित्युक्तमित्यर्थः । ननु श्रोत्रस्य श्रोत्रासम्बद्धतया शब्दाभावे इन्द्रियसम्बद्धविशेषणत्वाभावात् कथं प्रत्यक्षत्वमित्यत आह, 'शब्दा-भावस्येति, 'स्वतएव' साक्षादेव, 'आश्रये' श्रोत्रे, 'इन्द्रियेति, तथाच शब्दाभावो नाध्यक्षः अभावत्वे सति साक्षात्कारकारणेन्द्रियसम्बद्ध-

---

(१) नन्वेवमित्यादिः यत्रैवेत्यन्तः पाठः कपुस्तके नास्ति ।

अयोग्यत्वस्योपाधित्वात्। अन्यथा गुणस्य संयुक्त-समवायेन ग्रहणदर्शनात् न समवायेन शब्दग्रहः स्यादिति। मैवं। सत एव हि शब्दस्य व्यञ्जकविरहा-दनुपलब्धिमात्रं न तु ध्वंसः, तत्तद्व्याप्येतरसकलतदुप-

---

विशेषणतारहितत्वादित्यनुमेयमिति भावः। 'अयोग्यत्वस्येति अयो-ग्यत्वं विषयतया साक्षात्काराजनकत्वं योग्यानुपलब्धिरहितत्वं वा। 'अन्यथेति सहचारदर्शनमात्रेण कल्पने इत्यर्थः। 'स्यादेतदिति शङ्कायां समाधत्ते, 'मैवमिति, 'अनुपलब्धिमात्रमिति कदाचिद-नुपलब्धिमात्रमित्यर्थः। ननु गकारादेः सर्व्वदा सत्त्वे लोके इदानीं श्रुतपूर्व्वो गकारो नास्तीति प्रत्ययानुपपत्तिरित्यत आह, 'तत्त-द्व्याप्येति प्रतियोगि-प्रतियोगिव्याप्येतरप्रतियोग्युपलम्भकयावत्कारण-विशिष्टप्रतियोगिसत्त्वानुपलब्धिरूपाया योग्यानुपलब्धेरभावादित्यर्थः, श्रुतपूर्व्वो गकारो नास्तीति प्रत्ययासिद्धेरिति शेषः, अत्र प्रति-योगिसत्त्वानुपलब्धिमात्रोपादाने अन्धकारदशायां निमीलितनयन-दशायां सुषुप्त्यादिदशायाञ्चाभावप्रत्ययापत्तिरतीन्द्रियमात्रप्रतियो-गिकात्यन्ताभावप्रत्ययापत्तिश्चातो विशिष्टान्तं, अतीन्द्रियमात्रप्रति-योगिकात्यन्ताभावस्थले च प्रतियोग्युपलम्भाप्रसिद्ध्या नातिप्रसङ्गः, प्रतियोग्युपलम्भपदस्य तदिन्द्रियजन्यप्रतियोगिलौकिकप्रत्यक्षपरत्वात्, यावदित्यकृते अन्धकारादावपि घटाद्यभावचाक्षुषापत्तिः चक्षुः-संयोगादिलक्षणप्रतियोगिग्राहकयत्किञ्चित्कारणसत्त्वादतस्तदुपादानं, अभावप्रत्यक्षदशायां प्रतियोगि-तदिन्द्रियसन्निकर्षादेः प्रतियोगि-

लम्भकसमवधाने तदनुपलब्धिरूपयोग्यानुपलब्धेरभा-
वात्। प्रतियोग्युपलम्भकव्यञ्जकवायोरभावात्, विनष्ट-

---

ग्राहकयावदन्तर्गतस्य सर्वत्रासम्भवादव्याप्तिवारणायेतरान्तं यावत्-
कारणविशेषणं, प्रतियोगीन्द्रियसन्निकर्षश्च प्रतियोगिव्याप्य एव ।
न चैवमतीतानागतचक्षुरादिव्यक्तीनामपि तादृशघटादिग्राहकत्वात्
यावत्प्रतियोग्युपलम्भकसमवधानं न क्वापीत्यसम्भव इति वाच्यम् ।
प्रतियोगि-तद्व्याप्येतरनिष्ठानि तदिन्द्रियजन्यलौकिकप्रत्यक्षनिरूपि-
तानि यावन्ति कारणतावच्छेदकानि स्वाश्रयसम्बन्धेन तद्वैशिष्ट्यस्य
विवक्षितत्वात् । ननु तथाप्यत्र व्याप्यतायां व्याप्यदिशि प्रतियोग्युप-
लम्भकतावच्छेदकसम्बन्धः प्रतियोगिदिशि च तादात्म्यं घटकं तेना-
तीतानागतघटाद्यभावप्रत्यक्षे प्रतियोगिनिष्ठमहत्त्वोद्भूतरूपादेर्व्यव-
च्छेदः इत्यञ्च प्रतियोगीन्द्रियसन्निकर्षादेर्न व्यवच्छेदः तस्येन्द्रियेऽपि
सत्त्वेन प्रतियोग्यव्याप्यत्वात् प्रतियोग्युपलम्भकतज्ज्ञानव्यक्तित्वावच्छि-
न्नानामपि प्रतियोगिव्याप्येतरतया असम्भवापत्तेः स्वाश्रयनाशजन्य-
संयोगनाशस्य प्रत्यक्षे व्यभिचाराच्च व्यासज्यवृत्तिगुणप्रत्यक्षहेतोर्या-
वदाश्रयसन्निकर्षस्य तादृशप्रतियोग्युपलम्भकयावदन्तर्गतस्याभावात्,
अतएव कालिकसम्बन्धेन प्रतियोगिव्याप्यत्वाभिधानेऽपि न निस्तारः
प्रतियोगीन्द्रियसन्निकर्षादेः प्रतियोगिविनाशक्षणेऽपि सत्त्वेन तस्यापि
कालिकसम्बन्धेन प्रतियोग्यव्याप्यत्वात् आलोकादेर्घटत्वादिव्याप्य-
तयाऽन्धकारेऽपि घटत्वाद्यभावचाक्षुषापत्तेश्चेति चेत्, न, प्रति-
योगि-तद्व्याप्यपदेन प्रतियोग्युपलम्भासाधारणकारणस्य विवक्षितत्वात्
प्रतियोग्युपलम्भासाधारणकारणत्वञ्च यादृशप्रतियोगिग्राहकेऽसत्यपि

प्रतीतिरपि त्वगिन्द्रियोपनीतव्यञ्जकवायुस्पर्शध्वंसोपाधिकैव। वायुर्नोत्पादकः किन्तु व्यञ्जकः इत्यत्र किं विनिगमकमिति चेत्। न। इदानीं श्रुतपूर्व्वो गकारो नास्ति विनष्टः कोलाहलइति प्रतीत्यनन्तरं पुनः श्रवणे श्रुतपूर्व्वोऽयं गकारः पुनः स एवायं कोलाहलइति प्रत्यभिज्ञानमेव, घटध्वंसप्रतीत्यनन्तरञ्च स एवायं घट इति न प्रत्यभिज्ञानमिति तत्र विनष्टप्रतीत्या

---

यादृशाभावप्रत्यक्षं तत्तद्धर्मिकमेव वाच्यमिदञ्च संसर्गाभावप्रत्यक्षे हेतुः अतीन्द्रियान्योन्याभावप्रत्यक्षस्थले प्रतियोग्युपलम्भकाप्रसिद्धेः उपलम्भपदस्य लौकिकप्रत्यक्षपरत्वादिति दिक्। ननु तथापि विनष्टः कोलाहल इति प्रतीत्या शब्दस्य ध्वंससिद्धिरित्यत आह, 'विनष्टप्रतीतिरपीति, 'वायुस्पर्शध्वंसेति, न्यायनये वायोरतीन्द्रियतया ~~स्वध्वंस~~ध्वंसमपहाय वायुस्पर्शानुधावनं। न च वायुस्पर्शध्वंसोऽपि कथं त्वगिन्द्रियोपनीतः आश्रयनाशजन्यस्य तस्य ग्राहकेन्द्रियसन्निकर्षाभावादिति वाच्यं। कालस्य षड़िन्द्रियग्राह्यतया[१] कालघटितसन्निकर्षेण काले तस्य त्वचा प्रत्यक्षसम्भवादिति भावः। वायोरव्यञ्जकत्वे योग्यानुपलब्धिः सम्भवत्येवेत्यभिप्रायेणाशङ्कते, 'वायुरिति, 'किं विनिगमकं' किं प्रमाणं। 'प्रत्यभिज्ञानमेवेति, 'विनिगमकमित्यनुषज्यते। नन्वेवं घटादेरपि लाघवान्नित्यत्वमस्तु विनष्टप्रती-

---

(१) इदञ्च स्वमतानुसारादुक्तं, वस्तुतो न्यायमतेऽपि तथा कल्पने कालस्यातीन्द्रियत्वेऽपि न क्षतिस्तथैवानुभवात्।

ध्वंस एव सिध्यति। अतएव तारत्व-तारतरत्व-मन्दत्व-मन्दतरत्वप्रतीतीनां भ्रमत्वकल्पनाद्वरं प्रत्यभिज्ञानमात्रस्य भ्रमत्वकल्पनमित्यपास्तम्। एतासु सतीष्वप्यभेदप्रत्यभिज्ञानात्। स्यादेतत् शब्दः प्रयत्नसाध्यः तदनभिव्यङ्ग्यत्वे सति तदनन्तरमुपलभ्यमान-

---

तेरन्यदीयध्वंसविषयत्वेनैवोपपत्तेरित्यत आह, 'घटध्वंसेति। 'अतएवेति, 'अपास्तमित्यग्रेतनेनान्वयः। 'एतासु सतीष्विति तारत्व-तारतरत्वादिप्रतीतीनां यथार्थत्वेऽपीत्यर्थः, 'अभेदप्रत्यभिज्ञानादिति यथार्थाभेदप्रत्यभिज्ञानसम्भवादित्यर्थः, तत्प्रतीतीनां स्वाश्रयव्यञ्जकत्वात्मकपरम्परासम्बन्धेन[१] वायुनिष्ठतारत्वाद्यवगाहित्वादिति भावः। 'तदनभिव्यङ्ग्यत्व इति, प्रतिबन्धकविधूननद्वारा प्रयत्नव्यङ्ग्ये घटत्वादौ व्यभिचारवारणाय सत्यन्तं प्रयत्नजन्यत्वौकिकसाक्षात्काराविषयत्वपरं, कालादौ व्यभिचारवारणाय 'तदनन्तरमुपलभ्यमानत्वादिति तदन्वय-व्यतिरेकानुविधायिलौकिकप्रत्यक्षविषयत्वादित्यर्थः, यो यज्जन्यलौकिकसाक्षात्काराविषयत्वे सति यदन्वय-व्यतिरेकानुविधायिलौकिकसाक्षात्कारविषयो भवति स तज्जन्य इति सामान्यमुखी व्याप्तिर्नातो जन्यमात्रस्य प्रयत्नजन्यतया यदन्वय-व्यतिरेकानुविधायित्वार्थकस्य तदनन्तरपदस्य वैयर्थ्यं, दण्डाद्यनभिव्यङ्ग्ये पटादौ दण्डादिजन्यत्वाभावेन सामान्यतो व्याप्तौ व्यभिचारवारणाय तदु-

---

(१) स्वाश्रयजन्यत्वात्मकपरम्परासम्बन्धेनेति ख०।

त्वात् पटवत्, अभिव्यञ्जकत्वं हि इन्द्रियसम्बन्धप्रतिब-न्धकापनायकत्वादिन्द्रियसन्निधापकत्वाद्वा[१] कुड्योत्सा-रणेनेव पटादीनां, तदुभयमपि शब्दे न सम्भवति नि-त्यसमवेतत्वेनावरणापनयन-सन्निधापनयोरभावात् ।

---

पादानात् । न च प्रयत्नानभिव्यङ्ग्यायामपूर्व्वदेवदत्तत्वादिजातौ व्यभिचार इति वाच्यम् । जातिमत्त्वे सतीति विशेषणात्, इत्थञ्च सामान्यतोव्याप्तौ चक्षुरादिमादाय घटादिवृत्तिरूपादौ व्यभिचार-वारणाय सत्यन्तं । न च शब्दस्यापि बुभुत्सावशात् कर्णशष्कुल्यव-च्छिन्नमनःसंयोगद्वारा प्रयत्नव्यङ्ग्यत्वादसिद्धिरिति वाच्यं । तद्भिन्न-शब्दस्य पक्षीकरणादिति भावः । सामान्यतोव्याप्त्यभिप्रायेण दृ-ष्टान्तः पटवदिति, तत्र प्रतिबन्धकविधुननद्वारा प्रयत्नव्यङ्ग्यत्वेऽपि तन्तुसंयोगादिमादाय साध्य-हेतुसत्त्वादिति भावः[२] । सत्यन्तविशे-षणस्य स्वरूपासिद्धिं निराकरोति, 'अभिव्यञ्जकत्वं हीति, प्रयत्न-स्येति शेषः । 'इन्द्रियसम्बन्धेति विषयेन्द्रियसम्बन्धेत्यर्थः, 'इन्द्रिय-सन्निधापकत्वादिति विषयस्येन्द्रियनिकटदेशानयनद्वारा इन्द्रिय-सन्निकर्षजननाद्वेत्यर्थः, 'कुड्योत्सारणेनेवेति पूर्व्ववद्दृष्टान्तः, 'नित्य-समवेतत्वेनेति श्रोत्रसमवायरूपेन्द्रियसन्निकर्षस्य नित्यत्वेनेत्यर्थः, 'आवरणापनयनेति इन्द्रियसन्निकर्षस्य प्रतिबन्धकापनयनेत्यर्थः, 'सन्निधापनेति विषयस्येन्द्रियसन्निकृष्टदेशानयनद्वारेन्द्रियसन्निकर्ष-

---

(१) इन्द्रियसन्निकर्षाधायकत्वाद्वेति क० ।

(२) पटप्रत्यक्षे तन्तुसंयोगस्याहेतुत्वेऽपि तत्सत्त्व एव पटप्रत्यक्षादिति भावः ।

नापि श्रोत्रसंस्कारात्, इन्द्रियसंस्कारस्य उन्मीलना-
लोकादेः सकृदिन्द्रियसम्बन्धयोग्यसर्व्वार्थोपलब्ध्यनुकूल-
संस्कारजनकत्वं दृष्टं तद्वद्वायुरपि सकृदेव सर्व्वशब्दो-
पलब्ध्यनुकूलं श्रोत्रे संस्कारमादध्यात्, तथाच सर्व्व-
शब्दोपलब्धिः स्यात्। तदुक्तं "सकृच्च संस्कृतं श्रोत्रं सर्व्व-
शब्दान् प्रकाशयेत् । घटायोन्मीलितं चक्षुः पटं न हि

---

जननेत्यर्थः, 'श्रोत्रसंस्कारादिति श्रोत्रसंस्कारद्वारेत्यर्थः, प्रयत्नस्य
शब्दव्यञ्जकत्वमिति शेषः । संस्कारश्च परमते पदार्थविशेषः, अस्म-
न्मते च वायुसंयोगादिरूपसहकारिणा समवधानं, 'इन्द्रियसंस्कारस्य'
इन्द्रियसंस्कारकस्य, क्वचित्तथैव पाठः, 'सकृदिति युगपदित्यर्थः,
'इन्द्रियसम्बन्धेति इन्द्रियसम्बद्धो योग्यो यावानर्थस्तदुपलब्धीत्यर्थः,
'तद्वत्' उन्मीलनादिवत्, 'वायुरपीति, 'अपिना प्रयत्नसङ्ग्रहः, तेन
न प्रकृतासङ्गतिः,[१] 'सकृदेव' युगपदेव, 'सर्व्वशब्देति भवन्मते
शब्दानां नित्यैकतया सर्व्वेषामेव शब्दानामिन्द्रियसन्निकृष्टत्वादिति
भावः । 'तथाचेति, युगपदेवेति शेषः, 'सकृच्चेति युगपदेवेत्यर्थः,
शब्दानां नित्यैकत्वे इत्यादिः । ननु घञ्जिज्ञासया संस्कार उत्पा-
दितस्तदेव बोधयतीत्यत आह, 'घटायेति घटजिज्ञासयेत्यर्थः, 'न
बुध्यत इति न बोधयतीत्यर्थः, युगपत् सर्व्वशब्दोपलब्धिं निरा-

---

(१) तेन प्रकृतसङ्गतिरिति ख० ।

न बुध्यते"॥ अथान्वय-व्यतिरेकाभ्यां कार्य्ये प्रतिनियत-जनकजन्यत्ववच्छब्देऽपि प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमिति चेत्। न। वर्णा हि न प्रतिनियतव्यञ्जकव्यङ्ग्याः

---

कत्तुमाशङ्कते, 'अथेति, 'प्रतिनियतजनकेति परस्पराजनकेत्यर्थः, 'शब्देऽपि' ककारादिष्वपि, 'प्रतिनियतेति परस्पराव्यञ्जकव्यङ्ग्यत्व-मित्यर्थः, 'वर्णा हीति, 'न प्रतिनियतव्यञ्जकव्यङ्ग्याः' परस्परा-व्यञ्जकव्यङ्ग्या इत्यर्थः, व्यञ्जकत्वं तद्विषयकसाक्षात्कारजनकत्वं, व्यङ्ग्यत्वं तज्जन्यसाक्षात्कारविषयत्वं। ननु परस्परपदार्थत्वस्य दुर्व्वच-त्वान्नेदमनुमानं। न च तद्वर्णे एतद्वर्णाव्यञ्जकव्यङ्ग्यत्वाभावः, एतद्वर्णे तद्वर्णाव्यञ्जकव्यङ्ग्यत्वाभाव एव परस्पराव्यञ्जकाव्यङ्ग्यत्वं तथाचैवं प्रयोगः ककारः खकाराव्यञ्जकव्यङ्ग्यत्वाभाववान् खकारसमानदेशत्वे सति तत्समानेन्द्रियग्राह्यत्वात्[१] एवं खकारं पक्षीकृत्य ककारा-व्यञ्जकव्यङ्ग्यत्वाभावः साध्यः सामान्यमुखी व्याप्तिरिति वाच्यं। तद्घटैकत्वसमानदेशसमानेन्द्रियग्राह्य-तद्घटैकपृथक्त्वे[२] व्यभिचा-रात् पृथक्त्वस्य एकत्वाव्यञ्जकावधिज्ञानव्यङ्ग्यत्वात्। न च पृथक्त्व-

---

(१) कसाक्षात्कारत्वावच्छिन्नविलक्षणवायुसंयोगत्वेन हेतुत्वं एवमन्यत्र एवञ्च तादृशव्यङ्ग्यत्वमेव ककारादाविति न तदभाव इति मीमांसक-मतं, नैयायिकमते च वायुसंयोगानां वर्णोत्पादकत्वमेव न व्यञ्जकत्वं तथाच व्यञ्जकसाम्यात् सिद्धिः।

(२) एकमात्रवृत्तिपृथक्त्वमेकपृथक्त्वं, उभयमात्रवृत्तिपृथक्त्वं द्वि-पृथक्त्वं एवमन्यदपि।

# एकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात्

व्यञ्जकमवधिज्ञानमेकत्वाव्यञ्जकमेव न पृथक्त्वसाक्षात्कारस्य नियमत एकत्वसाक्षात्काररूपत्वादिति वाच्यं । तद्व्यञ्जकव्यङ्ग्यत्वाभावो हि न तद्विषयकसाक्षात्काराजनकजन्यसाक्षात्कारविषयत्वाभावः, सिद्धसाधनापत्तेः[१] ककारव्यञ्जकविलक्षणवायुसंयोगस्यापि ककारखकारोभयविषयकसमूहालम्बनसाक्षात्कारजनकत्वेन खकारसाक्षात्कारजननस्वरूपयोग्यत्वात्,[२] किन्तु तत्साक्षात्कारत्वावच्छिन्नाजनकजन्यसाक्षात्कारविषयत्वाभावो वक्तव्यः, तथाच व्यभिचार एव । भवति ह्येकत्वसाक्षात्कारत्वावच्छिन्नाजनकावधिज्ञानजन्यसाक्षात्कारविषय एकपृथक्त्वं । न च तद्विषयकसाक्षात्कारानुपधायकजन्यसाक्षात्कारविषयत्वाभावस्तदर्थः, तथाच न सिद्धसाधनं तन्मते खकारविषयकसाक्षात्कारानुपधायकवायुसंयोगस्यापि ककारसाक्षात्कारजनकत्वादिति[३] वाच्यं । तथापि तद्घटैकपृथक्त्वसमानदेशसमानेन्द्रियग्राह्ये तद्घटैकत्वे व्यभिचारात्, एकत्वस्य पृथक्त्वसाक्षात्कारानुपधायकस्यावधिज्ञानविरहकालीनालोकसंयोगस्य व्यङ्ग्यत्वादिति, मैवं, एकवर्णस्य स्वाव्यञ्जकव्यङ्ग्यापरवर्णाव्यञ्जकव्यङ्ग्यभिन्नत्व-

(१) मीमांसकमतेऽपि साध्यसत्त्वे निर्व्विवादादिति भावः ।

(२) खकारसाक्षात्कारजनकत्वादिति क० । तथाच तन्मतेऽपि कादेर्नित्यैकतया तद्व्यञ्जकवायुसंयोगस्यापि तद्विषयकसमूहालम्बनात्मकखविषयकयत्किञ्चित्साक्षात्कारजनकत्वेन तदवच्छिन्नभेदासत्त्वादिति भावः ।

(३) तथाच अवधिज्ञानस्याप्येकत्वसाक्षात्कारोपधायकत्वान्न व्यभिचारः ।

घटैकत्वपरिमाणवत्। न चावयवसंयोग-बहुत्वव्यञ्जका-

मेव हि परस्पराव्यञ्जकाव्यङ्ग्यत्वं, तथाचैवं प्रयोगः, ककारः स्वाव्यञ्जकव्यङ्ग्यखकारकत्वे सति खकाराव्यञ्जकव्यङ्ग्यं यद्यत्तद्भिन्नः खकारसमानदेशत्वे सति खकारग्राहकेन्द्रियग्राह्यत्वात् यद्यत् समान-देशत्वे सति यद्ग्राहकेन्द्रियाग्राह्यं तत् स्वाव्यञ्जकव्यङ्ग्यतत्कत्वे सति तद्व्यञ्जकव्यङ्ग्यं यद्यत्तदन्यदिति सामान्यतो व्याप्तिः, इत्थञ्च नोक्त-व्यभिचारः एकत्वस्य पृथक्त्वाव्यञ्जकव्यङ्ग्यत्वाभावात्। स्वाव्यञ्जक-व्यङ्ग्यत्वञ्च स्वसाक्षात्कारत्वावच्छिन्नाजनकवृत्तिकारणताप्रतियोगिक-कार्य्यतायाः[१] लौकिकसाक्षात्कारविषयतया अवच्छेदकत्वं, यथा-श्रुते सिद्धसाधनापत्तेः। खकारव्यञ्जकवायुसंयोगविशेषस्यापि खकार-ककारोभयविषयकसमूहालम्बनसाक्षात्कारजनकत्वेन ककारसाक्षा-त्कारजनकत्वात् तन्मतेऽपि खकारे ककाराव्यञ्जकव्यङ्ग्यत्वाभावेन स्वाव्यञ्जकव्यङ्ग्यखकारकत्वे सति खकाराव्यञ्जकव्यङ्ग्यत्वस्य ककारे-ऽभावसत्त्वात्। न च सिद्धसाधनवारणाय स्वसाक्षात्कारत्वावच्छि-न्नाजनकजन्यसाक्षात्कारविषयत्वमेव तदस्त्विति वाच्यं। तद्घटैकत्व-समानदेश-समानेन्द्रियग्राह्ये तद्घटैकपृथक्त्वे व्यभिचारात्। भवति हि पृथक्त्वसाक्षात्कारत्वावच्छिन्नाजनकात्म-मनःसंयोगादिजन्यसाक्षा-त्कारविषय एकत्वं एकत्वाव्यञ्जकावधिज्ञानव्यङ्ग्यमप्येकपृथक्त्वमिति कारणता स्वेतरभाववृत्तित्वेन विशेषणीया, स्वपदञ्च तच्छब्दवाच्य-परं, अन्यथा तद्घटैकत्वसमानदेश-समानेन्द्रियग्राह्ये तद्घटैकपृथक्त्वे

(१) स्वसाक्षात्कारत्वावच्छिन्नजनकावृत्तिकारणताप्रतियोगिककार्य्यतायाः-इति ख॰।

उक्तव्यभिचारतादवस्थ्यात् एकत्वस्यापि पृथक्त्वसाक्षात्कारत्वावच्छि-न्नाजनकयोः स्वसाक्षात्कारमात्रप्रतिबन्धकदोषविशेषाभावयोर्व्यञ्ज-कत्वात्, एकत्वत्वेनैकत्वसाक्षात्कारत्वेन न कार्य्य-कारणभावः किन्तु तत्तद्व्यक्तित्वेन तत्तद्व्यक्तिसाक्षात्कारत्वेन, अतएव एकत्वान्तरवृत्तिकार-णताप्रतियोगिककार्य्यतावच्छेदकतया तद्घटैकत्वस्य न व्यभिचारः, एवं तद्व्यञ्जकव्यङ्ग्यत्वमपि तत्साक्षात्कारत्वावच्छिन्नाजनकवृत्तिका-रणताप्रतियोगिककार्य्यताया लौकिकसाक्षात्कारविषयतया अवच्छे-दकत्वं, अन्यथा भवन्मतेऽपि[१] ककारव्यञ्जकवायुसंयोगविशेषस्यापि ककार-खकारोभयविषयकसमूहालम्बनसाक्षात्कारजनकत्वेन खकार-व्यञ्जकत्वात् ककारे खकाराव्यञ्जकव्यङ्ग्यभिन्नत्वसत्त्वेन सिद्धसाधना-पत्तेः। न च सिद्धसाधनवारणाय तत्साक्षात्कारत्वावच्छिन्नाजनक-जन्यसाक्षात्कारविषयत्वमेव तदस्तु तन्मते ककारस्य खकारसाक्षात्-कारत्वावच्छिन्नाजनकः ककारव्यञ्जकवायुसंयोगविशेष एव तज्जन्य-साक्षात्कारविषयत्वेन तद्भिन्नत्वाभावात् सिद्धसाधनाभावादिति वाच्यं। तथा सति तद्घटैकपृथक्त्वसमानदेश-समानेन्द्रियग्राह्ये तद्घटैकत्वे व्यभिचारात्। भवति ह्येकत्वाव्यञ्जकावधिज्ञानव्यङ्ग्य-मेकपृथक्त्वमेकपृथक्त्वसाक्षात्कारत्वावच्छिन्नाजनकात्ममनःसंयोगा-दिजन्यसाक्षात्कारविषयोऽप्येकत्वमिति, इत्थञ्च एकत्वस्यापि साक्षा-त्कारविषयतया आत्म-मनःसंयोगादिजन्यतानवच्छेदकत्वान्न व्यभि-चारः, अत्रापि कारणता स्वेतरभाववृत्तित्वेन विशेषणीया स्वपदं साध्यीभूतान्योन्याभावप्रतियोगिपरं, अन्यथा तद्घटैकपृथक्त्वसमान-

(१) तन्मतेऽपीति ख०।

देश-समानेन्द्रियग्राह्यतद्घटैकत्वे उक्तव्यभिचारतादवस्थ्यात् । भवति ह्येकत्वसाक्षात्कारत्वावच्छिन्नाजनकावधिज्ञानवृत्तिकारणताप्रतियोगिककार्य्यतायाः साक्षात्कारविषयतया अवच्छेदकमेकपृथक्त्वं एकपृथक्त्वसाक्षात्कारत्वावच्छिन्नाजनकैकत्व-तत्साक्षात्कारमात्रप्रतिबन्धकदोषविशेषाभावयोः साक्षात्कारविषयतया अवच्छेदकञ्चैकत्वमिति[1] ।

पितृचरणास्तु तद्व्यञ्जकव्यङ्ग्यत्व-स्वाव्यञ्जकव्यङ्ग्यतत्त्वोभयाभाव एव परस्पराव्यञ्जकव्यङ्ग्यत्वाभावः । तथाचायं प्रयोगः, ककारः खकाराव्यञ्जकव्यङ्ग्यत्व-स्वाव्यञ्जकाव्यङ्ग्यखकारत्वोभयाभाववान् खकारसमानदेशत्वे सति खकारग्राहकेन्द्रियग्राह्यत्वात्, यद्यत्समानदेशत्वे सति यद्ग्राहकेन्द्रियग्राह्यं तत्तद्व्यञ्जकव्यङ्ग्यत्व-स्वाव्यञ्जकव्यङ्ग्यतत्त्वोभयाभाववद्भवतीति सामान्यतो व्याप्तिः । प्रथमदलाभावमात्रस्य साध्यत्वे तद्घटैकत्वसमानदेश-समानेन्द्रियग्राह्ये तद्घटैकपृथक्त्वे व्यभिचारः एकपृथक्त्वस्यैकत्वाव्यञ्जकावधिज्ञानव्यङ्ग्यत्वात्, इत्यञ्च स्वाव्यञ्जकव्यङ्ग्यैकत्वकत्वाभावेन[2] उभयाभावसत्त्वान्न व्यभिचारः । चरमदलाभावमात्रस्य साध्यत्वेऽपि एतद्घटैकपृथक्त्वसमानदेश-समानेन्द्रियग्राह्यैतद्घटैकत्वे व्यभिचारः, एकत्वस्य स्वाव्यञ्जकावधिज्ञानव्यङ्ग्यपृथक्त्वकत्वात्, इत्यञ्च पृथक्त्वाव्यञ्जकव्यङ्ग्यत्वाभावेनोभयाभावसत्त्वान्न व्यभिचार इति प्राहुः । अत्रापि तद्व्यञ्जकव्यङ्ग्यत्वादिकं पूर्ववद्बोध्यं ।

---

(१) कार्य्यतावच्छेदकञ्चैकत्वमितीति ख० ।

(२) स्वाव्यञ्जकव्यङ्ग्यतत्त्वाभावेनेति ख० ।

'एकावच्छेदेनेति, तेन सममेकावच्छेदेन[१] तत्समानदेशत्वे सति तत्समानेन्द्रियग्राह्यत्वादित्यर्थः, इदञ्च व्याप्यवृत्तेरप्यवच्छेदकत्वाभ्युपगमेनान्यथा परेषां शब्दस्य नित्यैकतया कालिकदैशिकाव्याप्यवृत्तितयोरभावेन स्वरूपासिद्ध्यापत्तेः । अत्र स्व-स्वावधिज्ञानमात्रव्यङ्ग्ययोर्व्यधिकरणपृथक्त्वयोर्विभिन्नसंस्थानविशेषधीव्यङ्ग्ययोश्च गोलाश्वत्वयोर्व्यभिचारवारणाय 'समानदेशत्वे सतीति समनियतदेशत्वे सतीत्यर्थः, अन्यथा समानाधिकरणयोरपि परस्पराभावसमानाधिकरणयोर्मठावधिकघट-पटवृत्तिद्विपृथक्त्व-पटावधिकघट-मठवृत्तिद्विपृथक्त्वयोः स्व-स्वावधिज्ञानमात्रव्यङ्ग्ययोर्व्यभिचारापत्तेः[२] विभिन्नसंस्थानविशेषधीव्यङ्ग्ययोः पाषाणत्वव्याप्यघटत्वपाषाणत्वयोर्व्यभिचारापत्तेश्च[३] । न चैवमपि भिन्नभिन्नावधिनिरूपितसमनियतैकपृथक्त्वद्वये व्यभिचार इति वाच्यं । अवधिभेदेनैकपृथक्त्वभेदाभावात् । समनियतदेशत्वञ्च समवायेन विवक्षितं[४] तेनाभावसाक्षात्कारं प्रति प्रतियोगिज्ञानस्य हेतुत्वेऽपि घट-पटत्वयोरन्योन्याभावात्यन्ताभावयोर्न व्यभिचारः । एकस्यैव वस्त्रखण्डादेरग्र-मूलावच्छिन्नवृत्तनिष्ठसंयोगयोः स्वस्वावच्छेदकग्रहव्यङ्ग्ययोर्व्यभिचारवारणाय एकावच्छेदेनेति[५] । न चावच्छेदकादिग्रहो न संयो-

---

(१) तेन समानाकारावच्छेदेनेति ख० ।

(२) इमौ द्वौ अस्मात् पृथक् इत्यादिप्रतीतिसिद्धं द्विपृथक्त्वादिकं द्वित्ववदुभयवृत्तीति बोध्यं ।

(३) एतेन तद्व्याप्यदेशत्वमपि निराकृतं ।

(४) एतेन तदसमवाय्यसमवेतत्वे सति तत्समवायिसमवेतत्वं फलितं ।

(५) समवायावच्छिन्नाधेयतायां एकदेशावच्छिन्नत्वं बोध्यं ।

शादिग्रहहेतुः किन्त्वावश्यकत्वादवच्छेदकावच्छेदेनेन्द्रियसन्निकर्ष एव हेतुरिति[१] कथं व्यभिचार इति वाच्यं। तद्धेतुत्वाभिमानेनैतद्विशेषणोपादानात्। नन्वेवमेकदेशावच्छिन्नत्वोक्तावप्येकशाखावच्छेदेन चरणद्वयावच्छिन्नाभ्यां श्येनेन सह वृक्षसंयोगाभ्यां स्वस्वावच्छेदकचरणग्रहव्यङ्ग्याभ्यां व्यभिचारो दुर्वारः तयोः श्येनचरणद्वयावच्छिन्नत्वेऽप्येकशाखावच्छिन्नत्वस्य सत्त्वात् एकदेशावच्छिन्नत्वपदेनान्यूनानतिरिक्तदेशावच्छिन्नत्वविवक्षणे समानदेशत्वविशेषणवैयर्थ्यादिति चेत्, न, चरणद्वयावच्छिन्नयोः श्येन-वृक्षसंयोगयोर्या संयोगव्यक्तिर्यद्देशव्यापिनी तत्र परम्परया तद्देशभागोऽवच्छेदको न तु सम्पूर्णा शाखोभयत्रावच्छेदिकेति यथाश्रुतेनैव तत्र व्यभिचारनिरास इत्यभिप्रायात्। वस्तुतस्तु[२] अभावसाक्षात्कारं प्रति प्रतियोगिज्ञानस्य हेतुतया घटत्वात्यन्ताभाव-घटान्योन्याभावयोर्व्यभिचारवारणाय समानदेशत्वपदं समवायसम्बन्धेन वृत्तिमत्त्वार्थकं, स्व-स्वावधिज्ञानमात्रव्यङ्ग्ययोः समानकालीन-व्यधिकरणपृथक्त्वयोर्विभिन्नसंस्थानविशेषधीव्यङ्ग्ययोर्गोत्वाश्वत्वयोर्व्यभिचारवारणाय तेन सममेकावच्छेदेनेति तेन सममन्यूनानतिरिक्तावच्छेदकावच्छेद्यत्वे सतीत्यर्थकं, न तु तदवच्छेदकावच्छेद्यत्वे सतीत्यर्थकं[३] अतो व्यधिकरणपृथक्त्वयोरपि

---

(१) तथाच समवायस्यैक्याद्विशिष्टस्यापि नाव्यञ्जकत्वं विशेष्यवृत्तेर्विशिष्टानुयोगिकाभावानभ्युपगमात्।

(२) सम्पूर्णशाखाया एकावच्छेदकत्वानुभवात् व्याप्यवृत्तेरवच्छेदकत्वस्य सिद्धान्तविरुद्धत्वाच्चाह वस्तुतस्त्विति।

(३) न तु तदवच्छेद्यत्वे सतीत्यर्थकमिति ख०।

कालरूपैकावच्छेदकावच्छेद्यत्वसत्त्वान्न तद्दोषतादवस्थ्यं तयोः काले स्वस्वाश्रयरूपविभिन्नावच्छेदकावच्छेद्यत्वात्। न च तत्र कालरूपैकावच्छेदकमादाय व्यभिचारतादवस्थ्यवारणाय एकदेशावच्छेद्यत्वमेव विवक्ष्यतां किमन्यूनानतिरिक्तत्वप्रवेशेनेति वाच्यं। तथापि परस्पराभावसमानाधिकरणयोरथ च समानाधिकरणयोर्मठावधिकघटपटवृत्तिद्विपृथक्त्व-पटावधिकघट-मठवृत्तिद्विपृथक्त्वयोः स्वस्वावधिज्ञानमात्रव्यङ्ग्ययोर्व्यभिचारापत्तेः विभिन्नसंस्थानविशेषधीव्यङ्ग्ययोः पाषाणत्वव्याप्यघटत्व-पाषाणत्वयोर्व्यभिचारापत्तेश्च तेषां यत्किञ्चिदाश्रयमादाय काले एकदेशावच्छेद्यत्वात्। न चैकदेशावच्छेदेन समवायसम्बन्धेन वृत्तिमत्त्वमर्थोऽस्त्विति वाच्यं। परनये वर्णानामेकतया समवायसम्बन्धेनाव्याप्यवृत्तित्वाभावात् समवायसम्बन्धेन वृत्तावव्च्छेदकविरहेण स्वरूपासिद्ध्यापत्तेः व्याप्यवृत्तेरवच्छेदके मानाभावात्, उक्तविवक्षायान्तु वर्णानां समवायसम्बन्धेन व्याप्यवृत्तित्वेऽपि काले कालिकसम्बन्धेनाव्याप्यवृत्तित्वादाश्रयरूपावच्छेदकमादायैव हेतुसम्भवः। न चैवं न्यायनये भागासिद्धिः सर्व्वेषां वर्णानामन्यूनानतिरिक्तावच्छेदकावच्छेद्यत्वाभावादिति[१] वाच्यं। एकसाक्षात्कारविषयीभूतानां वर्णानां पक्षत्वात्, एवञ्च खकारसाक्षात्कारविषयः ककार इत्यादिक्रमेण पक्षता, अन्यूनानतिरिक्तावच्छेदकावच्छेद्यत्वञ्च स्वानवच्छेदकानवच्छेद्यतत्कत्वे सति तदनवच्छेदकानवच्छेद्यत्वं। न च परनये शब्दस्यावच्छेदकाप्रसिद्ध्या अनवच्छेदकत्वमप्रसिद्धमिति वाच्यं। परनयेऽपि शब्दस्य कालिकसम्बन्धेन काले वृत्तावाश्रय-

---

(१) विभिन्नकालोत्पत्तिकानामतथात्वमिति भावः।

स्यावच्छेदकत्वेन तदवच्छेदकप्रसिद्धेरित्येव तत्त्वं[१]। तत्पुरुषीयापेक्षाबुद्धिजन्यद्वित्वादिसाक्षात्कारत्वावच्छिन्नं प्रति तदीयापेक्षाबुद्धिजन्यद्वित्वत्वादिना हेतुत्वाभ्युपगमात् विभिन्नपुरुषीयापेक्षाबुद्धिजन्यद्वित्वाद्योर्व्यभिचारवारणाय तत्समानेन्द्रियग्राह्यत्वादिति तदर्थश्च तद्ग्राहकवहिरिन्द्रियव्यक्तिग्राह्यत्वमतो नोक्तव्यभिचारः, यदपेक्षाबुद्धिजन्यं यत् द्वित्वं तत् तत्पुरुषेन्द्रियस्यैव ग्राह्यमित्येकेन्द्रियग्राह्यत्वाभावात् ग्राह्यत्व-ग्राहकत्वयोः फलोपधानगर्भत्वात् तद्विषयकलौकिकसाक्षात्कारविषयत्वं वा तदर्थः। न च परस्पराव्यञ्जकविभिन्नावधिज्ञानव्यङ्ग्ययोर्विभिन्नावधिकदीर्घत्वैकपृथक्त्वयोर्व्यभिचार इति वाच्यं। स्वरूपेण परिमाणग्रहे नावधिज्ञानापेक्षा किन्तु हस्त-वितस्त्याद्यवच्छिन्नत्वग्रहे[२] इति मतानुयायित्वात्। साध्ये च कारणता भाववृत्तित्वेन विशेषिता तेन परस्पराव्यञ्जकपित्तदूरत्वादिदोषाभावजन्ययोः साक्षात्कारविषयतया अवच्छेदकयोः श्वैत्य-परिमाणयोर्न व्यभिचार इति।

पितृचरणास्तु प्रकारान्तरेणाप्यनुमानं परिष्कुर्वन्ति, तथाहि साध्ये परस्पराव्यञ्जकाव्यङ्ग्यत्वं परस्पराविषयकसाक्षात्काराविषयत्वं तदविषयकसाक्षात्कारविषयत्व-स्वाविषयकसाक्षात्कारविषयतत्कलो-

---

(१) तदनाश्रयस्यैव तदनवच्छेदकत्वमिति भावः।

(२) हस्ताद्यवयविकत्वग्रहे इत्यर्थः, तथाच यथा अवधिज्ञानं विनापि स्वरूपतः पृथक्त्वत्वेन न ग्रहः तथा न परिमाणत्वेन दीर्घत्वेन वा परिमाणग्रहः अवधिज्ञानं विनापि दीर्घं इत्यादि व्यवहारात् किन्तु हस्ताद्दीर्घं इत्यादावेव तदपेक्षेत्यनुभवादिति भावः।

भयाभाव इति यावत्, तद्विषयकसाक्षात्कारविषयत्व-विषयिता-सम्बन्धेनतत्साक्षात्कारनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वोभयाभाव इति तु निष्कर्षः। तद्यं तिर्गलितप्रयोगः ककारः खकाराविषयकसाक्षात्कारविषयत्व-विषयितासम्बन्धेनखकारविषयकसाक्षात्कारनिष्ठान्येन्योभावप्रतियोगितावच्छेदकत्वोभयाभाववान् खकारेण सहैकावच्छेदेन समानदेशत्वे सति समानेन्द्रियग्राह्यत्वात् इति पूर्व्ववत् सामान्यमुखी व्याप्तिः, साध्ये उभयदलप्रयोजनन्तु पूर्व्ववत् तद्घटैकत्वैकपृथक्त्वयोर्यथायथं बोध्यं, उभयत्रैव साक्षात्कारोलौकिकोबोध्यः अन्यथा अलौकिकप्रत्यक्षमादाय तद्घटैकत्वैकपृथक्त्वयोर्व्यभिचारापत्तेः अलौकिकं प्रत्यक्षमादाय बाधापत्तेश्च। अथ न्यायनये बाधः एकैकशोऽपि वर्णसाक्षात्काराभ्युपगमात्। न चैकावच्छेदेन वर्त्तमानानामेव वर्णानां पक्षत्वमिति[१] वाच्यं। वर्णानां क्रमिकोत्पन्नत्वेनैकावच्छेदेन वर्त्तमानानामप्येकैकशः साक्षात्कारादिति चेत्, न, एकसाक्षात्कारविषयीभूतानां वर्णानां पक्षत्वात्, एवञ्च खकारसाक्षात्कारविषयीभूतः ककार इत्यादिक्रमेण पक्षत्वं[२]। न चैवं सिद्धसाधनमिति वाच्यं। परनये ककार-खकारादीनामेकैकत्वेन तेषामेव प्रत्येकमभिव्यक्तेः, हेतौ च यत्तद्भ्यां सामान्यतोव्याप्तौ समनियतदेश-कालयोरेकपुरुषचक्षुर्मात्रग्राह्ययोर्ध्वंसविशेषयोर्व्यभिचारवारणाय समानदेशत्वे सतीति समवायसम्बन्धेन वृत्तिमत्त्वे सतीत्यर्थकं, मूलाग्रावच्छिन्नयोः समनियतेन्द्रियग्राह्यतत्पुरुषीयसंयोगयोः संयो-

(१) पक्षत्वसिद्धिरिति ख०।

(२) पक्षत्वं बोध्यमिति ख०।

गन्धाश्रयभेदज्ञानव्यङ्ग्यतया तादृशद्रव्य-तदवयवद्वयसंयोगयोरेकशा-खावच्छेदेन चरणद्वयावच्छिन्नयोः श्येन-वृक्षसंयोगयोर्विभिन्नकाले एकपुरुषमात्रप्रतीतयोश्च व्यभिचारवारणाय तेन सममेकावच्छेदे-नेति तेन सममन्यूनानतिरिक्तावच्छेदकावच्छेद्यत्वे सतीत्यर्थकं, अतः कालरूपैकावच्छेदकमादाय शाखारूपैकावच्छेदकमादाय च न त-द्दोषतादवस्थ्यं अन्यूनानतिरिक्तावच्छेदकावच्छेद्यत्वञ्च पूर्व्ववद्बोध्यं। अथैवं समनियतेन्द्रियग्राह्य-समनियतकालव्यधिकरणरूपद्वयादिषु व्यभिचारः। न च तेषां विभिन्नावयवावच्छेद्यत्वात् न व्यभिचार-इति वाच्यं। रूपादीनां दैशिकाव्याप्यवृत्तित्वविरहेण तेषामवयवा-वच्छेद्यत्वे मानाभावात् एकत्र धर्म्मिणि भावाभावयोर्विरोधेनैवावच्छे-दकभेदाभ्युपगमादिति चेत्, न, व्यधिकरणरूपादीनां काले का-लिकसम्बन्धेन वृत्तौ परस्परभिन्नानां स्वस्वाश्रयाणामवच्छेदकत्वेन व्यभिचाराभावात्। समनियतरूप-रसाद्योर्व्यभिचारवारणाय विशेष्यं, तदर्थश्च परस्पराग्राहकेन्द्रियव्यक्त्यग्राह्यत्वं स्वाग्राहकेन्द्रियव्यक्त्यग्राह्य-तत्कत्वे सति तदग्राहकेन्द्रियव्यक्त्यग्राह्यत्वमिति यावत्, न तु तद्-ग्राहकवहिरिन्द्रियव्यक्तिग्राह्यत्वं, तद्विषयकलौकिकसाक्षात्कारविष-यत्वं वा, त्वाचैकपृथक्त्वसाक्षात्कारविषयस्पर्शैकपृथक्त्वयोर्व्यभिचारा-पत्तेः अवधिज्ञानविरहदशायां विना पृथक्त्वं त्वचा स्पर्शस्य विना स्पर्शञ्च चक्षुषैकपृथक्त्वस्य ग्रहात्। इन्द्रियस्य व्यक्तित्वेनोपादाना-द्विभिन्नपुरुषीयापेक्षाबुद्धिजन्यसमनियतद्वित्वयोस्तादृशपरत्वाद्योश्च न व्यभिचारः ग्राह्यत्व-ग्राहकत्वयोः फलोपधानघटितत्वात्। न च तथाप्येकैकग्रहप्रतिबन्धकदोषवशेन कदाचित् परस्पराविषयकसाक्षा-

**व्यङ्ग्येनावयविनोत्पलत्वव्यञ्जकदीपाव्यङ्ग्येन तन्नीलिम्ना घटवृत्तिपृथक्त्वाव्यञ्जकाव्यङ्ग्येनैकत्वेन वा व्यभिचारः ।**

---

त्कारविषययोः समनियतेन्द्रियग्राह्ययोः समनियतस्नेह-द्रवत्वव्यक्ति-विशेषयोर्व्यभिचार इति वाच्यं । दोषविरहदशायां परस्पराविष-यकसाक्षात्कारविषयत्वस्य साध्यत्वादिति सङ्क्षेपः ।

एकवर्णस्यापरवर्णाव्यञ्जकव्यङ्ग्यत्वाभाव एव[१] प्रतिनियतव्यञ्जक-व्यङ्ग्यत्वाभावः स एव च साध्य इति भ्रमेण यत्तङ्ग्यां सामान्यतो व्या-प्तावयविनमादायावयववृत्तिसंयोग-बहुत्वयोरुत्पलवृत्तिनीलरूपमा-दायोत्पलत्वे एकत्वमादाय चैकपृथक्त्वे क्रमेण व्यभिचारमाशङ्कते, 'न चेत्यादिना 'व्यभिचार इत्यन्तेन, 'अवयवसंयोगेति अवयवसंयोग-बहुत्वयोर्व्यञ्जकस्याश्रयभेदग्रहस्याव्यङ्ग्येनावयविना करणभूतेनेत्यर्थः, अवयवसंयोग-बहुत्वयोरिति[२] शेषः, 'व्यभिचार इत्यशेतनेन सम्बन्धः, तयोरवयवव्यञ्जकस्याश्रयभेदग्रहव्यङ्ग्यत्वादिति भावः। अव्यासज्यवृत्तित्वे सतीत्यनेन[३] हेतोर्विशेषणेऽप्येतद्व्यभिचारवारणसम्भवादाह, 'उत्पल-त्वेति, 'तन्नीलिम्नेति उत्पलनीलिम्ना करणभूतेनेत्यर्थः, उत्पलत्व इति शेषः, 'व्यभिचार इत्येतनेन सम्बन्धः, दीपो नोत्पलनीलिमव्यञ्जकः

---

(१) एवकारेण सत्यन्तदलव्यवच्छेदः ।

(२) अवयविनमादायावयवद्वयसंयोगेऽवयवानां बहुत्वे चेत्यर्थः ।

(३) अत्र चाव्यासज्यवृत्तित्वं नैकमात्रवृत्तिधर्म्मावच्छिन्नपर्य्याप्तिकत्वं सं-योगे तदभावात् परन्तु यावदाश्रयभेदग्रहसापेक्षग्रहविषयत्वादिक-मित्यभिप्रायः ।

अवयवसंयोगाऽवयविनोर्नीलत्वोत्पन्नत्वयोश्चाव्याप्य-
व्याप्यवृत्तिनोरुत्पन्नत्वस्य (१) चाधिकवृत्तित्वेनैकावच्छे-

---

प्रत्युत तत्प्रत्यक्षे दोषरूपतया प्रतिबन्धकः(२) तथाचोक्तं "प्रदीपे-र्व्यज्यते जातिर्न तु नीरजनीलिमेति, जातिरुत्पन्नत्वादि नीरजमु-त्पन्नमिति मतेनेदं। ननु तद्व्यञ्जकव्यङ्ग्यत्वं तत्साक्षात्कारत्वावच्छिन्ना-जनकवृत्तिकारणताप्रतियोगिककार्य्यतायाः साक्षात्कारविषयतया-वच्छेदकत्वमतो नायं व्यभिचार उत्पन्नत्वसाक्षात्कारस्य दीप-कार्य्यतानवच्छेदकत्वादित्यत आह, 'घटवृत्तीति घटवृत्तिपृथक्त्व-व्यञ्जकस्य तत्तदवधिज्ञानस्याव्यञ्ज्येन घटैकत्वेन करणभूतेनेत्यर्थः, घटैकपृथक्त्व इति शेषः। हेत्वभावादेवावयव्युत्पन्ननीलमादायावयव-संयोगोत्पन्नत्वयोर्न व्यभिचार इत्याह, 'अवयवसंयोगावयविनोरिति, 'अव्याप्यव्याप्यवृत्तिनोरित्यग्रेतनमत्रैव सम्बध्यते, 'एकावच्छेदेन वृत्त्य-भावादिति एकदेशावच्छेदेनान्यूनानतिरिक्तदेशवृत्तित्वाभावादित्य-र्थः,(३) यद्यप्यवयवसंयोगावयविनोरेकदेशावच्छेद्यत्वमन्यूनानतिरिक्त-देशवृत्तित्वञ्चास्त्येव, न ह्येकदेशावच्छेद्यत्वमन्यूनानतिरिक्तदेशावच्छे-द्यत्वं, समानदेशत्वविशेषणवैयर्थ्यापत्तेः, तथाप्यवयवसंयोगव्यक्तिर्यद्देश-व्यापिनी परम्परया तद्देशभाग एव तत्रावच्छेदको न तु सम्पूर्णो

---

(१) व्याप्याव्याप्यवृत्तित्वेनोत्पन्नत्वस्येति घ०।

(२) रूपाविषयकलौकिकप्रत्यक्षानङ्गीकारात् रूपान्तरविषयकत्वं तस्या-वश्यकमिति बोध्यं।

(३) एकावच्छेदेनान्यूनानतिरिक्तदेशवृत्तित्वाभावादित्यर्थ इति ख०।

देन वृत्त्यभावात्। बहुत्व-पृथक्त्वव्यञ्जकव्यङ्ग्यत्वञ्च अवयव्येकत्वयोरिति न परस्परव्यभिचारिव्यञ्जकव्यङ्ग्यत्वं, अतएव नीला बलाकेत्यत्र रूप-परिमाणयोरर्द्धनिखात-

कपालिका अवयविनि तु कपालिकैव साक्षादवच्छेदिकेति भावः। इदमुपलक्षणं साध्यस्य परस्परगर्भतया साध्यसत्त्वादपि न तत्र व्यभिचारः। अवयव्युत्पलनीलिम्नोर्निरुक्तावयवसंयोगोत्पललाव्यञ्जकव्यङ्ग्यत्वाभावादित्यपि बोध्यं। अवयविनमादायावयवबहुत्वे घटैकत्वमादाय घटैकपृथक्त्वे च व्यभिचारं परस्परघटितसाध्यसत्त्वेनोद्धरति, 'बहुत्वेति बहुत्व-पृथक्त्वव्यञ्जकव्यङ्ग्यत्वं बहुत्व-पृथक्त्वाव्यञ्जकाव्यङ्ग्यत्वं तदुभयसाक्षात्कारत्वावच्छिन्नाजनकवृत्तिकारणताप्रतियोगिककार्य्यतायाः साक्षात्कारविषयतयावच्छेदकत्वाभाव इति यावत्[१] 'न परस्परव्यभिचारिव्यञ्जकव्यङ्ग्यत्वमिति न निरुक्तपरस्पराव्यञ्जकव्यङ्ग्यत्वमित्यर्थः, 'अतएवेति भाववृत्तिकारणताघटितनिरुक्तपरस्पराव्यञ्जकव्यङ्ग्यत्वरूपसाध्यसत्त्वादेवेत्यर्थः, 'नीला बलाकेति, 'बलाका' बकपंक्तिः, तस्याञ्च मेघसन्निधानरूपदोषवशात् शुक्लाग्रहेऽपि परिमाणग्रहः कदाचिच्चक्षुषा दूरत्वादिदोषवशात्[२] परिमाणाग्रहेऽपि शुक्लग्रह इति परस्पराव्यञ्जकतत्तद्दोषाभावव्यङ्ग्यत्वाद्व्यभिचारसम्भवो ध्येयः। 'अर्द्धनिखातेति अर्द्धनिखातवंशेऽर्द्धनिखननरूपदोषवशात् परिमाणाग्रहेऽपि

(१) तथाच विवक्षितसत्यन्तदलाभावात् साध्यसत्त्वमिति भावः।

(२) कदाचिदर्द्धनिखातादिदोषवशादिति क०, ईदृशपाठस्य अर्द्धावरणादिदोषवशादित्यर्थः, आदिना दूरत्वादिपरिग्रहः।

वंशसङ्ख्या-परिमाणयोर्वा न व्यभिचार इति। मैवं।

---

सङ्ख्याग्रहः दोषविशेषात्तरवशाच्च सङ्ख्याया अग्रहेऽपि परिमाणग्रह इति परस्पराव्यञ्जकतत्तद्दोषाभावव्यङ्ग्यत्वाद्व्यभिचारसम्भव इति भावः।

पितृचरणानां मते त्वेकवर्णस्यापरवर्णाविषयकसाक्षात्कारविषयत्वाभाव एव प्रतिनियतव्यञ्जकव्यङ्ग्यत्वाभाव इति भ्रमेण यत्तद्ग्राह्यं सामान्यतो व्याप्तावयवनिष्ठसंयोगबहुत्वमादायावयविनि[१] उत्पलवृत्तिनीलमादायोत्पलत्वे घटवृत्त्येकपृथक्त्वमादाय च तदेकत्वे व्यभिचारमाशङ्कते, 'न चेत्यादिना, 'अवयवसंयोग-बहुत्वव्यञ्जकाव्यङ्ग्येनेति अवयवसंयोग-बहुत्वाविषयकसाक्षात्कारविषयेणेत्यर्थः, संयोग-बहुत्वयोर्ग्रहे आश्रयभेदग्रहस्यापि हेतुतया तेन विनाप्यवयविनो ग्रहादिति भावः। 'उत्पलत्वेति, नीलरूपाविषयकदीपजन्योत्पलसाक्षात्कारविषयेणोत्पलत्वेनेति व्युत्क्रमेण[२] योजना, 'पृथक्त्वाव्यञ्जकव्यङ्ग्येनेति पृथक्त्वादिविषयकसाक्षात्कारविषयेणेत्यर्थः, परस्परानवच्छेदकानवच्छेद्यत्वरूपहेतुविशेषणाभावादेवावयवसंयोगोत्पलनीलमादायावयव्युत्पलत्वयोर्न व्यभिचार इति समाधत्ते, 'अवयवसंयोगेति, 'अव्याप्यवृत्तिनोरित्युभयत्रैव सम्बध्यते, नीलस्योत्पत्तिकालावच्छेदेनाव्याप्यवृत्तित्वात्, व्याप्यवृत्तित्वञ्चावयविनो दैशिकं उत्पलत्वस्य कालिकं प्रकृते विवक्षितं एतेनावयवसंयोगनीलरूपयोरवयव्युत्पलत्वानवच्छेदकानवच्छेद्यत्वं नास्तीत्यभिहितं, अवयवसंयोगस्यावयव्यनवच्छेदकदेशावच्छेद्य-

---

(१) पूर्व्वकल्पे संयोगादावेव व्यभिचार इति तद्वैपरीत्यमिति।

(२) व्युत्क्रमश्च नीलिमपदोत्तरतृतीयाया उत्पलत्वपदोत्तरमनुसन्धानं।

त्वात् नीलस्य चोत्पलत्वानवच्छेदककालावच्छेद्यत्वात् उत्पलत्वस्य नित्यतया कालस्य तदनवच्छेदकत्वात्। इदमुपलक्षणं अवयवसंयोगेऽवयव्यनवच्छेदकावयव्युत्पत्तिप्राक्कालावच्छेद्यत्वमपि बोध्यं। उत्पलत्वेऽपि नीलरूपानवच्छेदकानवच्छेद्यत्वं नास्तीत्याह, 'उत्पलत्वस्य चेति उत्पलत्वस्य नीलरूपानाश्रयेऽपि वर्त्तमानत्वेनेत्यर्थः, तथाचोत्पलत्वस्य काले नीलरूपानवच्छेदकनीलेतरस्वाश्रयावच्छेद्यत्वात् न नीलानवच्छेदकानवच्छेद्यत्वमिति भावः। 'एकावच्छेदेन वृत्त्यभावादिति परस्परानवच्छेदकानवच्छेद्यत्वाभावादित्यर्थः, इदमुपलक्षणं उत्पलत्वे परस्परायाग्राहकेन्द्रियग्राह्यत्वरूपहेतुविशेष्यदलाभावात्[१] साध्यस्य परस्परगर्भतयासाध्यसत्त्वाच्च न नीलरूपमादाय व्यभिचारः उत्पलवृत्तिनीलरूपस्योत्पलत्वाविषयकसाक्षात्कारविषयत्वाभावादित्यपि बोध्यं। अवयवबहुत्वमादायावयविनि[२] घटैकपृथक्त्वमादाय घटैकत्वे व्यभिचारं परस्परघटितसाध्यसत्त्वेनोद्धरति, 'बहुत्वेति बहुत्व-पृथक्त्वविषयकसाक्षात्कारमात्रस्यैव विषयत्वञ्चेत्यर्थः, तथाच बहुत्व-पृथक्त्वयोरवयव्येकत्वाविषयकसाक्षात्कारविषयत्वाभावेनोभयाभावरूपसाध्यसत्त्वमिति भावः। 'परस्परव्यभिचारिव्यञ्जकव्यङ्ग्यत्वं' परस्पराविषयकसाक्षात्कारविषयत्वं, 'अतएवेति दोषाभावगर्भसाध्यसत्त्वादेवेत्यर्थः, 'रूप-परिमाणयोरिति, अत्र 'परिमाणपदं बलाकानिष्ठशुक्लग्राहकेन्द्रियमात्रग्राह्यबलाकापरिमाणव्यक्तिपरं, अन्यच निरुक्तसमानेन्द्रियग्राह्यत्वाभावादेव व्यभिचारस्यासम्भवादिति दिक्।

---

(१) उत्पलत्वस्य नीलरूपाग्राहकत्वगिन्द्रियग्राह्यत्वादिति भावः।

(२) अवयवबहुत्वमादाय तत्समनियतकालेऽवयविनीति ख०।

वर्णाः प्रतिनियतव्यञ्जकव्यङ्ग्याः आश्रयेण सह समा-नेन्द्रियाग्राह्यत्वात् गन्धवत् इत्यापाततः सत्प्रतिपक्ष-त्वात् ।

'वर्णा इति, पूर्वोपवर्णितसाध्यस्य प्रतियोग्येवात्र साध्यं, पक्षोऽपि पूर्व्ववदेव, ककारत्वाद्यवच्छेदेन साध्यसिद्धेरुद्देश्यत्वं तेन न्यायनये नांशतः सिद्धसाधनं, 'आश्रयेणेति खकाराद्याश्रयग्राहकेन्द्रियाग्राह्य-त्वादिति यथाश्रुतोऽर्थः, यद्यदाश्रयग्राहकेन्द्रियाग्राह्यं तत्तेन समं निरुक्तप्रतिनियतव्यञ्जकव्यङ्ग्यं यथा रसेन गन्ध इति सामान्यतो व्याप्तिः । यद्यप्यत्राप्यतीन्द्रियद्व्यणुकादौ घटादिवृत्तिरूपादिकमा-दाय व्यभिचारः उपनीतभानमादाय सिद्धसाधनापत्त्या प्रतिनियत-व्यञ्जकव्यङ्ग्यत्वस्य साध्यस्य लौकिकसाक्षात्कारविषयत्वघटितत्वेन तत्र साध्याभावात्, तथापि नञ्व्यत्यासेन लौकिकसाक्षात्कारविषय-तदाश्रयाग्राहकेन्द्रियग्राह्यत्वं हेत्वर्थो विवक्षितः, इत्यञ्च द्व्यणुकादौ[१] ग्राह्यत्वाभावादेव न व्यभिचारः । घटादिवृत्तिगुरुत्वादिकमादाय तद्वृत्तिगन्धादौ व्यभिचारवारणाय लौकिकसाक्षात्कारविषयेति तदित्यस्य विशेषणं । न च तथापि खकाराद्याश्रयस्य गगनस्य ग्राहकासिद्ध्या पक्षे हेत्वसिद्धिरिति वाच्यं । परनये गगनस्यापि खकाराद्याश्रयस्य चाक्षुषतया ग्राहकप्रसिद्धिसम्भवात्, अग्राहकेन्द्रि-याग्राह्ये लौकिकसाक्षात्कारविषयतदाश्रयकत्वं वा विवक्षणीयं लौ-किकसाक्षात्कारविषयेति च तदित्यस्य विशेषणमिति दिक् । अत्र

(१) अतीन्द्रियादाविति ख० ।

वस्तुतस्तु अनन्यथासिद्धप्रत्यभिज्ञानबलेनाभेदसिद्धौ प्रतिनियतव्यञ्जकव्यङ्ग्यत्वसाधकस्यैव बलवत्त्वं, शब्दस्य शब्दजनकत्वञ्च शब्दनाशकत्वं वीचीतरङ्गन्यायेनोत्पत्तिकल्पनञ्च कल्पनमेव शब्दस्य शब्देऽजनकत्वादनाशकत्वाच्च अन्त्याद्यशब्दवत् । एतेन सामान्यवत्त्वे

---

समूहालम्बनसाक्षात्कारमात्रविषययोर्गन्धयोः प्रामाणिकत्वे च तत्र व्यभिचारो दुर्वार इति ध्येयं । 'आपाततः सत्प्रतिपक्षत्वादिति वक्ष्यमाणयुक्त्या अस्याधिकबलत्वेन समानबलत्वाभावान्न सत्प्रतिपक्षत्वमित्यत उक्तं 'आपातत इति ।

'अनन्यथासिद्धेति अभेदं विनानुपपद्यमानेत्यर्थः । ननु शब्दस्य नित्यत्वे शब्दस्य शब्दजनकत्वादिकं कथमुपपद्यत इत्यत आह, 'शब्दस्येति, 'वीची-तरङ्गन्यायेनेति कदम्बगोलकन्यायेन शब्दोत्पादस्य गौरवपराहतत्वात्तत्परित्यागः, 'कल्पनमेवेति मानाभावादिति भावः। साधकाभावमुक्त्वा बाधकमप्याह, 'शब्दस्येति, 'अन्त्याद्येति वर्णात्मकः शब्दो न शब्दजनको न वा शब्दनाशकः वर्णत्वादन्त्यशब्दवदाद्यशब्दवच्चेत्यर्थः, परनये प्रतियोगिप्रसिद्धिर्ध्वनिजनके तन्नाशके च, अन्त्यत्वं शब्दाजनकत्वं, आद्यत्वं शब्दानाशकत्वं, न्यायनये शब्दमात्रस्य दृष्टान्तत्वासम्भवादुभयोपादानं । तन्नये च वर्णमात्रमेव दृष्टान्तः, 'इत्यपास्तमिति इति वर्णानित्यत्वसाधनमपास्तमित्यर्थः। अत्र जातौ ध्वंसे च व्यभिचारवारणाय सत्यन्तं, परमाण्वादौ व्यभिचारवारणाय विशेष्यदलं, अलौकिकप्रत्यक्षमादाय तद्दोषतादवस्थ्यवारणाय

सत्यस्मदादिवहिरिन्द्रियजप्रत्यक्षत्वात् इत्यपास्तं, प्रत्य-भिज्ञानबाधात् शब्दत्व-गत्वादेरसिद्धेश्च, तस्माच्छब्दो नित्यः व्योमैकगुणत्वात् तत्परिमाणवत्, श्रोत्रग्राह्य-त्वात् शब्दत्ववत्, विशेषगुणान्तरासमानाधिकरणैक-

---

लौकिकत्वलाभार्थं 'अस्मदादीति, आत्मनि व्यभिचारवारणाय 'बहिरितीति ध्येयं। 'एतेनेत्येव विवृणोति, 'प्रत्यभिज्ञेति, 'असि-द्धेश्चेति जातित्वासिद्धेश्चेत्यर्थः, 'आदिपदात् सत्ता-गुणत्वादिपरि-ग्रहः, तथाच सत्यन्तविशेषणस्य स्वरूपासिद्धिरिति भावः। मीमांसकः स्वमतमुपसंहरति, 'तस्मादिति, 'व्योमैकगुणत्वादिति व्योममात्रगुणत्वादित्यर्थः, व्योमीयसंयोगादौ व्यभिचारवारणाय मात्रपदं व्योमान्यासमवेतार्थकं, अतस्तन्मये समवायस्यानित्यतया घटादिसमवायेऽस्मन्नये च प्रागभावे व्यभिचारवारणाय गुणपदं समवेतार्थकं, व्योमत्वञ्चाष्टद्रव्यान्यद्रव्यत्वं न तु शब्दाश्रयत्वं, तथा सति तादात्म्येन शब्दस्यैव हेतुत्वसम्भवादितरांशवैयर्थ्यापत्तेः, ध्वनिश्च वायवीय इति न तत्र व्यभिचारः, व्याप्यवृत्तित्वे सतीत्यनेन वा विशेषणीयं, ध्वनिश्चाव्याप्यवृत्तिः वर्णात्मकशब्दस्य च प्रत्यभिज्ञा-बलेन व्याप्यवृत्तित्वमिति न कोऽपि दोषः। 'श्रोत्रग्राह्यत्वादिति, ध्वनिश्च कर्णशष्कुल्यवच्छिन्नत्वगिन्द्रियग्राह्य इति न तत्र व्यभिचारः, 'शब्दत्ववदिति न्यायनये दृष्टान्तः, परनये शब्दत्वस्योपाधितया श्रोत्रग्राह्यत्वाभावेन हेतोरसिद्धेस्तन्मते च षड़िन्द्रियवेद्यः कालो दृष्टान्तः, 'विशेषगुणेति, अत्र घटादिनिष्ठगन्धादौ व्यभिचारवार-

**वृत्तिगुणत्वात् समयपरिमाणवत्, पृथिवीतरनित्यभूत-विशेषगुणत्वात् अपाकजत्वे सति नित्यैकसमवेतत्वात्**

---

णाय 'असमानाधिकरणान्तं शब्दभिन्नविशेषगुणासमानाधिकरणा-र्थकं, शब्दस्यापि शब्दात्मकविशेषगुणसमानाधिकरणत्वात् स्वरूपा-सिद्धिवारणाय शब्दभिन्नेति, अखण्डाभावघटकत्वाच्च न वैयर्थ्यं,[१] 'विशेषपदमपि स्वरूपासिद्धिवारकं, वायुस्पर्शश्च तादृशासमानाधि-करण इति न तत्र व्यभिचारः, कालाकाशनिष्ठद्वित्वादौ व्यभिचार-वारणाय 'एकवृत्तीति, एकवृत्तित्वं एकमात्रवृत्तित्वमुभयासमवेतत्व-मिति यावत्, समवाये[२] व्यभिचारवारणाय 'गुणपदं समवेतार्थकं। न च मनोनिष्ठकर्म्म-वेग-परत्वापरत्वेषु व्यभिचार इति वाच्यं। तन्नये मनसो विभुतया तत्र तेषामनभ्युपगमात्, मनसो विभुत्वा-भावे तु गुणपदं विभुसमवेतपरमिति न काप्यनुपपत्तिः। 'समय-परिमाणवदिति महाकालपरिमाणवदित्यर्थः, 'पृथिवीतरेति, पर-माणुगन्धादौ व्यभिचारवारणाय 'पृथिवीतरेति भूतविशेषणं, जलावयविरूपादौ व्यभिचारवारणाय 'नित्येति भूतविशेषणं, भूत-पदं ज्ञानादावनैकान्तिकत्ववारणाय, भूतत्वमात्मभिन्नत्वमात्रं, नभो-घटसंयोगादौ व्यभिचारवारणाय 'विशेषेति, ध्वनिश्च यदि वायु-परमाणुगुणोऽपि तदा तदन्यत्वेनापि विशेषणीयं, 'अपाकजत्वेति,

---

(१) अन्यथा शब्दभिन्नत्वस्य व्यभिचारावारकविशेषणतया वैयर्थ्यसम्भव-इति तात्पर्य्यं ।

(२) तन्मते तस्य नानात्वादनित्यत्वाच्चेति भावः ।

जलपरमाणुरूपवत्, अव्यासज्यवृत्तित्वे सति अनात्म-विभुगुणत्वात् कालपरिमाणवत्, विपक्षे बाधकञ्च प्रत्यभिज्ञानमेवेति।

इति श्रीमद्गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शब्दानित्यतावादपूर्व्वपक्षः।

---

परमाणुगन्धादौ व्यभिचारवारणाय सत्यन्तं तेजःसंयोगासमवायिकारणकान्यत्वार्थकं। न च तैजसशरीर-कण्ठाद्यभिघातजन्यवर्णेषु न्यायनये भागासिद्धिरिति वाच्यं। तदतिरिक्तस्य पक्षत्वात्, जलावयविरूपादौ व्यभिचारवारणाय 'नित्येति भूतविशेषणं, भूतपदञ्च ज्ञानादावनैकान्तिकत्ववारणाय,[१] भूतपदशून्यपाठे तु अपाकजत्वमेव सामान्यतः संयोगासमवायिकारणकान्यत्वं वाच्यमतो ज्ञानादौ न व्यभिचारः। आद्यशब्देतरशब्दस्य पक्षत्वाच्च न न्यायनये भागासिद्धिः, नभो-घटसंयोगादौ व्यभिचारवारणाय 'एकेति, 'एकसमवेतत्वमव्यासज्यवृत्तिगुणत्वं तेन जलपरमाणुद्वयसंयोगे परमाणुकर्म्मणि च न व्यभिचारः, वेगश्च गतिसन्तानः, परत्वापरत्वमपि संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वमेव अतः परमाणुनिष्ठेषु तेषु न व्यभिचारः, तदन्यत्वेन वा विशेषणीयमिति भावः। 'अव्यासज्येति, संयोगादौ व्यभिचारवारणाय सत्यन्तं, ज्ञानादौ व्यभिचारवारणाय 'अनात्मेति,

---

(१) 'नित्यभूतैकसमवेतत्वादिति मूलपाठमनुसृत्य भूतपदस्य व्यावृत्तिदानं सङ्गतं।

घटादिस्पर्शे व्यभिचारवारणाय 'विभ्विति, तन्मये घटादिसमवाये व्यभिचारवारणाय गुणपदं समवेतार्थकमिति दिक् । तदयं शब्दा-नित्यत्वपूर्व्वपक्षनिष्कर्षः । लाघवात् ककारादयो वर्णा नित्या एकैका एव, विनष्टः ककारः उत्पन्नः ककार इत्यादिप्रत्ययस्तु प्रागुपलब्ध्या-नुपलभ्यमानत्वरूपदोषवशाद्भ्रमः । न च वर्णानां नित्यत्वे घट-पदत्वादिकं दुर्व्वचं अव्यवहितोत्तरत्वसम्बन्धेन घवत्त्वादेस्तत्त्वात् अव्यवहितोत्तरत्वस्य नित्यत्वेऽसम्भवादिति वाच्यं । घज्ञानानन्तर-मव्यवधानेन टज्ञानं भवत्वित्यभिप्रायविषयत्वसम्बन्धेन घवत्त्वस्यैव तत्त्वात्, शुकाद्युक्ते च शिक्षकस्येश्वरस्य वाभिप्रायसत्त्वाच्च तत्सम्भवः । अथ सर्व्वेषां ककारादीनामेकत्वे तार-तारतर-मन्द-मन्दतरादि-विलक्षणप्रत्ययानुपपत्तिः । न चैकस्यामेव ककारादिव्यक्तौ तारत्व-तारतरत्व-मन्दत्व-मन्दतरत्वादिनानाधर्म्माभ्युपगमान्न तादृशप्रत्यया-नुपपत्तिरिति वाच्यं । तारत्वादेस्तुल्यव्यक्तिवृत्तित्वे जातिरूपत्वानु-पपत्तेः । न च भवन्मतेऽपि तारत्वादेर्जातित्वमसिद्धं कत्व-गत्वा-दिना सङ्करप्रसङ्गादिति वाच्यं । कत्व-गत्वादिव्याप्यनानातारत्वादि-स्वीकारात् । न च तारत्वादिकं वा नाना कत्व-गत्वादिकं वेत्यत्र विनिगमनाविरह इति वाच्यं । कत्व-खत्वादेर्नानात्वे तार-मन्द-साधारण-कः-ख-इत्याद्याकारानुगतप्रत्ययानुपपत्तेः[१] अधिकजाति-कल्पनापत्तेश्च[२] । न च तथापि तार-तारतर-मन्द-मन्दतरकका-रादिव्यक्तीनां परस्परभेदोऽभ्युपेयत एव परन्तु समानजातीय-

(१) तार-मन्दसाधारणककार-खकारानुगतप्रत्ययानुपपत्तेरिति क० ॥

(२) अयं पाठः खपुस्तके नास्ति ।

ककारादिव्यक्तीनामेव नाभेदोऽभ्युपेयत इति वाच्यं। तथापि तारत्व-तारतरत्वादेर्जातिरूपत्वानुपपत्तिः तारत्वादेः ककार-खकारादिभेदेन विभिन्नत्वाभ्युपगमे एकव्यक्तिवृत्तित्वात् अन्यथा कत्व-खत्वादिना सङ्करादिति चेत्. न, तारत्वादेः कत्वादिव्याप्यनानाजातित्वे ककार-खकारादिसाधारणतारादाकारानुगतप्रत्ययानुपपत्तेः। न च तदसिद्धिः, अनुभवापलापात्। तस्मात्तारत्व-तारतरत्वादिकमनुगतत्वाल्लाघवाच्च ककार-खकारादिसर्व्वसाधारणमेकमेवाखण्डोपाधिः, तच्च सर्व्वमेकस्यामेव ककारादिव्यक्तौ वर्त्तत इति न तादृशप्रत्ययानुपपत्तिः। अत एव य एव ककारस्तार आसीत् स एवेदानीं मन्द इति प्रतीतिरपि साधु सङ्गच्छते। विलक्षणवायोर्व्यञ्जकतया च न सर्व्वदा तारत्वादिसर्व्वधर्म्मग्रहः तार-मन्दाद्युत्पत्तिनियमार्थं वायुनिष्ठवैलक्षण्यस्य त्वयाप्यभ्युपगमात्। न चेवं तारोऽयं न तारतरस्तारान्मन्दोऽन्य इत्यादिप्रत्ययानुपपत्तिरिति वाच्यं। शिखी विनष्ट इत्यादिप्रतीतिवद्विशेषणभेदप्रतियोगित्वस्यैव विशिष्टे तेनावगाहनात्। न च तारककारादिसाक्षात्कारस्य कार्य्यसहभावेन मन्दककारादिसाक्षात्कारप्रतिबन्धकत्वात् तयोर्भेदसिद्धिरिति वाच्यं। तारत्वप्रकारक-ककारादिसाक्षात्कारस्य मन्दत्वप्रकारकसाक्षात्कारप्रतिबन्धकत्वेनाभेदेऽपि तदुपपत्तेः। अस्तु वा तारत्व-तारतरत्वादिकं वायुनिष्ठैव जातिरुक्तदोषविशेषवशाच्छब्दनिष्ठतया[१] भासते दर्पणनिष्ठतया मुखादिरिव, तार-तारतराद्युत्पत्तिनियमार्थं वायुनिष्ठवैलक्षण्यस्य तवाप्यावश्यकतया तस्यैव लाघवेन तारत्व-तारतरत्वादि-

(१) तत्तद्दोषवशाच्छब्दनिष्ठतयेति ख०।

रूपत्वस्योचितत्वात्। न च तस्य वायुधर्म्मत्वे श्रवणं कथं तद्ग्रहः कर्णशष्कुल्यवच्छिन्नत्वगिन्द्रियोपनीतस्य तस्य श्रवणोपनीतभानाभ्युपगमे तारत्वं स्पृशामीत्यनुव्यवसायापत्तेः शृणोमीत्यनुव्यवसायानुपपत्तेश्चेति वाच्यं। वायुनिष्ठधर्म्मान्तरस्य श्रवणायोग्यत्वेऽपि तारत्वादेस्तद्योग्यत्वाभ्युपगमात् योग्यतायाः फलबलकल्प्यत्वात्। न च श्रवणा वायुनिष्ठतारत्वादिग्रहाभ्युपगमे श्रोत्रसंयुक्तसमवायस्यातिरिक्तप्रत्यासत्तित्वकल्पनापत्तिरिति वाच्यं। अप्रत्यासन्नस्यैव तारत्वादेः श्रवणा ग्रहात्[1] वक्ष्यमाणक्रमेण विलक्षणवायुसंयोगस्य तारत्वादिव्यञ्जकत्वादेवातिप्रसङ्गविरहात्। एतेन एकस्मिन्नेव ककारे तारत्व-मन्दत्वादिसकलधर्म्मस्वीकारेऽस्मात् ककारादयं ककारस्तार इति प्रत्ययानुपपत्तिः स्वप्रतियोगिकतारत्वस्य स्वस्मिन्नसम्भवात् स्वप्रतियोगिकतारत्वस्यापि स्वस्मिन्नभ्युपगमे तारत्वेनोपलभ्यमानककारव्यक्तावपि स्वापेक्षया तारत्वप्रत्ययप्रसङ्गात्। न च तवापि तारत्वादेर्जातिरूपतया सप्रतियोगिकत्वप्रत्ययानुपपत्तिर्जातेः सप्रतियोगिकत्वाभावनियमादिति वाच्यं। जात्यन्तरस्य मानाभावेन सप्रतियोगिकत्वविरहेऽपि तारत्वादिजातेः सप्रतियोगिकत्वे बाधकाभावादित्यपि परास्तं। वायुनिष्ठतारत्वादेरेव ककारादिप्रतियोगिकतया ककारादौ भ्रमोपपत्तेः। यदि च ककारादौ तारत्वादिप्रत्ययस्य तारोऽयं न तारतरस्ताराम्मन्दोऽन्य इत्यादिप्रत्ययस्य च प्रमात्वमप्यनुभवसिद्धं तदा सन्तु तार-तारतर-मन्द-मन्द-

---

[1] प्रत्यक्षविषयतायाः सन्निकर्षप्रयोज्यत्वे मानाभावादिति भावः।

तरादिव्यक्तय एवैकैकाः तार-मन्दादयस्तु परस्परं विभिन्ना एव[1]। ननु तथापि ककार-गकारादीनां नित्यत्वे ककाराद्येकशब्द-साक्षात्कारदशायां गकारादिसर्व्वशब्दसाक्षात्कारापत्तिः सर्व्वेषामेव शब्दानां सर्व्वदा कर्णशष्कुल्यवच्छेदेन सत्त्वादिति चेत्, न, न्यायनये ककाराद्युत्पादकतत्तद्विलक्षणवायुसंयोगस्यैवास्मन्मते ककारादिसा-क्षात्कारजनकतया तद्विरहादेव युगपत् सर्व्वशब्दोपलब्ध्यसम्भवात् कण्ठाद्यभिघातस्य तत्तद्विलक्षणवायुक्रियासम्पादकतया परम्परयोप-युज्यते। ननु न्यायनये यत्रावच्छेदकतासम्बन्धेन ककाराद्युत्पत्तिस्तत्र समवायसम्बन्धेन तत्तद्विलक्षणवायुसंयोग इति सामानाधिकरण्य-प्रत्यासत्त्या वायुसंयोगानां ककारादिहेतुत्वमतो न कर्णान्तरे वायु-संयोगात् कर्णान्तरे ककाराद्युत्पत्तिः तत्पुरुषीयशब्दलौकिकसा-क्षात्कारं प्रति तत्पुरुषीयश्रोत्रसमवायस्यावच्छिन्नत्वसम्बन्धेन तत्-पुरुषीयकर्णविवरस्य वा विषयनिष्ठतया हेतुत्वमतो न पुरुषान्तरीय-कर्णावच्छेदेनोत्पन्नशब्दस्य पुरुषान्तरेण ग्रहणं, भवन्नये च तत्तद्वि-लक्षणवायुसंयोगानां ककारादिसाक्षात्कारं प्रति कया प्रत्यासत्त्या हेतुत्वं अव्यवहितपूर्व्ववर्त्तितामात्रेण हेतुत्वे युगपत् सर्व्वशब्दोपलब्धे-र्दुर्व्वारत्वात् सर्व्वदैवावश्यं यत्किञ्चित्कर्णावच्छेदेन तत्तद्विलक्षण-वायुसंयोगसत्त्वात् कर्णस्य ज्ञानानवच्छेदकतया यत्कर्णावच्छेदेन ककारादिसाक्षात्कारस्तत्र विलक्षणवायुसंयोग इति क्रमेण हेतुत्वस्य वक्तुमशक्यत्वात् स्वीयकर्णावच्छिन्नविलक्षणवायुसंयोगत्वेन हेतुत्वे प्रति-

---

(१) तथाच ताराकारानुगतव्यवहारस्य घटादिव्यवहारवदुपपादनीय-इति भावः।

कथं तत्तत्पुरुषभेदेनानन्तकार्य्य-कारणभावापत्तेः। न च तत्तद्विलक्षण-वायुसंयोगः समवायघटितसामानाधिकरण्यप्रत्यासत्त्यात्मनिष्ठ एव ककारादिसाक्षात्कारहेतुः विलक्षणवायुसंयोगस्य फलबलकल्प्यतया ककारादिसाक्षात्कारदशायामेव तस्यात्मनि सत्त्वान्नातिप्रसङ्ग इति वाच्यं। आत्मनो विभुत्वात् एकस्य पुरुषस्य कर्णावच्छेदेन विलक्षणवायोः संयोगदशायां सर्व्वेषामेव पुरुषाणामात्मनि तदवच्छेदेन विलक्षण-वायोः संयोगस्यावश्यकत्वादतिप्रसङ्गतादवस्थ्यात्। न हि संयोग-निष्ठं वैलक्षण्यं जनकतावच्छेदकं, कर्म्मजन्यतावच्छेदक-संयोगजन्यताव-च्छेदकजात्योर्नानात्वापत्तेरपि तु वायुनिष्ठमेवेति चेत्, न, ममापि तत्र तत्तद्विलक्षणवायुसंयोगानां शरीरनिष्ठतया ककारादिसाक्षा-त्कारहेतुत्वात्। न चैवं हस्ताद्यवच्छेदेन विलक्षणवायोः संयोगस्यापि[१] ककारादिसाक्षात्कारजनकत्वापत्तिरिति वाच्यं। कर्णावच्छिन्न-विलक्षणवायुसंयोगत्वेन हेतुत्वात् पुरुषान्तरीयकर्णस्य न पुरुषान्त-रीयशरीरनिष्ठसंयोगावच्छेदकः विलक्षणवायोः संयोगस्य फलबल-कल्प्यतया ककारादिसाक्षात्कारदशायामेव तस्य शरीरे सत्त्वेन हस्ताद्यवच्छिन्नविलक्षणवायुसंयोगस्य हेतुत्वेऽपि क्षतिविरहाच्च। इत्थञ्च श्रोत्रसमवायादेरपि न प्रत्यासत्तित्वं तत्तद्विलक्षणवायुसंयो-गानां व्यञ्जकत्वस्यावश्यकतया तत एवातिप्रसङ्गभङ्गात्। न च तथापि न्यायनये विलक्षणवायुसंयोगानां कत्वादिकमेव समवायसम्बन्धेन कार्य्यतावच्छेदकं भवन्मते तु कसाक्षात्कारत्वादिकं[२] अतो गौरवं

---

(१) विलक्षणवायोः संयोगस्य सत्त्वेऽपीति ख०।

(२) तव तु ककारसाक्षात्कारत्वादिकमिति ख०।

न्यायनयेऽनन्तककारादिव्यक्तिकल्पने तत्पुरुषीयशब्दलौकिकसाक्षात्कारं प्रति तत्पुरुषीयश्रोत्रसमवायादेर्हेतुत्वकल्पनञ्च फलमुखमिति वाच्यं। ममापि लौकिकविषयतासम्बन्धेन ककारादिव्यक्तेरेवावच्छेदकत्वात् ककारादिव्यक्तेरेकैकतया ककार-कत्वयोरविशेषात्। न च तथापि लौकिकविषयत्वस्य स्वरूपसम्बन्धार्थकस्याननुगततया कार्य्यतावच्छेदकतानियामकसम्बन्धगौरवमिति वाच्यं। समवायवत् लौकिकविषयत्वस्याप्येकस्यैवानुगतस्य लाघवेनाभ्युपगमात् तवापि समवायस्यैकत्वेन समवायसम्बन्धावच्छिन्नकत्वाधारत्वस्यैव प्रतिव्यक्तिभिन्नस्वरूपसम्बन्धात्मकस्य कार्य्यतावच्छेदकतानियामकसम्बन्धत्वेन सम्बन्धाननुगमनिबन्धनगौरवस्य तुल्यत्वाच्च। न च तथापि तव कत्वादिरूपेण कादिव्यक्तिरवच्छेदिका न्यायनये तु स्वरूपतः कत्वादिव्यक्तिरिति लाघवमिति वाच्यं। ममापि स्वरूपतः ककारादिव्यक्तेरवच्छेदकत्वात्। न च जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्म्मप्रकारेणैव भाननियमात् कथं कादिव्यक्तेः स्वरूपतोऽवच्छेदकत्वमिति वाच्यं। स्वरूपतोऽवच्छेदकत्वेऽपि कार्य्य-कारणभावग्रहे कत्वादिरूपेणैव भानात्। न हि जात्यतिरिक्तपदार्थस्य किञ्चिद्धर्म्मप्रकारेण भाननियमवत् किञ्चिद्धर्म्मप्रकारेणावच्छेदकत्वमित्यपि नियमः, मानाभावात्। अथ तथापि लौकिकविषयतया कव्यक्तिरवच्छेदिका लौकिकविषयतया कत्वं वेत्यत्र विनिगमकाभावात् तव कार्य्य-कारणभावद्वयापत्तिः। न च कत्वस्यावच्छेदकत्वेऽपि विलक्षणवायुसंयोगाभावदशायां ककारसाक्षात्कारापत्तेर्वारणाय ककारव्यक्तेरवच्छेदकत्वावश्यकत्वमेव विनिगमकमिति वाच्यं। एवं

सति विलक्षणवायुसंयोगाभावदशायां कत्वसाक्षात्कारापत्तेर्वारणाय कत्वस्य अवच्छेदकत्वावश्यकत्वादिति चेत्, न, ककारादिविषयक-कत्वसाक्षात्कारस्यालीकतया ककारसाक्षात्कारसामग्रीविरहादेव त-दानीं कत्वसाक्षात्काराभावसम्भवेन कत्वस्यावच्छेदकत्वानावश्यकत्वात्, कोलाहलस्थले कत्वाविषयकस्यापि साक्षात्कारस्य सत्त्वेन कव्यक्तेरव-च्छेदकत्वस्य चावश्यकत्वादिति सङ्क्षेपः ।

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये शब्दानित्यतावादपूर्व्वपक्षरहस्यम् ॥



## अथ शब्दानित्यतावादसिद्धान्तः ।

अत्रोच्यते । गकारादिव्यक्तयोनैकैकाः, अस्ति च शुक-सारिका-मनुष्यप्रभवेषु स्त्री-पुंसतद्विशेषप्रभवेषु च गकारादिषु स्फुटतरवैलक्षण्यात् स्वरूपतोभेदप्रथा इक्षुक्षीरादिमाधुर्य्यवत् । न चेयमौपाधिकी भेदप्रतीतिः, न हि विदितकुङ्कुमस्य कुङ्कुमारुणा तरुणीति-

---

### अथ शब्दानित्यतावादसिद्धान्तरहस्यं ।

'अस्ति चेति चोहेतो अस्ति हीत्यर्थः, 'तद्विशेषेति स्त्री-विशेष-पुरुषविशेषेत्यर्थः, 'स्फुटतरवैलक्षण्यादिति अनुभवसिद्धवैलक्षण्येन हेतुनित्यर्थः, 'स्वरूपतोभेदप्रथेति अन्योन्याभावस्वरूपपरस्पर-भेदप्रतीतिरित्यर्थः, 'इक्षुक्षीरादिमाधुर्य्यवदिति इक्षुमाधुर्य्य-क्षीर-माधुर्य्यादिवदित्यर्थः, सप्तम्यन्ताद्वतिः, 'माधुर्य्यं' मधुरोरसः, तथाच तच प्रथावैलक्षण्येन हेतुना परस्परभेदप्रतीतिरित्यर्थः, 'औपाधिकीति परम्परयान्यनिष्ठवैधर्म्यविषयेत्यर्थः, 'भेदप्रतीतिः' यथोक्त-गकारादिषु वैलक्षण्यानुभवः, अन्यनिष्ठवैधर्म्यविषयत्वं दूषयति, 'न हीति, 'कुङ्कुमारुणा तरुणीतिवदिति कुङ्कुमारुणा तरुणीति-प्रत्यये कुङ्कुमारुण्यवदित्यर्थः, 'स्त्री-पुंसादिप्रभेदत्वमिति स्त्री-पुं-

वत् स्त्री-पुंसप्रभवत्वमानुभविकमुपाधिः,[१] इन्द्रियासन्निकर्षेण स्त्री-पुंसादिभेदमविदुषोऽपि शब्दभेदप्रत्ययात्, यतोऽनुमापयन्ति शुकशब्दोऽयं स्त्रीशब्दोऽयमित्यादि अन्यथान्योन्याश्रयात्, तत्प्रभवत्वे ज्ञाते भेदप्रत्ययस्तस्माच्च तदनुमानमिति । न च कृपाणान्वय-व्यतिरेकानुविधानात् कृपाणे मुखदीर्घत्ववत् औपपत्तिकमौपाधिकत्वं, अन्यानुविधानाभावात् । अथ

---

सादिनिष्ठं वैलक्षण्यमित्यर्थः, स्त्री-पुंसप्रभवत्वमितिपाठेऽप्ययमेवार्थः, 'आनुभविकं' अनुभवसिद्धं, 'उपाधिरितिकर्म्मव्युत्पत्त्या परम्परया आरोपप्रकारीभूतमित्यर्थः, 'इन्द्रियासन्निकर्षेण' इन्द्रियसन्निकर्षादिविरहेण, 'शब्दभेदेति, 'भेदः' वैलक्षण्यं, तदज्ञानेऽपि भेदप्रत्यय-इत्यत्र मानमाह, 'यत इति, तेनैव हेतुनेति शेषः । 'अन्यथा' तज्ज्ञानानन्तरमेव शब्दभेदप्रत्यये, 'तत्प्रभवत्वे' स्त्री-पुंसादिनिष्ठवैलक्षण्ये, 'भेदप्रत्ययः' शब्दनिष्ठवैलक्षण्यप्रत्ययः, 'तस्माच्च' शब्दनिष्ठवैलक्षण्यज्ञानाच्च, 'अनुमानमिति स्त्री-पुंसादिनिष्ठवैलक्षण्यानुमानमित्यर्थः, 'कृपाणान्वयेति यदा कृपाणे अर्थप्रतीतिस्तदैव मुखे दीर्घत्वारोपो न पुनरादर्शादौ तत्प्रत्ययदर्शायामित्यन्वय-व्यतिरेकानुविधानादित्यर्थः, 'कृपाणे मुखदीर्घत्ववदिति कृपाणनिष्ठतया भासमानस्य मुखस्य दीर्घत्वप्रत्ययवदित्यर्थः, 'औपपत्तिकमिति

---

(१) स्त्री-पुंसादिप्रभेदत्वमानुभविकमुपाधिरिति पाठान्तरं ।

व्यञ्जकवायोरेव वैलक्षण्यं शुकादिगकारगतत्वेन भासते वायोरुपलब्धिस्तेनैव रूपेणेति चेत्। न। गकारगतत्वे बाधकाभावात्। न चाभेदप्रत्यभिज्ञानं बाधकं, न हि य एव शुकशब्दः स एव स्त्रीशब्द इति प्रत्यभिज्ञानं, अन्यथा तेषु भेदज्ञानाभावेन वक्तृविशेषानुमानं न स्यात्। न चाभिव्यञ्जकवायोरेव वैलक्षण्यं शुकाद्यनुमापकं, तस्य गकारावृत्तित्वात् तच्च

---

अन्यान्वय-व्यतिरेकान्यथानुपपत्त्यादिसिद्धमित्यर्थः, 'औपाधिकत्वमिति, शब्दनिष्ठवैलक्षण्यप्रत्ययस्य यथाकथञ्चित् स्मर्य्यमाणारोपरूपत्वमित्यर्थः। न च कृपाणे मुखदीर्घत्वारोपस्यानुभूयमानारोपरूपत्वमेव न तु स्मर्य्यमाणारोपरूपत्वमिति कथं दृष्टान्तत्वमिति वाच्यं। यादृशं दीर्घत्वं कृपाणे तादृशदीर्घत्वस्य मुखे आरोपाभावेन तत्रापि स्मर्य्यमाणदीर्घत्वान्तरारोपरूपत्वमित्यभिप्रायात्। 'व्यञ्जकवायोरिति, वायुनिष्ठवैलक्षण्यस्य तवाप्यावश्यकत्वादिति भावः। 'गकारगतत्वेन भासत इति, प्रतीतिस्तु परम्परासम्बन्धेन प्रमारूपा साक्षात्सम्बन्धेन भ्रमरूपैव वेत्यन्यदेतदिति भावः। व्यक्तिं विना कथं जातिग्रह इत्यत आह, 'वायोरिति, वायुत्वन्तु दोषान्न भासत इति भावः। ननु शब्दस्य ध्वंसादिकल्पनागौरवमेव बाधकमित्यत आह, 'अन्यथेति, 'अन्यथा' तादृशप्रत्यभिज्ञाने, 'भेदज्ञानाभावेन' ज्ञायमानवैलक्षण्याभावेन, 'तस्येति, तथाच गकारं पक्षीकृत्य शुकाद्युच्चरितत्वे साध्ये वायुनिष्ठवैलक्षण्यस्य न पक्षधर्म्मत्वमिति भावः।

चारोपे अनुमितेर्भ्रान्तत्वापातात् । तस्मात् यथा कृष्णा गौः शुक्ला गौरिति भेदे भासमाने गकारानुगतप्रतीतिर्गोत्वमालम्बते तथा शुकादिगकारेषु भेदे भासमानेऽयं गकारोऽयमपि गकार इति बुद्धिर्गत्वमा-

---

ननु पक्षधर्मताज्ञानमुपयुज्यते तच्चाचारोपरूपमेवाविकलमित्यत आह ,'तच्च चेति गकारादिषु वायुनिष्ठवैलक्षण्यस्य पक्षधर्मतारोप इत्यर्थः, 'अनुमितेः' अनुमित्यनुव्यवसायस्य, 'भ्रान्तत्वापातादिति भवन्मयेऽन्यथाख्यात्यभावेन पक्षधर्मतानिश्चयाभावादनुमित्युत्पादासम्भवादिति भावः । न च परम्परासम्बन्धेन वायुवृत्तिवैलक्ष्ण्यं लिङ्गमिति वाच्यं । परम्परासम्बन्धस्य व्याप्यतानवच्छेदकत्वादिति भावः[१] । 'अनुमितेरिति यथाश्रुतन्तु न सङ्गच्छते विषयाबाधेन कूटलिङ्गकानुमितेरपि प्रमात्वसम्भवात् । ननु शुक-शारिकादिगकारादीनां परस्परभिन्नत्वेऽयङ्गकारोऽयमपि गकार इत्यादिप्रत्यभिज्ञानुपपत्तिः[२] व्यक्त्यभेदस्य तद्विषयत्वादित्याशङ्कामुपसंहारव्याजेन निराकरोति, 'तस्मादिति, 'भेदे भासमान इति इत्यनुभवसिद्धेन वैलक्षण्येन भेदे सिद्ध इत्यर्थः, 'गोत्वमालम्बत इति न तु व्यक्त्यभेदमित्यर्थः, 'भासमाने' सिद्धे, गकार इति बुद्धिर्गत्वमालम्बते न तु व्यक्त्यभेदमित्यर्थः । ननु परम्परासम्बन्धस्यापि व्याप्यतावच्छेदकतया वायुनिष्ठ-

---

(१) इति हृदयमिति ख० ।

(२) प्रत्यक्षानुपपत्तिरिति क० ।

लभ्यते इति प्रत्यभिज्ञा च भेदप्रथा चोपपद्यते। किञ्च गत्वादिकं यदि न जातिस्तदा कोलाहलप्रत्ययो न स्यात् तथा हि नगरादौ बहुभिर्वर्णानामेकदोच्चारणे दूरस्थेनानभिव्यक्तगकारादिवर्णविभागं कोलाहलमात्रं श्रूयते। न च तत्र वर्णान्यस्य ध्वनिरूपस्य शब्दस्य श्रुतिः

---

वैलक्षण्येनापि परम्परया शुकाद्युच्चरितत्वानुमानसम्भवः। अस्तु वा वायुं पक्षीकृत्य शुककण्ठाद्यभिहितत्वं[१] साध्यीकृत्य शुकीयत्वानुमानमित्यस्वरसात् ककारादेरेकैकत्वे कत्व-खत्वादिजात्यनुपपत्त्या तेषां भेदं साधयति, 'किञ्चेति, 'गत्वादिकमिति, गत्वादिजातेरावश्यकत्वे व्यक्तिभेदोऽप्यावश्यक इति गूढाभिसन्धिः, 'कोलाहलप्रत्यय-इति कोलाहलव्यवहार इत्यर्थः, 'बहुभिः' जनैः, 'वर्णानां' बहूनां वर्णानां, 'दूरस्थेनेति, दूरस्थत्वं हस्ताद्यपेक्षया न तु ग्राह्यशब्दापेक्षया स्वकर्णावच्छिन्नस्यैव शब्दस्य ग्रहादिति ध्येयं। 'अनभिव्यक्तेति अनभिव्यक्तकत्वादिजातिकमित्यर्थः, 'कोलाहलमात्रं' शब्दसमूहमात्रं, 'श्रूयते' यत् श्रूयते, तदेव कोलाहलव्यवहारविषय इति शेषः[२]। तथाच वर्णत्वावान्तरकत्वादिजातिमत्तया अप्रतीयमानशब्दसमूहत्वमेव कोलाहलत्वं तच्च गत्वादिजात्यभावे न सम्भवतीति भावः। नन्वप्रतीतध्वनित्वावान्तरजातिकध्वनिव्यक्तिसमूह एव कोलाहलव्यवहारविषय इत्यत आह, 'न चेति, 'तत्र' कोलाहलव्यवहार-

---

(१) शुककण्ठाद्युच्चरितत्वमिति ख०।

(२) इति भाव इति क०।

सम्भवति, तदभिव्यञ्जकभेरीताड़नादेरभावात्। न च वर्णाभिव्यञ्जका एव ध्वनिव्यञ्जकाः, सन्निधानेऽपि श्रूयमाणे वर्णे तच्छ्रवणप्रसङ्गात्। न च वर्णाभिव्यञ्जकवायुभिरेव दूरे ध्वनिमात्रमभिव्यज्यते, कव्यञ्जकस्य गव्यञ्जन इव वर्णव्यञ्जकस्य ध्वनिव्यञ्जनेऽसामर्थ्यात् तत्समर्थशङ्खादेरभावाच्च। न च तत्र शब्दत्वमेव प्रतीयते न शब्दः, व्यक्त्यग्रहे जात्यग्रहात्। न चाभिव्यञ्जको वायुरेव कोलाहलत्वेन प्रतीयते, शब्दत्वेन प्रत्ययात्

---

स्थले, 'तदभिव्यञ्जकेति ध्वन्युत्पादकेत्यर्थः, ध्वनीनामनित्यतया[१] यथाश्रुतासङ्गतेः। 'ध्वनिव्यञ्जकाः' ध्वन्युत्पादकाः। 'दूर इति दूरत्वसहकारादित्यर्थः, तथाच सन्निधानेऽपि ध्वनिर्जायत एव व्यञ्जकाभावात् न श्रूयत इति भावः। ननु फलबलाद्दूरत्वोपहितानां वर्णव्यञ्जकानामेव तत्र सामर्थ्यं स्यादित्यत आह, 'तत्समर्थेति ध्वनिजनकेत्यर्थः, तथाच क्लृप्तकारणं विना कथं तत्र ध्वनिः स्यात्। न चात्र ध्वनौ शङ्खादेर्न कारणत्वं किन्तु एतद्विजातीयध्वनावेवेति वाच्यं। गौरवात् मानाभावाच्चेति भावः। अगृह्यमाणव्यक्तिकशब्दत्वमेव कोलाहलत्वं स्यादित्याशङ्क्य निराचष्टे, 'न चेति। 'अभिव्यञ्जकेति ककारादिव्यञ्जकेत्यर्थः, अगृह्यमाणान्योन्यभेदिकाः परस्परविभिन्नाः गकारादिव्यक्तय एव कोलाहल-

---

(१) ध्वनीनामनित्यत्वोपगमादिति ख०।

सन्निधावपि तथा प्रत्ययप्रसङ्गाच्च । गकारादिग्रहेऽपि तेषां परस्परभेदाग्रहात् कोलाहलधीरिति चेत्, न, तेषु वैधर्म्याभावात् तदभावेऽन्योन्याभावस्याभावात् स्वरूपग्रहणात् समीपे वहुगकारेषु भेदाभावेन तद्-ग्रहे कोलाहलधीप्रसङ्गाच्च । अनेकवर्णोच्चारणस्य तद्धे-तुत्वे दूरेऽपि तद्प्रत्ययापत्तेः । तस्मादवश्यं गत्वादि-जातिरूपेया यद्ग्रहे गकारादिग्रहेऽपि कोलाहलबुद्धि-

व्यवहारविषय इत्याशङ्कते, 'गकारादीति, 'परस्परभेदाग्रहादिति परस्परनिष्ठो यो भेदस्तस्याग्रहादित्यर्थः, वैधर्म्यान्योन्याभावस्व-रूपान् भेदान् क्रमेण विकल्प्य दूषयति, 'तेष्विति, गत्वादिजातेस्त्व-यानभ्युपगमादिति भावः । 'तदभावे' वैधर्म्याभावे, 'अन्योन्याभाव-स्याभावादिति अन्योन्याभावस्य वैधर्म्याव्याप्यत्वादिति भावः । ननु वैधर्म्यान्तराभावेऽपि स्वरूपमेव तादात्म्येन वैधर्म्यमस्तु स्वरूपमेव वा भेदो वाच्यः तस्य भेदत्वेनाग्रहात् कोलाहलप्रत्ययः स्यादित्यस्व-रसादविद्यमानभेदाग्रहो नियामको विद्यमानभेदाग्रहो वेति विकल्प्य आद्ये दोषमाह, 'समीप इति, 'बहुगकारेषु' बहुभिरुच्च-रितेषु गकारेषु, 'तद्ग्रह इति, तद्ग्रहे च तवान्यथाख्यात्यापत्ति-रिति भावः । द्वितीये दोषमाह, 'अनेकेति, 'तद्धेतुत्वे' कोला-हलधीहेतुत्वे, 'दूरेऽपीति, बहुभिरेकदा गकारोच्चारणेऽपीति शेषः, 'अवश्यं गत्वादिजातिरिति, गत्वादिजात्यभ्युपगमेऽनेकगकारादिव्य-क्तिरगत्या सिद्ध्यतीति भावः । ननु सन्तु कोलाहलबुद्धि-व्यपदेशान्य-

व्यपदेशौ । अस्ति च शब्दस्य कोऽपि च जातिविशेषः श्रोत्रग्राह्यः यस्मात् प्राच्यादिदिग्देशविशिष्टशङ्खप्रभवत्वमनुमीयते, अव्यपदेश्यत्वेऽपि इक्षुक्षीरादिमाधुर्य्यावान्तरवत्तत्सत्त्वात् । अन्यथा दिग्देशविशिष्टशङ्खादीनां ग्रहे श्रोत्रस्यासामर्थ्यात् तत्प्रतीतिर्न स्यादेव । तथापि गत्वादिना परापरभावानुपपत्त्या शुकादि-

---

यानुपपत्त्या गत्वादिका जातयः एवमपि शुकादिप्रभवा एकैका एव सन्तु ककारादिव्यक्तय इत्यत आह, 'अस्ति चेति, 'यस्मात्' जातिविशेषाद्धेतोः, 'प्राच्यादीति, तथाच शुककककारत्वस्यापि तत्तद्देशप्रभवत्वरूपवैजात्यभेदाद्भेद इति भावः । ननु प्राचीप्रभवत्वादेर्जातिरूपत्व एव तदाश्रयककारादीनां नानात्वं तदेव कुत इति चेत्, न, प्राच्यादिप्रभवशुकीयाद्यैकैकककारादिविषयकत्वेनैव तादृशव्यक्तिग्रहेऽपि प्राच्यादिप्रभवत्व-तदप्रभवत्वसन्देहात् प्राच्यादिप्रभवत्वादेर्गत्वादिव्याप्यजातिविशेषत्वावश्यकत्वात् जातिविशेषस्वीकारे च दोषवशात् तादृशजात्यग्रहकाले एव तादृशसंशयोपपत्तेः, इत्यञ्च कदम्बगोलकन्यायेन शब्दोत्पत्तौ अन्यथा एकव्यक्तौ प्राचीभवत्वादेरसम्भवात् वीचि-तरङ्गन्यायेनोत्पत्तौ च देशान्तरेऽपि तादृशशब्दजशब्दोत्पत्त्या देशान्तरजन्यतावच्छेदकजात्या सङ्करप्रसङ्गाच्च, 'शङ्खेति दृष्टान्तार्थं, शुकादिकमपि बोध्यं । 'अव्यपदेश्यत्वेऽपि' कस्यचित् पदस्य प्रवृत्तिनिमित्तत्वाभाववत्त्वेऽपि, 'तत्सत्त्वात्' प्राच्यादिप्रभवत्वजातिसत्त्वात् । 'अन्यथा' तादृशवैजात्यास्वीकारे, 'परापरभावानुपपत्त्येति

गकारादिषु न जातिविशेषा इति चेत्, शुककका-रादिषु कत्वादिव्याप्या नानाजातिर्भिन्ना तया प्रत्येकं शुकककारादिषु शुकादिप्रभवत्वमनुमाय तद्व्यवहारः, न तु शुकककारादिषु एका जातिरस्ति शुकप्रभवत्वा-द्यनुमापिका तद्व्यवहारकारिका वा, गत्वादिना सङ्कर-प्रसङ्गात्, गत्वन्तु न नाना अननुगतत्वेन ततोऽनु-गतव्यवहारानुपपत्तेः। अतएव तारत्वमपि गत्वादि-

---

व्याप्य-व्यापकभावानुपपत्त्येत्यर्थः, गत्वशून्येऽपि खकारादौ शुकादि-प्रभवत्वजातिसत्त्वात् शुकादिप्रभवत्वशून्येऽप्यन्यप्रभवगकारादौ गत्वा-दीनां सत्त्वादिति भावः। 'तया' गत्वव्याप्यनानाजात्या, शुकादि-प्रभवत्वं शुकादिप्रयोज्यत्वं, एवं देशप्रभवत्वमपि देशप्रयोज्यत्वं, अन्यथा कर्णशष्कुल्यवच्छिन्ने शब्दजन्यशब्दे तज्जन्यत्वाभावादजशक-तापत्तेः, शुकप्रयोज्यवृत्तिश्च जातिविशेषः शुक-तद्देशजन्यताव-च्छेदकजातिर्व्यापक एव, तादृशजातेः शुक-तद्देशजन्यतावच्छेदक-जात्यानुमानञ्च व्यतिरेकिणैवान्वयसहचाराभावात्, तादृशजन्यता-वच्छेदकजात्यनुमानञ्च तदन्यदेशाप्रभवत्वेऽपि सति तद्देशप्रभवत्वा-दिना व्यतिरेकिणैव। 'तद्व्यवहारः' शुकादिप्रभवोऽयं गकार इति व्यवहारः, 'सङ्करप्रसङ्गा'दिति गत्वाभाववति खकारे शुकप्रभवत्वस्य तदभाववति चान्यप्रभवगकारे गत्वस्य च सत्त्वात् शुकप्रभवगकारे तयोः समावेशाच्चेति भावः। 'नाना' शुकप्रभवत्वादिव्याप्य-विरुद्ध-भेदेन नाना, अनुगततद्व्यवहारानुपपत्तेरिति भावः। यद्यपि

व्याप्यं नाना न तु गत्वं, तन्निश्चयेऽपि गत्वसन्देहस्य व्याप्यतावच्छेदकरूपानिश्चयात् । न चानुगतव्यवहारानुपपत्तिः, सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकत्वेनानुगतेन नानातारत्वेष्वनुगतव्यवहारसम्भवात्, तदज्ञाने व्यवहारासिद्धेः । तारत्व-मन्दत्वे न जाती सप्रतियोगिकत्वात् इति चेत्, न, तारत्व-तारतरत्वादय-उत्कर्षादिरूपा जातिविशेषा एव ते चाश्रये गृह्यमाणा एव गृह्यन्ते न तूत्कर्षावध्यपेक्षाः यथा मधुर-

---

ककार-खकारसाधारणशुक्लप्रभवत्वप्रकारकानुगतव्यवहारानुपपत्तेस्त-त्रापि साम्यमेव तथापि तादृशानुगतबुद्धिरप्रामाणिकीत्यभि-प्रेत्येत्युक्तमिति भावः । 'अत एव' गकारानुगतव्यवहारानुप-पत्तेरेव, 'न तु गत्वमिति', नानेति शेषः । ननु तारत्वादेर्ग-त्वादिव्याप्यत्वे तन्निश्चयो न स्यादित्यत आह, 'तन्निश्चयेऽपीति तारत्वादिनिश्चयेऽपीत्यर्थः, 'व्याप्यतावच्छेदकेति तारत्वादि-निष्ठगत्वादिव्याप्यतावच्छेदकरूपाभावादित्यर्थः, तारत्वादेर्वायुधर्म्म-त्वेनाव्याप्यत्वादिति भावः । इदन्तु परनीत्या परं प्रत्युत्तरं, स्वमते तु व्याप्यत्वेनाज्ञानदशायामेतादृशनिश्चयेऽपि संशयोपपत्तिर्बोध्या । 'अनुगतव्यवहारानुपपत्तिः' ककार-गकारादिसाधारणतार-इत्या-कारकानुगतव्यवहारानुपपत्तिः । 'सप्रतियोगिकत्वात्' अवधिनिरूप-णाधीननिरूपणकत्वात् । 'न तूत्कर्षावध्यपेक्षाः' न तूत्कर्षावधि-

तारत्वादय उत्कर्षव्यवहारं इतरसापेक्षाः कुर्व्वन्ति तथा मन्दाद्यपेक्षया तारत्वादिव्यवहारं, उत्कर्षस्तु जातिरूपादन्योऽसम्भावित एव, गकारे तु नैवं, अनन्यथासिद्धभेदप्रत्ययबलेन वक्तृविशेषानुमानबलेन च तत्सिद्धेर्गत्व-कत्वव्याप्यतन्नानात्वस्वीकारात्। तवापि

---

विषयिण्येव तत्प्रतीतिः। 'तारत्वादिव्यवहारमिति, तारत्वादिजातयः कुर्व्वन्तीति शेषः। अतः तारत्वादीनां जातित्वे सिद्धे व्यवहारार्थमवश्यपेक्षायां न दोषः। एवं विलक्षणप्रतीतिबलात्तुल्यवृत्तिकत्वेऽपि तारत्वं मन्दत्वञ्च जातिद्वयं घटत्व-कलसत्वादौ नानाभाव इति न तेतादृशजातिद्वयमिति सम्प्रदायः। ननु नानागकारेषु उपाधिनैव गकारानुगतमतिरस्तु तत्कथमनुगतव्यवहारान्यथानुपपत्त्या व्यापकजातित्वं गत्वस्येत्यत आह, 'गकारे तु नैवमिति, 'नैवं' न व्यापकजातिकल्पकाभावः, अत्र हेतुमाह, 'अनन्यथेति अनुगतधर्म्मावगाहिप्रत्ययबलेनेत्यर्थः, ककार-खकारादिसाधारणशुकीय इत्याकारकानुगतप्रतीतिस्वसिद्धेति भावः। ननु देवदत्तप्रभवत्वाद्युपाधिनैवानुगतबुद्ध्युपपत्तौ किन्तत्प्रभवत्वजात्येत्यत आह, 'वक्त्रिति वक्त्रादिविशेषो देवदत्तप्रभवत्वादिः, तथाच वक्तृविशेषरूपोपाधिरपि न जातिविशेषं विना सिद्ध्यतीति तत्स्वीकार आवश्यक इति भावः। 'तन्नानात्वेति शुकीयत्वादेर्गत्व-कत्वव्याप्यनानाजातित्वस्वीकारादित्यर्थः।

केचित्तु 'गकारे तु नैवमित्यस्य यथा कत्व-खत्वादिव्याप्यनाना-

वायुवृत्तित्वे शुकादिककार-गकारादिव्यञ्जकवायूनां विजातीयत्वं वाच्यं तथाच ककारव्यञ्जकवायुत्व-व्याप्यं[१] यदि शुकवर्णाभिव्यञ्जकवायुत्वं तदा शुक-गकारव्यञ्जकवायौ[२] न स्यात्, अथ व्यापकं तदा सर्व्वे एव कव्यञ्जकवायवः शुकवर्णाभिव्यञ्जकवायवः

---

जात्या शुकप्रभवत्वमनुमाय शुकीयककार-खकारादिसाधारणेषु शुकीयत्वव्यवहारस्तथा शुकीये गकारे गत्वव्याप्यनानाजात्या शुकीय-त्वमनुमाय न तद्व्यवहारोऽपि तु गत्वव्याप्यैकजात्यैवेत्यर्थः, शुकीयत्व-व्याप्यतायां किं प्रमाणमत आह, 'अनन्यथासिद्धेत्यादि, तथाचानु-गतप्रतीतिनिर्व्वाहाय गत्वादिप्रतीतिनिर्व्वाहाय च गत्वजातेः शुक-तदन्यगकारसाधारणत्वेऽनायत्या तद्व्याप्यत्वमिति भाव इत्याहुः।

अपरे तु यत्र एक एव शुकीयो गकारस्तत्रैकव्यक्तिवृत्तितया शुकीयत्वस्य जातित्वाभावाज्जात्या शुकप्रभवत्वमनुमाय शुकीयत्व-व्यवहारो नेत्याह, 'गकारे तु नैवमिति, एतन्मते च गत्वादेः शुकीयत्वजातिव्यापकत्वे किं मानमिति शङ्कायां समाधत्ते, 'अनन्यथे-त्यादि पूर्व्वोक्तार्थकमित्याहुः।

'तवापीति, 'वायुवृत्तित्वे' शुकीयत्वादिजातीनां वायुवृत्तित्वे, 'विजातीयत्वं' गकारव्यञ्जकवायुविजातीयत्वं, 'न स्यादित्यस्य शुक-

---

(१) ककारादिव्यञ्जकवायुत्वव्याप्यमिति क०।

(२) शुकककारव्यञ्जकवायाविति क०।

स्युस्तस्माद्वायुवृत्तित्वेऽपि तासां नानात्वमावश्यकं । अथास्तु स्त्री-पुंसादिगकारभेदस्तथापि यावद्वक्तृभेद-मनन्ता एव नित्या वर्णाः प्रत्यभिज्ञानादिति चेत्, अस्त्युत्पाद-विनाशप्रतीतौ सत्यामपि स एवायं गकार-इति प्रत्यभिज्ञा, अस्ति हि तदनन्तरमप्युत्पाद-विनाशप्रथा । न चोत्पादप्रतीत्यभेदप्रत्यभिज्ञयोरन्यतरस्य परस्परं विहायान्यद्बाधकमस्ति, न वानयोः परस्परं बाध्य-बाधकभावे विनिगमकं येनैकभ्रान्तत्वेनाविरोधः स्यात् । कथं वा भेदाभेदज्ञानयोरन्य-

---

वर्णाभिव्यञ्जकवायुत्वमित्यादिः, 'तासां' शुकीयत्वजातीनां, उत्पादादिप्रत्यय-प्रत्यभिज्ञायोः परस्परप्रतिबन्धेन प्रत्यभिज्ञाया व्यक्त्यभेदावगाहित्वासम्भवेनानायत्या तज्जातीयाभेदावगाहनाच्छब्दस्य नित्यतायां न प्रमाणत्वमिति समवधत्ते, 'अस्त्युत्पादेत्यादिना 'प्रमाणयितुं न शक्यत इत्यन्तेन । ननु यदि व्यक्तिभेदज्ञानाज्ञाने प्रत्यभिज्ञा तदैवाविरोधाय प्रत्यभिज्ञाया विषयभेदकल्पना युज्यते तदेव न, परन्तु यदोत्पत्त्यभेदव्याप्यतया तज्ज्ञानकाले कदाचिद्व्यक्तिभेदग्रह एव प्रथमतो जातस्तदा तत्प्रतिबन्धकवशात् प्रत्यभिज्ञा न जायत एवेति विनिगमनाविरहेणोभयोरेव प्रमाणतया प्रत्यभिज्ञाया-नित्यत्वे प्रमाणत्वमक्षुण्णमेवेत्यत आह, 'कथं वेति, तथाच तादृश-भेदग्रहेऽपि तदुत्तरक्षणेऽनुभवसिद्धां प्रत्यभिज्ञाविषयभेदकल्पनां

चावधारितं परस्परप्रतिबन्धकत्वं परिभूय प्रथमं तयोरेकसत्त्वेऽप्यपरोत्पत्तिप्रसङ्ग इति सङ्कटप्रविष्टत्वेन प्रत्यभिज्ञानं शब्दनित्यत्वे प्रमाणयितुं न शक्यते। नन्वेवमुत्पत्तिमत्त्वादिनाप्यनित्यत्वसिद्धिः कथं, इत्थं, उत्पादादिबुद्धि-प्रत्यभिज्ञयोरप्यवश्यं विषयभेदः, एकविषयत्वे विरोधेनैकानन्तरमपरानुत्पत्तिप्रसङ्गात्। एवञ्च भेदे भासमाने प्रत्यभिज्ञायाः सजातीयत्वं विषयो न व्यक्त्यभेदः। न चैवं तज्जातीयोऽयमिति स्यात् न तु सोऽयमिति वाच्यं। तज्जातीयत्वप्रतीतेरपि सोऽयमित्याकारदर्शनात् यथा सैवेयं गाथा तदेवेदमौषधं बहुभिः कृतं मयापि प्रत्यहं क्रियमाणमस्तीत्यादौ। न

---

विना कथं स्यादित्यर्थः, 'इति सङ्कटेति, तथाच प्रत्यभिज्ञा तज्जातीयाभेदावलम्बनेति भावः। ननूत्पादादिप्रत्ययानामेव विषयभेदः कल्प्यतां विनिगमकाभावात् इत्यत्र कथं तेषां शब्दानित्यत्वे प्रमाणत्वमित्याशङ्कते, 'नन्विति, सिद्धान्तयति, 'इत्थमिति, प्रत्यभिज्ञायास्तज्जातीयत्वावगाहने साधकमाह, 'एवञ्चेति, 'व्यक्त्यभेदः' तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदाभावः, 'इति स्यात्' इत्यभिलापः स्यात्। ननु गाथावृत्तितद्व्यक्तित्वमानुपूर्व्येव इत्यत्र तावद्वर्णसमूहस्यानुपूर्वीत्वे तस्य च नित्यैकतया तद्वत्त्वावच्छिन्नाभेदविषयत्वेनैवोपपत्तौ तत्प्रत्यभिज्ञायास्तज्जातीयत्वावलम्बनमसम्भवदुक्तिकमेवेत्यत आनुपूर्व्या नाना-

हि तावद्वर्णमात्रमानुपूर्व्वी, जरा-राज-नदी-दीनादिषु तन्नानात्वात्, किन्तु तदुच्चारणानन्तरमुच्चारणं तज्ज्ञानानन्तरं ज्ञानं वा तच्च नानेति तद्वती गाथापि नानैव। नचाभेदे भासमाने उत्पादादिबुद्धिरेवान्यस्योत्पादादिकमवगाहते, गकारगतत्वप्रतीतेर्भ्रान्तत्वप्रसङ्गात्। न चेष्टापत्तिः, अभेदे भासमाने तद्विरुद्धधर्म्मवत्त्वभ्रमानुदयात् विनिगमकाभावेनोभयस्यापि

---

त्वमेव साधयति, 'न हीति, 'तच्च नानेति, तथाच तादृशानुपूर्व्यात्मकतत्तद्व्यक्तित्वावच्छिन्नभेदाभावस्य तादृशानुपूर्वीरूपेदन्त्वविशिष्टवैशिष्ट्यावगाहित्वं न सम्भवति तादृशानुपूर्व्या इदानीमसत्त्वेन विशेषणविषयकतज्ज्ञानासम्भवात् अतस्तादृशानुपूर्वीसमानजातीयानुपूर्व्यवच्छिन्नभेदाभाव एव विषयो वाच्यः, तथाच तदेव तज्जातीयत्वावगाहनमित्ति भावः। 'इति' इतिहेतोः, 'तद्वती' तादृशानुपूर्वीमती, 'गकारगतत्वप्रतीतेः' पूर्वानुभूतगकाराद्भिन्नोऽयं गकार इति प्रतीतेः, 'अभेदे भासमाने' प्रथमं भेदाभावरूपविशेषदर्शने विरोधिनि सति, 'तद्विरुद्धधर्म्मवत्त्वभ्रमानुदयात्' तद्विपरीतज्ञानानुदयात्, 'विनिगमनाविरहेणेति,[१] उभयोर्याथार्थ्यञ्च उत्पादादिप्रत्ययस्य तदीयोपादानादिविषयकत्वे प्रत्यभिज्ञायास्च तज्जातीयत्वा-

---

(१) विनिगमकाभावेनेत्यत्र विनिगमनाविरहेणेति कस्यचिन्मूलपुस्तकस्य पाठः।

यथार्थत्वाच्च, कुतस्तर्हि तस्या अभेदो विषयः, यत्र प्रथमं न भेदप्रथा अतएव भेदसत्त्वे तदज्ञानात् क्वचित् सा भ्रान्ता, तस्माद्यत्र भेदप्रतीतिस्तदितरबाधकाबाध्या तत्र प्रत्यभिज्ञैव न भवति भवन्ती वा तज्जातीयत्वमालम्बते, न तु भ्रान्ता, विशेषदर्शने भ्रमानुदयात्। अपि च यथा शङ्खादिध्वनीनां उत्पत्ति-विनाशप्रत्ययात्

---

वगाहिल एव सिद्ध्यतीति तथात्वमावश्यकमिति भावः । 'तस्याः' प्रत्यभिज्ञायाः, 'यत्र भेदप्रतीतिरिति, 'तदितरबाधकाबाध्या' 'तदितरेण' प्रत्यभिज्ञेतरेण, 'बाधकेन' अप्रामाण्यज्ञानादिना, 'अबाध्या' आस्कन्दिता न भवतीत्यर्थः,। ननु वर्णानामुत्पादविनाशकल्पनापेक्षयोत्पादादिप्रत्यायानां भ्रमत्वकल्पनैव युक्तेत्यत आह, 'अपि चेति ।

ननु गत्वाद्यविषयकप्रत्यक्षविषयवर्णस्तोमत्वं न कोलाहलत्वं तादृशोपाध्यप्रतिसन्धानेऽपि कोलाहलप्रत्ययादन्यथा रूपत्वादिकमपि चक्षुर्मात्रग्राह्यगुणत्वाद्युपाधिरेव लभ्यतेऽपि स्यात् किन्तु शब्दत्वमिवाखण्डधर्मान्तरं कोलाहलत्वमत एव कत्वाद्यविषयकप्रत्यक्षविषयस्योपनीतभानदशायामपि गृहीतभेदकवर्णस्तोमः कोलाहल इत्याकारको नानुभवः तच्च धर्मान्तरं दूरत्वादिव्यङ्ग्यमतः सन्निधाने न गृह्यते इत्यत आह, 'अस्ति चेति, 'शब्दस्य' वर्णस्य, 'प्राच्यादिदिशां गौड़-वङ्गादिदेशानां, 'विशिष्टशङ्खादीनाञ्च, 'प्रभवत्वं' प्रयोज्यत्वं, यस्मादनुमीयत इत्यर्थः, तेन श्रूयमाणवर्णव्यक्तीनां तत्तद्दिगाद्यजन्यत्वेऽपि न व्यभिचारः । शङ्खे वैशिष्ट्यं विलक्षणफुत्कारसहितत्वं,

तारत्वादिविरुद्धधर्म्मसंसर्गाच्चानित्यत्वे सैवेयङ्गुर्जरीत्यादिप्रत्यभिज्ञा तज्जातीयत्वविषया तथा वर्णप्रत्यभिज्ञापि। अन्यथा ध्वनयोऽपि नित्याः स्युः उत्पत्ति-वि-

---

'आदिना विपञ्चीप्रभृतेरुपग्रहः, सहकारिविशेषवशात् यन्त्रादेरपि वर्णोत्पादकत्वमते चेदं। ननु दिग्देशप्रयोज्यधर्म्मस्यासाधारणपदशक्यतानवच्छेदकत्वाज्जातित्वानुपपत्तिरित्यत आह, 'अव्यपदेश्यत्वेऽपीति असाधारणपदशक्यतानवच्छेदकत्वेऽपीत्यर्थः, 'माधुर्य्यावान्तरवदिति, 'अन्यथा' दिगादिप्रयोज्यजातीनामसत्त्वे, 'न स्यादेवेति, तथाच तादृशजात्यनुरोधात् गकारव्यक्तीनां नानात्वादवश्यं गकाराद्यनुगतमत्यर्थं गत्वादिजातिरभ्युपेतव्येति तदवच्छिन्नाभेदविषयिण्येव प्रत्यभिज्ञा भविष्यतीति न्यायमतनिगर्भः। शङ्कते, 'तथापीति, 'परापरेति, शुकीयत्वादिकं कत्वसमानाधिकरणजातिभिन्नं अव्यभिचारिकत्वव्यभिचारित्वात् रूपत्वादिवद्घटत्वादिवदेति भावः। ककारगतशुकीयत्वस्य कत्वाव्यभिचारित्वादुक्तहेतोः स्वरूपासिद्धिरित्याशयेन परिहरति, 'शुकेति। ननु कत्वादिव्याप्यायाः शुकीयत्वजातेर्नानात्वे ककारादावनुगतः शुकीयत्वव्यवहारः कथं स्यादत आह, 'तया चेति[१] तादृशनानाजात्या चेत्यर्थः, 'शुकादिप्रभवत्वं' तत्प्रयोज्यत्वं, शङ्कते, 'न चेति,[२] निरस्यति, 'गत्वादिनेति, गत्वं विना शुकीयत्वं खकारे शुकीयत्वं विना च गत्वं स्त्रीगकारे वर्त्तमानं शुकीयगकारे मिथः सङ्कीर्णमिति भावः।

---

(१) 'तयेत्यत्र 'तया चेतिपाठः क्वचिन्मूलपुस्तके वर्त्तत इति।

(२) ईदृशव्याख्याने 'न त्वित्यत्र 'न चेतिपाठो युज्यते।

ननु साङ्कर्य्यभिया गत्वादिकमेव शुकीयत्वादिव्याप्यं नाना कथं नोच्यते इत्यत आह, 'गत्वन्त्विति, 'अननुगतत्वेनेति, यद्यपि नानाभिरेव गत्वजातिभिर्गकारेषु कण्ठावच्छेदद्यविलक्षणप्रयत्नप्रभवत्वमनुमाय तेनैव गणेशशक्ततावच्छेदकजातिमद्वर्णत्वेनैव वा[१] अनुगतगकारव्यवहारः सम्भवत्येव तादृशोपाध्यप्रतिसन्धानेऽपि गकारानुगतमत्या अनुगतत्वस्वीकारे तु शुकप्रभवत्वाद्युपाधेरप्रतिसन्धानेऽपि शुकोक्तगकारादिनानावर्णेष्वनुगतमत्यनुरोधात् तेष्वपि शुकप्रयोज्यजातिप्रसङ्गो दुर्व्वारः, तथापि शुकादितत्तत्प्राणिप्रयोज्यजातिर्यदि कत्वादिपञ्चाशज्जातिव्यापिका तदा प्राणिशतसमुच्चरितेषु ककारादिपञ्चाशद्वर्णेषु तत्तत्प्राणिप्रयोज्यजातिशतस्वीकारेऽतिरिक्तपञ्चाशज्जातिकल्पनागौरवं स्यात् कत्वादिपञ्चाशज्जातीनां तत्तत्प्राणिप्रयोज्यजातिव्यापकत्वे तु प्राणिशतसमुच्चरितेष्वपि कादिपञ्चाशद्वर्णेषु कत्वादयः पञ्चाशदेव जातयो न तु शतानि इत्येव गत्वादिजातेरनुगतत्वे मूलयुक्तिः, इदन्तु बोध्यं कत्वव्याप्यशुकप्रभव-तन्नद्देशप्रभवतारत्वमेकं एवं खकारादिवर्णान्तरेष्वपि जन्यतावच्छेदकजातेरननुपगमेऽपि चत्यभावादन्यथा शुकीयत्व-तद्देशप्रभत्व-तारत्वादीनां जातिसाङ्कर्य्यापत्तेः शुकप्रभवत्व-तद्देशप्रभवत्व-तारत्वजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकशब्दजातित्वाद्युपाधिभिरेव ककारादिष्विवान्यदेशीयककारादिष्वपि शुकीयत्वाद्यनुगतबुद्धेः सम्भवात् शुककत्वमेव सामान्यं तद्व्याप्यञ्च तारत्व-तद्देशप्रभवत्वमेकं शुकगकारस्य तद्देशप्रभवतारस्य च सत्त्वेन जातिद्वयस्वीकारे साङ्कर्य्यादित्यपि वदन्ति। 'अतएवेति

---

(१) गपदेन गणेशबोधनादिति भावः।

गत्वादेरनुगतत्वादेवेत्यर्थः, ननु तारत्वस्य गत्वव्याप्यत्वे तन्निश्चयदशायां गत्वसन्देहो न स्याद्विरोधिव्याप्यनिश्चयस्य सत्त्वादत आह, 'तन्निश्चय-इति, 'व्याप्यतावच्छेदकरूपानिश्चयादिति. तादृूप्येण लिङ्गदर्शनस्यैव व्याप्तिस्मारकत्वात् इति भावः। व्यापकसामानाधिकरण्यरूपव्याप्त्य-भिप्रायेणैव वायं ग्रन्थः। ननु तारत्वस्य नानात्वे ककार-गकारादिषु तार इत्यनुगतव्यवहारः कथं स्यादित्याशङ्कते, 'न चेति, परिहरति, 'सजातीयेति, इत्यञ्च तद्गकारादयं शब्दस्तार इत्यत्र पञ्चम्यर्थः तादर्थ्यं, तच्च शब्दसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्पर्य्यवसितस्य तार-पदार्थस्यैकदेशे शब्देऽन्वितं, तेन गकाराद्यात्मकशब्दसाक्षात्कारप्रतिब-न्धकतावच्छेदकजातिमानयं शब्द इत्याकारकस्तत्रान्वयबोधः। न च महत्त्वादिगतोत्कर्षस्येव तारत्वस्यापि सावधिकत्वे बाधकाभावाद-वधित्वमेव पञ्चम्यर्थ इति वाच्यम्। तथा सति तद्गकारापेक्षया मन्देऽपि वर्णे तद्गकारात्तारोऽयमिति प्रयोगापत्तिः तादृशवर्णगतो-त्कर्षस्यापि स्वापेक्षया मन्दशब्दान्तरसाक्षात्कारप्रतिबन्धकतावच्छेदक-त्वात् तद्गकाराविधिकत्वाच्च अन्यथा तद्गकारादसौ मन्द इत्यपि प्रयोग-स्तत्र न स्यात्, यदेव हि वैजात्यात्मकापेक्षया तारत्वं तदेवान्यापे-क्षया मन्दत्वमित्यभ्युपगमात्, अतएव कुवलयमहत्त्वादुत्कृष्टं विल्वमहत्त्वं इत्यत्रापि पञ्चम्या नावधित्वमर्थस्तथा सति विल्वमहत्त्वादुत्कृष्टं कुव-लयमहत्त्वमित्यपि प्रयोगापत्तेः कुवलयनिष्ठस्य सर्षपाद्यपेक्षयोत्कर्षस्य विल्वमहत्त्वावधिकत्वनियमादन्यथा विल्वमहत्त्वादपकृष्टं कुवलयमहत्त्वं इत्यपि प्रयोगो न स्यादेकमहत्त्वापेक्षया उत्कर्षस्यैवापरमहत्त्वापेक्ष-यापकर्षरूपत्वात् किन्तु कुवलयमहत्त्वाद्विल्वमहत्त्वमुत्कृष्टमित्यत्रापि

तादर्थ्यमेव पञ्चम्यर्थः, तच्च परिमाणसाक्षात्कारप्रतिबन्धकतावच्छेद-कीभूतजातिपर्य्यवसितस्य उत्कर्षपदार्थस्य एकदेशे परिमाणेऽन्वितं, तेन कुवलयमहत्त्वात्मकपरिमाणगोचरसाक्षात्कारप्रतिबन्धकतावच्छे-दकीभूतजात्याश्रयो विल्वमहत्त्वमित्याकार एव तत्रान्वयबोधः, साश्रयावृत्तिद्रव्यसमवेतत्वसम्बन्धेनोत्कृष्टमहत्त्वस्यापकृष्टमहत्त्वसाक्षात्का-रप्रतिबन्धकत्वादिति मिश्राद्यनुयायिनः।

परे तु तुल्यव्यक्तिवृत्तिकमपि तारत्वं मन्दत्वञ्च नैकं किन्तु जातिद्वयमेव विलक्षणबुद्धिसिद्धत्वात् घटत्व-कलसत्वयोर्भेदे प्रमाण-विरहादैक्यस्वीकारात्तथाच गकारावधिकं यन्मन्दत्वं तद्वति तद्गका-रावधिकस्य तारत्वस्य विरहात्तद्गकारावधिकतारव्यवहारासम्भवाद-वधित्वमेव पञ्चम्यर्थः। न च तारत्वस्य सावधिकत्वे जातित्वं न स्यात्, अप्रयोजकत्वादन्यथा संयोगादेः सावधिकत्वे गुणत्वं न स्यादिति संयोगादयोऽपि निष्प्रतियोगिका एवेति किं न ब्रूयाः, एवञ्च कुव-लयमहत्त्वादुत्कृष्टं विल्वमहत्त्वमित्यत्रापि नोक्तक्रमेणान्वयबोधः कथि-तदिशा उत्कृष्टमहत्त्वस्यापकृष्टमहत्त्वसाक्षात्कारप्रतिप्रतिबन्धकत्वे प्रमा-णाभावात् सन्निकर्षविरहादेव महत्त्वावृतस्य क्षुद्रस्य परिमाणाग्रह-सम्भवात् अन्यथा तवाप्यप्रतीकारात् घटमहत्त्वादुत्कृष्टगगनमहत्त्वमै-हिकसुखादुत्कृष्टं स्वर्गसुखमित्यादौ तादृशबुद्ध्यसम्भवात् गगनमह-त्त्वादेर्घटमहत्त्वसाक्षात्कारं प्रत्यविरोधित्वात् किन्तु तत्राप्यवधित्वमेव पञ्चम्यर्थः, स चोत्कर्षपदवाच्यात्मक एवोत्कर्षपदस्यार्थेऽन्वितः, तथाच कुवलयमहत्त्वावधिकं यदुत्कर्षपदवाच्यं तद्वद्विल्वमहत्त्वमित्याकारक एव तत्रान्वयबोधः तत्तद्गुणार्थकपदोत्तरपञ्चम्यास्तत्तद्गुणान्वितस्वार्था-

वधिलस्य तद्गुणोत्कर्षभिन्नावृत्तिस्वरूपसम्बन्धेनैव उत्कर्षपदार्थे धर्म्मिणि अन्वयबोधं प्रति साकाङ्क्षत्वादेव विल्वमहत्त्वादुत्कृष्टं कुवलयमहत्त्वमित्यादिप्रयोगस्यासम्भवादिति प्राहुः ।

स्वतन्त्रास्तु तारत्वमुत्कर्षत्वादिकञ्चाखण्डमेव धर्म्मान्तरं स्वीकुर्व्वाणास्तस्यैव सावधिलमाश्रयन्तः कथितव्यवहारमुपपादयन्ति, तच्चिन्त्यं ।

शङ्कते, 'तारत्वेति, 'सप्रतियोगिकत्वादिति स्वेतरज्ञानाधीनप्रत्यक्षसामान्यकत्वादित्यर्थः, ब्राह्मणत्वादिजातौ व्यभिचारसत्त्वेऽपि स्वरूपासिद्धा परिहरति, 'तारत्वेत्यादिना, 'उत्कर्षरूपा इति जातित्वे हेतुगर्भविशेषणं, अतएव वक्ष्यति, 'उत्कर्षस्त्वित्यादि, 'न त्विति उत्कर्षस्य योऽवधिस्तज्ज्ञानसापेक्षा गृह्यन्ते इति पूर्व्वेणान्वयः। नन्वेवमाश्रयग्रहोत्तरमेवायं तार इत्यादिव्यवहारः स्यादत आह, 'उत्कर्षव्यवहारमिति उत्कर्षार्थकतर-तमादिप्रयोगमित्यर्थः, 'इतरसापेक्षा इति स्वधर्म्मिकया सजातीयगोचरसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्वलक्षणोत्कर्षत्व बुद्ध्या सहकृता इत्यर्थः, 'कुर्व्वन्तीत्यस्य मधुरादिशब्दोत्तरमिति शेषः, प्रकृतिशक्ययोर्गुण-कर्म्मणोरन्यतरस्योत्कर्ष एव तर-तमयोरनुशासनात् इति भावः। 'मन्दाद्यपेक्षयेति मन्दादिज्ञानमपेक्ष्येत्यर्थः, 'तारत्वादिव्यवहारमिति, 'तारत्व-तार-तरत्वादयः' 'कुर्व्वन्तीति च द्वयमनुषज्यते, तथाचाश्रयसन्निकर्षाद्गृह्यमाणेऽपि तारत्वादौ शब्दसाक्षात्कारप्रतिबन्धकतावच्छेदकजातित्वलक्षणतारत्वं न गृहीतमतस्तदानीं न तारत्वव्यवहारस्तद्रूपेणैव तारत्वादीनां तारपदशक्यतावच्छेदकत्वादिति भावः। ननु गकारस्योत्कर्षवत्त्वे मधुरतरो रस इत्यादिक इव गतरः शब्द इत्यपि

व्यवहारः स्यादत आह, 'गकारे तु नैवमिति गशब्दे तु न मधुरादि-शब्द इवोत्कर्षार्थकतर-तमादिव्यवहार इत्यर्थः, गकारस्य गपदशक्यता-नवच्छेदकतया सजातीयसाक्षात्कारप्रतिबन्धकतावच्छेदकजातिमत्त्व-मात्रस्य तर-तमादिव्यवहारं प्रत्यकिञ्चित्करत्वादिति भावः। ननु गकारो नोत्कर्षवान् तर-तमप्रत्ययाप्रकृतिशब्दत्वादन्यथा कत्वादिना सङ्करप्रसङ्गादत आह, 'अनन्यथेति, 'भेदः' वैलक्षण्यं, 'वक्तृविशेषः' शुका-दिः। ननु शुकीयत्वाद्युत्कर्षस्य शब्दवृत्तित्वे कत्वादिभिः साङ्कर्य्यभिया नानात्वं वाच्यं तदरं व्यञ्जकवायुनिष्ठमेकैकं लाघवात् तत्कल्प्यतां आश्रयव्यङ्ग्यत्वलक्षणपरम्परासम्बन्धेनैव तादृशैकजात्या गकारादिषु शुकीयत्वव्यवहारसम्भवादत आह, 'तत्रापीति, शुकीयत्वादिजातेरिति शेषः। 'तासां' शुकीयत्वादिजातीनां, शङ्कते, 'अथेति, 'अनन्ता एवेति, नित्याभिरेव तत्तद्वर्णव्यक्तिभिस्तदङ्कुरनुमानसम्भवादिति भावः। 'प्रत्य-भिज्ञानादिति स एवायं शुकीयः ककार इत्यादिप्रत्यभिज्ञानादित्यर्थः, निरस्यति, 'अस्ति हीत्यादिना 'न शक्यते' इत्यन्तेन, 'बाधकं' अप्रामा-ण्यज्ञापकं, 'अनयोरिति स एवायं गकारो नायं तद्गकार इत्याकारक-भेदाभेदज्ञानयोरित्यर्थः, 'भेदोऽच वैधर्म्यं, इदानीमुत्पन्नत्वादिकमि-त्यपि कश्चित्। 'सङ्कटप्रविष्टत्वेनेति नित्यताग्राहकधर्म्मसाधकतया स-न्दिग्धत्वेनेत्यर्थः। ननूक्तदिशोत्पत्तिमत्त्वज्ञानमपि सङ्कटप्रविष्टमेवेति तदपि कथमनित्यत्वे प्रमाणीकर्त्तव्यमित्याशङ्कते, 'नन्वेवमिति, उत्तर-यति, 'इत्थमिति, 'विरोधेनेति, पूर्व्वानुभूतव्यक्तिभेदस्येदानीमुत्पादस्य च मिथो व्यावर्त्तकधर्म्मत्वेन परस्परग्रहविरोधित्वादिति भावः। वि-षयभेदमाह, 'एवञ्चेति 'न व्यक्त्यभेदः' न पूर्व्वानुभूततत्तद्व्यक्तित्वाव-

च्छिन्नाभेदः, 'इति स्यात्' इत्याकाराभिलापः स्यात्, 'तज्जातीयत्वेति। न चैवं तज्जातीयोऽयं गकारः सोऽयं गकारइत्यनुभवयोर्वैलक्षण्यानुभवापलापप्रसङ्गः, प्रथमे तद्वृत्तिगत्वजात्यवच्छिन्नस्य द्वितीये तद्वृत्तिगत्वावच्छिन्नस्याभेदः सन्निकृष्टगकारे भासतइत्येव स्फुटतरवैलक्षण्यसम्भवात्। यत्तु तज्जातीयोऽयं गकार इत्यत्र गत्वजात्यवच्छिन्नस्य स एवायं गकार इत्यत्र गत्वावच्छिन्नस्य चाभेदो भासते इत्येव वैलक्षण्यमिति तत्तुच्छं, तथा सत्ययं घटो घटइत्यत्रेवायं गकारो गकारइत्यन्वयस्य उद्देश्यविधेयतावच्छेदकयोरैक्येनासम्भवापत्तेरिति ध्येयं। ननु आनुपूर्व्वीविशेषावच्छिन्नतत्तद्वर्णस्तोमपर्य्यवसितयोः पूर्व्वापरगाथाव्यक्त्योरेवाभेदसम्भवात् सैवेयं गाथा इत्यत्र शब्दनित्यतावादिनां मते तज्जातीयत्वस्यावगाहनमसिद्धमत आह, 'न हीति, मौनिश्लोकस्यानुपूर्व्वीं सम्पादयितुमाह, 'तज्ज्ञानेति, व्याख्याततत्त्वमेतत्। ननु सन्निकृष्टगकारस्य प्रत्यभिज्ञायाः पूर्व्वानुभूतव्यक्त्यभेदसिद्धावुत्पत्तिमत्त्वप्रतीतावन्यदीयोत्पत्तिर्भासते इत्येव विषयभेदः किं न स्यादित्याशङ्कते, 'न चेति, निरस्यति, 'गकारगतत्वेति, 'अभेद इति पूर्व्वानुभूतव्यक्त्यभेदस्य निश्चयदशायां तद्विरुद्धस्येदानीमुत्पद्यमानत्वादिधर्म्मस्य भ्रमासम्भवादित्यर्थः, पूर्व्वानुभूततद्व्यक्तित्वस्याधुनातनोत्पत्त्यभावावच्छेदकतया तद्व्यक्तित्वस्यैव व्यावर्त्तकधर्म्मदर्शनविधयाऽधुनातनोत्पत्तिमत्त्वभ्रमविरोधित्वादिति भावः। ननु तद्व्यक्तित्वावच्छेदेनाधुनातनोत्पत्त्यभावस्यानिश्चयदशायामेवाधुनायमुत्पन्नो गकार इति भ्रमे बाधकाभाव इत्यत आह, 'विनिगमकेति, 'उभयस्येति स एवायमिदानीमुत्पन्नोऽयमिति ज्ञानद्वयस्येत्यर्थः।

न्नाश-तारत्वादिप्रतीतीनां प्रत्यभिज्ञानबलेनौपाधिकत्वात्। न च वर्णेषु तारत्वेनैव भासमाना ध्वनय उपाधयः सम्भवन्ति, न तु ध्वनिषु वर्णास्तज्जनककण्ठताल्वाद्यभिघाताभावादिति वाच्यं। वर्णोच्चारणदशायामपि गुर्जरीकादिजनकानामभावात्। तस्मात् उत्पत्ति-विनाश-तारत्वादिप्रत्ययस्य प्रत्यभिज्ञानस्य च तुल्यत्वे द्वयोरपि नित्यत्वमनित्यत्वं वा। न चोभयोरपि

---

पृच्छति, 'कुतस्तर्हीति, 'तस्याः' प्रत्यभिज्ञायाः, 'अभेदः' पूर्व्वानुभूतव्यक्त्यभेदः, उत्तरं, 'यत्रेति, 'क्वचित्' शुक्त्यादौ, 'सा' तद्रजतमितिप्रभिज्ञा, 'तदितरेति प्रत्यभिज्ञेतरस्य बाधकप्रमाणस्य बाध्या नेत्यर्थः। 'न तु भ्रान्तेत्यस्य व्यक्त्यभेदानवगाहितयेत्यादिः, 'विशेषस्य' व्यक्त्यभेदस्य, 'दर्शने' विरोधिनि सतीति शेषः। ननु गत्वादिकमखण्डोपाधिरूपमेवास्त्वित्यतः प्रतिबन्धिमाह, 'अपि चेति[१]।

'प्रत्यभिज्ञानबलेनेति सैवेयं गुर्ज्जरीत्यादिप्रत्यभिज्ञाबलेनेत्यर्थः, 'औपाधिकत्वादिति साक्षात्परम्परया वान्यनिष्ठोत्पादादिविषयकत्वादित्यर्थः। 'उपाधयः सम्भवन्तीति वर्णनिष्ठतया प्रतीयमानस्योत्पादादेराश्रयाः सम्भवन्तीत्यर्थः, 'तज्जनकेति ध्वन्युत्पाददशायां वर्णजनककण्ठाद्यभिघाताभावादित्यर्थः। न च तदानीं वर्णानुत्पादेऽपि स्मर्य्यमानतन्निष्ठोत्पादादिरेव साक्षात् परम्परया ध्वनौ भासत इति वाच्यम्। तदानीं वर्णाभावे तत्सान्निध्यरूपदोषविरहात् आश्रयसा-

---

(१) ननु गत्वाद्यविषयकेत्यादिः प्रतिबन्धिमाह अपि चेतीत्यन्तः पाठः क्वचित् टीकापुस्तके वर्त्तते, परन्त्वयमेव पाठः समीचीनत्वेन प्रतिभाति।

नित्यत्वमेव, उक्तन्यायेन प्रत्यभिज्ञायास्तज्जातीयत्व-विषयत्वात्। किञ्च यदि व्यङ्ग्यः शब्दः स्यात् तदा वाह्यालोकाभावे घटस्येव व्यञ्जकाभावे शब्दस्यानुपलम्भात् तत्संशयः स्यात्, न त्विहेदानीं शब्दो नास्तीति

---

निश्चयरूपपरम्परासम्बन्धविरहाच्च साक्षात् परम्परया वा न भानसम्भव-इत्यभिप्रायात्। 'वर्णोच्चारणेति, तथाच वर्णोच्चारणदशायामपि न ध्वनेरुत्पादनियम इति भावः। इदन्तु समाधिसौकर्य्यादुक्तं। वस्तुतस्तु वर्णानुत्पादेऽपि वायुनिष्ठोत्पादादेस्तन्निष्ठतारत्वादिवैलक्षण्यस्य च ध्वनिनिष्ठोत्पाद-विनाश-तारत्वादिप्रतीतीनां साक्षात् परम्परया वा विषयत्वसम्भवादित्यपि बोध्यं। 'उभयोः' ध्वनि-वर्णयोः, 'उक्तन्यायेनेति ध्वनौ साक्षात्सम्बन्धेनोत्पादादिप्रत्ययस्य भ्रमत्वप्रसङ्गेनेत्यर्थः, 'प्रत्यभिज्ञायाः' सैवेयं गुर्जरीत्यादिप्रत्यभिज्ञायाः, 'तज्जातीयत्वविषयत्वादिति तज्जातीयत्वादिविषयकत्वस्यैव त्वयानुमतत्वादित्यर्थः, 'तज्जातीयत्वादिपदात् गुर्जरीत्वाद्यवच्छिन्नप्रतियोगिताकतत्तद्व्यक्तिभेदपरिग्रहः। ननु लाघवाद्ध्वनेरपि नित्यत्वाभ्युपगमे साक्षात्सम्बन्धेनोत्पादादिप्रत्ययस्य भ्रमत्वमेवोपेयत इत्यरुचेराह, 'किञ्चेति, 'वाह्यालोकाभाव इति वाह्यालोकस्य घटादिव्यञ्जकस्याभावे इत्यर्थः, 'व्यञ्जकाभाव इति विलक्षणवायुसंयोगरूपव्यञ्जकस्याभाव इत्यर्थः, 'तत्संशयः स्यादिति शब्दसंशयः स्यादित्यर्थः, 'निश्चयः' शात्यन्तिकतन्निश्चयः, प्रतियोगि-तत्सन्निकर्षादीतरसकलप्रगियोग्युपलम्भकसहकृतानुपलब्धेरभावग्राहिकाया अभावादिति भावः। इदमप्यापाततः

# निश्चयः तस्माद्वर्णो न नित्योऽनित्यो वा सत्त्वे

शब्दाभावप्रत्यक्षस्थले प्रतियोगिसन्निकर्षादिमध्ये व्यञ्जकवायुसंयोगस्यापि प्रवेशेन तादृशानुपलब्धिसत्त्वात्[१] अभावभेदेन योग्यानुपलब्धिभेदात् शाब्दैक्यस्यानुपादेयत्वात्। वस्तुतस्तु घटादिप्रतिबन्धिरेव शब्दानित्यत्वे मानं तत्राप्येकजातीयानां सर्व्वेषां घटानामेकत्वस्य नित्यत्वस्य च लाघवेनौचित्यात् अवयवसंयोगादीनां व्यञ्जकतयैवोपलम्भकादाचित्कत्वनिर्व्वाहात् उत्पादादिप्रत्ययस्यान्योत्पादादिमादायैव सम्भवात्। ननु तन्नाशत्वेन तत्समवेतनाशत्वेन च नाश्य-नाशकभावात् कपालनाशे घटनाशस्य दुर्व्वारतया घटस्य नित्यत्वासम्भवः। न च जात्यादिनाशवारणाय स्वप्रतियोगिजन्यत्वस्य नाशकतावच्छेदकसम्बन्धतया घटादेर्नित्यत्वेन प्रतियोगिजन्यत्वविरहादेव न नाश इति वाच्यम्। लाघवात् स्वप्रतियोगिसमवेतत्वस्यैव नाशकतावच्छेदकसम्बन्धत्वादनन्तघटादिकल्पनायाः फलमुखत्वात् सत्त्वेन ध्वंसत्वेन नाश्य-नाशकभावान्तरादेव जात्यादेरनाश्यत्वोपपत्तेः अनन्तप्रतियोगिजन्यत्वस्य नाशकतावच्छेदकसम्बन्धत्वकल्पनामपेक्ष्यातिरिक्तैकनाश्य-नाशकभावकल्पनाया लघुत्वादिति चेत्, न, तुल्ययुक्त्या कपाल-कपालिकादेरपि नित्यत्वस्य सुवचत्वात् तन्नाशेन घटादिनाशस्य दुर्व्वचत्वात्। किञ्चैवं सुखादिप्रतिबन्धिरपि तत्र मानं तत्रापि पूर्व्ववर्षानुभूतमेव सुखमस्मिन्नपि वर्षेऽनुभूयत इति प्रत्यभिज्ञासत्त्वादित्यास्तां विस्तरः। 'न नित्य इति न ध्वंसाप्रतियोगीत्यर्थः,

(१) तादृशानुपलब्धिसम्भवादिति ख०।

सदुत्पत्तिमत्त्वात्, अस्मदादिबहिरिन्द्रियग्राह्यत्वे सति जातिमत्त्वात्, अस्मदादिप्रत्यक्षगुणत्वाद्वा, आत्मैकत्व-प्रत्यक्षत्वपक्षे प्रत्यक्षविशेषगुणत्वात्, व्यापकसमवेत-

---

लाघवादाह, 'अनित्य इति ध्वंसप्रतियोगीत्यर्थः, 'सत्त्वे सतीति, स्वमतेनायं हेतुः, 'अस्मदादीति, नित्यगुणादौ व्यभिचारवारणाय सत्यन्तं मानसेतरलौकिकप्रत्यक्षविषयत्वार्थकं, आत्मनि व्यभिचार-वारणाय मानसेतरेति, आद्यान्यभिन्नशब्दस्य पक्षत्वात् पक्षताव-च्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वाद्वा न भागासिद्धि-दोषाय, सामान्यादौ व्यभिचारवारणाय 'जातिमत्त्वादिति, जातिपदं समवेतमात्रपरमिति भावः। लाघवादाह, 'अस्मदादीति लौकिकप्रत्यक्षविषयगुणत्वादित्यर्थः, आत्मनि जात्यादौ व्यभिचार-वारणाय 'गुणेति, नित्यगुणे च व्यभिचारवारणाय विषयान्तं। नन्वात्मैकत्व-परिमाणयोर्व्यभिचार इत्यतआह, 'आत्मैकत्वेति, तत्परिमाणमपि बोध्यं, 'विशेषगुणत्वादिति, लौकिकप्रत्यक्षविषये-त्यत्रापि सम्बध्यते, 'व्यापकसमवेतेति विभुसमवेतेत्यर्थः। यद्यप्यत्र व्यापकसमवेतेति व्यर्थं, तथापि व्यापकसमवेतविशेषगुणत्वात् प्रत्यक्ष-विशेषगुणत्वादिति हेतुद्वये तात्पर्य्यं, प्रथमे व्यापकत्वं द्रव्यत्वव्याप्य-जातिरहितत्वं, तेन भगवज्ज्ञानादौ न व्यभिचारः। न च द्वितीय-हेतोः पूर्व्वादभेदः, अत्र विशेषपदस्य संख्या-परिमाणान्यपरत्वात् आत्मसमवेतान्यपरत्वाद्वा, तत्र विशेषगुणपदस्य परिभाषिकतत्पर-त्वात् अतएव गौरवात्तत्परित्यागेनान्यस्योपादानं। यद्वा विशेषपदं

प्रत्यक्षविशेषगुणत्वात्, अनात्मप्रत्यक्षगुणत्वात्, अव्याप्यवृत्तित्वात्, ईश्वरज्ञानञ्च न तथा, तत्प्रयोजककारणाभावात्, वहिरिन्द्रियव्यवस्थाहेतुगुणत्वात्, भूतप्रत्यक्ष-

---

प्रत्यक्षान्वितं तथाच प्रत्यक्षविशेषगुण इति षष्ठीसमासात् प्रत्यक्षविशेषविषयगुणत्वादित्यर्थः फलितः, प्रत्यक्षस्य विशेषोमानसेतरलौकिकत्वरूप इति । न च तन्नये नीलादेरेकैकतया नित्यतया च घटादिरूपे व्यभिचार इति वाच्यं। तस्यापि पक्षसमत्वादिति[१] न काप्यनुपपत्तिः। एक एव हेतुः परन्तु तन्मते रूपादेरेकैकतया नित्यतया च तत्र व्यभिचारवारणाय समवेतान्तं, प्रत्यक्षपदञ्चास्मन्नये भगवज्ज्ञानादौ व्यभिचारणायेत्यपि द्रष्टव्यं इति ऋजवः। 'अनात्मप्रत्यक्षगुणत्वादिति प्रत्यक्षत्वे सत्यात्मान्यगुणत्वादित्यर्थः, आत्मैकत्वादौ व्यभिचारवारणायात्मान्येति, 'प्रत्यक्षपदानन्तरं 'विशेषेतिपाठे प्रत्यक्षविशेषोलौकिकप्रत्यक्ष इत्यर्थः, 'अव्याप्यवृत्तित्वादिति समवायसम्बन्धेनावच्छिन्नवृत्तिकत्वादित्यर्थः, संयोगात्यन्ताभावादौ नित्यरूपादेरपि कालेऽवच्छिन्नवृत्तिकत्वात् नित्यरूपादौ व्यभिचारवारणाय समवायसम्बन्धेनेति। 'न तथा' नाव्याप्यवृत्ति, 'तत्प्रयोजकेति अव्याप्यवृत्तितासाधकेत्यर्थः, 'कारणाभावात्' प्रमाणाभावात्, परेषां शब्दस्याव्याप्यवृत्तित्वे विवादात्। हेत्वन्तरमाह, 'वहिरिति वहिरिन्द्रियग्राह्यगुणत्वादित्यर्थः, 'भूतप्रत्यक्षगुणत्वादिति प्रत्यक्षत्वे सति भूतगुणत्वादित्यर्थः, आत्मैकत्व-परिमाणयोर्व्यभिचारवारणाय 'भूतेति,

---

(१) तथाच पक्षे पक्षसमे व्यभिचारो न दोषायेति भावः।

गुणत्वात्, उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तजातिमत्त्वा-

प्रत्यक्षञ्च लौकिकं बोध्यं। 'उत्कर्षापकर्षशब्दप्रवृत्तिनिमित्तेति उत्कर्षापकर्षपदशक्येत्यर्थः, 'प्रवृत्तिनिमित्तेति यथाश्रुतन्तु न सङ्गच्छते उत्कर्षापकर्षयोरेव जातिरूपतया जातिनिष्ठधर्म्मस्यैव तत्प्रवृत्तिनिमित्तत्वात्, अत्रोत्कर्षपदशक्यजातिमत्त्वमात्रोक्तावाकाशादिमहत्त्वे व्यभिचार इत्यपकर्षपदशक्येति जातिविशेषणं, तावन्मात्रोक्तौ द्व्यणुकपरिमाणापेक्षयापकृष्टे परमाणुपरिमाणे व्यभिचारइत्युत्कर्षपदशक्येति। न च परमाणुपरिमाणं द्व्यणुकवृत्त्यणुपरिमाणापेक्षयोत्कृष्टमेव न त्वपकृष्टमणुत्वांशे तस्योत्कृष्टत्वादिति वाच्यं। अधिकदेशव्यापकत्वेनैव परिमाणस्योत्कृष्टत्वं न्यूनदेशव्यापकत्वेनैव च परिमाणस्यापकृष्टत्वमिति मतेन तस्याभिधानात्। न चैकस्या जातेरुभयपदशक्यत्वाभावादसिद्धिरिति वाच्यं। एकस्या एव जातेः किञ्चिदपेक्षयोत्कर्षत्वेन किञ्चिदपेक्षयापकर्षत्वेन चोभयपदशक्यत्वात् समवायसम्बन्धेन तादृशधर्मवत्त्वलाभाय जातिपदं, अतितारातिमन्दशब्दयोश्च मानाभाव इति न तत्र भागासिद्धिः मध्यविधशब्दस्य वा पक्षत्वं। न च जलपरमाणुरसे पृथिवीपरमाणुरसापेक्षयोत्कर्षवति शर्करारसापेक्षया अपकर्षवति च व्यभिचार इति वाच्यं। रूपवदसमवेतत्वे सतीत्यनेन विशेषणीयत्वात्, इदञ्चाणुपदं ग्रन्थकृदेव वक्ष्यति, वायुमहत्त्व-वेग-सुखादिकञ्च दृष्टान्तः, वायुस्पर्शे च न किञ्चिदपेक्षयोत्कर्षापकर्षाविति तत्परमाणुस्पर्शे न व्यभिचारः।

केचित्तु 'उत्कर्षापकर्षपदेत्यस्योत्कृष्टापकृष्टपदेत्यर्थः, इत्यञ्च

**इत्यादि, रसत्वादिव्याप्यजातेर्नानात्वेऽपि तादृशप्रवृत्ति-निमित्तत्वस्य साधारण्यात्। न चात्र साधनावच्छिन्नस्य पक्षधर्म्मावच्छिन्नस्य वा साध्यस्य व्यापकः स्पर्शवत्सम-**

प्रवृत्तिनिमित्तपदं यथाश्रुतमेव जातिपदञ्च सार्थकं, तदनुपादाने महदपेक्षयापकृष्टः द्व्यणुकापेक्षया चोत्कृष्टः परमाणुरिति प्रयोग-विषये परमाणौ तादृशप्रवृत्तिनिमित्तपरमाणुपरिमाणमादाय व्यभिचारापत्तेः, जलपरमाणुरसे व्यभिचारश्चोक्तक्रमेणैव वारणीय-इत्याहुः। तदसत्, उत्कृष्टापकृष्टशब्दयोर्वाच्यत्वेन पदत्वाभावात्, उत्कृष्टापकृष्टशब्दयोः पदत्वेऽपि उत्कर्षापकर्षात्मकजात्याश्रयस्यैव तच्छक्यत्वेन परमाणुपरिमाणस्य तत्प्रवृत्तिनिमित्तत्वाभावाच्च, उक्त-प्रयोगे चोत्कृष्टापकृष्टशब्दयोर्लाक्षणिकत्वादित्यास्तां विस्तरः।

ननु जलपरमाणुरसे पृथिवीरसापेक्षयोत्कर्षापकर्षवति व्यभिचार-इत्यतआह, 'रसत्वादीति, 'नानात्वेऽपि' उत्कर्षापकर्षार्थकनानापद-शक्यत्वेऽपि, 'तादृशप्रवृत्तिनिमित्तत्वस्येति उत्कर्षापकर्षपदशक्यतादृश-जातिमतो जलपरमाणुरसस्येत्यर्थः, 'साधारण्यादिति रूप-रससाधा-रण्यादित्यर्थः, तथाच रूपवदसमवेतत्वे सतीत्यनेन विशेषणीयमिति भावः। 'साधनावच्छिन्नेति, इदञ्च वहिरिन्द्रियग्राह्यगुणत्वादेर्हेतुत्व-पक्षे बोध्यं। उत्कर्षापकर्षगर्भहेतुत्वपक्षे[१] सुखादौ साध्याव्यापकत्वात्, अत एव सर्व्वत्र हेतौ साधनावच्छिन्नसाध्यव्यापकत्वासम्भवादाह, 'पक्षधर्म्मेति वहिरिन्द्रियग्राह्यगुणत्वादिरूपपक्षधर्म्मेत्यर्थः, 'स्पर्शवत्सम-

(१) उत्कर्षापकर्षगर्भहेतोरवच्छेदकत्व इति ख०, ग०।

वेतत्वं उपाधिः, सर्व्वंच वर्णात्मकशब्दपक्षीकरणे व्योमगुणेष्वनित्येषु ध्वनिषु साध्याव्यापकत्वात्स्पर्शवत्-पदस्य पक्षमात्रव्यावर्त्तकत्वेन पक्षेतरत्वाच्चेति। यदा च वर्णा एव न नित्यास्तदा कैव कथा पुरुषविव-क्षाधीनानुपूर्व्व्यादिविशिष्टवर्णसमुहरूपाणां पदानां, कुतस्तराञ्च तत्समूहरूपस्य वाक्यस्य कुतस्तमाञ्च तत्समूहस्य वेदस्येति।

इति श्रीमद्‌गङ्गेशोपाध्यायविरचिते तत्त्वचिन्तामणौ शब्दाख्यतुरीयखण्डे शब्दानित्यतावादसिद्धान्तः॥

---

वेतत्वमिति, साधनव्यापकतापरिहाराय 'स्पर्शवदिति, 'सर्व्वंचेति सर्व्वत्र साध्ये इत्यर्थः, 'वर्णात्मकेति, तथाच ध्वनेः पक्षवहिर्भूतत्वात्तत्र साध्याव्यापकत्वमिति भावः। ध्वनेरपि नित्यत्वमते वायवीयत्वमते च तत्र साध्याव्यापकत्वासम्भवादाह, 'स्पर्शवदिति, 'पक्षमात्रव्यावर्त्त-कत्वेनेति उक्तसाधनवतो मध्ये पक्षमात्रस्यैव व्यावर्त्तकत्वेनेत्यर्थः, यथाश्रुते अणुपरिमाणादेरपि व्यावर्त्तनादसङ्गतेः, 'पक्षेतरत्वादिति पक्षेतरत्वतुल्यत्वादित्यर्थः। ननु मास्तु वर्णो नित्यस्तथापि पद-वाक्यभेदास्तु नित्या एवेत्यत आह, 'यदा चेति, 'तत्समूहरूपस्य' पदसमूहरूपस्य, 'तत्समूहस्य' वाक्यसमूहस्य॥

इति श्रीमथुरानाथ-तर्कवागीशविरचिते तत्त्वचिन्तामणिरहस्ये शब्दाख्यतुरीयखण्डरहस्ये शब्दानित्यतावादसिद्धान्तरहस्यं॥

---

## अथोच्छन्नप्रच्छन्नवादः ।

तथापि परतन्त्रपुरुषपरम्पराधीनतया प्रवाहावि-

---

### अथोच्छन्नप्रच्छन्नवादरहस्यं ।

ननु तथाप्यप्रयोजकं स्वतन्त्रपुरुषप्रणीतत्वरूपपौरुषेयत्वानुमाने वेदस्य ध्वंसाप्रतियोगित्वरूपनित्यत्वाभावेऽपि प्रवाहाविच्छेदरूपनित्यत्वादेव प्रामाण्योपपत्त्या प्रामाण्यान्यथानुपपत्तिरूपानुकूलतर्कविरहादित्यभिप्रायेण गुरुः शङ्कते, 'तथापीति वेदस्य ध्वंसाप्रतियोगित्वरूपनित्यत्वाभावेऽपीत्यर्थः, 'परतन्त्रेति स्वाश्रयोच्चारणानपेक्षोच्चारणकवृत्त्यानुपूर्व्वीभिन्नानुपूर्व्वीकतयेत्यर्थः, स्वपदं भेदप्रतियोग्यानुपूर्व्वीपरं । वस्तुतस्तु स्वाश्रयेतिस्थाने स्वसजातीयाश्रयेति वक्तव्यं तेन परनये वर्णानामनित्यत्वाभ्युपगमे वर्णानामिव तत्तत्समवेतानुपूर्व्या अपि नाशात् वाक्यभेदेनानुपूर्व्वीभेदस्यावश्यकत्वेऽपि न क्षतिः, इत्यञ्च स्वनये प्रवाहाविच्छेदहेतुत्वं तेन न्यायनये तादृशानुपूर्व्वीभिन्नानुपूर्व्यप्रसिद्धावपि न क्षतिः ।

केचित्तु 'परतन्त्रेत्यादेः स्वसजातीयोच्चारणानपेक्षोच्चारणकान्यतयेत्यर्थः, स्वपदं भेदप्रतियोगिवाक्यपरं, इदञ्च न्यायनये घटादावेव

च्छेदमेव नित्यत्वं ब्रूमः इति चेत्, न, स्मृत्याचारानुमितानां शाखानामुच्छेददर्शनात्। स्यादेतत्, विवादपद-

---

प्रसिद्धमित्याहुः। तदसत्, पृथुकस्यापूर्वानुपूर्व्वीकवाक्यं श्लोचरिते तादृशानुपूर्व्वीकवाक्ये प्रवाहाविच्छेदव्यभिचारित्वादिति ध्येयं।

'प्रवाहाविच्छेदमेवेति, स्वसजातीयानधिकरणकालकान्यत्वं 'प्रवाहाविच्छेदः', स्वसजातीयत्वञ्च स्ववृत्तितत्तदानुपूर्व्याश्रयत्वं स्ववृत्त्यानुपूर्व्वीसजातीयानुपूर्व्व्याश्रयत्वं वा, तेन परनये वर्णानामनित्यत्वाभ्युपगमे वाक्यभेदानुपूर्व्वीभेदस्यावश्यकत्वेऽपि न क्षतिः, साजात्ये च तत्तदानुपूर्व्वीवृत्तिवैलक्षण्येन भेदकूटप्रवेशाच्च न प्रवाहाविच्छेदाननुगम इति भावः। 'शाखानामिति अष्टकामङ्गलादिकर्त्तव्यताबोधकानामित्यर्थः, 'उच्छेददर्शनात्' सजातीयानधिकरणे तत्तत्कालेऽदर्शनात्, तथाच प्रवाहाविच्छेदोऽसिद्ध इति भावः। प्रत्यक्षसिद्धवेदजातीया अनित्या एव स्मृत्याचारानुमितवेदास्तु यावत्कालमनधीता अश्रुतानुमितस्वभावा नित्या एव नावच्छिन्ना इति मत्यन्तरमाशङ्कते, 'स्यादेतदिति, अत्र वेदत्वं अध्ययनविषयत्वव्याप्यं न वा, प्रत्यक्षविषयत्वव्याप्यं न वा, अनित्यत्वव्याप्यं न वेत्यादिविप्रतिपत्तिर्विधिकोटिर्नैयायिकानां निषेधकोटिर्मङ्गल-होलाकाद्याचारानुमितवेदानां अष्टकादिबोधकस्मृत्यनुमितवेदानाञ्च अतीन्द्रियत्व-नित्यत्वस्वीकर्त्तॄणां गुरूणां, 'विवादपदमित्यादि प्रत्यक्षवेदमूलकस्मृतावंशतः सिद्धसाधनवारणाय, 'विवादपदमिति उच्छन्नमूलताविवादपदविषय इत्यर्थः, इदानीन्तनप्रत्यक्षविषयवेदसमानविषयकेतरेति या-

मपूर्व्वबोधिका स्मृतिः स्मृत्यर्थानुभवजनकवेदमूला अविगीत-महाजनपरिगृहीतस्मृतित्वात् प्रत्यक्षवेद-

---

वत्, नातः प्रत्यक्षवेदमूलकेऽपि कदाचिद्विवादसम्भवात् स दोषस्तदव-स्थः, लोभादिमूलकस्मृतिवारणाय 'अपूर्वबोधिकेति, 'अपूर्वबोधकत्वं' वेदलक्षणीयसत्यन्तदलं विवक्षितं, वेदसमानार्थकत्वं वा, अतो न न्यायनयेऽसिद्धिः तन्मते स्मृतेरपूर्वबोधकत्वाभावात्। अस्मन्मते आद्य-वेदे तन्मते नित्यानुमेयवेदे अंशतो बाधवारणाय 'स्मृतीति, स्मृतिर्वेदेतरवाक्यं। न च पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्य-त्वेन अंशतः सिद्धसाधनस्यादोषत्वाद्विवादपदत्वविशेषणवैयर्थ्यं तदव-च्छेदेन साध्यसिद्धेरुद्देश्यत्वाभावे अंशतो बाधस्यादोषत्वादपूर्वबोधक-त्वविशेषणवैयर्थ्यमिति वाच्यं। पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरु-द्देश्यत्वेऽपि अंशतः सिद्धसाधनं दोषायेति प्राचीननये 'विवादपदत्व-विशेषणोपादानात्। वस्तुतस्तु 'विवादपदेत्यादि स्वरूपकथनमात्रं। पक्षता तु अष्टकाः कार्य्या इत्यादि विशिष्यैव। 'स्मृत्यर्थेति, भिन्नविषय-वेदेन नार्थान्तरं युक्तं इति स्मृत्यर्थानुभवजनकेति वेदविशेषणं। न च नैयायिकैरप्यष्टकादिबोधकस्मृतिमूलभूतवेदाभ्युपगमात् सिद्धसाधन-मिति वाच्यं। न हि वेदस्यानुभवविरोधः। न च कथमस्मादुच्छेद-सिद्धिः स्मृत्युपपत्त्यनन्तरं वेदाद्युच्छेदेऽपि तत्साधनसम्भवात् इति वाच्यं। अस्मन्नये ग्रहस्य समवायेन सत्त्वादिति ध्येयं। 'अविगीतेति, स्मृतित्वमात्रं लोभादिमूलकघटमानयेत्यादिवाक्यस्य व्यभिचारि तस्यापि वेदभिन्नवाक्यत्वरूपस्मृतित्वादतः 'अविगीतेति, 'अविगी-

तत्वं' अलौकिकत्वं, प्रत्यक्षादिमूलकेतरत्वमिति यावत्, शब्दोपजीविप्रमाणमूलकभ्रान्तवाक्ये व्यभिचारवारणाय 'महाजनपरिगृहीतेति, 'महाजनत्वं' प्रमात्मकप्रवर्त्तकज्ञानवत्त्वं, 'परिगृहीतत्वं' तज्ज्ञायमानार्थकत्वं। न चैवं मङ्गलपक्षकानुमानवत् समाधेयं। प्रत्यक्षखण्डदिशास्मन्मते आयुर्वेदस्य तन्मते तु नित्यानुमेयवेदस्य सिद्धत्वेन च तत्र व्यभिचारवारणाय 'स्मृतित्वादिति वेदभिन्नवाक्यत्वादित्यर्थः। ननु वेदमूलकत्वं वेदजन्यत्वं तथाच बाधः स्मृतिं प्रति वेदार्थज्ञानस्यैव हेतुत्वात् प्रत्यक्षवेदमूलकस्मृतावपि तदभावेन दृष्टान्तासिद्धिश्चेत्यत आह, 'वेदेति,[१] 'जन्यत्वं' प्रयोज्यत्वं, अन्यथा स्मृतितः अर्थं

---

(१) 'तथापीति, न चैवं स्वतः प्रमाणपुरुषाविश्रामादन्धपरम्परापत्तिः, तेषामुपदेशेन वेदार्थदर्शितया स्वतः प्रामाण्यात् तथाच तदधीनमेव प्रामाण्यमस्तु किमीश्वरेणेति भावः। केचित्तु प्रवाहाविच्छिन्नत्वरूपं यन्नित्यत्वं तेन यन्निर्दोषत्वं तत एव प्रामाण्यमस्त्वित्यर्थः इत्याहुः। 'उच्छेदेति, तथाच प्रवाहाविच्छेदोऽसिद्ध इति भावः। स्मृत्याचारानुमितशाखानां स्वत एव प्रच्छिन्नवेदात् तदर्थज्ञापकत्वेनानुमितात् स्मृत्याद्युपपत्तिरित्याह, 'स्यादेतदिति, तत्र वेदत्वं अध्ययनविषयत्वव्याप्यं न वेति विप्रतिपत्तिः। प्रत्यक्षवेदमूलकस्मृतावंशतः सिद्धसाधनमित्यत आह, 'विवादेति, उच्छिन्नमूलत्वविवादेत्यर्थः, प्रत्यक्षवेदमूलान्येत्यत्र तात्पर्य्यम्। न्यायादिमूलकस्मृतावंशतो बाधादाह, 'अपूर्व्वबोधिकेति, अपूर्व्वप्रमापिकेत्यर्थः, वेदसमानार्थेत्यत्र तात्पर्य्यं, अपूर्व्वस्यैव वेदार्थत्वात् वेदस्यापि पक्षत्वेऽंशतो बाधादाह, 'स्मृतिरिति, ताद्रूप्यसिद्ध्यर्थं 'जनकेत्यन्तं, अन्यथा तस्यानुभावकत्वानुपपत्तेः। यत्तु उच्छिन्नवेदमूलत्वेनार्थान्तरादाह, 'जनकेत्यन्तं, उच्छिन्नस्यासत्त्वान्न जनकत्वं इति, तन्न, वेदमूलत्वपदेनैव तन्निराकरणात्, उच्छिन्नवेदस्यापि पूर्व्वं स्मृत्यर्थानुभव-

मूलकस्मृतिवत्, वेदमूलकत्वञ्च वेदजन्यानुभवजन्यत्वं ज्ञानद्वारा ज्ञायमानस्यैव वेदस्य स्मृतिहेतुतयानुमानं,

---

प्रतीत्य स्मृतौ व्यभिचारापत्तेः, तथाच वेदमूलत्वं वेदप्रयोज्यत्वं इति भावः । अस्तु वा जनकत्वमेव मूलत्वमित्यत आह, 'ज्ञानेति स्वस्वानुभवेत्यर्थः, कालो वा वाच्यः । ननु ज्ञानव्यवहितस्य कारणत्वं

---

जनकत्वाच्च । 'अविगीतेति, लोभमूलकस्मृतेर्विगीतत्वान्न्यायमूलकस्मृतेर्महाजनापरिगृहीतत्वाद्वेदस्यास्मृतित्वात् त्रितयमुपात्तं । महाजनस्त्वादृष्टार्थिपुरुष इत्यवधेयमित्याहुः । तच्चिन्त्यं, एवं हि महाजनपदेनैव लोभमूलकस्मृतिवारणे 'अविगीतपदवैयर्थ्यापत्तेः, न हि लोभमूलकस्मृतिरपि अदृष्टार्थिपुरुषपरिगृहीता, किन्तु लोभार्थिपरिगृहीतैव, भ्रमादिना तथा परिग्रहे न्यायमूलकस्मृतावपि तथा सम्भवे व्यभिचारतादवस्थ्यापत्तेः । अन्ये तु स्मृतित्वं शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमितिविषयार्थकभिन्नत्वे सति शब्दजन्यवाक्यार्थज्ञानजन्यवाक्यत्वं, तेन लौकिकवाक्ये न्यायादिमूलकस्मृतौ वेदे च न व्यभिचारः, एवञ्च चैत्यं वन्देतेत्यादिबौद्धागममूलस्मृतौ व्यभिचारादाह, 'महाजनेति, श्येनेनाभिचरन् यजेतेत्यादिवेदमूलकस्मृतौ व्यभिचारः साध्ये वेदपदस्य विधिपरत्वेन तत्र साध्यासत्त्वादित्यत आह, 'अविगीतेति, विधित्वञ्च निषिद्धफलकादृष्टाप्रतिपादकवेदत्वमतो न कलञ्जं भक्षयेदित्यादिवेदमूलकस्मृतौ न व्यभिचार इति वदन्ति । केचित्तु अलौकिकाविगीतस्मृतित्वादिति हेत्वर्थः, न्यायप्रत्यक्षमूले तु लौकिकी, यूपहस्तिस्मृतिर्विगीतेति, स्मृतित्वञ्च ऋषिप्रणीतशब्दत्वं, तेन वेदस्यास्मृतित्व, पाणिनि-मन्वादिकन्तु स्मृतिरेवेत्याहुः । ननु वेदमूलत्वं वेदपरम्पराकारणतयापि निर्व्वहतीति उच्छिन्नवेदमूलत्वेनार्थान्तरमत आह, 'वेदेति व्याख्यान्तरं ।

कुविन्दस्येव ज्ञानादिव्यवहितस्य पटे, न तु कारणकारणता, वेदे सत्येव तत्प्रतिसन्धाने स्मृतिप्रणयनात्, वेदार्थस्मृतिता च प्रसिद्धिसिद्धा, स्मृत्यर्थश्च स्मृतित एव उपस्थितः। न च स्मृत्यर्थबोधकवेदानुमाने स्मृत्यर्थ-

---

न क्वापि दृष्टमित्यत आह, 'कुविन्दस्येवेति, 'आदिना चिकीर्षापरिग्रहः। पूर्वमतं व्यवच्छिनत्ति, 'न तु कारण-कारणतेति, वेदमूलत्वमिति शेषः। नन्वेवं स्मृतितोऽर्थं प्रतीत्य विरचितेदानीन्तनस्मृतौ व्यभिचार इत्यत आह, 'वेदे सत्येवेति, 'एवकारः 'तत्प्रतिसन्धाने' इत्यनन्तरं योज्यः, वेदसत्त्वे तत्प्रतिसन्धान एव स्मृतिप्रणयनादित्यर्थः, तथाच तादृशस्मृतेरेवासिद्धत्वेन न व्यभिचार इति भावः। इदमापाततः वेदजन्यवाक्यार्थानुभवं विनापि स्मृतितोऽर्थं प्रतीत्य स्मृतिप्रणयनस्यानुभविकत्वात्। अप्रयोजकत्वनिरासायाह, 'वेदार्थेति वेदसमानार्थस्मृतिता महाजनप्रसिद्धिसिद्धेत्यर्थः, तथाच यदीयं वेदजन्यानुभवजन्या न स्यात् तदा महाजनानां वेदसमानार्थकप्रसिद्धिसिद्धा न स्यात् इत्येवानुकूलतर्क इति भावः।

केचित्तु दृष्टान्ते साध्यवैकल्यपरिहारायाह, 'वेदार्थेति वेदमूलस्मृतिता चेत्यर्थः, दृष्टान्ते इति शेष इत्याहुः।

ननु स्मृत्यर्थस्य प्रागज्ञानात् तदर्थानुभावकत्वेन वेदस्यानुमानासम्भवात् कथं तेन रूपेणानुमितवेदात् सर्वत्र वाक्यार्थधीरित्यत आह, 'स्मृत्यर्थस्येति। 'स्मृत्यर्थबोधकेति स्मृत्यर्थबोधकत्वेन वेदानु-

रूपवेदार्थस्य विषयत्वात् वेदोऽनुवादकः ज्ञानान्तरोपनीतस्य विशेषणत्वेन विशिष्टबुद्धिसम्भवात्, पाककृतौ मानसप्रत्यक्षायां पाकस्य संज्ञासंज्ञिज्ञाने संज्ञाया-

---

मान इत्यर्थः, 'अनुवादकइति, सर्वत्रानेन प्रकारेणानुमितवेदार्थप्रत्यय इत्यग्रे वक्ष्यमाणत्वादिति भावः। 'ज्ञानान्तरेति विशिष्यागृहीतासंसर्गकस्य स्वाव्यवहितपूर्ववर्त्तिज्ञानान्तरोपनीतस्यैव विशेषणत्वेनेत्यर्थः, अनुमितेः स्मृत्यर्थाविषयकत्वेऽपीति शेषः, 'विशिष्टबुद्धिसम्भवात्' तद्विशिष्टबुद्धिसम्भवात्, तद्वद्विशेष्यकबुद्धेरेव तद्विशिष्टबुद्धित्वात्, अत एव विशेषणज्ञानानन्तरं तदगृहीतासंसर्गकविशेष्यज्ञानं विशेषणाविषयकमपि विशिष्टबुद्धिः तथाचानुमितेः स्मृत्यर्थविषयकत्वाभावान्नानुवादकत्वमिति भावः। न च तथापि तदेव ज्ञानान्तरमादायानुवादकत्वमिति वाच्यं। न हि यदा कदाचित् प्रतीतप्रत्यायकतामात्रेणानुवादकत्वं, तथा सति सर्वस्यैवानुवादकतापत्तेः, अपि तु समानकालीनानुभवान्तरविषयविषयकप्रतीतिजनकत्वं तत्, ज्ञानान्तरं वेदजन्यानुभवसमयवृत्ति तत्समय एव तन्नाशात्, 'विशिष्टबुद्धिविषयत्वासम्भवादिति क्वाचित्कः पाठस्तु प्रामादिकः। तदविषयत्वेऽपि तद्विशिष्टबुद्धित्वमित्यत्र तन्मतेनैव दृष्टान्तमाह, 'पाककृताविति, षष्ठ्यर्थे सप्तमी, 'मानसप्रत्यक्षायां' मानससाक्षात्कारे, 'पाकस्येति, अग्रिम इवशब्दोऽत्र सञ्ज्ञाया इत्यत्र च सम्बध्यते, पाककृतेर्मानसप्रत्यक्षे यथा पाकस्य विशिष्टबुद्धित्वमित्यर्थः, तत्रापि हि पाको न विषयः बहिर्विषयकलौकिकप्रत्यक्षजनने मनसो

ज्ञानायथार्थत्वे तदनुव्यवसाये भ्रमविषयस्यैव, अन्यथा भ्रान्त-भ्रान्तिज्ञसङ्करापत्तिः न तु शब्दार्थोऽनुमानस्य विषयः तस्यासिद्धत्वेनाजनकतया स्मृत्यव्यापकत्वात्।

---

असामर्थ्यात् अलौकिकप्रत्यासत्तेर्गुरुभिरनङ्गीकारादिति भावः। न च पाककृतेर्मानसप्रत्यक्षं कथं पाकविशिष्टबुद्धिः तद्विशेषणकबुद्धेरेव तद्विशिष्टबुद्धित्वात् पाककृतेर्मानसप्रत्यक्षे पाको न विशेषणं स्वाव्यवहितपूर्ववर्त्तिज्ञानविषयस्यैव तन्मते विशेषणत्वात् पाकज्ञानस्य च पाककृतिकाले एव नाशादिति वाच्यं। कृत्यनन्तरं स्मृतिरूपपाकज्ञानसत्त्वात् कथमन्यथा नैयायिकनयेऽपि तत्र पाकभानं ज्ञानलक्षणप्रत्यासत्तेरभावात्। 'सञ्ज्ञेति नामविशिष्टनामिप्रत्यक्षे यथा नामविशिष्टबुद्धित्वमित्यर्थः, तत्रापि हि सञ्ज्ञा न नामिप्रत्यक्षविषयः सञ्ज्ञायाः शब्दरूपत्वेन चक्षुरादेरयोग्यत्वात् अलौकिकप्रत्यासत्तेर्गुरुभिरनङ्गीकारादिति भावः। 'ज्ञानायथार्थत्व इति ज्ञानायथार्थत्वमते, 'तदनुव्यवसाये' भ्रमानुव्यवसाये, 'भ्रमविषयस्यैवेति भ्रमविषयस्य रजतत्वादेर्यथा विशिष्टबुद्धित्वमित्यर्थः, ज्ञानायथार्थत्वे इत्यत्राह, 'अन्यथेति, 'अन्यथा' भ्रमानुव्यवसायेऽपि भ्रमविषयस्य रजतत्वादेरिदमंशे विशेषणतया भाने, 'सङ्करः' अभेदः भ्रमत्वेनेत्यर्थः, स्मृत्यर्थस्यानुमितिविषयत्वे बाधकमाह, 'न त्विति, 'तस्य' वेदार्थस्य, 'असिद्धत्वेनेति स्मृत्युत्पत्तिपूर्वमसत्त्वेन मानाभावेन चेत्यर्थः, 'अजनकतया' स्मृत्यजनकतया, 'स्मृत्यव्यापकत्वात्' स्मृत्यननुमेयत्वात्, कार्य्येण कारणानुमाने विधेयकोटौ कारणस्यैव विषयत्वमिति तत्सिद्धान्तात्,

स च वेदो नित्यमनुमेय एवानुमितादेवार्थमवधार्य्य स्मृतिप्रणयनसम्भवात् । नन्वासंसारमपठितस्य न वे-

---

अतएव गुरुनये कार्य्येण कारणानुमाने व्यापकतावच्छेदकमपि न भासते किन्तु व्यापकमात्रं तेन विनापि उक्तक्रमेण विशिष्टबुद्धेः सम्भवादिति भावः ।

नव्यास्तु कार्य्येण कारणानुमाने विधेयकोटौ विधेयांशे साचाद्-विशेषणत्वेनाकारणीभूतस्य न भानमित्येव तत्सिद्धान्तः, अतएव व्यापकतावच्छेदकस्य वह्नित्वादेरकारणत्वेऽपि न भानानुपपत्तिरिति प्राहुः ।

नन्वेतावताष्टकाबोधकस्मृतिमूलभूतवेदसिद्धावपि तस्य कथमु-च्छेदाभावसिद्धिः कथं वा तस्यानुच्छन्नत्वे इदानीं न प्रत्यचमित्यत-आह, 'स च वेद इति, लाघवादिति शेषः, 'नित्यमनुमेय एवेति नित्यमेवानुमेय एवेति योजना, 'नित्यमेवेत्यस्य सर्वकालमेवेत्यर्थः, क्रोशं कुटिला नदीत्यादिवच्च व्याप्यकर्म्मणि द्वितीया, 'अनुमेय-एवेत्येवकारेण ऐन्द्रियकत्वव्यवच्छेदः, तथाच लाघवतर्कसहकारा-दुक्तानुमानादेव तदुच्छेदाभावसिद्धिरतीन्द्रियत्वोपगमेन न प्रत्यच-मिति भावः। ननु तस्यातीन्द्रियत्वे कथं ततोऽर्थं प्रतीत्य स्मृतिप्र-णयनमित्यत आह, 'अनुमितादिति, स्मृतिधाराया अनादित्वेन मन्वादिस्मृतेः पूर्वमपि स्मृत्यन्तरस्य सत्त्वेन पचसम्भवादिति भावः । न च स वेदो न पञ्चाशद्वर्णान्तर्गतः प्रत्येकं तेषामनित्यत्वसाधनेन नित्यत्वबाधात्तदतिरिक्तस्याभावादिति वाच्यं। तावद्वर्णान्तर्गत एव

इत्थं उत्पत्तितोऽभिव्यक्तितो लौकिकश्लोकवदभिप्रायतो वानुपूर्व्वीहीनवर्णमात्रस्य निरर्थकत्वात्। ज्ञानजनक-समभिव्याहारस्यानेकत्वे विशेषाननुमानाच्चेति चेत्। न। स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य वेदस्य स्मृत्यर्थानुभा-

---

नित्योऽतीन्द्रियः कदापि केनाप्यनुच्चार्य्यमाणो यः कश्चिद्वर्ण एव स-इत्यभ्युपगमात् श्रूयमाणवर्णैरेव वा नित्यत्वस्य शक्यसाधनत्वात्। वस्तुतस्तु तावद्वर्णातिरिक्त एव सः। न च तदतिरिक्तवर्णस्याभाव-इति वाच्यं। एतदनुमानादेव तस्य सिद्धिरिति तन्मतनिष्कर्षः। 'उत्पत्तित इति उत्पत्तिघटितानुपूर्व्वीहीनस्येत्यर्थः, सा च एक-वर्णोत्पत्त्यनन्तरमपरवर्णोत्पत्तिः, इदञ्च न्यायनये, 'अभिव्यक्तित इति अभिव्यक्तिघटितेत्यर्थः, सा च एकवर्णज्ञानानन्तरमपरवर्णज्ञानं, इदञ्च गुरुनये, 'अभिप्रायत इति अभिप्रायघटितेत्यर्थः, सा च एकपदोप-स्थितेरनन्तरमपरपदोपस्थितौ तात्पर्य्यं, इदञ्च उभयमते, 'निरर्थक-त्वात्' अन्वयबोधाजनकत्वात्। ननु आनुपूर्व्वीविशेषविशिष्ट एवा-नुमेय इत्यत आह, 'ज्ञानजनकेति, 'अनेकत्व इति अष्टकाः कार्य्याः कार्य्या अष्टका इत्याद्यनेकविधत्वसम्भवेन विशेषरूपेणानुमानासम्भ-वादित्यर्थः, विशेषरूपेण व्याप्तिज्ञानाभावादिति भावः। 'स्मृत्यर्थेति, अत्र स्मृत्यर्थत्वरूपेण स्मृत्यर्थज्ञापकत्वज्ञानं न कारणं किन्तु विशिष्य तत्तदर्थज्ञापकत्वज्ञानं तत्तदर्थशाब्दबुद्धेः हेतुः, अन्वयबोधप्रकारस्तु प्रत्येकतत्तदर्थज्ञापकत्वप्रकारकतज्ज्ञानात् प्रत्येकतत्तदर्थोपस्थितिः तद-नन्तरं कृति-वर्त्तमानत्वयोरेव एकपदोपस्थाप्यानामपि परस्परमन्वय-

वकत्वात् । न हि शाब्दबोधे नियतपदानुपूर्व्वी हेतुः, व्यभिचारात् । पदस्य वर्णविशेषानुपूर्व्वीनियमेऽपि तत्तद्वर्णानुपूर्व्वीकपदविशेषत्वेन न हेतुत्वं हस्त-करादिपदानां प्रत्येकं व्यभिचारात्। किन्त्वव्यभिचारितदर्थज्ञापकत्वेन ज्ञातस्य लाघवादावश्यकत्वाच्च, तदर्थज्ञापकत्वज्ञानार्थमेव क्वचिद्वर्णक्रमस्वरविशेषाणामुपयोगः । अतएव वर्णलोपादौ कुशमानयेति सकारसन्देहे

---

बोधः । यद्वा अग्रे तत्तदर्थोपस्थितिं विनैव तत्तदर्थान्वयानुभवः विशेषणज्ञानस्य तन्मतेऽहेतुत्वादिति ध्येयं। ननु तथापि आनुपूर्व्व्यपि हेतुः तद्व्यतिरेके कथं शाब्दधीरित्यत आह, 'पदस्येति, 'तत्तद्वर्णेति घोत्तरटत्वादिनेत्यर्थः, 'हस्तेति पर्य्यायान्तरेण शाब्दबोधे तस्या अपि व्यभिचारादित्यर्थः, 'किन्त्वव्यभिचारीति, 'अव्यभिचारि' अनुगतं, सर्वसाधारणमिति यावत्, 'लाघवादिति व्यभिचारखण्डनाय विशेषरूपेणानुपूर्व्यादिना अनेककार्य्य-कारणभावकल्पने गौरवादित्यर्थः, 'आवश्यकत्वादिति, स्यादि-त्यादिवर्णलोपस्थले लुप्तवर्णविशेषानिश्चयात्तदर्थज्ञापकत्वज्ञानस्यैव हेतुत्वेनानुसरणीयत्वादिति भावः । ननु यद्यानुपूर्व्वी न प्रयोजिका तदा यथा नदीशब्दश्रवणे नद्या अन्वयबोधः तथा दीनेतिश्रवणेऽपि तदन्वयबोधापत्तिरित्यत आह, 'तदर्थेति, प्रकृते च तद्विनापि तदर्थज्ञापकत्वग्रह इति न तदपेक्षेति भावः । 'स्वरविशेषाणामिति अवर्णादीत्यादिः, 'अतएवेति यत एव तदर्थज्ञापकत्वज्ञानमात्रं प्रयोजकमतएवेत्यर्थः, 'वर्णलोपादाविति

लिपावुच्चारणे वा ह्रस्व-करसन्देहेऽपि वाक्यार्थबोधः।
ननु क्रमिकपदवत्त्वं वाक्यत्वं। न चात्र पदक्रमः, अनु-
च्चार्य्यमाणतयोच्चारणाधीनस्य युगपदनुमीयमानतया
बुद्ध्यधीनस्य वा तस्याभावादिति चेत्, न हि क्रमिक-
पदवत्त्वं वाक्यत्वं, गौरश्व इत्यादावभावात् किन्तु विशि-
ष्टार्थपरशब्दत्वं तच्चात्राप्यस्त्येव। अथानुच्चार्य्यमाणस्य
न वाक्यत्वं न वा अर्थानुभावकत्वमिति चेत्, न,

---

स्यादि-त्यादावित्यर्थः, लुप्तवर्णविशेषानिश्चये इति शेषः, 'आदिपदा-
द्वर्णविकारसङ्ग्रहः, 'वाक्यार्थबोध इति, तदर्थज्ञापकत्वस्य निश्चया-
दिति भावः। न च संशयसाधारणमानुपूर्व्वीज्ञानमात्रं हेतुरस्त्विति
वाच्यं। सम्बन्धितावच्छेदकविधया हि पदार्थमुपस्थापयन्ती अन्वयबो-
धायोपयुज्यते। न च सम्बन्धितावच्छेदकसंशये सम्बन्धिनिश्चय इति।
'क्रमिकपदवत्त्वमिति क्रमवत्पदघटितत्वमित्यर्थः, 'उच्चारणाधीनस्येति
एकपदोच्चारणविषयत्वरूपस्योच्चारणघटितस्येत्यर्थः, 'बुद्ध्यधीनस्येति
एकपदज्ञानोत्तरज्ञानविषयत्वरूपस्य बुद्धिगतस्येत्यर्थः, 'तस्य' पद-
क्रमस्य, 'अभावात्' वाक्यत्वाभावात्, तथाचाव्याप्तिरिति भावः।
'विशिष्टार्थपरशब्दत्वमिति विशिष्टप्रतिपत्त्यनुकूलशक्तिमत्त्वमित्यर्थः,
यथाश्रुते विशिष्टप्रतिपत्तीच्छयोच्चरितत्वरूपस्यापि तस्य नित्यानुमे-
येऽसम्भवादिति ध्येयं। पूर्व्वापरभावेनोच्चार्य्यमाणपदवत्त्वस्य व्याप्यं वाक्य-
त्वमित्यभिप्रायेण शङ्कते, 'अथेति, 'अनुच्चार्य्यमाणस्य' पूर्व्वापरभावे-

लिप्यनुमितानामपि वाक्यत्वात् अर्थबोधकत्वाच्च, लिपितुल्या च स्मृतिः। किञ्च वाक्यमुच्चार्य्यते न तूच्चारणाद्वाक्यत्वं, अन्यथा वाक्यमुच्चारयेत्यत्रानन्वयापत्तिः, अनुच्चारितमौनिश्लोकश्च वाक्यं न स्यादुच्चारणदशायाञ्च वाक्यत्वे वाक्यस्यासत्त्वमेव स्यात् एकदा तावत्प-

---

नानुच्चार्य्यमाणपदसमूहस्य, 'लिप्यनुमितानामपीति, कदाचिदपि केनाप्यनुच्चारितानां वाक्यानामिति शेषः। 'उच्चार्य्यमाणेत्यत्र वर्त्तमानत्वस्य शानप्रत्ययार्थत्वात्। पूर्वापरभावेन स्वजनकवर्त्तमानोच्चारणविषयपदसमूहत्वं वाक्यत्वव्यापकमभिमतं उच्चारणं ज्ञतिरित्यभिप्रायेण दूषणान्तरमाह, 'किञ्चेति, 'वाक्यमुच्चार्य्यते' वाक्यत्वविशिष्टमुच्चारणकर्म्म, 'न तु' न च, 'उच्चारणादिति, पूर्व्वमिति शेषः, पूर्व्वापरभावेन स्वजनकवर्त्तमानोच्चारणविषयपदसमूहत्वस्य वाक्यत्वव्यापकतया व्यापकाभावेन व्याप्याभावात् तथाच विशिष्टस्य उच्चारणकर्म्मत्वानुपपत्तिः तेन रूपेण प्रागसत्त्वात् क्रियानिमित्तत्वरूपकारकत्वासम्भवात्, अस्मन्मते संसारस्यानन्ततया वाक्यत्वविशिष्टं यथाकथञ्चिद्वाक्यं पूर्व्वमस्त्येवेति भावः। ननु विशिष्टस्य नोच्चारणकर्म्मत्वमित्यत आह, 'अन्यथेति वाक्यत्वविशिष्टस्योच्चारणाकर्म्मत्वे इत्यर्थः, 'अनन्वयापत्तिः' द्वितीयार्थकर्म्मत्वे वाक्यत्वविशिष्टानन्वयापत्तिः। ननु घटं जानातीत्यादाविवात्रापि द्वितीयार्थो न कर्म्मत्वं अन्यथा तद्वाक्यमुच्चारयेदित्यत्रान्वयानुपपत्तिस्तत्रापि दुर्वारेत्यरुचेराह, 'अनुच्चारितेति, कदाचिदपि केनापीत्यादिः, 'वाक्यस्य'

दानां उच्चारणाभावात्। न च कृत-क्रियमाण करिष्य-माणोच्चारणस्य वाक्यत्वं, समुदाये प्रत्येकस्याभावात्। तस्मादर्थविशेषज्ञापकत्वेनैव ज्ञातादर्थविशेषधीः। अत एवास्ति वह्निलिङ्गमितिशब्दात् प्रतीते धूमे वह्नि-

---

वाक्यत्वस्य। 'न च कृतेति कृत-क्रियमाण-करिष्यमाणोच्चारणविषय-पदसमूहस्येत्यर्थः, 'समुदाय इति कुत्रापि पदे उच्चारणविषयत्वं नास्तीत्यर्थः, सामान्यत उच्चारणविषयत्वव्याप्तिग्राहकमानाभाव इति भावः। ननु विशेषरूपेणाज्ञातं ज्ञायमानकरणं फलं न तु जनय-तीत्यत आह, 'अत एवेति यत एव विशेषरूपेणाज्ञातमपि ज्ञाय-मानकरणं फलं जनयति अतएवेत्यर्थः,(१) 'लिङ्ग' व्याप्यं,'अनुमान-

---

(१) ननु वेदार्थप्रमापकत्वं स्मृतित्वञ्च स्मृतेर्वेदानुमानात् प्रागनुपस्थिता-नुगतस्मृतिपदप्रवृत्तिनिमित्तापरिचयाच्च दुर्ज्ञेयमत आह, 'वेदार्थेति वेदा-र्थता स्मृतिता चेत्यर्थः, तथाच या वेदार्थरूपादृष्टार्थप्रमापकत्वेन स्मृतित्वेन च प्रसिद्धा तादृश्येव वेदमूलकत्वविवादविषयः पक्षः। न च विवादविषय-तावच्छेदकापरिचयः, उभयसिद्धान्यतरकोटिकान्यत्वस्यैव तत्त्वादिति भावः। साध्याप्रसिद्धिं परिहरति, 'स्मृत्यर्थ इति, 'ज्ञानान्तरेति। न च तादृश-ज्ञानगोचरत्वेनैव वेदार्थस्य वेदोऽनुवादक इति वाच्यं। न हि यथाकथञ्चि-दुपस्थितार्थबोधकतामात्रेणानुवादकता। मा भूदेकदा वेदार्थावगमे पुन-स्तेनैव तदर्थबोधजननात् तद्वेदस्यानुवादकता तद्भिनापि तेन कदाचिदर्थ-बोधात् अपि त्ववश्यापेक्षणीयनिरपेक्षप्रमाणबोधितार्थप्रमापकतया, सं-शय-तर्कोत्प्रेक्षादिबोधितार्थप्रमापकत्वात् प्रत्यक्षवेदानां। न च स्मृति-

रनुमानं, न तु तदर्थज्ञापकत्वेन ज्ञातात् पदादर्थज्ञान-
मात्रं स्यात् न तु संसर्गधीः, घटः कर्म्मत्वमानयनं
भावना तद्बोधकमिति ज्ञानेऽपि घटमानयेतिवाक्या-

---

मिति, भवन्मते इत्यादिः, अन्यथा तन्मते व्याप्यतावच्छेदकज्ञान-
स्यानुमितिहेतुत्वेन तत्रानुमितेरसिद्धेरलग्नकतापत्तेः। 'ज्ञानमात्रं
स्मरणमात्रं, 'तद्बोधकं' घट-कर्म्मत्वानयन-भावनादीनां बोधकं'
तदर्थबोधकत्वस्यापि ज्ञानप्रदर्शनाय इदं, 'घटमानयेतीति व्यतिरे-
कदृष्टान्तः, तस्माद्यथान्वयबोधस्तथान्वयबोधाभावादित्यर्थः, 'अन्वय-
प्रकारेति अन्वयप्रतियोगीत्यर्थः, 'पदविशेषस्य' घटादिपदस्य, 'तदु-
त्थापितेति तद्वत्पदघटितेत्यर्थः, 'ज्ञापकत्वमात्रेण' तदर्थज्ञापकत्व-

---

निरपेक्षप्रमायां अवश्यापेक्षणीया वा, स्मृत्यर्थगोचराचारादप्यनुमानसम्भवेन
तथानुमितवेदस्यापि तदर्थबोधकत्वादिति भावः। 'तस्येति, कार्य्येण कार-
णानुमाने अकारणस्य न तद्विषयत्वमिति परसिद्धान्त इति प्रागेव कथना-
दिति भावः। 'उत्पत्तित इति न्यायमते, 'अभिव्यक्तित इति गुरुमते,
'अभिप्रायत इति उभयमते। 'व्यभिचारादिति, घटमानयानय घटमि-
त्युभाभ्यां वाक्याभ्यामन्वयधीदर्शनादिति भावः। 'अव्यभिचारीति अनुगते-
त्यर्थः। ननु यद्यानुपूर्व्वी न प्रयोजिका तदा नदी-दीनेत्यादावविशेषापत्ति-
रित्यत आह, 'तदर्थेति। उच्चारणगर्भं वाक्यत्वं मा भूदुच्चारणव्याप्यन्तु स्या-
दित्याशङ्कते, 'अर्थेति। ननु लिप्यनुमितमपि कदाचिदुच्चार्य्यत एवेत्यरुचे-
राह, 'किञ्चेति, उच्चार्य्यमाणत्वं वर्त्तमानोच्चारणविषयत्वमिति न तदर्थान्त-
र्भावेन दूषणमिदं, न केवलं शब्दे रीतिरियमपि तु ज्ञायमानकरणमात्रस्यैव
ज्ञाप्य-ज्ञापकत्वज्ञानं सामग्रीत्याह, 'अतएवेति, इति व्याख्यान्तरम्।

दिवान्वयबोधाभावात्। एवञ्चान्वयप्रकारकर्म्मत्वाद्युप-स्थापकविभक्त्यादिमत्पदविशेषस्य तद्व्युत्पादिताकाङ्क्षा-देश्च ज्ञानं वाक्यार्थधीहेतुरतो न तैर्विना ज्ञापकत्व-मात्रेण ज्ञातादर्थधीः, हस्त-करादिसन्देहे कुशमानये-त्यादौ विभक्त्यादिज्ञानादेव वाक्यार्थानुभव इति, मैवं, न हि तत्तद्विभक्त्यादिमत्पदविशेषत्वेन वाक्यार्थधी-हेतुत्वं, अननुगमात्, किन्तु घटः कर्म्मत्वमित्याद्यन्वय-विरोधिपदाजन्यपदार्थोपस्थितिस्तथा सा चेहाप्यस्ति। वस्तुतस्तु नानापदात् पदार्थोपस्थित्यनन्तरं वाक्यार्थ-

---

मात्रेण, हस्त-करादिसन्देहस्य वर्णानुपूर्व्यां व्यभिचारेऽपि विभक्त्यादि-ज्ञानस्य न व्यभिचार इत्यत आह, 'हस्तेति, 'तत्तद्विभक्तीति अमादिविभक्तीत्यर्थः, 'पदविशेषत्वेनेति घटादिपदत्वेनेत्यर्थः, 'अननु-गमादिति, कलसमानय घटावानय इत्यादितोऽप्यन्वयबोधादिति भावः। 'घटः कर्म्मत्वमित्यादीति, 'अन्वयविरोधीति पदविशेषणं। ननु अन्वयविरोधित्वं अन्वयानुकूलविभक्त्यादिशून्यत्वं वाच्यं तथाच विभक्त्यादिरहितनित्यानुमेयवेदात् कथमन्वयबोध इत्यस्वरसादाह, 'वस्तुतस्त्विति, 'तथैवेति तत्तद्विभक्त्यादिमत्तत्तत्पदविशेषज्ञानत्वेनैवे-त्यर्थः, 'सामग्री', तत्तत्पदविशेषज्ञानस्य हेतुत्वं न शाब्दबोधमात्रे व्यभिचारात् अननुगमाच्च किन्तु तत्तदन्वयानुभवविशेषे, एवञ्च प्रकृतस्थले तदर्थज्ञापकत्वज्ञानमेव कारणं न तु तत्तत्पदविशेषज्ञान-

बोधे तथैव सामग्री अनुमितवेदाद्वाक्यार्थानुभवे विलक्षणैव सा स्मृत्यर्थज्ञापकत्वेनैव ज्ञातस्य स्मृत्यर्थानुभावकत्वात् धर्म्मिग्राहकप्रमाणेन तस्य तथैव सिद्धत्वात्। तवेश्वरस्येवाशरीरस्य कर्त्तृत्वे। अतएव वर्ण-पद-विभक्त्यादिविशेषघटितत्वेनाज्ञातस्याखण्डस्य सखण्डस्य वा वाक्यार्थानुभावकत्वात् पदार्थस्थानीयस्तस्य

---

मिति भावः। 'तथैव' स्मृत्यर्थानुभावकत्वेनैव, 'कार्त्तृत्व इति, धर्म्मिग्राहकमानेन सिद्धत्वमिति शेषः, यथा अन्यत्र क्लृप्तकारणशरीरविरहिणोऽपि ईश्वरस्य कर्त्तृत्वं धर्म्मिग्राहकमानसिद्धं तथान्यत्र क्लृप्तसामग्रीविरहिणोऽपि नित्यानुमेयवेदस्यानुभावकत्वं धर्म्मिग्राहकमानसिद्धमित्यर्थः, अन्यथा घटादिकार्य्यविशेषे विशिष्टस्यैव कर्त्तृत्वं दृष्टमित्यङ्कुरेऽपि कर्त्तृत्वं स्यात् कथमीश्वरस्य, 'अतएव' तथैव धर्म्मिग्राहकमानसिद्धत्वादेव, 'पदार्थस्थानीयस्तस्य वाक्यार्थः' इत्यन्तो नैकोग्रन्थः, 'अखण्डस्य' वर्णान्तराघटितशरीरस्य, 'सखण्डस्य' तद्घटितशरीरस्य, 'वाशब्द इवार्थे, अनेनैव वर्णात्मकस्य तस्य सिद्धेरिति ध्येयं। 'पदार्थस्थानीयः' पदार्थोपस्थितीयः, 'तस्य वाक्यार्थः' तज्जन्यवाक्यार्थः, यथा पदार्थोपस्थितौ न पदान्तरापेक्षा तथा तज्जन्ये शाब्दबोधेऽपीत्यर्थः।

केचित्तु यस्मिन् क्षणे पदार्थस्मरणं तस्मिन्नेव क्षणे तज्जन्ये शाब्दबोधे न पदार्थस्मरणरूपव्यापारान्तरापेक्षेति भाव इत्याहुः।

ननु तस्याखण्डत्वे वर्णसमूहत्वरूपं पदत्वं पदसमूहत्वरूपं वाक्यत्वञ्च

वाक्यार्थस्तत्र वर्णसमूहः पदं पदसमूहोवाक्यमित्य-
त्रापि ततो ग्रहः प्रमाणशब्दत्वमात्रेण तस्य सिद्धेः
अन्यथा क्लृप्तहेतुं विना सोऽनुभावक इत्यादौ तदसि-
द्धावाश्रयासिद्धिः सिद्धौ वा बाधः तेन विनैव सर्व्वा-
नुपपत्तिं परिभूय तदनुभावकत्वस्य धर्म्मिग्राहकमान-
सिद्धत्वात्। अतएव क्वचित् स्तुति-निन्दाभ्यां कल्पित-

कथं स्यादित्यत आह, 'तत्रेति नित्यानुमेयवेद इत्यर्थः, 'वर्णसमूहः पदमिति वर्णसमूहत्वरूपं पदत्वमित्यर्थः, 'पदसमूहो वाक्यमिति पदसमूहत्वरूपञ्च वाक्यत्वमित्यर्थः, अस्तीति शेषः, 'प्रमाणशब्दत्वमा-त्रेति, 'मात्रपदात् पदत्व-वाक्यत्वयोर्व्यवच्छेदः, 'सिद्धेः' धर्म्मिग्राहक-मानसिद्धेः, 'अन्यथा' शाब्दबोधमात्रे एव तत्तद्विभक्त्यादिसमभिव्या-हृततत्तत्पदविशेषस्य हेतुत्वे, 'सः' नित्यानुमेयोवेदः। विशदयति, 'तेनेति क्लृप्तहेतुनेत्यर्थः, क्लृप्तहेतोरपेक्षितत्वे तत्रानुभावकत्वस्यैवा-सम्भवादिविशिष्टसमभिव्याहारविशेषस्यानुमातुमशक्यत्वादिति भावः। त्वयेदमवश्यं स्तुति-निन्दास्थले मन्तव्यमित्याह, 'अतएवेति यतएव शाब्दबोधमात्रे न तत्तद्विभक्त्यादिसमभिव्याहृततत्तत्पदविशेषस्य हेतुत्वं अतएव, 'क्वचित्' तदर्थज्ञापकत्वज्ञानमात्रादप्यन्वयबोध-इत्यर्थः, 'स्तुतीति "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत" इति वाक्येत्यर्थः, 'निन्देति "यो ब्राह्मणायावगुरेत्तं शतेन यातयेदिति वाक्येत्यर्थः, अत्र विधिवाक्यस्याश्रवणादिति भावः। न

विधि-निषेधकवेदार्थमधिगत्य प्रवृत्ति-निवृत्ती। अन्यथा विधि-निषेधकानां नानाप्रकारकत्वेन विभक्त्यादिविशेषवत्पदस्यानुमातुमशक्यत्वात् न ततोऽर्थधीः स्यात्। तथापि वक्तृज्ञानानुमानानन्तरमिवानुमितानुमानादेव वाक्यार्थसिद्धेर्लौकिकवाक्यवद्वेदस्यानुवादकत्वं स्यादिति चेत्, न, धर्म्मिग्राहकमानेन स्मृत्यर्थज्ञापकतया ज्ञातात् सम्भूतसामग्रीकत्वेनानुपदमेव वाक्यार्थ-

---

च स्मृत्यर्थस्य स्मृतित एवोपस्थितेर्वक्तव्यत्वात् कल्पितवेदार्थस्य च कुत उपस्थितिरिति वाच्यं। अनायत्या अनुमानपरम्पराप्रयोज्यस्मृत्यधीनानुमानस्वीकारादिति न काप्यनुपपत्तिः। 'अशक्यत्वादिति, विशिष्य व्याप्त्यादेरज्ञानादिति भावः। 'ततः' कल्पितविधि-निषेधकवाक्यात्। शङ्कते, 'तथापीति, 'वक्तृज्ञानेति यथा लौकिकवाक्यस्थले अयं वक्ता एतद्वाक्यार्थगोचरयथार्थज्ञानवान् सतात्पर्य्याकाङ्क्षादिमदेतद्वाक्यप्रयोक्तृत्वादित्यनुमानानन्तरं एते पदार्थाः तात्पर्य्यविषयमिथःसंसर्गवन्तः एतत्पदार्थगोचर-पदार्थज्ञानवदुक्तपदस्मारितत्वादित्यनुमानात् शब्दबोधात् प्रागेव वाक्यार्थबोधस्तथेत्यर्थः, 'अनुमितेति स्मृतेर्वेदमूलकतानुमानानन्तरं एते स्मृत्यर्था मिथः संसर्गवन्तः वेदमूलकवाक्यार्थत्वात् इत्यनुमानादित्यर्थः, 'वाक्यार्थसिद्धेः,' शाब्दबोधात् प्रागेवेत्यादिः। 'सम्भूतसामग्रीकत्वेन' सकलसहकारिसम्पन्नत्वेन, 'अनुपदमेव' अनुमितानुमानात् प्रागेव, 'योग्य-

बोधोदयात् अपेक्षणीयान्तराभावात्, अनुमानस्य व्याप्त्यादिज्ञानापेक्षितत्वेन विलम्बितत्वात्। न च वेदस्यापि योग्यतादिज्ञानापेक्षिततया विलम्बः, तन्निरपेक्षबोधकस्यैव धर्म्मिग्राहकमानसिद्धत्वात् योग्यतादिविशिष्टस्यैवानुमानाद्वा, एवं मङ्गलाचारस्याविगीतशिष्टाचारत्वेन कर्त्तव्यतामनुमाय सा कर्त्तव्यता वेदबोधिता अलौकिकाविगीतशिष्टाचारकर्त्तव्यतात्वादिति तद्बोधकत्वेनानुमितवेदात् कर्त्तव्यताधीस्ततः प्रवृत्तिः।

तादिज्ञानेति, 'आदिपदात् तात्पर्य्यपरिग्रहः। ननु बोधकत्वमुक्तानुमानात् सिद्ध्यति न तु निरपेक्षबोधकत्वमित्यत आह, 'योग्यतादीति, 'योग्यता' अबाधितार्थकत्वं, स्मृतिस्थलीयं प्रकारमाचारेऽप्यतिदिशति, 'एवमिति, 'मङ्गलाचारस्य' आचारविषयमङ्गलस्य, क्वचित् मङ्गलस्येत्येव पाठः, 'कर्त्तव्यतामिति बलवदनिष्टाननुबन्धीष्टसाधनत्वसमानाधिकरणकृतिसाध्यत्वमित्यर्थः, हेतौ इष्टसाधनतांशे भ्रमाजन्यत्वं शिष्टत्वं, अविगीतत्वं बलवदनिष्टाजनकत्वं एतद्द्वयञ्चाचारविशेषणं, आचारत्वं आचारविषयत्वं, आचारः कृतिः, विवेचितमिदमस्माभिः प्रत्यक्षरहस्ये। 'सा कर्त्तव्यता' मङ्गलीयकर्त्तव्यता, 'अलौकिकेति कर्त्तव्यताविशेषणं, अलौकिकत्वं शब्द-तदुपजीविप्रमाणातिरिक्तप्रमाणजन्यप्रमित्यविषयत्वं, 'अविगीतत्वं' शिष्टाचारविशेषणं, 'आचारपदं आचारविषयपरं, 'कर्त्तव्यतात्वात्' तन्निष्ठकर्त्तव्यतात्वात्, 'कर्त्तव्यताधीः' मङ्गलकर्त्तव्यताधीः। अनुमानद्वयं

ननु स आचारो वेदबोधितकर्त्तव्यताकः तादृशाचारत्वादित्यनुमितवेदात् तत्कर्त्तव्यताधीः, विभक्त्यादिकं विनानुमितवेदात् तत्कर्त्तव्यताज्ञानाभावात् मङ्गलमाचरेदित्येवंरूपस्य च वेदस्य नानुमानं तथा व्याप्त्यभा-

---

व्यर्थं एकस्मादेव वक्ष्यमाणानुमानात् प्रकृतनिर्वाहादिति कस्यचिन्मतं दूषयति, 'नन्विति, 'स आचारः' आचारविषयो मङ्गलादिः, 'तादृशाचारत्वात्' अविगीतशिष्टाचारविषयत्वात्, हेतुमाह, 'विभक्त्यादिकमिति, 'अनुमितवेदात्' उक्तरूपेणानुमितवेदात्, 'तत्कर्त्तव्यतेति मङ्गलविषयककर्त्तव्यताज्ञानासम्भवादित्यर्थः । न चैवं त्वमते एव कथमनुमितवेदात् विभक्त्यादिकं विना मङ्गलकर्त्तव्यताबोधः स्मृतिस्थले एव वा कथं विभक्त्यादिकं विनानुमितवेदाद्वाक्यार्थबोध इति वाच्यं । असति विशेषबाधके पक्षतावच्छेदकेऽप्यनुमितिरिति नियमादस्मन्मते मङ्गलकर्त्तव्यतां पक्षयित्वा वेदबोधितत्वानुमाने मङ्गलेऽपि वेदबोधितत्वानुमानादुत्तरकालं वेदस्य मङ्गलबोधकत्वग्रहसम्भवात् विभक्त्यादिकं विनापि मङ्गलविषयककर्त्तव्यताबोधः अन्यतरस्यैव सामग्रीत्वात्तन्मते कर्त्तव्यताया वेदबोधितत्वग्रहेऽपि मङ्गले वेदबोधितत्वाग्रहात् वेदस्य मङ्गलबोधकत्वग्रहाभावेन विभक्त्यादिकं विना कर्त्तव्यतामात्रज्ञानसम्भवेऽपि मङ्गलविषयकबोधस्यासम्भवात् तज्ज्ञापकत्वेन ज्ञातस्यैव तदनुभावकत्वादिति भावः । ननु विभक्त्यादिसमभिव्याहृतवेद एव उक्तरूपेणानुमेय इत्यत आह, 'मङ्गलमिति, 'व्याप्त्यभावादिति, सामान्यधर्मस्य हेतुत्वादिति भावः ।

वात्, तस्मात् तस्य कर्त्तव्यतामनुमाय तद्बोधकवेदा-नुमानं, प्रथमं कर्त्तव्यताज्ञानेऽपि वेदानुमानं अविनाभावात्। न च तत एव प्रत्यक्षवेदानुमानं, प्रत्यक्षत्वे उच्छेदानुपपत्तेः शाखान्तरवत्।

'तस्य' मङ्गलस्य, 'तद्बोधकेति मङ्गलकर्त्तव्यताबोधकेत्यर्थः। नन्वेवं प्रथममेव प्रवर्त्तकज्ञानोत्पत्तौ कृतं वेदानुमानेनेत्यत आह, 'प्रथम-मिति, 'अविनाभावादित्युपलक्षणं आनुमानिककर्त्तव्यताप्रामाण्य-शङ्काग्रहमत्त्वेन ततः प्रवृत्त्यसम्भवादित्यपि बोध्यं, एवञ्च 'ततः प्रवृत्ति-रिति प्रागुक्तमपि सङ्गच्छते इति ध्येयं। 'तत एव' उक्तवेदमूलकत्व-साधकादेव, 'प्रत्यक्षत्व इति, प्रत्यक्षविषयत्वस्य उच्छेदाभावव्याप्यत्वा-दिति भावः। तथाचानुमाने बाध इति भावः। 'उच्छेदः' अध्य-यनविषयत्वाभावः, नातस्तन्मतेऽसिद्धिः[१]।

---

(१) 'इत्येति, तत्र विभक्त्यादिसमभिव्याहारमुन्नीयान्वयधीस्तल्लोपमजान-तोऽप्यन्वयधीरेव नेत्याशयः। ननु घटः कर्म्मत्वमित्यादावभेदान्वयस्वरूप-योग्यत्वात् तत्तदन्वयविरोधिपदाजन्यत्वं वाच्यं तथाननुगमस्तदवस्थ एवेति लाघवाद्विभक्त्यादिमत्पदत्वेनैव तद्ग्रहोऽस्त्वित्यस्वरसेन मतान्तरमाह, 'वस्तु-तस्त्विति, प्रतिबन्धाभिप्रायेण दृष्टान्तमाह, 'तवेति, 'अतएवेति तथा धर्म्मिग्राहकमानसिद्धत्वादेवेत्यर्थः, तद्घटितत्वेनाज्ञातस्येत्यस्य विवरणं 'अखण्डस्य', 'सखण्डस्य' तद्घटितत्वेन ज्ञातस्य, 'वाशब्दोऽनास्थायां इवार्थो वा। 'पदार्थेति आहृत्य वाक्यार्थ एव ज्ञायते न तु पदार्थस्मरणावान्तर-व्यापारापेक्षेत्यर्थः, तर्हि कथं वेदत्वमित्यतआह, 'प्रमाणेति, तथाच न तद्घटितं वेदत्वं किन्तु प्रमाणशब्दत्वघटितं तच्चाज्ञाप्यस्त्येवेति भावः। त्वयाप्युक्तसामग्री कल्प्येत्याह, 'अतएवेति, 'अनुमितेति, एते स्वत्वर्थाः

यत्तु अष्टकाः कर्त्तव्याः कार्य्या अष्टका इत्येवंरूपमेव वाक्यमनुमेयं उपस्थितत्वात, एवञ्च तत्रैवार्थे प्रतिपुरुष-

'उपस्थितत्वादिति, यस्यानुमितिपूर्व्वसमये यदुपस्थितं तस्य

परस्परं संसर्गवन्तः वेदजन्यानुभवविषयत्वादित्यादेरित्यर्थः, अत्र नाविषयत्वं न वाऽप्राधान्येन विषयत्वं इत्यनुवादकतावश्यकीति भावः। 'योग्यतादिज्ञानेति, 'आदिपदात् तात्पर्य्यादिपरिग्रहः। अभ्युपगमवादेनाह, 'योग्यतादीति, उक्तरीतिमाचारस्थलेऽप्यतिदिशति, 'एवमिति, एतदनुमानं प्रत्यक्षप्रकाशे व्याख्यातं। 'सा' मङ्गलाचारीयेत्यर्थः, तथाच पक्षतावच्छेदकावच्छेदेन साध्यसिद्धिरिति मते मङ्गलाचारविशिष्ट-कर्त्तव्यतायां वेदबोधितत्वानुमितौ समानसंवित्संवेद्यतया मङ्गलाचारविशिष्टकर्त्तव्यताबोधकत्वेन वेदसिद्धेस्तत्सिद्धौः तदर्थज्ञापकत्वज्ञानमात्रस्यैवात्र सामग्रीत्वात् तदिदमाह, 'तद्बोधकत्वेनानुमितवेदादिति, 'नन्विति, अत्र कर्त्तव्यतामात्रबोधकत्वेन वेदसिद्धेर्न ततो मङ्गलाचारविशिष्टकर्त्तव्यताबोधः स्यादिति भावः। न च बहुव्रीह्यर्थपर्य्यालोचनया अत्रापि मङ्गलकर्त्तव्यता-बोधकत्वेनैव तत्सिद्धिरिति वाच्यं। वस्तुगत्या या मङ्गलकर्त्तव्यता तद्बोध-कत्वेन सिद्धावपि मङ्गलांशबोधकत्वेनासिद्धेस्तद्बोधकत्वानुपपत्तेः। न ह्याकाशः श्रोत्रग्राह्यगुण इत्यनुमितावाकाशेऽपि श्रोत्रग्राह्यत्वभानसम्भव इति, तर्हि मङ्गलांशं विभक्त्यादिसमभिव्याहाररूपसामग्रेव बोधयत्वित्यत आह, 'विभक्तीति अनुमितवेदे विभक्त्यादिसमभिव्याहाररूपसामग्र्यभावादित्यर्थः। तर्हि तत्समभिव्याहृत एवानुमीयतामित्यत आह, 'मङ्गलमिति, 'तस्येति मङ्गलाचारस्येत्यर्थः, 'तद्बोधकेति मङ्गलाचारविशिष्टकर्त्तव्यताबोधकस्येत्यर्थः, 'अविनाभावादित्युपलक्षणं अन्यपरम्परानिरासनाश्वासार्थञ्चेत्यपि द्रष्टव्यं, एवं 'ततः प्रवृत्तिरिति पूर्व्वोक्तमपि सङ्गच्छते इति ध्येयं। अत्र च कथं नानुवादकत्वमिति चिन्त्यं। इति व्याख्यान्तरं।

मन्वाद्यन्यवेदानुमानं न दोषाय एकार्थानेकपदोपस्थितौ वानेकवाक्यानुमानमेवेति, तन्न, आचारतो वेदानुमाने मङ्गलमाचरेदित्याद्यन्यतरोपस्थितौ नियमाभावात्। अनेकवेदकल्पने च स्वानुभवविरोधः, मनुस्मृतिमूलत्वानेकं वाक्यं नावश्यकमिति कथमाधुनिकोऽनेकमनुमिनुयात्। न च स्मृत्यर्थबोधको वेदः स्मृतिसदृश एवानुमेयः नियमतः स्मृतेरुपस्थितत्वात् इति वाच्यं। तदर्थस्मृतेरपि नानाप्रकारकत्वात् तस्य च प्रदोषादौ अनुच्चरितवेदस्येव वेदत्वं श्रोत्रग्रहणार्ह-

तदेव उपनीतं सदनुमितौ भासते इति नियमादिति भावः। 'न दोषायेति, सामग्रीबलसिद्धत्वेन प्रामाणिकगौरवस्यादोषत्वादिति भावः। ननु यत्र एकस्मिन्नेवार्थे अनेकवाक्योपस्थितिस्तत्र का गतिरित्यत आह, 'एकार्थेति, 'वेदानुमाने' वेदानुमानदशायां, दूषणान्तरमाह, 'अनेकेति, 'स्वानुभवेति अनुमातुर्लाघवमहकृतेनानुमानान्तरेण वेदस्य नानाप्रकारकत्वाभावनिश्चयादित्यर्थः। एवं स्मृतिमूलकवेदानुमानेऽप्याह, 'मनुस्मृतीति मन्वादिस्मृतीत्यर्थः, लाघवादेकस्यैव तन्मूलस्य कल्पनादिति भावः। 'नानेति, तथाचानेकवेदकल्पने स्वानुभवविरोध इति भावः। वस्तुतोऽनुमितावुपनीतभाने मानाभाव इति ध्येयं। 'तस्य च' नित्यानुमेयस्य च, 'प्रदोषेति यथा प्रदोषकाले तेषामप्युच्चारणाविषयत्वेऽपि स वेदस्तथायमपीत्यर्थः, 'श्रोत्रेति, स्वरूपयोग्यतावच्छेदकञ्च वर्णत्वं श्रोत्रसमवेतविशेषण-

तया च शब्दत्वं वाक्यत्वमर्थबोधकत्वादित्येतदेव युक्तं स्मृत्याचारेण चानुमितो वेदोऽर्थं बोधयतीति पूर्व्वपूर्व्वेणानुमितवेदात् उत्तरोत्तरस्मृत्याचाराविति नान्धपरम्परा शब्दार्थशक्तिग्रहवत् स्वतः प्रमाणमूलकत्वात्। तस्मान्नित्यानुमेयत्वं वेदस्य न तूच्छेद इति। अत्रोच्यते। उच्छिन्नवेदादर्थं प्रतीत्य स्मृत्याचारयोरुपपत्तेः न सामग्र्यन्तरकल्पनं अतएव नाश्रयासिद्धिर्बाधो वा स्मृत्या-

त्वात्। न च नित्यस्य स्वरूपयोग्यत्वे फलोपधानप्रसङ्ग इति वाच्यं। तैर्नित्यस्य स्वरूपयोग्यस्य फलावश्यम्भावनियमस्यानङ्गीकारादिति भावः। 'पूर्व्वपूर्व्वेणेति पूर्व्वपूर्व्वस्मृत्यादिनेत्यर्थः, 'नान्धपरम्परा' नाप्रामाण्यसन्देहः, 'शब्देति यथा शब्दशक्तौ व्यवहारलिङ्कानुमानादिमूलं तथाचापि वेदमूलमित्यर्थः, 'नित्यानुमेयत्वमिति नित्यत्वे सत्यनुमेयत्वमित्यर्थः, 'न तूच्छेदः' न तु ध्वंसः। 'उच्छिन्नेति, न च तदर्थज्ञापकत्वज्ञानमेव सर्व्वत्र सामग्र्यस्त्विति वाच्यं। तदभावेऽपि श्रूयमाणवाक्यात् योग्यतादिप्रतिसन्धानेऽन्वयदर्शनादिति भावः। क्लृप्तसामग्रीं विना न सोऽनुभावक इत्यत्र तदुक्तं दोषमुद्धरति, 'अतएवेति[१]। नन्वेवमिदानीं विभक्त्यादिविशिष्टस्य मङ्गलमाचरेदित्यादिवत् तस्य वेदस्यानुमातुं शक्यत्वादनुमितवेदात् कर्त्तव्यता-

(१) 'यत्त्विति, तथाच विभक्त्यादिसमभिव्याहारवत एवानुमानान्न सामग्र्यन्तरकल्पनमिति भावः। यद्यपि तादृशवेदेन समं न व्याप्तिस्तथाप्युपनीतभानमतेनेदं बोध्यं। 'अत्रोचेति, कत्वादेरेव तदवच्छेदकत्वादिति भावः।

**चारानुमितवेदस्यास्माभिरभ्युपगमात्। इदानीञ्च[1] स्मृतेरर्थं प्रतीत्याचाराच्च कर्त्तव्यतामनुमाय प्रवृत्तिः। न चैवं किं वेदेनेति वाच्यं। तुल्यत्वात् अविनाभावाच्च तत्कल्पनं तुल्यं तथाच स्मृत्याचारयोर्वेदजन्यानुभवमूलत्वानुमानादेव पक्षधर्म्मताबलात् प्रत्यक्षवेदमूलकत्वसिद्धिः। अन्यथा तस्यानुभावकत्वाभावेन मूलत्वा-**

ज्ञानासम्भवेन कथं प्रवृत्तिरित्यत आह, 'इदानीञ्चेति। 'एवं' स्मृत्यर्थज्ञानादितः प्रवृत्त्युपपत्तौ, 'किं वेदेनेति किं वेदानुमानेनेत्यर्थः, 'तुल्यत्वात्' तत्रापि तुल्यत्वात्, 'कल्पनं' वेदानुमानं, 'पक्षधर्मतेति अप्रत्यक्षे वेदमूलकत्वेन बाधादित्यर्थः, पक्षधर्म्मताबलमेव दर्शयति, 'अन्यथेति, अप्रत्यक्षे तत्कारिमूलानुपूर्व्यादिज्ञानाभावात् मानान्तरकल्पनस्य गौरवपराहतत्वादिति भावः। अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियममभिप्रेत्य स्वपक्षे स्थापनां दर्शयति,

'वाक्यत्वमिति, आचारमूलाभिप्रायेणेदं तेन न पौनरुक्त्यमित्याहुः। ननु स्मृत्याचारमूलत्वं स्मृत्याचारयोरेवास्तु किं वेदेनेति शङ्कां निरस्यति, 'स्मृतीति, 'उच्छिन्नेति, न च तदर्थज्ञापकत्वज्ञानमेव सर्व्वत्र सामग्र्यस्त्विति वाच्यं। तदभावेऽपि श्रूयमाणवाक्याद् योग्यतादिप्रतिसन्धानेऽन्वयधीदर्शनात् वाक्यार्थस्यापूर्व्वत्वेन तज्ज्ञापकत्वेन प्रागज्ञानाच्च इति भावः। 'अन्यथेत्यादिप्रागुक्तमुद्धरति, 'अत एवेति।

(१) नन्विदानीं विभक्त्यादिविशिष्टस्यानुमातुमशक्यत्वात्तदर्थज्ञापकत्वेनैवानुमितस्योच्छिन्नवेदस्यानुभावकत्वमिति सामग्र्यन्तरकल्पनमावश्यकमित्यत आह, 'इदानीञ्चेति, तथाच प्रत्यक्षतादृशायामेव परं तस्यानुभावकत्वमिति न तत्कल्पनमिति भावः। 'नन्विति, तथाच प्रामाणिकं गौरवमिति भावः।

नुपपत्तेः । तस्मात् स्मृत्याचारानुमितो वेदः प्रत्यक्षोऽध्ययनविषयश्च वेदत्वात् सम्मतवत्, अन्यथा सामग्र्यन्तर-कल्पने गौरवप्रसङ्गः । ननु स्तुति-निन्दार्थवादेन कल्पितात् विधि-निषेधकवाक्यात् इष्टमर्थमवगम्य प्रवृत्ति-निवृत्ती, न हि तत्र वर्ण-पद-विभक्ति-विधि-प्रत्ययक्रमविशेषाणामनुमानं सम्भवति, व्यभिचारादिति चेत्, न, स्तुति-निन्दावाक्याभ्यां प्रवृत्ति-निवृत्ति-पराभ्यां प्रवृत्ति-निवृत्तिहेतुरर्थ एव कल्प्यते लाघवात्

---

'तस्मादिति, अध्ययनपदेन अदृष्टजनकाध्ययनं बोध्यते तेन हेतौ न वैयर्थ्यं, प्रथमसाध्ये तु वाक्यत्वमेव हेतुतया विवक्षितं । अप्रयोजकत्वमाशङ्क्याह, 'अन्यथेति, 'स्तुतीति स्तुति-निन्दारूपो योऽर्थवाद-स्तेनेत्यर्थः, 'अर्थवादः' विधिसमभिव्याहृतं वाक्यं 'कल्पितात्' अनु-मितात्, 'प्रवृत्ति-निवृत्तिहेतुरिति प्रवृत्त्यादिहेतुज्ञानविषय इत्यर्थः, स च इष्टसाधनत्वादिकमनिष्टसाधनत्वञ्च, 'कल्प्यते इति सोमो राजानमसृजत सोमो ब्राह्मणानां राजा इत्यादौ सोम इष्टसाध-नीभूतोपास्यको वेदे स्तूयमानत्वात् वायुर्वै क्षेपिष्ठा देवता वायव्यं श्वेतमालभेतेत्यर्थवादः, वायुवदित्यनुमीयते इत्यर्थः, 'सोमः' चन्द्रः, 'स्तूयमानत्वात्' उत्कर्षवत्त्वेनावधारणात्, 'क्षेपिष्ठा' क्षिप्रफलदात्री,

---

'अर्थ एवेति इष्टसाधनत्वादिकमनिष्टसाधनत्वञ्चेत्यर्थः, 'गौरवादिति, अवश्य-कार्य्यकल्पनेनैवोपपत्तेरिति भावः । 'उक्तेति विभक्त्यादिमतोऽनुमातुमशक्यत्वात् सामग्र्यन्तरकल्पने गौरवमित्यर्थः, 'न त्विति, 'तत्कल्पनापि' अर्थकल्पनापी-

न तु विधायक-निषेधकवाक्यं गौरवात् उक्तदोषाच्च, यत्र चार्थवादादेव तदर्थावगमः "तरति मृत्युमित्यादौ तत्र न तत्कल्पनापि। अथ तस्याध्ययनविषयत्वे

'वायव्यं' वायुदेवताकं, दृष्टान्ते श्वेतच्छागलालम्भनमेवोपासना गौरवितहेतुक्रियाया एवोपासनत्वात्[१] 'गौरवादिति विध्यनुमानं ततश्च विधेरर्थधीरिति ज्ञानद्वयकल्पने विधिस्वरूपकल्पने च गौरवादित्यर्थः, 'उक्तेति, तादृशलिङ्गाभावादित्यर्थः। 'तदर्थेति प्रवृत्त्यादिहेतुज्ञानविषयार्थावगम इत्यर्थः, 'तरतीति "तरति मृत्युं तरति ब्रह्महत्यां योऽश्वमेधेन यजेत" इत्यन्तविधिप्रतिरूपके इत्यर्थः, 'न तत्कल्पनापीति नार्थकल्पनापीत्यर्थः, 'अपिः' शब्दकल्पनं समुच्चिनोति। न चानुवादात् कथं यागे प्रवृत्तिः प्रवृत्तिहेतुज्ञानविषयेष्टसाधनत्व-कृतिसाध्यत्वयोरनवगमात् विधेरेव तद्बोधकत्वात् इति वाच्यं। हेतु-हेतुमतोर्लिङित्यत्र पूर्व्वसूत्रात् चकारानुवृत्तेः चकारस्य च लट्समुच्चायकत्वात् लटोऽपि क्वचित् साध्य-साधनबोधकत्वात्,

(१) सोमो राजानमन्त्वादित्यादिः गौरवितहेतुक्रियाया एवोपासनत्वादित्यन्तः पाठः आदर्शपुस्तकानुरूप एव मुद्रितः परन्त्वयं पाठः सम्यक्परिशुद्धत्वेन न प्रतिभाति।

त्यर्थः, 'अपिः' सामग्र्यन्तरकल्पनं समुच्चिनोति। ननु कृतिसाध्येष्टसाधनत्वं तर्हि कस्यार्थं इत्यवश्यं तद्बोधार्थं विधिकल्पनं, किञ्च तादृशस्य विधेयत्वव्याप्यत्वादवश्यं तत्कल्पनमिति। लडर्थे इष्टसाधनत्वं यौक्तिकञ्च कृतिसाध्यत्वमिति क्वापि तत्र लटोऽनभिहितत्वात् इति चेत्, अत्र केचित्, सिद्ध-साध्यसमभिव्याहारेण सिद्धं साध्यायोपयुज्यत इति व्युत्पत्तिबलात्तथा प्रतीतिरित्याहुः।

शाखान्तरवत् बहुभिर्मेधाविभिराध्यात्मिकशक्तिसम्पन्नैर्ध्रियमाणशाखाया उच्छेदासम्भव इति चेत्, न, एकस्य न सकलशाखाध्ययने शक्तिरित्येकैनेवापरैरपि तदनध्ययने शाखोच्छेदसम्भवादेकानधीताया अपराध्ययनविषयत्वनियमे मानाभावात् शाखात्वस्येव प्रत्य-

---

अतएव भवन्मतेऽपि विधिप्रतिरूपकोऽनुवादः प्रमाणमेव कार्य्यताबोधकत्वादिति। न चैवं तथाभूतसाधनत्वस्य विधेयत्वव्याप्यत्वाद्विनाभावेन तत्रापि विधिकल्पनमिति विधिवादस्थग्रन्थासङ्गतिरिति वाच्यं। तस्य मतान्तरत्वात् अस्य च प्रयोजनाभावान्न तत्तत्कल्पनमिति तत्रैव वक्ष्यमाणत्वादिति। इदमापाततः, वस्तुतस्तु तत्रापि तत्तत्कल्पनमावश्यकं अन्यथा कृतिसाध्यत्वेष्टसाधनत्वबोधोपगमेऽपि बलवदनिष्टाननुबन्धित्वस्यानवगमात्, कल्पनप्रकारस्तु अश्वमेधो यागः बलवदनिष्टाननुबन्धित्व-कृतिसाध्यत्वसमानाधिकरणब्रह्महत्यादितरणसाधनत्ववान् ब्रह्महत्यादितरणसमानाधिकरणत्वेन वेदबोधितत्वात् यद्यत्समानाधिकरणत्वेन वेदबोधितं भवति तत्तत्साधनं भवतीति सामान्यमुखी व्याप्तिः इति ध्येयं। 'आध्यात्मिकी शक्तिः' ग्रहधारणादिशक्तिः। नन्विदानीमपि निखिलशाखाविदां व्यासा-

---

तच्चिन्त्यं, तादृशव्युत्पत्तौ मानाभावात् भावे वा कथञ्चित्तत्प्रतीतावपि पदानुपस्थितस्याप्रकारत्वेन कृतिसाध्यत्वादिप्रकारकज्ञानाभावे ततोऽपि प्रवृत्त्यनुपपत्तिः। अन्ये तु व्युत्पत्तिबलात् सोऽर्थो भासत इत्येव पूर्व्वस्माद्भेदः प्रवृत्तिस्त्वानुमानिकज्ञानादेव, यद्वा अश्वमेधेनेति तृतीयया तदिष्टसाधनत्वलाभः इति कृत्वा तथोक्तं कृतिसाध्यत्वन्त्वानुमानिकमेवेत्याहुः। केचित्तु मृत्युमित्या-

यैव शिष्टैरनुष्ठीयमानत्वाच्च तदर्थनिश्चयात्। न च उच्छिन्नशाखाबोधितेतिकर्त्तव्यताशङ्कया एकस्मिन्नपि कर्म्मण्यनाश्वासप्रसङ्गः, नानाशाखेतिकर्त्तव्यतापूरणीयत्वात् तस्येति साम्प्रतं, सन्ति हि समस्तकर्म्मसु नानाशाखाबोधितसकलेतिकर्त्तव्यताबोधनार्थमेव कालक्रमभाविनमनाश्वासमाशङ्कमानैर्महर्षिभिः प्रणीता महाजनपरिगृहीताः स्मृतय इति नानाश्वासः। अन्यथा

---

च्छिन्नस्य मन्त्रत्वाभावेन तेषां तदध्ययनादिकं विरुध्येतेति भावः। नन्वेवं उच्छिन्नशाखाबोधितकर्त्तव्यताशङ्कया शिष्टानां कर्म्मसाचारानुष्ठानमेव न स्यात् इत्याशङ्कते, 'न चेति, 'अनाश्वासः' निष्कम्पप्रवृत्त्यभावः, पूर्व्वं प्रत्यक्षशाखैकदेशावच्छेदेन शङ्काधीनः कर्म्मलोपः परिहृतः सम्प्रति उच्छिन्नशाखाबोधितार्थशङ्काधीनः स परिह्रियत इति भेदः। 'अनाश्वासः' उच्छिन्नशाखाबोधितेतिकर्त्तव्यतासन्देहः। 'नानाश्वास इति नेतिकर्त्तव्यतासन्देह इत्यर्थः, इदमुपलक्षणं तच्छाखाबोधितेतिकर्त्तव्यतयैव शिष्टैरनुष्ठीयमानत्वान्न सन्देह इत्यपि बोध्यं। अत एव यत्र स्मृतिर्नास्ति तत्रापि न सन्देहः अन्यथोच्छेदानभ्युपगमे सर्व्वशाखानध्यायिनां शाखान्तरबोधितेतिकर्त्तव्यतासन्देहादितिकर्त्तव्यतानिश्चयो न स्यादित्याह, 'अन्यथेति, 'नार्थनिश्चय इति ततएवेति-

---

इत्यत आह, 'वेदत्वं चेति, 'अतएवेत्यस्य विवरणं, 'बाधादिति, 'विशिष्येति, यदि च सामान्यतोऽन्यतमत्वादिना पक्षत्वं, यदि वा तावदन्यतमत्वं वेदत्वसमानाधिकरणमिति साध्यं तदा बाध एव मूलं, यद्वा एतदस्वरसादेवाह, 'धर्मेति, 'प्रत्यक्षत्वादिति, उपनयसमर्थनायेदं बोध्यं, तथाच सिद्धसाधनाद्यनु-

एकस्य सकलशाखानवगमात् शाखान्तरबोधितेतिकर्त्तव्यतासंशयेनैकशाखातो नार्थनिश्चयः स्यात् ।

यत्तु विभक्त्यादिमत्तत्तत्पदानां तत्समुदायानाञ्च प्रत्यक्षत्वन्तेष्वपि कश्चिद्वेदः तत्रायं समुदायो वेद इत्यनिश्चय एव नित्यानुमेयार्थः, वेदत्वं वा तत्रानुमेयमिति, तन्न, प्रत्यक्षवेदातिरिक्तवाक्ये तदभियुक्तानां महाजनानां वेदत्वाभावनिश्चयात् । अतएव वेदत्वं तत्र

---

कर्त्तव्यतानिश्चयो न स्यादित्यर्थः । 'प्रत्यक्षत्वमिति इदानीमपि प्रत्यक्षत्वमित्यर्थः, 'तेष्वपीति तेष्वेवेत्यर्थः, 'कश्चिद्वेद इति यः कश्चिद्वेदस्तत्रेत्यर्थः । ननु अनिश्चयो न नित्यानुमेयशब्दार्थ इत्यस्वरसादाह, 'वेदत्वं वेति, 'तत्र' यत्किञ्चिद्वेदे, तथाचायमेव नित्यानुमेयशब्दार्थ इति भावः । 'वेदातिरिक्तेति वेदत्वेन निश्चीयमानातिरिक्तेत्यर्थः, 'वाक्ये' प्रत्यक्षसिद्धवाक्ये, 'वेदत्वाभावनिश्चयादिति, तथाच वेदस्य नित्यत्वासत्त्वमनायातमिति भावः । यद्यपि निश्चायकं प्रमाणं दुर्वाच्यं तथापि पूर्व्वपूर्व्वेषां वाक्यमेव तथेत्यभिप्रायः[१] ।

---

मानमिति भावः । न च स्मृतावतिप्रसङ्गः, अनपेक्षेति विशेषणादित्याशयः । 'नाध्ययनेति अदृष्टहेत्वध्ययनविषयत्वमित्यर्थः । 'तदभावादिति, न हि तादृशानुपूर्व्वीविशिष्टः केनचित्तथापाद्यत इति भावः । 'अनभ्युपगमादिति, देवदत्तप्रभवत्वाद्यनुमापकजातिभिः सङ्करप्रसङ्गादिति भावः । यद्यपि शब्दतदुपजीवीत्यादिरूपवेदत्वानुमाने नोक्तदोषस्तथापि वेदस्य नित्यानुमेयत्वविवादे वेदत्वस्य तथात्वसाधने अर्थान्तरमिति तात्पर्य्यं, इति व्याख्यान्तरम् ।

नानुमेयं बाधात् विशिष्य पक्षाज्ञानाच्च धर्म्मवेदना-जनकत्वञ्च वेदत्वं नानुमेयं तज्जनकत्वस्य प्रत्यक्षत्वात्, नाध्ययनविषयत्वं तदभावात्, न जातिरनभ्युपगमा-दिति ।

---

'अतएवेति, विवृणोति, 'बाधादिति, 'विशिष्येति, व्याप्यवत्तयेत्यर्थः, कीदृशञ्च वेदत्वं तच्चानुमेयमित्याह, 'धर्म्मेति धर्म्मज्ञानजनकत्वमि-त्यर्थः। न च निषेधवाक्याव्याप्तिः तस्य धर्म्माबोधकत्वादिति वाच्यं। धर्म्मपदस्यापूर्व्वमात्रपरत्वात् तस्यापि निषेधापूर्व्वबोधकत्वात् । न च स्मृतावतिप्रसङ्गः, अपौरुषेयत्वस्य प्रयोगोपाधित्वात् । न च स्तोमे-ऽव्याप्तिः, तस्यालक्ष्यत्वादिति ध्येयं। 'प्रत्यक्षत्वादिति उपनयसहकारेण मनोवेद्यत्वादित्यर्थः, तथाच सिद्धसाधनान्नानुमानमिति भावः । 'अध्ययनेति अदृष्टविशेषजनकाध्ययनविषयत्वमित्यर्थः, यथाश्रुतस्या-तिप्रसक्तत्वेन वेदरूपत्वासम्भवात् अध्ययनविषयत्वमात्रस्य प्रत्यक्षसिद्ध-त्वेन 'तदभावादित्युत्तरग्रन्थासङ्गतेश्च । बाधमाह, 'तदभावादिति, 'अनभ्युपगमादिति त्वया गुणगतजातेरनभ्युपगमात् कत्व-खत्वादिना जातिसाङ्कर्य्याच्चेति भावः ।

भट्टास्तु स्मृत्याचारानुमितो वेदः इदानीमप्यत्राध्ययनगोचरो न त्वन्यत्रेति वेदः प्रवृद्ध एव न तु नित्यानुमेयो न वा उच्छन्न-इत्याहुः । तदसत् गौरवान्मानाभावाच्चेति द्रष्टव्यं ।

स्यादेतत् स्मृत्याचारयोर्वेदमूलत्वे तन्नोच्छेदादिविवादस्तदेव त्वसिद्धं, तथा हि वेदसमानार्था महाजनपरिगृहीता च स्मृतिः स्वार्थोपस्थित्यनन्तरं स्मृत्यर्थानुभावकवेदानुमाने लिङ्गं तथाच प्राथम्यात् साध्यप्रसिद्ध्यर्थमुपजीव्यत्वाच्च स्मृतेरेवापूर्व्वादिवाक्यार्थज्ञानमस्तु किं वेदेन तदर्थस्य स्मृतित एव सिद्धेः अपूर्व्वस्यापि

---

तटस्थः शङ्कते, 'स्यादेतदिति,[१] 'वेदेति वेदसमानार्थकत्वेनाभिमतेत्यर्थः, 'लिङ्गमिति पक्षीभूय तदनुमानप्रयोजिकेत्यर्थः, तादात्म्येन स्मृतिरेव वा लिङ्गमित्याशयः, 'प्राथम्यादिति प्रथमं स्मृतेः स्मृत्यर्थस्य वावश्यकोपस्थितिकत्वादित्यर्थः, 'साध्यप्रसिद्ध्यर्थमिति स्मृतिज्ञानं विना स्मृतितः साध्यघटकीभूतस्मृत्यर्थज्ञानासम्भवादिति भावः। 'तदर्थस्येति दृष्टसाधनत्वादिज्ञानद्वारा वेदप्रयोजनस्य प्रवृत्त्यादेरित्यर्थः, किञ्च उक्तरूपेणानुमितवेदार्थप्रत्यये स्मृतिजज्ञानमात्रस्य ज्ञापकत्वेन वेदस्यानुवादकतापत्तिरित्याह, 'अपूर्व्वस्यापीति अपूर्व्वस्य यदि वेदैकगम्यत्वं स्यात्तदा वेदस्य स्मृतितो ज्ञातमात्रज्ञापकत्वं न स्यान्नचैवं, किन्तु शब्दैकगम्यत्वमतः 'स्मृतितो ज्ञातस्य' स्मृतिज्ञातमात्रस्य ज्ञापकत्वेनेत्यर्थः।

---

(१) तटस्थः प्रत्यवतिष्ठते, 'स्यादेतदिति, 'तदर्थस्येति वेदप्रयोजनस्य प्रवृत्त्यादेरित्यर्थः, वेदं विनापि अपूर्व्वोपस्थितावपूर्व्वत्वव्याघात इत्यत आह, 'शब्दैकेति, न तु शब्दविशेषवेदैकवेद्यत्वं, गौरवादिति भावः। ननु वेदं

शब्दैकगम्यत्वेन स्मृतितोऽज्ञातस्य ज्ञापकत्वेनानुवादकतापत्तेश्च, सा च स्मृत्यन्तरादित्यनादिरेव स्मृतिधारावश्यकी। अन्यथा मनुस्मृतेः पूर्व्वन्तवापि वेदानुमानं न स्यात्। सर्व्वा च स्मृतिः स्मृतिजन्यवाक्यार्थप्रमाजन्यत्वेन महाजनपरिगृहीतत्वेन च प्रमाणमिति नान्धपरम्परा, प्रत्यक्षा च स्मृतिः स्मृतिमूलं नानुमिता अनुमि-

---

उपाध्यायास्तु ननु स्मृतितो यदि अपूर्व्वादिवाक्यार्थज्ञानं तदा अपूर्व्वस्य वेदैकगम्यत्वमायातमित्यत आह, 'अपूर्व्वस्यापि शब्दैकगम्यत्वेनेति, तथाच वेदैकगम्यत्वमेव असिद्धमिति भावः। तृतीयान्तं स्वतन्त्रो ग्रन्थः, दूषणान्तरमाह, 'स्मृतित इतीत्याङः।

'अनुवादकतापत्तेश्चेति, वेदस्येत्यादिः। ननु वेदमन्तरेण मन्वादिस्मृतिरेव कथं भविष्यति वाक्यप्रयोगं प्रति वाक्यार्थज्ञानस्य हेतुत्वादित्यतआह, 'सा चेति, प्रलयादिकं नास्तीति भावः,। 'तवापीति नित्यानुमेयतावादिनस्तवेत्यर्थः, पक्षीभूतस्मृत्यन्तराभावादिति भावः। नन्वेवं वेदामूलकत्वे स्मृतावप्रामाण्यशङ्का स्यादित्यत आह, 'सर्व्वा चेति, 'प्रमाणं' निश्चितप्रामाण्यकं। न चैवं मूलभूतनानास्मृतिकल्पनापेक्षया च एकवेदकल्पनैव लघीयसीति

---

विना मूलाभावे स्मृतिरेव न स्यादित्यत आह, 'सा चेति, प्रलयादिकं नास्तीत्यभिमानः। उत्पादकमुक्त्वा प्रामाण्यज्ञापकमप्याह, 'महाजनेति, पूर्व्वस्मृतिरतीन्द्रिया चेत् तदा किमपराद्धं नित्यानुमेयवेदेनेत्यत आह,

तवेदवत्तस्याननुभावकत्वात्। वेदार्थस्मृतिताप्रसिद्धिस्तु प्रत्यक्षवेदमूलस्मृतिसाहचर्य्येण भ्रमात् प्रत्यक्षवेदाबोधित-लोभ-न्यायमूलस्मृताविव तान्त्रिकाणां लिङ्गाभासजन्यवेदमूलत्वभ्रमाद्वा भवन्ती न सम्भवन्मूलान्तराणां वेदमूलकत्वं कल्पयति। अथ स्मृतिरिव तद्वेदमूलकत्वप्रसिद्धिरपि महाजनपरिगृहीता एवञ्च सा वेदमूलत्वनिबन्धना अविगीतमहाजनपरिगृहीतवेदमूलत्वप्र-

---

वाच्यं। सिद्धान्तेऽस्य बोध्यत्वात्। स्मृतिरपि नित्यानुमेयैव स्मृतिमूलमस्त्वित्यत आह, 'प्रत्यक्षा चेति, कथं तर्हि तस्य वेदसमानार्थकत्वप्रसिद्धिरित्यत आह, 'वेदार्थेति, 'प्रसिद्धिः' व्यवहारः, 'वेदाबोधितेति वेदाबोधितार्थकेत्यर्थः, प्रत्यक्षभ्रममुक्त्वा आनुमानिकं तमाह, 'लिङ्गेति स्मृतित्वादिलिङ्गाभासजन्यवेदमूलकत्वभ्रमादित्यर्थः। ननु महाजनपरिगृहीततया वेदमूलकत्वप्रसिद्धेर्भ्रममूलकत्वकल्पनमशक्यमिति शङ्कते, 'अथेति, 'महाजनेति, 'परिग्रहोऽत्र प्रामाण्यनिश्चयोबोध्यः, 'वेदमूलकत्वेति वेदमूलकत्वयथार्थधीजन्येत्यर्थः, 'अविगीतेति, अविगीतवेदमूलकत्वप्रसिद्धित्वात् महाजनपरिगृहीतवेदमूलकत्वप्रसिद्धित्वात् इति हेतुद्वयं तात्पर्य्यं, अन्यथा 'अविगीतेत्यस्य वैयर्थ्या-

---

'प्रत्यक्षा चेति, तर्हि वेदमूलत्वेन महाजनानां कथं तत्प्रसिद्धिरित्यत आह, 'वेदार्थेति, 'साहचर्य्येणेति प्रत्यक्षभ्रमाभिप्रायं, 'भ्रमात्' वेदमूलकत्वभ्रमादित्यर्थः, 'वेदाबोधितत्वं' वेदाबोधितार्थत्वं, 'लिङ्गेति विवादास्पदं स्मृतिर्वेदमूला स्मृतित्वात् इति भ्रमादित्यर्थः। ननु सल्लिङ्गमेव तन्न

सिद्धित्वात् प्रत्यक्षवेदमूलस्मृतौ तत्प्रसिद्धिवत्, एवं वेदार्थताप्रसिद्धिरपि । अन्यथा महाजनपरिगृहीतानादरे वेद-स्मृत्योरपि प्रामाण्यं न स्यादिति चेत्, न, यूपहस्त्यादिस्मृतेस्तत्प्रसिद्धौ व्यभिचारात्, क्लृप्तलोभादित एव तत्सम्भवात् विचारकाणां विप्रतिपत्तेश्च तच तत्प्रसिद्धौ विगानं महाजनानामिति चेत्, न,

पत्तेः, अविगीतत्वं वेदमूलकत्वप्रमानधीनत्वेन शिष्टनिश्चीयमानत्वं, महाजनपरिगृहीतत्वञ्च महाजनैर्निर्णीतप्रामाण्यकत्वमिति हेत्वोर्भेदः, 'तत्प्रसिद्धिवदिति, 'वेदार्थतेति वेदसमानार्थताप्रसिद्धिरपीत्यर्थः, वेदसमानार्थतायथार्थधीजन्येति शेषः । अनुकूलं तर्कमाह, 'अन्यथेति, 'अन्यथेत्यस्यैव विवरणं 'महाजनपरिग्रहानादर इति[१] । 'युपेति युपे युपे हस्तिनो बद्धव्या इतिलोभादिमूलकस्मृतावित्यर्थः, 'तत्प्रसिद्धौ' वेदमूलकत्वप्रसिद्धौ । शङ्कते, 'क्लृप्तेति, 'तत्सम्भवात्' हस्त्यादेः स्मृतिसम्भवात्, 'विगानं' वेदमूलकत्वप्रमाधीनत्वेन निश्चयाभावात् प्रा-

(१) महाजनपरिगृहीतानादर इत्यत्र महाजनपरिग्रहानादर इति पाठान्तरं ।

कुत इत्यत आह, 'सम्भवन्मूलेति, तथाचासम्भवन्मूलान्तरत्वमेव तत्रोपाधिरित्याभासत्वमेवेति भावः । 'एवमिति वेदार्थताप्रसिद्धिः वेदार्थत्वनिबन्धना तादृशवेदार्थताप्रसिद्धित्वादित्यर्थः, 'अन्यथेत्यस्य विवरणं 'महाजनपरिग्रहानादर इति । गूढाभिसन्धिराह, यूपेति, असम्भवन्मूलान्तरत्वमविगीतत्वं विचारकाणां तत्त्वेन प्रतिपत्त्यविषयत्वं वा लिङ्गविशेषणमित्याशङ्कते, 'क्लृप्तेति, अभिसन्धिमुद्घाटयति, 'अत्रापीति, तथाच स्वरूपासिद्धिरिति

अत्रापि मूलान्तरसम्भवाद्विप्रतिपत्तेश्च विगानमेव तेषां। अतएव स्मृतीनां न्यायमूलत्वे सम्भवति वेद-मूलत्वप्रसिद्धावपि न वेदमूलत्वं। न च वेदमूलेऽय-मिति कृत्वा स्मृतेर्महाजनपरिग्रहात् तन्मूलत्वं, वेदमू-लेयमिति प्रथमं ज्ञातुमशक्यत्वात् शक्यत्वे वा किमनु-मानेन। न च वेदमूलत्वेन प्रकारेण महाजनपरिग्रहः, असिद्धेः, मन्वादिस्मृतित्वेन पूर्व्वमहाजनपरिग्रहेणोक्त-

---

माण्यनिश्चयाभावः, 'तेषामिति, तथाच हेतुद्वयमेव स्वरूपासिद्धमिति भावः, 'प्रसिद्धावपि' प्रसिद्धिसत्त्वेऽपि। नन्वियं स्मृतिर्वेदमूला वेदमू-लेयमिति कृत्वा महाजनपरिगृहीतत्वादिति तदनुमेयमित्याशङ्कते, 'न चेति, 'परिग्रहः' निश्चयः, 'तन्मूलत्वं' वेदमूलत्वं। ननु किं वेदमूलत्वं तद्विशेष्यक-वेदमूलत्वप्रकारकमहाजननिश्चयविषयत्वं, वेदमूलकत्वप्र-कारकमहाजननिश्चयविशेष्यत्वमात्रं वा, आद्ये वेदमूलकत्ववदेतदि-त्येव प्रथमं दुर्ग्रहमित्याह, 'वेदेति, प्राथम्यं तदनुमानापेक्षया, तथाच हेतोरज्ञानरूपासिद्धिरिति भावः। अन्त्यमाशङ्क्य निराक-रोति, 'न चेति, 'परिग्रहः,' निश्चयमूलवेदकत्वसाधक इति शेषः, 'असिद्धेरिति, तादृशनिश्चयस्यैवाचानभ्युपगमादिति भावः। ननु तदसिद्धौ प्रामाण्यनिश्चयासम्भवेन कथं महाजनानां तदर्थानुष्ठानं

---

भावः। न चाविगीतत्वं वेदाभिविद्धत्वमिति नासिद्धिरिति वाच्यं। तथा सति न्यायादिमूलकस्मृतेस्तत्प्रसिद्धौ व्यभिचारापत्तेः। वस्तुतोऽप्रयोजकत्वं बोध्यं। अज्ञानरूपासिद्धिमुद्भाव्य स्वरूपासिद्धिमाह, 'न चेति। आचारेऽपि

रोत्तरेषां परिग्रहादनुष्ठानाद्युपपत्तेः, एवं होलाकाद्याचारेऽपि वेदलिङ्गेनैव कर्त्तव्यताज्ञानोपपत्तेः किं वेदेन, तदर्थस्य लिङ्गादेवोपपत्तेः। अविगीतालौकिकविषयकशिष्टाचारस्य वेदमूलत्वदर्शनात् वेदानुमाने चाविगीतशिष्टाचारत्वेन भोजनाद्याचारोऽपि वेदमूलः स्यात्, वेदं विनापि तत्कर्त्तव्यताधीसम्भवात् न तदर्थं वेद-

---

वेदमूलकत्वनिश्चयादेव प्रामाण्यनिश्चय इत्यत आह, 'मन्वादीति, मन्वादिस्मृतित्वेन पूर्व्वमहाजनपरिग्रहेण चेति हेतुद्वयं, अत एव क्वचिच्चकारसम्वलितोऽपि पाठः। 'उत्तरोत्तरेषां' महाजनानां, 'परिग्रहात्' प्रामाण्यनिश्चयात्, सर्व्वः स्मृतिवदाचारोऽपि न वेदमनुमापयतीति व्यवस्थापयति, 'एवमिति, 'होलाकाद्याचारेऽपि' होलाकादिक्रियायामपीत्यर्थः, 'वेदलिङ्गेन' अविगीतशिष्टाचारविषयत्वेन, 'तदर्थस्येति कर्त्तव्यतादिज्ञानद्वारा वेदप्रयोजनस्य प्रवृत्त्यादेरित्यर्थः, 'अविगीतेति, 'अविगीतत्वं बलवदनिष्टाननुबन्धित्वं परदारादिप्रवृत्तौ व्यभिचारादिवारणाय, 'अलौकिकत्वं प्रत्यक्षगृहीतेष्टसाधनताकविषयान्यत्वं भोजनाद्याचारे व्यभिचारवारणाय, 'शिष्टेति, 'शिष्टत्वं इष्टसाधनतांशे भ्रमरहितत्वं चैत्यवन्दनाद्याचारे व्यभिचारवारणाय, एवमलौकिकत्वविशेषणमपि त्यज्यतां गौरवादित्यत आह, 'अविगीतेति, 'न तदर्थं वेद इतीति, तथाचा-

---

वेदमूलत्वं निरस्यति, 'एवमिति, 'तुल्यमिति, तथाचाप्रयोजकत्वमुभयत्रेति भावः। सिद्धसाधनमाह, 'अनुमानस्येति, 'अन्यथा' सापेक्षस्याप्रमाणत्वे, 'न

इति इहापि तुल्यं। आचार-कर्त्तव्यतानुमानयोरनादित्वेनाचाराणां कर्त्तव्यत्वानुमानमूलकत्वात् नान्धपरम्परा। न च पूर्व्वानुमानसापेक्षमुत्तरानुमानमिति स्वतन्त्रप्रमाणमूलकत्वाभावात् सा, व्याप्ति-पक्षधर्म्मतासत्त्वेन सर्वेषां स्वतन्त्रप्रमाणत्वात्। नापीतरप्रामान्याधीनं सर्व्वस्य प्रामाण्यमिति न निरपेक्षत्वं, प्रत्यक्षादेरपि तथात्वापत्तेः। एतेन विवादपदमाचारो निरपेक्षप्रमाणमूलकः अविगीतमहाजनाचारत्वात् प्रत्यक्षवेदमूलाचारवदिति निरस्तं। अनुमानस्य निरपेक्ष-

प्रयोजकत्वमिति भावः। 'नान्धपरम्परेति न भ्रममूलकत्वशङ्केत्यर्थः, 'सा' अन्धपरम्परा, स्वातन्त्र्यं हि प्रमारूपे फले जननीये प्रमाणान्तरनिरपेक्षत्वं, स्वतोऽपि तत्प्रामाण्यानधीनप्रामाण्यकत्वं वा, आद्यं प्रकृतेऽप्यस्तीत्याह, 'व्याप्तीति, 'सर्व्वेषामिति कर्त्तव्यतानुमानानामित्यर्थः, अन्त्यं निरस्यति, 'नापीति, 'सर्व्वस्य' कर्त्तव्यतानुमानस्य, 'तथात्वेति अस्वातन्त्र्यापत्तेरित्यर्थः, प्रत्यक्षादिप्रामाण्यस्यापि अनुमानप्रामाण्याधीनसिद्धिकत्वादिति भावः। अधीनत्वस्यापि दुर्वचत्वाच्चेत्यपि बोध्यं। 'अविगीतेति, अत्राविगीतत्वं बलवदनिष्टाननुबन्धित्वं, महाजनत्वं दृष्टसाधनतांशे भ्रमशून्यत्वं, प्रमारूपे फले जननीये प्रमाणान्तरानपेक्षत्वं स्वातन्त्र्यमित्यभिप्रायेणाह, 'अनुमानस्येति,

चेति, आचारो वेदमूलकः वेदमूलकत्वेन प्रसिद्धेरित्यर्थः। अत्र प्रामाणिकप्रसिद्धिर्विवक्षिता प्रसिद्धिमात्रं वा, आद्ये दोषमाह, 'असिद्धेरिति अन्यतरा-

प्रमाणत्वात् प्रमाणमूलत्वेनैव हेतोरुपपत्तेः निरपेक्ष-त्वस्य गौरवेणाप्रयोजकत्वाच्च। न च सापेक्षत्वेन न प्रमाणता, व्याप्त्यादिसत्त्वात्। अन्यथा प्रमाणे नैरपे-क्ष्यस्य वैयर्थ्यात्। न चाचारे वेदमूलत्वप्रसिद्धेस्तदनु-मानं, असिद्धेः व्यभिचारादन्यथोपपत्तेश्च। न च वेद-मूलत्वेनैव महाजनपरिग्रहात्तथा, न हि वेदमूलोऽय-

तथाच सिद्धसाधनमिति भावः। 'हेतोः' अविगीतमहाजनाचारत्वस्य। 'सापेक्षत्वेन' पूर्व्वपूर्व्वानुमानसापेक्षत्वेन, 'न प्रमाणता', उत्तरोत्तरानु-मानस्येति शेषः, 'अन्यथा' सापेक्षस्य प्रमाणत्वाभावे, 'नैरपेक्ष्य' निर-पेक्षत्वविशेषणस्य, प्रमाणपदेनैव सापेक्षस्य वारणादिति भावः। 'न चेति अयमाचारो वेदमूलकः वेदमूलकत्वप्रसिद्धत्वादिति प्रकारेणैवेत्यर्थः, 'असिद्धेरिति, तादृशप्रसिद्धेरेव तैरनभ्युपगमादिति भावः। 'व्यभि-चारादिति लोभमूलके आचारे व्यभिचारादित्यर्थः, अप्रयोजकता-माह, 'अन्यथेति न्यायादिमूलकाचारवदन्यथोपपत्तेर्न वेदमूलत्वमि-त्यर्थः। 'परिग्रहात्' निश्चयात्, 'तथा' वेदमूलत्वं, पूर्व्वं स्मृतेः स्मृति-मूलत्वे इदमाशङ्कितं इदानीमाचारस्थले इति न पौनरुक्त्यं। पूर्व्वं वेदाज्ञानरूपासिद्धिमाह, 'न हीति। ननु वेदमूलकत्वप्रकारक-

सिद्धेरित्यर्थः, अन्ये त्वाहुः, 'व्यभिचारादिति, न्यायादिमूलकाचार इति शेषः। 'अन्यथेति, न्यायादिमूलकाचारवन्मूलान्तरसम्भवात्तथाचाप्रयोजकत्व-मिति भावः। पूर्व्ववदसिद्धिमाह, 'न हीति। 'न चेति वेदमूलत्वेन महाजन-परिगृहीतोऽयमिति कृत्वा महाजनपरिग्रहमात्रस्यैव हेतुत्वेऽधिकस्य व्यर्थ-

मिति कृत्वा महाजनानां तत्परिग्रहः, वेदमूलत्वस्य प्रथमं ज्ञातुमशक्यत्वाच्छक्यत्वे वा किमनुमानेन। न च वेदमूलत्वेनैव महाजनपरिगृहीतोऽयमाचार इति ज्ञात्वा तत्र महाजनपरिग्रहः, गौरवादसिद्धेश्च। पूर्व्व-महाजनपरिग्रहादेवोत्तरोत्तरेषां परिग्रहादनुष्ठानोपपत्तेः। तादृशस्मृत्याचारयोर्वेदमूलत्वेन व्याप्तेर्वेदसिद्धि-

महाजननिश्चयविषयत्वेन महाजननिश्चयो हेतुरस्तु इत्यत आह, 'न चेति, 'महाजनपरिग्रहः', परिग्रहे हेतुरिति शेषः, 'गौरवादिति मूलभूतवेदकल्पने गौरवादित्यर्थः, तथाचाप्रयोजकत्वमिति भावः।

केचित्तु वेदमूलत्वेन महाजनपरिगृहीतत्वस्यैव हेतुत्वे द्वितीय-महाजनपरिग्रहस्य वैयर्थ्यादित्यर्थ इत्याहुः।

'असिद्धेश्चेति तादृशनिश्चयस्यैवासिद्धेरित्यर्थः। ननु महाजन-प्रवृत्तावेव तद्विषयत्वेन कर्त्तव्यताज्ञानं स्यात् सैव च कथं स्यात्तस्य कर्त्तव्यताज्ञानाभावादित्यत आह, 'पूर्व्वेति पूर्व्वपूर्व्वमहाजनाचार-विषयत्वेनैवेत्यर्थः, 'उत्तरोत्तरेषां परिग्रहादिति उत्तरोत्तरमहा-जनानां कर्त्तव्यतानिश्चयादित्यर्थः, 'अनुष्ठानं' प्रवृत्तिः। 'तादृशेति अविगीतादिरूपेत्यर्थः। यद्यपि आचारस्थले इदमाशङ्कितं तथापि

त्वादित्यर्थः, वेदमूलत्वकल्पने गौरवं तथाचाप्रयोजकत्वमित्यन्ये। 'असिद्धे-रिति वेदमूलत्वज्ञानं विनापि परिग्रहोपपत्तेस्तद्घटितहेतोरसिद्धेरित्यर्थः। तदेव स्फुटयति, 'पूर्व्वेति, पूर्व्वशङ्कितमप्युपाधिदानाय शङ्कते, 'तादृशेति। पूर्व्वपूर्व्वस्मृतेरुत्तरोत्तरस्मृतिरित्यादिक्रम उक्त इदानीमाचारात् स्मृतिः

रिति चेत्, न, असम्भवन्मूलान्तरत्वस्योपाधित्वात्। अन्यथा लोभ-न्यायमूलस्मृतेरपि वेदमूलत्वप्रसङ्गः। अस्तु वा स्मृत्याचारयोरनादित्वं। न चाचारात् स्मृतिः स्मृतेराचार इत्यन्धपरम्परा मूलभूतप्रमाणाभावात् इति वाच्यं। स्मृत्याचारयोरुभयोरपि प्रमाणत्वात्। अन्यथा न ततो वेदानुमानमपीति। उच्यते। प्रलये पूर्व्वस्मृत्याचारयोरुच्छेदात् सर्गादौ नित्यसर्व्वज्ञेश्वरप्रणीतवेदमूलत्वं स्मृत्याचारयोः। अन्यथा मूलाभावे-

---

दूषणान्तरदानाच तच्चाप्युन्नावितमिति ध्येयं। 'असम्भवदिति, नन्विदं प्रत्यक्षवेदमूलकस्मृतिमूलके साध्याव्यापकं। न च वेद-तदुपजीविप्रमाणातिरिक्तप्रमाणमूलकत्वमर्थः, साधनव्यापकत्वादिति, मैवं, साधनव्यापकतासंशयेन सन्दिग्धोपाधित्वसम्भवात् प्रत्यक्षवेद-मूलकत्वं वा तस्यार्थः, 'अन्यथेति अलौकिकत्वं विहाय अविगीत-महाजनपरिगृहीतस्मृतित्वेन हेतुत्व इत्यर्थः, पूर्व्वपूर्व्वस्मृतेरुत्तरोत्तर-स्मृतिरिति पूर्व्वमुक्तं इदानीमाचारात् स्मृतिः स्मृतेराचार इत्याह, 'अस्तु वेति। नैयायिकः समाधत्ते, 'प्रलय इति, 'वेदमूलत्वमिति वेदजन्यज्ञानजन्यत्वमित्यर्थः, तदानीं स्मृत्याचारान्तरयोरभावादिति भावः। ननु मन्वादीनां पूर्व्वसर्गानुभूततत्तदर्थस्मरणादेवाचारादे-

---

स्मृतेराचार इत्याह, 'अस्तु वेति, 'उच्छेदादिति, नित्यानुमेयवेदवादिमतेऽपीदं बोध्यं। 'मन्वादीनामिति तथाच तत्प्रणीतस्मृतिरेव तन्मूलमस्तु किं वेदेनेत्यर्थः।

नान्धपरम्पराप्रसङ्गः। न च मन्वादीनामतीन्द्रियार्थदर्शित्वं, तदुपायश्रवणादेस्तदानीमभावात्। पूर्व्वसर्गसिद्धसर्व्वज्ञमन्वादय एव ते इति चेत्, न, प्रमाणाभावात्। स्मृत्याचारयोः प्रमाणमूलत्वमेव तत्कल्पकमिति चेत्, न, प्रतिसर्गं तेषामन्यान्यत्वकल्पने गौरवमित्येकस्यैव नित्यसर्व्वज्ञस्य कल्पनात्। न च स्मृतय एव तत्प्रणीताः, तासां मन्वादिकर्त्तृकत्वेन स्मृतौ बोधनात्

---

रुपपत्तेः किं वेदेनेत्यत आह, 'अन्यथेति सर्गादौ आचारादिजनकतज्ज्ञानस्य वेदजन्यत्वाभावे इत्यर्थः, 'मूलाभावेनान्धपरम्परेति तस्मिन्नज्ञाते अनाश्वासप्रसङ्ग इत्यर्थः, वेदमूलकत्व-स्मृतिमूलकत्व-शिष्टाचारमूलकत्वादिज्ञानानामेव विश्वासमूलत्वादिति भावः। 'न च मन्वादीनामिति, तथाच प्रत्यक्षमूलत्वात् तस्मिन् ज्ञाने नाप्रामाण्यशङ्केति भावः। 'पूर्व्वसर्गेति पूर्व्वसर्गसर्व्वज्ञत्व-वर्त्तमानयोगजधर्म्मजनितविश्वविषयसाक्षात्कारवन्त इत्यर्थः, 'प्रमाणाभावादिति मन्वादीनां सर्व्वज्ञत्वे इति शेषः। 'तेषां' मन्वादीनां, 'नित्यसर्व्वज्ञस्येति नित्यसर्व्वविषयकज्ञानवतः कल्पनादित्यर्थः, तद्वचनादेव सर्गादौ स्मृत्याचाराविति भावः। 'तत्प्रणीताः' ईश्वरप्रणीताः, तथाच किं वेदेनेति भावः। 'स्मृताविति "वक्तारो धर्म्मशास्त्राणां मनु-

---

'एकस्यैवेति, तथाच मन्वादीनां सर्व्वज्ञत्वश्रुतिः शाब्दसर्व्वविषयकज्ञानवत्त्वविषयेति भावः। 'तासामिति, 'स्मृताविति "वक्तारो धर्म्मशास्त्राणां

स्मृतावेव स्मृतीनां वेदमूलत्वस्मरणाच्च। एवञ्च स्मृत्याचारयोर्महाजनपरिग्रहाद्वेदमूलत्वसाधकमपि भगवति प्रमाणं। अतएव "प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते" इत्यागमोऽपि। एवञ्च पूर्व्वं प्रत्यक्षमूलावेव स्मृत्याचारौ, अग्रे च कालक्रमेणायुरारोग्य-बल-श्रद्धा-ग्रहण-धारणादिशक्तेरहरहरपचीयमानत्वात् तदध्ययनविच्छेदेन शाखोच्छेदात् स्मृत्याचाराभ्यामेव कर्त्त-

---

विष्णु-र्यमोऽङ्गिराः"। इत्यादिस्मृतावित्यर्थः, 'स्मृतावेवेति "यः कश्चित् कस्यचिद्धर्म्मो मनुना परिकीर्त्तितः। स सर्व्वोऽभिहितो वेदे" इत्यादि स्मृतावित्यर्थः, 'भगवतीति परम्परया भगवति प्रमाणमित्यर्थः, 'अतएवेति यत एव प्रलये विच्छेदे भगवता वेदः प्रणीयते अतएवेत्यर्थः, 'उपसंहरति, 'एवञ्चेति, 'प्रवृत्तिरिति, आनुपूर्व्व्यादिविशिष्टस्य वेदस्यानुमातुमशक्यत्वात् तस्याननुभावकत्वादिति भावः। नन्विदानीमाचारलिङ्गकज्ञानादेव प्रवृत्तिस्तर्हि सर्गादावपि तथा-

---

मनुर्विष्णुर्यमोऽङ्गिराः"। इत्यादि स्मृतावित्यर्थः, 'स्मृतावेवेति "यः कश्चित् कस्यचिद्धर्म्मो मनुना सम्प्रकीर्त्तितः। स सर्व्वोऽभिहितो वेदे" इत्यादावित्यर्थः। 'अतएवेति यतः स्मृत्याचारादेरीश्वरप्रणीतोच्छिन्नवेदमूलत्वं तत एवेत्यर्थः। उपसंहरति, 'एवञ्चेति, 'प्रवृत्तिरिति, आनुपूर्व्यादिविशिष्टवेदस्यानुमातुमशक्यत्वेन तस्याननुभावकत्वादिति भावः। 'बहुव्यापारेति, एतच्चोपलक्षणं वस्तुत ईश्वराचारसम्भवेऽपि तत्र स्वेष्टसाधनतारूपसाध्यप्रसिद्ध्यभावेन दृष्टान्तमूलव्याप्त्या नाचारान्तरसम्भव इत्याहुः।

व्यतामधिगत्य प्रवृत्तिः। नन्वेवं स्मृतिरस्तु वेदमूला मङ्गलाद्याचारस्त्वीश्वरादेव भविष्यति घट-लिप्यादि-सम्प्रदायवदिति चेत्, न, बहुव्यापारघटितस्य तत्तदाचारस्य गुरुत्वेन [१]मङ्गलमाचरेदित्यादिवाक्यस्यैव लाघवेन कल्पनात्। न च मङ्गलादिपदशक्तिग्रहार्थमाचार आवश्यक इति वाच्यं। स्वर्गादिपदवद्वाक्यार्थे तदुपपत्तेः। अतएव यत्र वचनमात्रात् परप्रतिपत्तिस्तत्र

स्त्विति शङ्कते, 'नन्वेवमिति, 'मङ्गलाद्याचारः' आद्यमङ्गलाचारः, 'ईश्वरेति ईश्वरस्याचारादित्यर्थः, 'घट-लिप्यादीति, यद्यपि स्मृतिरप्याचारवदीश्वराचारमूला सम्भवति तथाप्यदृष्टार्थकस्मृतेर्वेदमूलकत्वानुरोधेन स्मृतौ नाशङ्कितं। 'बहुव्यापारेति वाक्यापेक्षया बहुतरकायादिव्यापारसाध्यस्येत्यर्थः, 'तत्तदाचारस्येति पूजादिरूपमङ्गलादिक्रियाया इत्यर्थः, 'मङ्गलमिति, तत्रानुपूर्व्वीविशेषोऽविवक्षितः तदनुमानस्यासम्भवात्, 'शक्तिग्रहार्थमिति, ईश्वरस्यैव प्रयोज्य-प्रयोजकदेहं परिगृह्य प्रथमं शक्तिग्राहकत्वादिति भावः। 'स्वर्गादिपदवदिति, यथा स्वर्गादिपदस्य "यन्न दुःखेन सम्भिन्नमित्यादिवाक्यस्थस्य शक्तिग्रहस्तथा मङ्गलादिपदस्यापि तदुपपत्तेरिति, तथाच वाक्यघटकीभूतस्य शक्तिग्रहः प्रकारान्तरादिति भावः। मङ्गलपदं नति-स्तुत्यादिपरं, 'अतएवेति यत एव व्यापारापेक्षया

(१) 'मङ्गलमाचरेदिति देवतास्तुत्यादिकमाचरेदित्यर्थः, तदपि वास्तवाभिप्रायं, वस्तुत इदानीमानुपूर्व्यनिश्चय एव वेदत्वेनैव तदनुमानमिति। 'अतएवेति वाक्यापेक्षया आचारस्य गुरुत्वादेवेत्यर्थः। नन्वस्तु वाक्यस्य

नाचारः परीक्षकाणां, तस्य च वेदत्वं नेश्वरप्रणीतत्वेन शक्तिग्रहणार्थतद्वचने व्यभिचारात्, किन्तु तादृशाचारस्य वेदमूलत्वनियमादिति। स्यादेतत्, प्रलये सत्येवमेव तत् स एव तु नास्ति प्रमाणाभावात् इति

---

वाक्यस्य लघुत्वमतएवेत्यर्थः, 'परीक्षकाणां' पण्डितानां। ननु सर्गादौ स्मृत्याचाराद्यथानुपपत्त्या मूलभूतं सिद्धं तस्य वेदत्वं कुतः ईश्वरप्रणीतत्वस्य शक्तिग्रहार्थतद्वचने व्यभिचारादित्यत आह, 'तस्य चेति, 'तद्वचन इति घटमानयेत्यादितद्वाक्य इत्यर्थः, 'किन्त्विति, इदमुपलक्षणं तस्य ईश्वरज्ञानजन्यत्वादेव शब्दजन्यवाक्यार्थज्ञानजन्यत्वं दृष्टार्थकत्वाभावादेव सत्यन्तदलं तथाच किमपर आशङ्कते वेदत्वे इत्यादि द्रष्टव्यं। 'प्रलये सतीति काले कार्य्यद्रव्याधिकरणभेदे सतीत्यर्थः, 'एवमेतदिति, 'एतत्' अष्टकादिबोधकं स्मृत्यादिकं, 'एवं' वेदमूलमित्यर्थः, 'स एव' काले कार्य्यद्रव्याधिकरणभेद एव, यथाश्रुते

---

कल्पनं तथापि तस्य वेदत्वं कुत इत्यत आह, 'तस्य चेति, 'तद्वचने' घटमानयेत्यादौ, 'किन्त्विति। न चात्राप्रयोजकत्वं तथाच शक्तिग्राहकतद्वचनवत् तन्मूल-तद्वाक्यस्यापि वेदत्वं मास्त्विति वाच्यं। शब्द-तदुपजीवीत्यादिलक्षणाक्रान्तत्वेन तस्य वेदत्वादन्यथाश्वमेधेन यजेतेत्यादेरप्यवेदत्वशङ्का स्यादिति भावः। उपोद्घातसङ्गतिमाह, 'स्यादेतदिति, 'कालेत्युपलक्षणं कालोपाधि-दिगुपाध्यादिकमपि बोध्यं। एतच्च घटप्रागभावस्याकाशवृत्तितया अर्थान्तरं मा भूदिति बाधस्फोरणाय, तेन कार्य्यद्रव्यानधिकरणत्वेन कार्य्यद्रव्याधिकरणभिन्नत्वस्य विवक्षितत्वात् कपालस्यातथात्वात् पक्ष-

# चेत्, न, काल-कपालान्यावृत्तिघटप्रागभावः कार्य्यद्रव्यानाधाराधारः कार्य्यद्रव्यानधिकरणकार्य्याधिकरण-

सिद्ध्यसिद्धिव्याघातात्। तथाच कालो न कार्य्यद्रव्यानाधारः तद्वत्ता-प्रमित्यविषयत्वादिति फलितं। अत्र सुखादिसिद्धिमाह, 'काल-कपान्येति, कार्य्यद्रव्यानाधारत्वं कार्य्यद्रव्यानधिकरणवृत्तित्वं तथाच कालादेः सौरालोकादिकार्य्यद्रव्याधारत्वसामान्याभावेन तद्वृत्ति-

धर्म्मतावत्त्वेन तादृशकालसिद्धिरिति। न च दिशार्थान्तरं तादृशकालासिद्धौ दिशोऽपि तादृप्यासिद्धेः, न ह्यदानीं कापि दिक् सकलकार्य्यद्रव्यशून्या, तथाच तादृशकालावच्छेदकत्वेनैव दिशोऽपि तादृप्यसिद्धिरिति तत्सिद्धिर-प्रत्यूहैव। न च भूतलादिवृत्तित्वेनार्थान्तरं, घटप्रागभावाधिकरणीभूतभूतलादेः कार्य्यद्रव्याधिकरणत्वनियमात् प्रागभावस्य प्रतियोगिसमानदेशत्वात्। न च कालस्यापि कार्य्यद्रव्याधिकरणत्वेन तद्भिन्नत्वाभावाद्बाध इति वाच्यं। अखण्डस्य तथात्वेऽप्येककालोपाधिः तथात्वेन बाधाभावात्। घटप्रागभावः एतत्कालीन-घटस्य प्रागभावः तेन वृत्तप्रलयसिद्धिः, अतएव प्रागित्यपि, एकदैव सर्व्व-ब्रह्माण्डनाश इति स्मृतेनेदं। केचित्तु एतद्ब्रह्माण्डवृत्तित्वं कार्य्यद्रव्ये विशेषणमित्याहुः। अतएव खण्डप्रलयसिद्धये द्वितीयसाध्ये कार्य्याधिकरण-पदं तस्यैव खण्डप्रलयपदार्थत्वात्। यत्तु महाप्रलयेनार्थान्तरवारणाय 'तदिति, तन्न, प्रागभावस्य महाप्रलयवृत्तित्वाभावादेव तदसम्भवात्, का-र्य्याधिकरणत्वञ्च भावकार्य्याधिकरणत्वं, 'अभावत्वादिति। नन्विदं कार्य्य-द्रव्यानधिकरणान्योन्याभावे व्यभिचारि अन्योन्याभावस्य प्रतियोगिताव-च्छेदकासमानाधिकरणत्वेन तत्र साध्यासत्त्वादिति चेत्, न, तस्यापि कार्य्य-द्रव्यानधिकरणे सिषाधयिषितकाले सत्त्वेन पक्षसमत्वात् अन्यथा नित्यत्व-व्याघातात्।

त्वमादायार्थान्तरं स्यादिति तद्वृत्तित्वे बाधस्फोरणाय पक्षे 'काल-कपालान्यावृत्तिरिति, काल-कपालान्यावृत्तित्वञ्च स्वप्रतियोगिसम-वायिनि वृत्तावपि नान्यथासिद्धिः। यद्यपि कपालस्यापि कालोपा-धितया कालान्यावृत्तीत्यावश्यकं, तथापि शब्द एव कालोपाधिरि-ति निष्कृष्टमतेनेदं, कपालपदञ्च स्वप्रतियोगिसमवायिपरं, तेनो-दासीनतादृशकपालान्तरसिद्ध्या नार्थान्तरं। घटध्वंसप्रागभावे बाध-वारणाय घटपदं, घटप्रागभावत्वावच्छेदेन च कार्य्यद्रव्यानधि-करणवृत्तित्वसिद्धिरुद्देश्या तेन भाविप्रलयसिद्ध्या नार्थान्तरं, 'वृत्त-प्रलयसाधनादित्यनुपदं वक्ष्यमाणतया अस्यानुमानस्य वृत्तप्रलय-साधकत्वात्, खण्डप्रलये कार्य्यगुणादिसत्त्वान्महाप्रलये प्रागभावा-सत्त्वात् स्वमते बाधवारणाय साध्ये द्रव्यपदं। न चैवमपि तदानीं ब्रह्माण्डान्तरे कार्य्यद्रव्यसत्त्वाद्बाधः युगपत् सर्व्वब्रह्माण्डप्रलयाभावा-दिति वाच्यं। कार्य्यद्रव्यस्य एतद्ब्रह्माण्डीयत्वेन विशेषणात्। वस्तुत-स्तदानीं ब्रह्माण्डान्तरसत्त्वे मानमेव नास्तीत्यनेनैव तदभावस्यापि साधनात्। कार्य्यद्रव्यानधिकरणत्वञ्च सम्बन्धसामान्येन बोध्यं, अन्यथा संयोगेन समवायेन वा अनधिकरणत्वोक्तौ सृष्टिकालीनस्पन्दाद्या-त्मककालवृत्तितया सिद्धसाधनं, कालिकसम्बन्धेन तदुक्तौ जन्य-मात्रस्य कालोपाधित्वानङ्गीकर्तृमते कपालवृत्तितया सिद्धसाधना-पत्तेः। वृत्तित्वञ्च प्रतियोगिसमवायिनि यादृशविशेषणताविशेषेण प्रागभावस्तादृशविशेषणता-कालिकान्यतरसम्बन्धेन विवक्षितं, अन्यथा कालिकसम्बन्धेन वृत्तित्वाभिधाने तस्यैव प्रागसिद्धेः, संयोग समवा-याभ्यां तदभिधाने प्रागभावस्य पक्षत्वे बाधापत्तेः, सम्बन्धसामान्येन

तदभिधाने विशेषणताविशेषेणाकाशादिवृत्तित्वमादायार्थान्तरतापत्तेः यथोक्तान्यतरसम्बन्धेन काल-कपालान्यावृत्तित्वस्यैव पक्षविशेषणत्वात्। न चेवमपि कथं प्रलयसिद्धिरिति वाच्यं। कपालस्य कार्य्यद्रव्यानधिकरणभिन्नत्वसम्भवात् पक्षधर्म्मताबलेन कालस्यैव तादृशस्य सिद्धेः। न च कालभिन्नदिग्विशेषसिद्ध्यार्थान्तरं, तदन्यावृत्तित्वविशेषणेनैव तद्वारणादिति। नन्वत्र महाप्रलयपूर्व्वक्षणवृत्तित्वमादायार्थान्तरं प्रलये द्रव्यगुणादीनां क्रमेण नाशाभ्युपगमात् तत्पूर्व्वक्षणस्यापि कार्य्यद्रव्यानधिकरणत्वात्। न च प्रागभावस्य तदुभयवृत्तित्वबाधादेव नार्थान्तरमिति वाच्यं। गुरुणा तस्याविनाशिनोऽभ्युपगमादित्यस्वरसात् साध्यान्तरमाह, 'कार्य्यद्रव्येति, उक्तरीत्या महाप्रलयं तत्पूर्व्वक्षणञ्चादाय अर्थान्तरवारणाय 'कार्य्याधिकरणेति, 'कार्य्यपदञ्च अविनश्यद्वस्त्वविनाशिपरं, तेन ध्वंसं विनश्यद्वस्तुगुणादिकं वादाय न तद्दोषतादवस्थ्यं। शेषं दर्शितदिशावसेयं।

मिश्रास्तु प्रागभावस्य महाप्रलय-तत्पूर्व्वक्षणवृत्तित्वबाधादेव पूर्व्वसाध्येऽपि महाप्रलय-तत्पूर्व्वक्षणमादाय नार्थान्तरं किन्तु कार्य्यद्रव्यानधिकरणत्वविशिष्टकार्य्याधिकरणत्वस्यैव खण्डप्रलयस्य खण्डप्रलयत्वरूपतया तत्साधनाय द्वितीयसाध्याऽभिधानमित्याहुः (१)। तदसत्। प्रागभावस्य महाप्रलय-तत्पूर्व्वक्षणवृत्तित्वे लाघवात् कार्य्यद्रव्यानधिकरणत्वे सति प्रागभावत्वस्यैव खण्डप्रलयत्वरूपतया यथोक्तस्य खण्डप्रलयत्वानात्मकत्वादिति।

---

(१) तस्मादुक्तरूपस्यावान्तरप्रलयपदार्थतया तत्साधनाय विशिष्टं प्रतिजानीते कार्य्येति तत्त्वमित्युक्तं मिश्रैः।

वृत्तिर्वा अभावत्वात् आकाशवृत्त्यन्योन्याभाववदिति

---

न च कार्य्यद्रव्यानधिकरणान्योन्याभावादौ कार्य्यद्रव्यानधिकरणत्वप्रमाविशेष्यत्वाधिकरणान्योन्याभावादौ च व्यभिचार इति वाच्यं। प्रलयकालेऽपि कालिकसम्बन्धेन तेषामन्योन्याभावसत्त्वात् दैशिकविशेषणताविशेषेणैव प्रतियोगितावच्छेदकान्योन्याभावयोर्विरोधात् । न च द्वितीयसाध्ये महाप्रलयात्मकध्वंसे महाप्रलयाव्यवहितपूर्व्ववृत्तिपदार्थध्वंसे च व्यभिचार इति वाच्यं । एतत्कालीनाभावत्वस्य तत्र हेतुत्वात् । न च तन्मते व्यर्थविशेषणत्वं महाप्रलयानङ्गीकारादिति वाच्यं । स्वमते च तदभावात् । 'आकाशेति, साध्यसत्त्वप्रदर्शनायाकाशवृत्तित्वोपादानं, तच्चोपलक्षणं आकाशवृत्तिशब्दप्रागभाववदिति च दृष्टान्तान्तरं बोध्यं। न चाकाशस्य सौरालोकादिकार्य्यद्रव्याधारतया दृष्टान्तासिद्धिरिति वाच्यं । तथा प्रतीत्यभावेन तस्य तदाधारत्वासिद्धेः कार्य्यद्रव्यसंयोगितामात्रेण कार्य्यद्रव्याधारत्वे वैपरीत्यस्यापि दुर्व्वारत्वापत्तेरिति भावः । 'खण्डप्रलयसाधनादिति खण्डप्रलयत्वेन खण्डप्रलयसाधनादित्यर्थः, घटप्रागभावत्वावच्छेदेन कार्य्यद्रव्यानधिकरणवृत्तित्वस्य खण्डप्रलयं विनानुपपत्त्या पक्षधर्म्मताबलात्खण्डप्रलयत्वरूपेण तत्सिद्धेः, खण्डत्वञ्च नैतत्सर्गाव्यवहितपूर्व्ववर्त्तित्वमपि तु तत्सर्गपूर्व्ववर्त्तित्वमात्रं तेन घटप्रागभावत्वावच्छेदेन खण्डप्रलयवृत्तित्वं न बाधितमिति भावः । भाविसर्गीयघटप्रागभावस्यापि खण्डप्रलयमादायैव कार्य्यद्रव्यानधिकरणवृत्तित्वसम्भवेन घटप्रागभावपक्षकानुमानान्न भविष्यत्प्रलयत्वेन सिद्धिसम्भव इत्यतो-

वृत्तप्रलयसाधनात्। (१)एवमेव घटध्वंसं पक्षीकृत्या-गामिप्रलयसाधनं। यद्वा घटः कार्य्यद्रव्यानधिकरण-

---

ध्वंसं पक्षीकृत्य भाविप्रलयं साधयति, 'एवमिति, अत्र कार्य्य-द्रव्यानधिकरणकार्य्याधिकरणवृत्तित्वं साध्यं, प्रथमसाध्ये महाप्रलये-नार्थान्तरापत्तेः पक्षे घटपदं तत्कालीनघटपरं, अतो न चरम-ध्वंसे बाधो न वा वृत्तप्रलयेऽर्थान्तरं। न चैवमपि महाप्रलयपूर्व्वक्षणेन सिद्धसाधनं प्रलये द्रव्यगुणादीनां क्रमेण नाशाभ्युपगमादिति वाच्यं। कार्य्याधिकरणत्वं हि अविनश्यद्वस्तुविनश्यधिकरणत्वं ब्रह्माण्डत्वेत्वदृष्टाधिकरणत्वं वा। न चैवं आकाशवृत्त्यन्योन्याभावस्य कथं दृष्टान्तत्वं आकाशस्यादृष्टाधिकरणत्वाभावादिति वाच्यं। अदृ-ष्टाधिकरणान्यस्यापि प्रकृते दृष्टान्तत्वसम्भवात्। एतत्कालीनपदार्थ-प्रतियोगिकत्वञ्च हेतौ विशेषणं देयं अन्यथा अभावत्वमात्रस्य महा-प्रलयाव्यवहितसर्गोत्पन्नघटध्वंसे व्यभिचारापत्तेरिति ध्येयं। 'आ-गामिप्रलयसाधनमिति भाविप्रलयत्वेन भाविप्रलयसाधनमित्यर्थः, एतत्कालीनघटध्वंसे कार्य्यद्रव्यानधिकरणकार्य्याधिकरणवृत्तित्वस्य भाविप्रलयं विनानुपपत्त्या पक्षधर्म्मताबलाद्भाविप्रलयत्वेन भाविप्रल-यसिद्धिरिति भावः। प्रकारान्तरेणागामिप्रलयं साधयति, 'यद्वेति,

---

(१) न चैवमन्योन्याभावस्य प्रतियोगितावच्छेदकविरोधनियमभङ्गापत्तिः, कालविशेषः कार्य्यद्रव्यानधिकरणभिन्न इति प्रतीत्यभावेन देशतया तस्य तदनधिकरणत्वेऽपि इदानीं कार्य्यद्रव्यानधिकरणान्योन्याभाव इति प्रतीत्या कालत्वेन तस्य तदधिकरणत्वाभ्युपगमात्। अतएव कालान्योन्याभावस्य नित्य-

**कार्य्याधिकरणवृत्तिध्वंसप्रतियोगी कार्य्यत्वाच्छब्दवत्।**

---

'घटः' एतत्कालीनघटः, अतो न महाप्रलयाव्यवहितसर्गवृत्तिघटे बाधः, कालकपालान्यवृत्तिध्वंसाप्रतियोगित्वेनापि घटो विशेषणीयः तेन दिगाकाशादिवृत्तित्वेन नार्थान्तरं, महाप्रलयेनार्थान्तरवारणाय साध्ये 'कार्य्याधिकरणेति, 'कार्य्यपदमविनश्यद्वस्थविनाशिकार्य्यपरं, तेन विनश्यद्वस्थकार्य्यमादाय न तद्दोषतादवस्थ्यं, न वा महाप्रलयाव्यवहितप्राक्कालमादायार्थान्तरं, तत्समवेतगुणनाशादृष्टादिनाशयोर्युगपदेव स्वीकारेण तत्कालस्याविनश्यद्वस्थेनाधिकरणत्वाभावात् प्रागभावोपादानेन भाविप्रलयसिद्धिरतो 'ध्वंसेतीति भावः। 'कार्य्यत्वादिति एतत्कालीनभावकार्य्यत्वादित्यर्थः, तेन ध्वंसे महाप्रलयाव्यवहितसर्गीयकार्य्ये न व्यभिचारः। अतीतानागत-

---

तया कालवृत्तित्वेऽपि देशतया कालो नाधिकरणं कालः कालभिन्न इति प्रतीत्यापत्तेः। नन्वेतदेव कथमिति चेत्, न, अनन्यगत्या वृत्तिभेदेन तथाभ्युपगमादित्याहुः। द्वितीयसाध्ये त्वभावत्वमनाद्यभावत्वमतएवान्योन्याभावत्वपर्य्यन्तमुक्तं दृष्टान्ते, तेन महाप्रलयाव्यवहितपदार्थध्वंसे न व्यभिचारः। केचित्तु एतत्कालीनाभावत्वादित्यत्र तात्पर्य्यमित्याहुः। न चाकाशस्य सौरालोकादिकार्य्यद्रव्याधारतया दृष्टान्तासिद्धिरिति वाच्यं। तथा प्रतीत्यभावेन तस्य तदधिकरणत्वानुपपत्तेः, संयोगितामात्रेण तथात्वे वैपरीत्यापत्तेरिति भावः। प्रसङ्गादाह, 'घटध्वंसमिति, न च एतत्कालीनद्रव्यनाशकालेनार्थान्तरं द्रव्यगुणादीनां क्रमेण नाशादिति वाच्यं। सूक्ष्मकालोपाधिभिन्नत्वेन कार्य्याधिकरणत्वस्य विशेषणात् युगपदेव सर्व्वनाश इत्यन्ये। न च महाप्रलयाव्यवहितसृष्टिकार्य्यध्वंसे व्यभिचारः, एतत्कालीनाभावत्वादित्यत्र तात्पर्य्यात्। 'कार्य्येति, पूर्व्ववन्न महाप्रलयपूर्व्वक्षणेनार्थान्तरं, 'कार्य्यत्वात्'

यद्वा कार्य्यद्रव्यत्वं कार्य्यद्रव्यानधिकरणकार्य्याधिकरण-वृत्तिध्वंसप्रतियोगिवृत्ति कार्य्यमात्रवृत्तित्वात् शब्दत्व-

खण्डनमात्रं साधयति, 'कार्य्यद्रव्यत्वमिति, कार्य्यत्वमात्रस्य पक्षत्वे शब्दवृत्तित्वमादाय सिद्धसाधनमतो 'द्रव्यपदं, स्वरूपासिद्धिवारणाय 'कार्य्यपदं, पूर्ववदाकाशादिमादायार्थान्तरवारणाय समानद्रव्यसमवायिभिन्नवृत्तिध्वंसप्रतियोगित्वेन च कार्य्यद्रव्यत्वं विशेषणीयं, साध्ये महाप्रलयमादायार्थान्तरवारणाय 'कार्य्याधिकरणेति, कार्य्यपदञ्च, अविनश्यदवस्थविनाशिपरं, तेन न ध्वंसमादाय तद्दोषतादवस्थ्यं, न वा महाप्रलयाव्यवहिततयाकार्य्यमादायार्थान्तरं, 'कार्य्यमात्रेति, अनन्तत्वे व्यभिचारवारणाय 'मात्रपदं साधारणार्थकं। न च ध्वंसत्वे व्यभिचारः 'कार्य्यपदस्य भावकार्य्यपरत्वे मात्रपदवैयार्थ्यापत्तेरिति वाच्यं। तादात्म्येन भाववृत्तित्वे सतीत्यनेन विशेषणात् तथाच ध्वंसत्वे न व्यभिचारः, न वा मात्रपदवैयर्थ्यं आकाशध्वंसान्यतरत्वे ध्वंसाप्रतियोगित्वरूपानन्तत्वे च व्यभिचारवारकत्वात्, महाप्रलयाव्यवहितसर्गीयकार्य्यमात्रवृत्तौ तत्तत्क्रियात्वे तादृशादृष्टत्वादिजातौ व्यभिचारवारणाय इदानीन्तनेति भावविशेषणं, 'शब्दत्ववदिति स्वनये, परनये सुखत्वादिकं दृष्टान्तः तन्नये वर्णस्य

इदानीन्तनभावकार्य्यत्वात्, एतेन महाप्रलयाव्यवहितकार्य्ये ध्वंसे च न व्यभिचारः। 'शब्दवदिति इदानीन्तनशब्दवदित्यर्थः, 'कार्य्यद्रव्यत्वमिति, अत्रापि पूर्ववन्नार्थान्तरं, तादृशसुखादिवृत्तित्वेनार्थान्तरवारणाय पक्षे द्रव्यपदं, 'कार्य्यमात्रेति। ननु ध्वंसत्वे व्यभिचारः, न च कार्य्यपदं भावकार्य्य-

वत्। यद्वा एककालीनाः सर्व्वे परमाणवः समग्रोपादेय-प्रबन्धशून्या आरम्भकत्वात् नष्टपवनारम्भकपरमाणु-

---

नित्यत्वात्। 'परमाणव इति, अत्र परमाणुत्वं नित्यपृथिवीत्वादि-कमेव न तु नित्याणुपरिमाणवत्त्वं मीमांसकमते आश्रयासिद्धेः तैरणुपरिमाणानभ्युपगमात् स्वोपादेयद्रव्याप्रसिद्धत्वेनांशतः साध्या-प्रसिद्ध्यापत्तेश्च। 'समग्रेति यावत्समवेतप्रबन्धशून्या इत्यर्थः, 'शू-न्यत्वमत्यन्ताभावः, अत्र यत्किञ्चित्समवेतप्रबन्धप्रतियोगिकाभाव-मादाय सिद्धसाधनवारणाय 'समग्रेति समवेतसामान्याभावला-भाय। न च प्रलयेऽपि गुणादेः सत्त्वाद्बाधः प्रबन्धपदस्य कार्य्य-मात्रपरत्वादिति वाच्यं। समवेतं कार्य्यं प्रबध्नातीति व्युत्पत्त्या प्रबन्धपदस्य द्रव्यपरत्वात्, समवायसम्बन्धावच्छिन्नप्रतियोगिकाभाव-लाभाय समवेतेति सम्बन्धान्तरावच्छिन्नाभावमादाय न सिद्ध-साधनमिति ध्येयं। 'आरम्भकत्वात्' द्रव्यसमवायिकारणतावच्छेद-

---

परं, मात्रपदवैयर्थ्यापत्तेः। न च भाववृत्तित्वे सति कार्य्यवृत्तित्वमर्थस्तथाचा-नन्तत्वे व्यभिचारवारणाय मात्रपदमिति वाच्यं। तथापि चरमक्रियात्वादौ व्यभिचारापत्तेरिति चेदत्राहुः मात्रपदस्य कात्स्र्न्यपरत्वेन कार्य्यपदस्य भाव-वृत्तिविभाजकोपाध्यवच्छिन्नपरत्वेन च भाववृत्तिविभाजकोपाध्यवच्छिन्नयावत्-कार्य्यवृत्तित्वादित्यर्थः, तेन नोक्तदोषः। न च व्यर्थविशेषणत्वं विशेष्यमात्रञ्च स्वरूपासिद्धमिति वाच्यं। विकाशकविशेषणे तस्यादोषत्वात् नीलधूमवत् सङ्कोचकविशेषण एव तथात्वात् इति। यत्तु कार्य्यतावच्छेदकधर्म्मत्वादित्यर्थः इति, तन्न, महाप्रलयाव्यवहितसृष्टिसम्बन्धिचैत्रप्रभवत्वाद्यनुमापकशब्द-वृत्तिजातौ व्यभिचारापत्तेः। न च व्योमैव कार्य्यद्रव्यानधिकरणमादाय